# ISA, KENA, KATHA, PRASNA, MUNDA, MANDUKYA UPANISHADS.

WITH THE COMMENTARY OF SANKARACHARYA

AND THE GLOSS OF ANANDA GIRI,

Edited By

PANDIT JIBANANDA VIDYASAGARA B. A.



Calcutta.

PRINTED AT THE SUCHARU PRESS.

1873

*To be had from Pandit Jibananda Vidyasagara B. A. Sanskrit*

पण्डितकुलतिलक-पूज्यपाद श्रीमत् तर्कवाचस्पति
पाद-प्रणीत-प्रकाशित-पुस्तकान्येतानि

| | | | |
|---|---|---|---|
| १ | आशुबोध व्याकरणम् | ... | ३। |
| २ | धातुरूपादर्शः | ... | २ |
| ३ | शब्दस्तोम-महानिधि [संस्कृत अभिधान] | | १० |
| ४ | सिद्धान्तकौमुदी—सरलाटीकासहिता | | ११ |
| ५ | सिद्धान्तविन्दुसार [वेदान्त] | ... | ॥ |
| ६ | तुलादानादिपद्धति [वङ्गाचरैः] | ... | ४ |
| ७ | गयाश्राद्धादिपद्धति | ... | १ |
| ८ | शब्दार्थरत्न | ... | ॥। |
| ९ | वाक्यमञ्जरी [वङ्गाचरैः] | ... | । |
| १० | छन्दोमञ्जरी तथा वृत्तरत्नाकर—सटीक | | ॥= |
| ११ | वेणीसंहार नाटक—सटीक | ... | १ |
| १२ | मुद्राराचस नाटक—सटीक | ... | १॥ |
| १३ | रत्नावली | ... | ॥। |
| १४ | मालविकाग्निमित्र—सटीक | ... | १॥ |
| १५ | धनञ्जय विजय—सटीक | | । |
| १६ | महावीरचरित | ... | १॥ |
| १७ | साङ्ख्यतत्त्वकौमुदी—सटीक | ... | २ |
| १८ | वैयाकरणभूषणसार | ... | ॥। |
| १९ | लीलावती | ... | ॥। |
| २० | वीजगणित | ... | १ |
| २१ | शिशुपालबध—सटीक | ... | ६ |
| २२ | किरातार्जुनीय—सटीक | ... | २॥ |
| २३ | कुमारसम्भव—पूर्वखण्ड सटीक | ... | १ |
| २४ | कुमारसम्भव—उत्तरखण्ड | ... | ॥ |

# ईश, केन, कठ, प्रश्न, मुण्ड, माण्डूक्योपनिषदः

परमहंस-परिव्राजकाचार्य्य-श्रीमत् पूज्यपाद-शङ्कराचार्य्य

कृत भाष्य सहिताः आनन्दगिरि-कृत-टीकयाऽलङ्कृताश्च ।

बि, ए, उपाधिधारिणा

श्रीजीवानन्द विद्यासागर भट्टाचार्य्येण

संस्कृताः ।

---

# Esa, Kena, Katha, Prasna, Munda, Mandukya Upanishads.

WITH

THE COMMENTARY OF SANKARACHARYA

AND

THE GLOSS OF ANANDA GIRI.

EDITED BY

PUNDIT JIBANANDA VIDYASAGARA, B. A.

---

Calcutta:

PRINTED AT THE SUCHARU PRESS.

1873.

ॐ परमात्मने नमः।

---

## वाजसनेयसंहितोपनिषद्भाष्यम्॥

ईशावास्यमित्यादयो मन्त्राः कर्मस्वविनियुक्तास्तेषामकर्मशेषस्यात्मनो याथात्म्यप्रकाशकत्वात्। याथात्म्यञ्चात्मनः शुद्धत्वापापविद्धत्वैकत्वनित्यत्वाशरीरत्वसर्वगतत्वादि वक्ष्यमाणम्। तच्च कर्मणा विरुध्यत इति युक्त एवैषां

---

### वाजसनेयसंहितोपनिषद्भाष्यटीका॥

येनात्मना परेशेन व्याप्तं विश्वमशेषतः। सोऽहं देहद्वयोः साक्षी वर्जितो देहतद्गुणैः॥ १॥

ईशावास्यमित्यादिमन्त्रान् व्याचिख्यासुर्भगवान् भाष्यकारस्तेषां कर्मशेषत्वशङ्कां तावत् व्युदस्यति। तथा हि कर्मजडाः केचन मन्यन्ते ईशावास्यमित्यादयो मन्त्राः कर्मशेषा मन्त्रत्वादिषे त्वादिमन्त्रवत्॥ अतः पृथक्प्रयोजनाद्यभावादव्याख्येया इति तान् प्रत्याह। ईशावास्यमित्यादय इति॥ कर्मस्वविनियुक्ता इति॥ इषे त्वेति शाखां छिनत्तीत्यादिवत् विनियोजकप्रमाणादर्शनात्प्रकरणान्तरत्वाच्चेत्यर्थः॥ श्रौतविनियोगाभावेऽपि बर्हिर्देवसदनं दामीत्यस्य बर्हिर्लवनप्रकाशनसामर्थ्यात् बर्हिर्लवने यथा विनियोगस्तथा कर्माङ्गात्मप्रकाशनसामर्थ्येन कर्मसु तेषां विनियोग इत्यपि नाशङ्कनीयमित्याह। तेषामिति॥ शुद्धादिविशेषणस्यात्मनः कर्मशेषत्वे प्रमाणाभावात् याथात्म्यं न केवलं कर्मानुपयोगि किन्तु कर्मणा विरुध्यत इत्याह। याथात्म्यञ्चेति॥ शुद्धोऽहं स्वभावतो न तु केनापि पाप्मना विद्धः स्वप्रकाशो शरीर आकाशोपम इति जानन् कटाक्षेणापि कर्म वीक्षते। किन्त्वापात·

कर्म्मस्वविनियोगः। न चैवंलक्षणमात्मनो याथात्म्यमुत्पाद्यं विकार्य्यमाप्यं संस्कार्य्यं वा कर्त्तृ भोक्तृ वा येन कर्म्मशेषता स्यात्। सर्व्वासामुपनिषदामात्मयाथात्म्यनिरूपणेनैवोपक्षयात्। गीतानां मोक्षधर्म्माणां चैवंपरत्वात्। तस्मादात्मनोऽनेकत्वकर्त्तृत्वभोक्तृत्वादि चाशुद्धत्वपापविद्धत्वादि चोपादाय लोकबुद्धिसिद्धकर्म्माणि विहितानि। यो हि कर्म्मफलेनार्थी दृष्टेन ब्रह्मवर्चसादिनाऽदृष्टेन स्वर्गादिना

---

प्रतीपान्तरेऽप्येतादृशी निरवद्यैव कर्म्मप्रवृत्तिमित्यर्थः। किञ्च यः कर्म्मशेषः स उत्पाद्यो दृष्टो यथा पुरोडाशादिः। विकार्य्यः सोमादिः। आप्यो मन्त्रादिः। संस्कार्य्यो व्रीह्यादिस्तद्गुवाघातादिरूपत्वं व्यापकं व्यावर्त्तमानमात्मयाथात्म्यस्य कर्म्मशेषत्वमपि व्यावर्त्तयति। तथात्मयाथात्म्यं कर्तृ भोक्तृ च न भवति। येन ममेदं समीहितसाधनं ततो मया कर्त्तव्यमित्यहंकाराध्यासपुरःसरः कर्त्ताऽन्वयः स्यादित्याह। न चैवमिति॥ ननु उपनिषदि जपोपयोगित्वादन्यस्य च प्रमाणस्यादर्शनाच्च निरूप्यमेव। एतादृशमात्मयाथात्म्यं तत्राह। सर्व्वासामिति॥ यत्परः शब्दः स शब्दार्थ इति मीमांसाप्रसिद्धेः सर्व्वासामुपनिषदामैकात्म्ये तात्पर्य्यदर्शनाच्च जपोपयोगित्वमुपनिषदां शक्यं वक्तुम्। तथा हि ईशावास्यमित्युपक्रम्य स पर्य्यगाच्छुक्रमित्युपसंहारादनेजदेकं तदन्तरस्य सर्व्वस्येत्यभ्यासदर्शनान्नैतद्देवा आप्नुवन्नित्यपूर्व्वतासङ्कीर्त्तनात्को मोहः कः शोक एकत्वमनुपश्यत इति फलवत्त्वासङ्कीर्त्तनात्कुर्व्वन्नेवेहेति जिजीविषोर्भेददर्शिनः कर्म्मकरणानुवादेनासूर्य्या नाम त इति निन्दयैकात्म्यदर्शनस्य स्तुतत्वात्तस्मिन्नपो मातरिश्वा दधातीत्यभिधायिन्याश्चास्यास्तावदुपनिषदैकात्म्यतात्पर्य्यं दृश्यते। एवमन्यासामप्युपनिषदामुपक्रमोपसंहारैकरूप्याभ्यासापूर्व्वताफलवत्त्वार्थवादयुक्त्युपपादनानि षट् तात्पर्य्यलिङ्गानि विकल्पेन समुच्चयेन वाऽस्माभिस्तत्त्वालोके

च द्विजातिरहं न काणकुण्ठत्वाद्यनधिकारधर्म्मवानित्यात्मानं मन्यते सोऽधिक्रियते कर्म्मस्विति हि अधिकारविदो वदन्ति। तस्मादेते मन्त्रा आत्मनो याथात्म्यप्रकाशनेनात्मविषयं स्वाभाविककर्म्मविज्ञानं निवर्त्तयन्तः शोकमोहादिसंसारधर्म्मविच्छित्तिसाधनमात्मैकत्वादिविज्ञानमुत्पादयन्तीति॥ एवमुक्ताभिधेयसम्बन्धप्रयोजनान्मन्त्रान् सङ्क्षेपतो व्याख्यास्यामः॥

---

दर्शितानीति नेह प्रतन्यन्ते किन्तु प्रत्ययसंवादोऽपि बलवत्कारणम्। अस्ति हि विद्यते चोपनिषदर्थे गीतादिसंवादस्तस्मादुपनिषत्पदसमन्वयेनावगम्यमानमैकात्म्यं न प्रमाणान्तरानुपलम्भविरोधेनोपलम्भनीयम्॥ यथेन्द्रियान्तरेणानवगम्यमानमपि रूपं चक्षुषा गम्यमानं नापह्नूयते तथैकात्म्यमपि नापह्नोतुमर्हमित्याह। गीतानामिति समं सर्व्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्। विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यतीत्यादिगीता। एक एव हि भूतात्मा सर्वभूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवदित्यादिमोक्षशास्त्राणामैकात्म्यपरत्वादित्यर्थः॥ यद्येतादृशमात्मतत्त्वं तर्हि निरधिकारित्वात्कर्म्मकाण्डमुच्छिद्येतेत्यपि नाशङ्कनीयमित्याह। तस्मादिति॥ औपनिषदात्मयाथात्म्यं च तीव्रक्रोधाक्रान्तस्वान्तं प्रत्येव श्येनादिविधिप्रामाण्यम्। तथा मिथ्यादर्शिनं प्रत्येव कर्म्मविधिप्रामाण्यमित्यर्थः॥ अत्र जैमिनिप्रभृतीनां सम्मतिमाह। यो हीत्यादिना। अर्थित्वादियुक्तस्य कर्म्मण्यधिकारः षष्ठे प्रतिष्ठापितः। अर्थित्वादि च मिथ्याज्ञाननिदानम्। नहि नभोवन्निर्लिप्तस्य स्वत एव दुःखासंसर्गिणः परमानन्दस्वभावस्य सुखं मे स्याद्दुःखं मे माभूदित्यर्थित्वम्। शरीरेन्द्रियसमर्थोऽहमित्यभिमानित्वं मिथ्याज्ञानं विना न सम्भवतीत्यर्थः॥ यस्मादात्मयाथात्म्यप्रकाशका मन्त्रा न कर्म्मशेषभूता न च ज्ञानान्तरनिरपेक्षस्वात्मप्रयोजनादिमत्त्वमपि तेषां सिद्धमित्याह। तस्मादेत इति॥

। ॐ । वाजसनेयसंहितोपनिषत् ॥

# ईशावास्यमिदꣳ सर्व्वं यत्किञ्च जगत्यां जगत्

---

ईशा। ईष्टे इतीट् तेनेशा। ईशिता परमेश्वरः परमात्मा सर्व्वस्य। स हि सर्व्वमिष्टे सर्व्वजन्तूनामात्मा सन्। तेन स्वेनात्मनेशावास्यमाच्छादनीयम्। किम्। इदं सर्वं यत्किञ्च यत्किञ्चिज्जगत्यां पृथिव्यां जगत्। सर्व्वं स्वेनात्मनाऽहमेवेदं सर्व्वमिति परमार्थसत्यरूपेणानृतमिदं सर्व्वञ्चराचरमाच्छादनीयं परमात्मना। यथा चन्दनागर्व्वादेरुदकादिसम्बन्धजक्लेदादिजं दौर्गन्ध्यंतत्स्वरूपनिघर्षणेनाच्छाद्यते स्वेन पारमार्थिकेन गन्धेन तद्वदेव हि स्वात्मन्यध्यस्तं स्वाभाविकं कर्त्तृत्वभोक्तृत्वादिलक्षणं जगद्द्वैतरूपं पृथिव्यां जग-

---

व्याख्येयत्वसङ्गत्या प्रतिपदं व्याचष्टे। ईशेति॥ ईश ऐश्वर्य्ये। अस्य धातोः क्विपि लुप्ते तदन्तरूपमीट् तस्य तृतीयैकवचनमीशेति॥ ननु कर्त्तरि क्विब्विधानात्परमेश्वरस्य चाक्रियत्वात्कथं क्विबन्तशब्दवाच्यतेति तत्राह। ईशितेति। मायोपाधीशनकर्त्तृत्वसम्भवाच्छब्दवाच्यता न विरुध्यते निरुपाधिकस्य च लक्ष्यत्वं भविष्यतीत्यर्थः॥ ईशित्रीशितव्यभावेन तर्हि भेदः प्राप्त इत्याशङ्क्याह। सर्वजन्तूनामिति॥ यथा दर्पणादिषु प्रतिबिम्बानामात्मा बिम्बभूतो देवदत्त ईशिता भवति तथा कल्पितभेदेनेशित्रीशितव्यभावसम्भवाच्च वास्तवभेदानुमानं सम्भवतीत्यर्थः। वस आच्छादने। अस्य रूपं वास्यमित्यत ईश्वरात्मकमेव सर्व्वं भ्रान्त्या यदनीश्वररूपेण गृहीतं तत्सर्वमीश्वर एवाहमेवेति ज्ञानेनाच्छादनीयं सर्व्वात्मक ईश्वरोऽस्मीति ज्ञातव्यमेतस्योपदेशस्याध्यात्मोऽत्र तत्त्वमसीतिवदित्यर्थः। अत्रैव सर्वमात्मैव सत्यकाया विशेषतः। हेयोपादेयभावोऽयं न सत्यमवदीष्यते॥१॥ उक्तञ्च। न बन्धोऽस्ति न

**तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् ॥१॥**

---

त्यामित्युपलक्षणार्थत्वात्सर्वमेव नामरूपकर्माख्यं विकारजातं परमार्थसत्यात्मभावनया त्यक्तं स्यात्। एवमीश्वरात्मभावनया युक्तस्य पुत्राद्येषणात्रयसन्न्यास एवाधिकारो न कर्मसु तेन त्यक्तेन त्यागेनेत्यर्थः। न हि त्यक्तो मृतः पुत्रो भृत्यो वा आत्मसम्बन्धितयाऽभावादात्मानं पालयत्यतस्त्यागेनेत्ययमेवार्थः। भुञ्जीथाः पालयेथाः। एवं त्यक्तैषणस्त्वं मा गृधः गृधिमाकाङ्क्षां माकार्षीर्धनविषयाम्। कस्य स्वित्कस्य चित्परस्य स्वस्य वा धनं माकाङ्क्षीरित्यर्थः। स्विदित्यनर्थको निपातः। अथवा मा गृधः

---

मोक्षोऽस्ति न विकल्पोऽस्ति तत्त्वतः। नित्यप्रकाश एवास्ति विश्वाकारो महेश्वर इति॥ यस्योपदेशिकप्रमाणमात्रेणाध्यस्तदृष्टिर्न निराक्रियते तस्य विचारादिप्रयत्नेन तत्त्वप्रकाशे सत्यध्यस्तदृष्टिस्तिरस्करिष्यत इत्यभिप्रेत्य दृष्टान्तमाह। यथेति॥ चन्दनागर्वादेरुदकादिसम्बन्धाद्दौर्गन्ध्यादिना जातं यद्दौर्गन्ध्यमौपाधिकं मिथ्या तद्यथा तत्स्वरूपनिघर्षणाभिव्यक्तेन स्वाभाविकेन गन्धेनाच्छाद्यते तद्वद्विचारादेः स्वरूपसद्भावाभिव्यक्तिहेतोर्बाधकत्वं सम्भवतीत्याह। तद्वदेव हीति॥ स्वभावोऽनादिरविद्या तत्कार्यं स्वाभाविकमित्यादिबाध्यत्वे योग्यत्वप्रदर्शनार्थविशेषणम्। एवं विचारादिप्रयत्नवतोऽध्यस्तदृष्टिरित्यसम्भावनामुक्त्वा युक्तभिक्षस्य सर्वविदहं चेश्वर एवेति भावनायामधिकृतस्य युक्तिकुशलस्य च विचारेऽधिकृतस्य सर्वकर्मसंन्यास एवाधिकार इह मन्त्रे विवक्षितस्तेन त्यक्तेनेत्यत्र त्यागपरामर्शात् त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदमित्यस्याप्युक्तत्वात्पुत्राद्येषणायाश्चित्तविक्षेपहेतुत्वेन प्रसिद्धत्वाच्चेत्यभिप्रेत्याह। एवमीश्वरात्मेति॥ चिकीर्षितं सन्न्यासं स्तौति। तेन त्यक्तेनेति॥

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः ।

कस्मात्। कस्य स्विद्धनमित्याक्षेपार्थो न कस्यचिद्धनमस्ति यद्गृध्येत। आत्मैव सर्वमितीश्वरभावनया सर्वं त्यक्तमत आत्मन एवेदं सर्वमात्मैव च सर्वमतो मिथ्याविषयां गृधिं माकार्षीरित्यर्थः ॥ १ ॥

एवमात्मविदः पुत्राद्येषणात्रयसंन्यासेनात्मज्ञाननिष्ठतयात्मा रक्षितव्य इत्येष वेदार्थः। अथेतरस्यानात्मज्ञतयात्मग्रहणायाशक्तस्येदमुपदिशति मन्त्रः। कुर्वन्नेव इह निर्वर्त्तयन्नेव कर्माण्यग्निहोत्रादीनि जिजीविषेज्जीवितुमिच्छेच्छतं शतसंख्याकाः समाः संवत्सरान्। तावद्धि पुरुषस्य परमायुर्निरूपितम्। यथा प्राप्तानुवादेन यज्जिजीविषेच्छतं वर्षाणि

---

त्यागेनात्मा रक्षितः स्वाविद्याकार्यात्मस्वरूपावस्थानाहेतुत्वात्त्यागस्येत्यर्थः। संन्यासिनः शरीरसंधारणोपयुक्तकौपीनाच्छादनभिक्षाशनादिव्यतिरिक्तेऽपि कथञ्चिद्द्रव्यपरिग्रहे रागद्वेषाद्यप्रसक्त्यविरोधे यत्नः कर्त्तव्यः॥ तस्य प्रधानविरोधित्वादित्यभिप्रेत्य नियमविधिमाह। एवं त्यक्तेनेत इति॥ स्विदिति निपातस्य सामान्यार्थत्वेऽपि कस्य स्विदिति चिन्तनार्थत्वमत्यन्तप्रसिद्धं तदिह न युज्यते इत्यनर्थकमित्युक्तम्। अहंकारद्वारात्मनैवेदं सर्व्वं संभूतं जडस्य चित्परतन्त्रत्वादतः प्राप्ते विषये नाकाङ्क्षा कर्त्तव्या॥ १॥

परमार्थस्त्वात्मैव सर्व्वमित्याकाङ्क्षाविषय एव नास्तीत्यर्थः। आद्यमन्त्रस्य पूर्व्वार्द्धेन तत्त्वोपदेशः कृतस्तृतीयपादेनापरिपक्वज्ञानस्य संन्यासविधिरुक्तश्चतुर्थपादेन संन्यासिनो नियमविधिरुक्त इति प्रतिपदं व्याख्याय संक्षेपार्थमनुवदत्युत्तरस्य मन्त्रस्याभिधित्सया। एवमात्मविद इत्यादिना॥ पूर्व्वमन्त्रेण ज्ञानं विहितं यस्य तस्यैवोत्तरमन्त्रेण कर्म्म विहितं ततः समुच्चयानुष्ठाने तात्पर्यं मन्त्रद्वयस्येत्येकदेशी शङ्कामुद्भावयति।

एवं त्वयि नान्यथेतोऽस्ति न कर्म्म लिप्यते नरे॥ २॥

---

तत्कुर्व्वन्नेव कर्म्माणीत्येतद्विधीयते। एवमेवम्प्रकारे त्वयि जिजीविषति नरे नरमात्राभिमानिनि इत एतस्मादग्निहोत्रादीनि कर्म्माणि कुर्वतो वर्त्तमानात्प्रकारादन्यथा प्रकारान्तरं नास्ति येन प्रकारेणाशुभं कर्म्म न लिप्यते कर्म्मणा न लिप्यस इत्यर्थः। अतः शास्त्रविहितानि कर्म्माण्यग्निहोत्रादीनि कुर्व्वन्नेव जिजीविषेत्। कथं पुनरिदमवगम्यते। पूर्व्वेण मन्त्रेण संन्यासिनो ज्ञाननिष्ठोक्ता द्वितीयेन तदशक्तस्य कर्म्मनिष्ठेत्युच्यते। ज्ञानकर्म्मणोर्विरोधं पर्वत-

---

कथं पुनरिति॥ ननु ज्ञानकर्म्मणोरेकाधिकारे विरुद्धत्वात् स्थितिगमननिवृत्तिधर्म्मवदेकस्यैव तत्रापि क्रमेणैककर्तृकत्वमिति चेन्न। विशिष्टरूपभेदाद्भिन्नाधिकारत्वात्। यथोक्तम्। ज्ञानकर्म्मणोर्विहितत्वे युक्तिशास्त्राद्विरोधोऽसिद्ध इति तदसत्। स्थितिगमननिवृत्तिधर्म्मयोरप्यविरोधप्रसङ्गात्। तदुभयं नैकस्य विहितमिति चेत्तुल्यमेतत्प्रतिषेधात्तत्र न समुच्चय इति चेदिहापि न कर्म्मणा न प्रजया नानुध्यायेद्बहूञ्छब्दानित्यादिप्रतिषेधस्तुल्यः केवलकर्म्मविषयो निषेध इति न च वाच्यं केवलपदव्यवच्छेद्याभावात् समुच्चयविधेरद्याप्यनिश्चितत्वात्तस्मान्न समुच्चये तात्पर्य्यं मन्त्रद्वयस्येत्याह। ज्ञानकर्म्मणोर्विरोधमिति। कर्तृत्वाद्यध्यासान्वयं कर्म्म शुद्धत्वादप्रकम्प्यत इति सम्बन्धमन्वे यथोक्तं सहानवस्थानलक्षणं विरोधं किं न स्मरसि येनैकाधिकारत्वं तयोः कल्पयसीत्यर्थः॥ मन्त्रलिङ्गादपि तयोर्भिन्नाधिकारत्वं प्रतीयत इत्याह। इहाप्युक्तमिति॥ जिजीविषो रागिणः कर्म्म विहितं सर्व्वमीश्वर एवेति ज्ञानवतस्त्यागो विहितः। किञ्च धनसम्बन्धस्यैव

यदकर्म्मणि यथोक्तं न स्मरसि किम्। इहाप्युक्तं यो हि जिजीविषेत् स कर्म्म कुर्वन्। ईशावास्यमिदं सर्वं तेन त्यक्तेन भुञ्जीथा मागृधः कस्य स्विद्धनमिति। न जीविते मरणे वा गृधिं कुर्व्वीतारण्यमियादिति च। ततो न पुनरेयादिति सन्न्यासशासनात्। उभयोः फलभेदञ्च वक्ष्यति। इमौ द्वावेव पन्थानावनुनिष्क्रान्ततरौ भवतः क्रियापथश्चैव पुरस्तात्सन्न्यासश्च। तयोः सन्न्यास एवातिरेचयति। न्यास एवात्यरेचयदिति तैत्तिरीयके। द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः। प्रवृत्तिलक्षणो धर्म्मो निवृत्तौ च विभावित इत्यादि पुत्राय विचार्य्य निश्चितमुक्तं व्यासेन वेदाचार्य्येण भगवता। विभागञ्चानयोर्दर्शयिष्यामः ॥ २ ॥

---

कर्म्मण्यधिकारः। प्रथममन्त्रार्थाधिकारिणश्च धनाकाङ्क्षानिषेधेन कर्म्माधिकारनिषेधः प्रतीयत इत्यर्थः॥ जिजीविषा हि कर्म्माधिकारिण एव न ज्ञानाधिकारिण इत्यत्र प्रमाणमाह। न जीवित इति॥ अरण्यं स्त्रीजनाद्यसङ्कीर्णमाश्रममियाद्गच्छेदिति वेदशास्त्रनिश्चितस्ततोऽरण्यवासोपलक्षिता सन्न्यासविधानादित्यर्थः। इतश्च नैकफलकामस्य ज्ञानकर्म्मणोरधिकारः प्रतिपत्तव्य इत्याह। उभयोरिति॥ को मोहः कः शोक एकत्वमनुपश्यत इति च निदानार्थप्रहाणं ज्ञानफलं वक्ष्यति। संसारमध्यवर्त्यान्तरगतमेव देवान्तरप्राप्त्यापन्नं हिरण्यगर्भपदप्राप्त्यादिलक्षणं कर्म्मफलं वक्ष्यति। अग्ने नयसुपथेत्यन्तेनेत्यर्थः॥ नारायणोपनिषद्वाक्यमपि भिन्नाधिकारत्वे सति प्रमाणयति। इमौ द्वावेवेति॥ पुरस्तात्सृष्टिकालेऽनुनिष्क्रान्ततरौ भूतसृष्टिमनुप्रवृत्तौ भिन्नाधिकारत्वात् द्वौ। तयोः सन्न्यास एवातिरिक्तः श्रेष्ठो भवति परमपुरुषार्थाव्यवधानादित्यर्थः॥ व्यासवाक्यमपि संवादकमाह। द्वाविमाविति॥ २॥

असुर्य्या नाम ते लोका अन्धेन तमसाऽऽवृताः। तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः॥ ३॥

---

अथेदानीमविद्वन्निन्दार्थोऽयं मन्त्र आरभ्यते। असुर्य्याः परमात्मभावमद्वयमपेक्ष्य देवादयोऽप्यसुरास्तेषां च स्वभूता असुर्य्याः। नामशब्दोऽनर्थको निपातः। ते लोकाः कर्मफलानि लोक्यन्ते दृश्यन्ते भुज्यन्त इति जन्मानि। अन्धेनादर्शनात्मकेनाज्ञानेन तमसाऽऽवृता आच्छादितास्तान् स्थावरान्तान् प्रेत्य त्यक्त्वेमं देहमभिगच्छन्ति यथा कर्म्म यथा श्रुतम्। ये के चात्महनः। आत्मानं घ्नन्तीति आत्महनः। के ते। येऽविद्वांसः। कथं ते आत्मानं नित्यं हिंसन्ति। अविद्यादोषेण विद्यमानस्यात्मनस्तिरस्करणात्। विद्यमानस्यात्मनो यत्कार्य्यं फलमजरामरत्वादिसंवेदनादि लक्षणं तद्ध तस्यैव तिरोभूतं भवतीति प्राकृता अविद्वांसो

---

आद्यमन्त्रार्थं प्रपञ्चयितुं प्रथममविद्वन्निन्दा क्रियत इत्याह। अथेति॥ ते लोका इति तच्छब्दो यच्छब्दार्थे। यथाश्रुतमिति येन येन यादृशं प्रतिषिद्धं विहितं वा देवताविज्ञानमनुष्ठितं स तत्तदनुरूपामेव योनिमाप्नोतीत्यर्थः॥ आत्महन्तृत्वस्योदरभेदिनि प्रसिद्धेः कथमविद्वांस आत्महन इत्याह। कथं त इति॥ उदरभेदिनोऽध्यात्माधिकारे प्रसक्त्यभावादमूर्त्तत्वाच्चात्मन तिरस्कार एवात्महन्तृत्वमित्याह। अविद्यादोषेणेति॥ यथा कस्यचिच्छूद्रस्य मिथ्याभिशापो ब्रह्मवध उच्यते तद्वदात्मनि पापित्वाद्यध्यासोऽपि हिंसैवेत्यर्थः॥ अजरामरत्वादिलक्षणोऽहमिति संवेदनमभिधानञ्च यत्कार्य्यं तदपि हतस्येव न दृश्यत इति हननमुपपद्यत इत्याह। विद्य-

अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्

जना आत्महन उच्यन्ते । तेन ह्यात्महननदोषेण संसरन्ति ते ॥ ३ ॥

यस्यात्मनो हननादविद्वांसः संसरन्ति तद्विपर्य्ययेण विद्वांसो मुच्यन्ते ते नात्महनः । तत्कीदृशमात्मतत्त्वमित्युच्यते । अनेजत् न एजत् । एजृ कम्पने । कम्पनं चलनं स्थिरत्वप्रच्युतिस्तद्वर्जितं सर्व्वदा एकरूपमित्यर्थः । तच्चैकं सर्व्वभूतेषु मनसः सङ्कल्पादिलक्षणात् जवीयो जववत्तरम् । कथं विरुद्धमुच्यते । ध्रुवं निश्चलमिदं मनसो जवीय इति च । नैष दोषः । निरुपाध्युपाधिमत्त्वोपपत्तेः । तत्र निरुपाधिकेन रूपेणोच्यते अनेजदेकमिति । मनसोऽन्तःकरणस्य सङ्कल्पविकल्पलक्षणस्योपाधेरनुवर्त्तनादिह देहस्थस्य मनसो ब्रह्मलोकादिदूरस्थसङ्कल्पनं क्षणमात्राद्भवतीत्यतो मनो जविष्ठं लोके प्रसिद्धम् । तस्मिन्मनसि ब्रह्मलोकादीन् द्रुतं गच्छति सति प्रथमं प्राप्त इवात्मचैतन्याभासो गृह्यतेऽतो मनसो जवीय इत्याह । नैनद्देवा द्योत-

---

मानस्येति ॥ अस्यात्मघातस्य प्रायश्चित्तविधानादर्शनात्संसरणमेव फलमित्याह । तं न हीति ॥ ३ ॥

उत्तरमन्त्रमवतारयति । यस्यात्मन इत्यादि ॥ अविक्रियमेवञ्चेदात्मतत्त्वं कथं केचन स्वर्गगामिनः केचन नरकगामिन इति सांसारिकव्यवस्था स्यात् मम उपाधिनिबन्धनेत्यभिप्रेत्याह । मनस इत्यादिना ॥ उपाधेरनुवर्त्तमानात् विक्रियादिव्यवहाराश्रयत्वमिति शेषः । ननु मनसो देहान्तःस्थत्वाद्बहिर्गमनायोग्यात्कथं वेगवत्त्वमित्याशङ्क्याह । देहस्थस्येति ॥ जवीयस्त्वादश्वादिवत्तर्हि चरणादिपाद्यत्वं प्राप्तमित्याशङ्क्याह । नैन-

पूर्वमर्षत्। तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥

नैनद्देवाश्चक्षुरादीनीन्द्रियाणि एतत्प्रकृतमात्मतत्त्वं नाप्नुवन् न प्राप्तवन्तः। तेभ्यो मनो जवीयो मनोव्यापारव्यवहितत्वात्। आभासमात्रमप्यात्मनो नैव देवानां विषयीभवति। यस्माज्जवनान्मनसोऽपि पूर्वमर्षत् पूर्वमेव गतम्। व्योमवद्व्यापित्वात्। सर्वव्यापि तदात्मतत्त्वं सर्वसंसारधर्मवर्जितं स्वेन निरुपाधिकेन स्वरूपेणाविक्रियमेव सदुपाधिकृताः सर्वाः संसारविक्रिया अनुभवतीवाविवेकिनां मूढानामनेकमिव च प्रति देहं प्रत्यवभासत इत्येतदाह। तद्धावतो द्रुतं गच्छतोऽन्यान्मनोवागिन्द्रियप्रभृतीनात्मविलक्षणान् अत्येति अतीत्य गच्छतीव। इवार्थं स्वयमेव दर्शयति। तिष्ठदिति। स्वयमविक्रियमेव सदित्यर्थः। तस्मिन्नात्मतत्त्वे सति नित्यचैतन्यस्वभावे मातरिश्वा मातरि अन्तरिक्षे श्वसति गच्छतीति वायुः सर्वप्राणभृत् क्रियात्मको यदाश्रयाणि कार्य्यकरणजातानि यस्मिन्नोतानि प्रोतानि च यत्सूत्रसञ्ज्ञकं सर्व्वस्य जगतो विधारयितृ स मातरिश्वा।

देवा इति॥ चक्षुरादिप्रवृत्ते मनोव्यापारपूर्व्वकत्वात्तदविषयत्वे चक्षुरादिविषयत्वमप्यात्मनो न सम्भवतीत्यर्थः॥ मनसो वा कथं न विषय आत्मेत्यत आह। यस्मादिति॥ यथा मनःस्वं परिमाणं मनसो न विषयोऽत्यन्ताव्यवधानात्तथात्माप्यत्यन्ताव्यवधानान्मनसो न विषयस्तद्व्यापकत्वाच्चेत्यर्थः॥ उक्तात्मस्वरूपवचनयोगोपपत्तिमाह। तस्मिन्नात्मतत्त्वे सतीति॥ ओतानि कर्म्माणि सोमाज्यपयःप्रभृतिभिरद्भिः सम्पाद्यन्त इति सम्बन्धाद्वाक्याशिकोऽप्यब्दः कर्म्म वस्तु प्राणिचेष्टायाश्चार्थनिमित्तत्वप्रसिद्धेः।

तदेजति तन्नैजति तद्दूरे तद्वन्तिके। तदन्तरस्य सर्व्वस्य तदु सर्व्वस्यास्य बाह्यतः॥ ५॥

---

अपः कर्म्माणि प्राणिनां चेष्टालक्षणानि। अग्न्यादित्यादीनां ज्वलनदहनप्रकाशाभिवर्षणादिलक्षणानि दधाति विभजतीत्यर्थः। धारयतीति वा। भीषास्माद्वातः पवते इत्यादिश्रुतिभ्यः। सर्व्वा हि कार्य्यकारणादिविक्रिया नित्यचैतन्यात्मस्वरूपे सर्व्वास्पदभूते सत्येव भवन्तीत्यर्थः॥ ४॥

न मन्त्राणां जामिताऽस्तीति पूर्वमन्त्रोक्तमप्यर्थं पुनराह। तदात्मतत्त्वं यत्प्रकृतमेजति चलति तदेव च नैजति स्वतो नैव चलति अचलमेव सच्चलतीवेत्यर्थः। किञ्च तद्दूरे वर्षकोटिशतैरप्यविदुषामप्राप्यत्वाद्दूर इव। तद्वन्तिके समीपेऽत्यन्तमेव विदुषामात्मत्वान्न केवलं दूरेऽन्तिके च। तदन्तरेऽभ्यन्तरे सर्वस्य। आत्मा सर्वान्तर इति श्रुतेः। अस्य सर्वस्य जगतो नामरूपक्रियात्मकस्य तदु सर्वस्यास्य बाह्यतो व्यापित्वादाकाशवन्निरतिशयसूक्ष्मत्वादन्तः प्रज्ञानघन एवेति शासनान्निरन्तरम्॥ ५॥

---

कारणवाचकः शब्दः कार्य्योपलक्षणपरः प्रयुक्त इत्यर्थः। ईश्वरस्यापि हिरण्यगर्भस्य नियतप्रवृत्त्यनुपपत्त्याधिष्ठाता परमेश्वरः कल्प्यत इत्युक्तमिदानीं मातरिश्वपदस्य प्रचलितार्थमादाय तात्पर्यमाह। सर्व्वा हीति॥ ४॥

जामिता आलस्यं व्यापित्वादाकाशस्येवाऽस्ति निरतिशयसूक्ष्मत्वादन्तरे इति तर्हि निरन्तरमेवान्तरं न बाह्यान्तराभावादित्याशङ्क्याह। प्रज्ञानघन एवेति॥ ५॥

यस्तु सर्व्वाणि भूतान्यात्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥ ६ ॥
यस्मिन् सर्व्वाणि भूतान्यात्मैवाभूद्विजानतः ।

---

यस्तु परिव्राड्मुमुक्षुः सर्व्वाणि भूतानि अव्यक्तादीनि स्थावरान्तान्यात्मन्येवानुपश्यति आत्मव्यतिरिक्तानि न पश्यतीत्यर्थः । सर्वभूतेषु च तेष्वेव चात्मानं तेषामपि भूतानां स्वमात्मानमात्मत्वेन यथास्य कार्य्यकारणसङ्घातस्यात्माऽहं सर्वप्रत्ययसाक्षिभूतश्चेता: केवलो निर्गुणोऽनेनैव स्वरूपेणाव्यक्तादीनां स्थावरान्तानामहमेवात्मेति सर्वभूतेषु चात्मानं निर्विशेषं यस्त्वनुपश्यति स ततस्तस्मादेव दर्शनान्न विजुगुप्सते जुगुप्सां घृणां न करोति । प्राप्तस्यानुवादोऽयम् । सर्व्वा हि घृणात्मनोऽन्यद्दुष्टं पश्यतो भवत्यात्मानमेवात्यन्तविशुद्धं निरन्तरं पश्यतो न घृणानिमित्तमस्तीति प्राप्तमेव । ततो न विजुगुप्सत इति ॥ ६ ॥

इममेवार्थमन्योऽपिमन्त्र आह । यस्मिन् सर्वाणि भूतानि । यस्मिन् काले यथोक्तात्मनि वा तान्येव भूतानि सर्वाणि परमार्थात्मदर्शनात् आत्मैवाभूदात्मैव संवृत्तः परमार्थवस्तु विजानतस्तत्र तस्मिन् काले तत्र चात्मनि वा कः शोकः

---

उक्तात्मज्ञानस्य फलं विधिनिषेधातीतजीवन्मुक्तस्वरूपेणावस्थानमित्याह । यस्त्विति ॥ इममेवार्थमन्योऽपि मन्त्र आह । यस्मिन्निति । निरतिशयानन्दः सन् एव दुःखास्पृष्टमात्मानमजानतो भवति हा । हतोऽहं न मे पुत्रोऽस्ति न क्षेत्रमिति । ततः पुत्रादीन् कामयते

तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥७॥
स पर्य्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपाप-

---

को मोहः । शोकश्च मोहश्च कामबीजमजानतो भवति । न चात्मैकत्वं विशुद्धं गगनोपमं पश्यतः को मोहः कः शोक इति । शोकमोहयोरविद्याकार्य्ययोराक्षेपेणासम्भवप्रदर्शनात् । सकारणस्य संसारस्यात्यन्तमेवोच्छेदः प्रदर्शितो भवति ॥८॥

योऽयमतीतैर्मन्त्रैरुक्त आत्मा स स्वेन रूपेणोच्यतेऽयं मन्त्रः । सपर्य्यगात्स आत्मा पर्य्यगात्परि समन्तादगाद्गतवान् आकाशवद्व्यापीत्यर्थः । शुक्रं शुद्धं ज्योतिष्मद्दीप्तिमानित्यर्थः । अकायमशरीरो लिङ्गशरीरवर्जित इत्यर्थः । अव्रणमक्षतम् । अस्नाविरं स्नावा शिरा यस्मिन्न विद्यन्त इत्यस्नाविरम् । अव्रणमस्नाविरमित्याभ्यां स्थूलशरीरप्रतिषेधः । शुद्धं निर्मलम् । अपापविद्धं धर्माधर्मादिपापवर्जितमिति । शुक्रमित्यादीनि वचांसि पुंलिङ्गत्वेन परिणेयानि । स पर्य्यगादित्युपक्रम्य कविर्मनीषीति पुंलिङ्गत्वेनोपसंहारात् । कविः क्रान्तदर्शी सर्वदृक् । नान्यतोऽस्ति द्रष्टेत्यादिश्रुतेः । मनीषी मनस ईशिता सर्वज्ञ ईश्वर इत्यर्थः । परिभूः सर्वेषामुपर्य्युपरि भवतीति परिभूः । स्वयम्भूः स्वयं भवतीति येषामुपरि भवति यश्चो-

---

तदर्थं देवताराधनादि चिकीर्षति तदात्मैकत्वं पश्यतस्ततोऽन्वयव्यतिरेकाभ्यां शोकादेरविद्याकार्य्यत्वावधारणाच्चाविद्यानिवृत्त्यैव शोकादेरात्यन्तिकनिवृत्तिर्विद्याफलत्वेन विवक्षिता ॥ अयमात्मा सुषुप्तेऽपि

विश्वम् । कविर्मनीषी परिभूः स्वयम्भूर्याथात-
थ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥ ८ ॥

अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते । ततो

---

परि भवति स सर्वः स्वयमेव भवतीति स्वयम्भूः । स नित्यमुक्त ईश्वरो याथातथ्यतः सर्वज्ञत्वाद्यथातथाभावो याथातथ्यं यथाभूतकर्मफलसाधनतोऽर्थान् कर्तव्यपदार्थान् व्यदधाद्विहितवान् यथानुरूपं व्यभजदित्यर्थः । शाश्वतीभ्यो नित्याभ्यः समाभ्यः संवत्सराख्येभ्यः प्रजापतिभ्य इत्यर्थः ॥ ८ ॥

अत्राद्येन मन्त्रेण सर्वैषणापरित्यागेन ज्ञाननिष्ठोक्ता प्रथमवेदार्थः । ईशावास्यमिदं सर्वं मा गृधः कस्यस्विद्धनमित्यज्ञानां जिजीविषूणां ज्ञाननिष्ठासम्भवे कुर्वन्नेवेह कर्माणि जिजीविषेदिति कर्मनिष्ठोक्ता द्वितीयो वेदार्थः । अनयोश्च निष्ठयोर्विभागो मन्त्रप्रदर्शितयोर्बृहदारण्यकेऽपि प्रदर्शितः । सोऽकामयत जाया मे स्यादित्यादिना । अज्ञस्य कामिनः कर्माणीति मन एवास्यात्मा वागजाये-

---

भावादित्याह । श्लोकश्च श्लोकश्चेत्यादिना ॥ योऽयमिति । ष्णुप्रस्रवणे धातुः । स्नावयन्ति शरीरमिति स्नावा सिरा ॥ ६ ॥ ७ ॥ ८ ॥

प्रकरणविभागं दिदर्शयिषुरनुवदति । अत्राद्येनेति ॥ यदुक्तं भाष्यकारेण सर्वोपनिषदेकब्रह्मविद्याप्रकरणं ततः प्रकरणभेदकरणमनुचितम् । तदसत् । प्राणाद्युपासनविधानस्याप्युपनिषत्सु दर्शनात् । न च तदपि ब्रह्मज्ञानाङ्गमिति वाच्यम् । पृथक्फलश्रवणात् । तेनापि व्याकृताव्याकृतोपासनसमुच्चयविधानस्य प्रकरणभेदेनैवेष्टत्वा-

भूय इव ते तमो य उ विद्यायाꣳ रताः ॥ ९ ॥

---

त्यादिवचनात्। अज्ञत्वं कामित्वं च निश्चितमवगम्यते। तथाच तत्फलं सप्तान्नसर्गास्तेष्वात्मभावेनात्मस्वरूपावस्थानं जायाद्येषणात्रयसन्न्यासेन चात्मविदां कर्मनिष्ठाप्रातिकूल्येनात्मस्वरूपनिष्ठैव दर्शिता। किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इत्यादिना। ये तु ज्ञाननिष्ठाः सन्न्यासिनस्तेभ्योऽसुर्य्या नाम त इत्यादिनाऽविद्यानिन्दाद्वारेणात्मनो याथात्म्यं स पर्य्यगादित्येतदेतैर्मन्त्रैरुपदिष्टम्। तेष्वेवाधिकृतान् कामिन इति। तथाच श्वेताश्वतराणां मन्त्रोपनिषदि अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टमित्यादि विभज्योक्तम्। ये तु कर्मनिष्ठाः कर्म कुर्वन्त एव जिजीविषवस्तेभ्य इदमुच्यते। अन्धं तम

---

त्वात्ताभ्यामुक्तोपासनस्य प्रकारान्तरत्वात्तथाह्यथा कर्मकाण्डेऽग्निहोमादिप्रकरणं भिन्नमेवेष्यते भिन्नाधिकारत्वात्तत्तत्कर्मवत्तथोपनिषत्स्वपि भिन्नाधिकारकर्माविरोधाहिरण्यविद्याप्रकरणभेदो न विरुध्यते॥ मन्त्रार्थं ब्राह्मणश्रुतिं दर्शयितुमुपक्रमते। अनयोश्चेत्यादिना॥ तत्र वा कथमज्ञत्वमवगम्यत इत्याशङ्क्याह। मन एवेति॥ जाया मे स्यादथ प्रजायेयाऽथ वित्तं मे स्यादथ कर्म कुर्वीयेति कामयमानस्य याज्ञो जायादिर्यदा न सम्पद्यते तदाऽध्यात्मं जायादिसम्पत्तिं दर्शयति। मनइत्यादिना॥ एतच्चाज्ञत्वलिङ्गं मनआदिष्वात्मत्वाद्यभिमानस्याज्ञानकार्यत्वात्। यथा वा याज्ञकामिन्यलाभे रुग्णा मनोविजृम्भितकामिनीरूपभुञ्जानोऽज्ञः प्रसिद्धस्तद्वदयमपीत्यर्थः॥ तेषाञ्च कर्मणां फलं संसारापत्तिरैवेत्यपि दर्शितमित्याह। तथा चेति॥ एकं साधारणमन्नं यदिदमद्यते द्वे देवानां हुतप्रहुते दर्शपौर्णमासौ

इत्यादि। कथं पुनरेवमवगम्यते न तु सर्वेषामित्युच्यते। अकामिनः साध्यसाधनभेदोपमर्देन। यस्मिन् सर्वाणि भूतानि ग्रात्मैवाभूद्विजानतः। तत्र को मोहः कः शोक एकत्वमनुपश्यतः। यदात्मैकत्वविज्ञानं तन्न केनचित्कर्मणा ज्ञानान्तरेण वा वाह्यमूढः समुच्चिचीषति। इह ग्रन्थे तु समुच्चिचीषयाऽविद्वदादिनिन्दा क्रियते। तत्र च यस्य येन समुच्चयः सम्भवति न्यायतः शास्त्रतो वा तदिहोच्यते। तद्दैवं वित्तं देवताविज्ञानं कर्मसम्बन्धित्वेनोपन्यस्तं न परमात्मज्ञानम्। विद्यया देवलोक इति पृथक्फलश्रवणात्। तयोर्ज्ञानकर्मणोरिहैकैकानुष्ठाननिन्दा समुच्चिचीषया न निन्दापरैवैकैकस्य पृथक्फलश्रवणात्।

---

वा लोकत्रयस्य भोगसाधनानि मनोवाक्प्राणलक्षणानि पञ्चधमेकं पच इति सप्तान्नवर्गो दर्शितः। श्रुत्या यत्सप्तान्नानि मेधया तपसा जनयतीत्यादिना। अत्रैकैको यजमान एवं विहितप्रतिषिद्धज्ञानकर्मानुष्ठानादर्थस्य संसारस्य साक्षात्पारम्पर्याभ्यां जनकत्वात्पितेत्युच्यते। पुत्रेष्वेतेषु तस्य पितुरहं ममेदमित्यात्मत्वाध्यासेन मनआदिष्वितरेषु च सम्बन्धाध्यासेनावस्थानं संसारः प्रसिद्ध इत्यर्थः। एवं मन्त्रप्रदर्शिते निष्ठाद्वये ब्राह्मणसम्मतिं दर्शयित्वा प्रकरणविभागं दर्शयति। ये तु ज्ञाननिष्ठा इत्यादिना। आत्मान्नमिश्र इति उक्तमान्नमिश्र इत्यर्थः। साध्यसाधनभेदोपमर्देन यदात्मैकत्वविज्ञानं यस्मिन् सर्वाणि भूतान्यात्मैवाभूदित्यवधारणेनोक्तं पूर्वार्द्धेनोत्तरार्द्धेन च संसारनिवृत्तिफलकथनं तन्न केनचिदमूढः समुच्चिचीषति। अन्धन्तम इत्यादौ तु समुच्चिचीषया विद्वदादिनिन्दा दृश्यते। ततः किमित्यत आह। तत्र च यस्येति। कस्य तर्हि ज्ञानस्य कर्मणा समुच्चयः सम्भवतीत्यत आह। तद्दैवं वित्तमिति। यत्प्रोक्तं भाष्यकृता। इयं वाक्यमिति मन्त्रो ब्रह्म विद्यायाः

विद्यया तदारोहन्ति । विद्यया देवलोकः। न तत्र दक्षिणा यान्ति । कर्मणा पितृलोक इति । न हि शास्त्रविहितं किञ्चिदकर्त्तव्यतामियात्तत्र । अन्धन्तमः अदर्शनात्मकं तमः प्रविशन्ति । के । येऽविद्यां विद्याया अन्याऽविद्या तां कर्मेत्यर्थः । कर्मणो विद्याविरोधित्वात् । तामविद्यामग्निहोत्रादिलक्षणामेव केवलामुपासते तत्पराः सन्तोऽनुतिष्ठन्तीत्यभिप्रायः । ततस्तस्मादन्धात्मकात्तमसो भूय इव बहुतरमेव तमः प्रविशन्ति । कर्म हित्वा ये उ विद्यायामेव देवताज्ञाने रताः । तत्रावान्तरफलभेदं विद्याकर्मणोः

---

प्रक्रान्तत्वात्तस्य एव समुच्चयोपपत्त्या निन्दोच्यत इति । तदसत् । न हि प्रकृतमित्येतावता सम्बध्यते किन्तु सम्बन्धयोग्यम् । शुद्धप्रत्यगात्मैकत्वविद्याया सर्वाध्यासोपमर्दकत्वान्नास्ति कर्मसम्बन्धः कर्मसम्बन्धयोग्यता । किञ्च यत्किञ्चित्सम्बन्धेऽपि फलस्य व्यवधानं सम्भाव्यते तस्यैव सहकारिसमुच्चय इष्यते । दर्शनादेरिवैकत्वमनुपश्यतः को मोहः कः शोक इत्येकत्वदर्शनसमकालं मोहादिनिवृत्त्यभिधानाच्च कालान्तरीयफलम् । ततो न सहकारिसमुच्चयोपपत्तिः । किञ्चास्या मन्त्रोपनिषदो ब्राह्मणे विविदिषन्ति यज्ञेनेत्यादौ तृतीयाश्रुत्या यज्ञादेरिष्यमाणवेदनकरणत्वेन सम्बन्धः प्रतीयते । तत्कथं दुर्बलेन प्रकरणेन सहकारिसम्बन्धः कल्प्यते । प्रधानस्य च विद्यायाः सहकारिसम्बन्धविधिशून्या निन्देत्यप्ययुक्तम् । अत एवाग्नीध्रनाद्यनपेक्षेतिसूत्रविरोधश्च समसमुच्चयश्च परेणापि नेष्यते । विरोधेन च परिजह्रे सत्यात्कर्माविरुद्धदेवताज्ञानस्यैव समुच्चयो विधीयते ॥ ननु देवताज्ञानस्य कर्मफलातिरिक्तफलाभावात्समुच्चयो न सम्भवतीत्यत आह । विद्ययेति ॥ ननु समुच्चयोपपत्त्या निन्देति किमिति व्याख्यायते अध्ययनविधेर्मोक्षादर्वाक्पर्यवसानानुपपत्तेर्देवलोकादिप्राप्तेः फलाभासत्वात्प्ररोचनार्थैव निन्दा किं नेष्यते तत्राह । तयोर्ज्ञानकर्मणोरिति ॥ फलशब्दो भोग्ये रूढो मोक्ष

अन्यदेवाहुर्विद्ययाऽन्यदेवाहुरविद्यया इति
शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १० ॥

विद्याञ्चाविद्याञ्च यस्तद्वेदोभयꣳ सह। अवि-

समुच्चयकारणमाह । अन्यथा फलवदफलवतोः सन्नि-
हितयोरङ्गाङ्गितया जामितैव स्यादित्यर्थः ॥ ९ ॥

अन्यत्पृथगेव विद्यया क्रियते फलमित्याहुर्वदन्ति।
अन्यदाहुरविद्यया कर्मणा क्रियत इति । तथोक्तं
कर्मणा पितृलोको विद्यया देवलोक इति। एवं शुश्रुमः
श्रुतवन्तो वयं धीराणां धीमतां वचनम्। ये आचार्य्या नोऽ-
स्मभ्यं तत्कर्म च ज्ञानञ्च विचचक्षिरे व्याख्यातवन्तस्तेषामय-
मागमः पारम्पर्य्यागत इत्यर्थः ॥ १० ॥

यत एवं विद्याञ्चाविद्याञ्च देवताज्ञानं कर्म चेत्यर्थः।
यस्तदेतदुभयं सहैकेन पुरुषेणानुष्ठेयं वेद तस्येदं समुच्चय-
कारिण एकपुरुषार्थसम्बन्धः क्रमेण स्यादित्युच्यते। अवि-
द्यया कर्मणाऽग्निहोत्रादिना मृत्युं स्वाभाविकं कर्म ज्ञा-

मनिच्छतामपि समीहिते फलव्यवहारदर्शनात्ततो यो देवलोकादिगुणादि
तृषते तस्य तदपि फलं भवत्येवेत्यर्थः ॥ ९ ॥

चित्तत्त्वा माया परमेश्वरस्योपाधिः । मायान्तु प्रकृतिं विद्यान्मायि-
नन्तु महेश्वरमित्यादिश्रुत्यन्तरप्रसिद्धात्वात्सम्भूतिशब्देनोच्यते न ब्रह्म।
तस्य निर्विकारस्य साक्षात्प्रकृतितत्त्वत्वानुपपत्तेः । भास्कराभिमतस्तु
परिणामवादस्तत्त्वालोके निरस्त एवास्माभिः सांसारिकदुःखानुभवा-
भावने च सुषुप्तिवत्प्रकृतिलयस्य पुरुषेणार्थ्यमानताऽप्युपपद्यते। फलञ्च
कर्मोपासन इव प्रकृत्युपासनेऽपि परमेश्वर एव दास्यति । ततो

द्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ ११ ॥
अन्धन्तमः प्रविशन्ति येऽसम्भूतिमुपासते ।
ततो भूय इव ते तमो य उ सम्भूत्याꣳ रताः ॥१२॥
अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात् ।

---

च मृत्युशब्दवाच्यमुभयं तीर्त्वा अतिक्रम्य विद्यया देवताज्ञानेनामृतं देवतात्मभावमश्नुते प्राप्नोति । तद्ध्यमृतमुच्यते यद्देवतात्मगमनम् ॥ ११ ॥

अधुना व्याकृताव्याकृतोपासनयोः समुच्चिचीषया प्रत्येकं निन्दोच्यते । अन्धन्तमः प्रविशन्ति ये असम्भूतिं सम्भवनं सम्भूतिः सा यस्य कार्यस्य सा सम्भूतिः तस्या अन्या असम्भूतिः प्रकृतिः कारणमव्याकृताख्यं तामसम्भूतिमव्याकृताख्यं प्रकृतिं कारणमविद्यां कामकर्मबीजभूतामदर्शनात्मिकामुपासते ये ते तदनुरूपमेवान्धन्तमोऽदर्शनात्मकं प्रविशन्ति ॥ ततस्तस्मादपि भूयो बहुतरं तमः प्रविशन्ति ये सम्भूत्यां कार्यब्रह्मणि हिरण्यगर्भाख्ये रताः ॥ १२ ॥

अधुनोभयोरुपासनयोः समुच्चयकारणमवयवफलभेदमाह । अन्यदेव पृथगेवाहुः फलं सम्भवात्सम्भूतेः कार्यब्रह्मोपासनादणिमाद्यैश्वर्यलक्षणमाख्यातवन्त इत्यर्थः ।

---

अकृत्वात्मकृते फलवत्त्वानुपपत्तेरुपासनस्यानुपपत्तिरित्यपि कुचोद्यमेव ॥ १० । ११ । १२ ॥ विस्तरेणोक्तमर्थजातं संक्षिप्योपसंहरति । मानुषदैववित्तद्वयमित्यादिना ॥ शरीरपाटवं गोभूहिरण्यादिकाञ्च वसुधनं च मानुषं वित्तम् । दैवं वित्तं देवताज्ञानस्वरूपमन्यच्च

इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १३ ॥
सम्भूतिञ्च विनाशञ्च यस्तद्वेदोभयꣳ सह ।

---

तथा चान्यदाहुरसम्भवादसम्भूतेरव्याकृतादव्याकृतोपासनाद्यदुक्तमन्धन्तमः प्रविशन्तीति प्रकृतिलय इति च पौराणिकैरुच्यते इति एवं शुश्रुम धीराणां ये नस्तद्विचचक्षिरे व्याकृताव्याकृतोपासनफलं व्याख्यातवन्त इत्यर्थः ॥ १३ ॥

यत एवमतः समुच्चयः सम्भूत्यसम्भूत्युपासनयोर्युक्त एकपुरुषार्थत्वाच्चेत्याह । सम्भूतिं च विनाशञ्च । यस्तद्वेदोभयं सविनाशो धर्मो यस्य कार्यस्य स तेन धर्मिणाऽभेदेनोच्यते । विनाश इति तेन तदुपासनेनानैश्वर्यमधर्मकामादिदोषजातञ्च मृत्युं तीर्त्वा हिरण्यगर्भोपासनेन ह्यणिमादिप्राप्तिः फलम् । तेनानैश्वर्यादिमृत्युमतीत्यासम्भूत्या अव्याकृतोपासनया अमृतं प्रकृतिलयलक्षणमश्नुते । सम्भूतिञ्च विनाश-

---

सम्बन्धाभिधित्सयार्थम् ॥ विशेषमनुवदति । तत्र निषेकादीति ॥ तदुक्तमिति प्रत्युक्तमन्त्रे च ॥ विद्यायास्त्वाधिकाऽमृतत्वं फलमित्युक्तमन्त्राभिरिति योजना । व्याहृत्यवयव इति तस्य भूरिति शिरो भुव इति बाहू स्वरिति प्रतिष्ठे पादावित्यर्थः । मन्त्रानुपदश्यो व्याख्याय सङ्क्षेपतो विचारमारभते । अविद्यया मृत्युं तीर्त्वेत्यादिना ॥ अमृतत्वस्येत्यमृतत्वस्य मुख्यमेव कथमश्नुते इति सम्बन्धः । शास्त्रीययोर्ज्ञानकर्मणोर्विरोधाविरोधौ शास्त्रीयावेव ग्राह्यौ न तर्कमात्रेणेति परेणोक्तम् ॥ सिद्धान्तो शास्त्रसिद्ध एव विरोध इत्याह दूरमेत इति ॥ विषूची नानागती विद्याऽविद्ये दूरं विपरीतेऽतिशयेन विरुद्धे इत्यर्थः । वह्निशैत्यवदनुपपत्तेरिति कानुपपत्तिः । काठके विरोध श्रवणात् । तद्गतविद्याऽविद्ययोर्विरोधेऽस्ति हेत्वविरोधश्रवणादविरोधो भविष्यतीति

विनाशेन मृत्युं तीर्त्वा सम्भूत्यामृतमश्नुते ॥ १४ ॥
हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखं ।

---

त्येत्यत्रावर्णलोपेन निर्देशो द्रष्टव्यः। प्रकृतिलयफलं श्रुत्यनुरोधात्। मानुषदैववित्तसाध्यं फलं शास्त्रलक्षणं प्रकृतिलयान्तम्। एतावती संसारगतिः। अतःपरं पूर्वोक्तमात्मैवाऽभूद्विजानत इति सर्वात्मभाव एव सर्वैषणासंन्यासज्ञाननिष्ठाफलं एवं द्विप्रकारः प्रवृत्तिनिवृत्तिलक्षणो वेदार्थोऽत्र प्रकाशितः। तत्र प्रवृत्तिलक्षणस्य वेदार्थस्य विधिप्रतिषेधलक्षणस्य कृत्स्नस्य प्रकाशने प्रवर्ग्यान्तं ब्राह्मणमुपयुक्तम्। निवृत्तिलक्षणस्य प्रकाशनेऽत ऊर्द्ध्वं बृहदारण्यकं तत्र निषेकादिश्मशानान्तं कर्म कुर्वन् जिजीविषेत् यो विद्यया सहापरब्रह्मविषयया। तदुक्तं विद्याञ्चाविद्याञ्च यस्तद्वेदोभयꣳ सह ॥ १४ ॥

अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुत इत्युक्तं तत्र केन मार्गेणामृतत्वमश्नुत इत्युच्यते। तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुष एतदुभयꣳ सत्यं ब्रह्मोपासीनो यथोक्तकर्मकृच्च यः सोऽन्तकाले प्राप्ते सत्यात्मानमात्मनः प्राप्तिद्वारं याचते

---

न वाच्यं विरोधाविरोधयोः सिद्धत्वेन विकल्पसम्भवादुदितानुदितहोमयोर्हि पुरुषतन्त्रत्वाद्युक्तो विकल्प इत्युक्तं तर्ह्यविरोध एवास्तु समुच्चयविधिबलादिति चेन्न। सह ब्रह्मविद्याविद्ययोः शुक्तिविद्याविद्ययोरिव सहसम्भवानुपपत्तेः समुच्चयविधिरसिद्धः। सिद्धे समुच्चयविधौ तद्बलादवि-

तत्त्वं पूषन्नपावृणु सत्यधर्म्माय दृष्टये ॥ १५ ॥
पूषन्नेकर्षे यम सूर्य्य प्राजापत्य व्यूह रश्मीन्

---

हिरण्मयेन पात्रेण । हिरण्मयमिव हिरण्मयं ज्योतिर्म्मयमित्येतत् । तेन पात्रेणेवापिधानभूतेन सत्यस्यादित्यमण्डलस्थस्य ब्रह्मणोऽपिहितं छादितं मुखं द्वारं तत्त्वं हे पूषन् अपावृणु सत्यधर्म्माय तव सत्यस्योपासनात् सत्यं धर्म्मो यस्य मम सोऽहं सत्यधर्म्मा तस्मै मह्यं अथवा यथाभूतस्य धर्म्मस्यानुष्ठात्रे दृष्टये तव सत्यात्मन उपलब्धये ॥ १५ ॥

हे पूषन् जगतः पोषणात्पूषा रविस्तथैक एव ऋषति गच्छतीत्येकर्षिः । हे एकर्षे । तथा सर्वस्य संयमनाद्यमः । हे यम । तथा रश्मीनां प्राणानां रसानां स्वीकरणात्सूर्य्यः । हे सूर्य्य । प्रजापतेरपत्यं प्राजापत्यः । हे प्राजापत्य । व्यूह विगमय रश्मीन् स्वान् । समूह एकीकुरु उपसंहर ते तेजस्तापकं ज्योतिः । यत्ते तव रूपं कल्याणतममत्यन्तशोभनं तत्ते तवात्मनः प्रसादात्पश्यामि । किञ्चाहं न तु त्वां

---

रोधविधिविरोधावगमात् समुच्चयविधिरित्यन्योन्याश्रयः स्यादित्यर्थः । युगपत्सम्भवानुपपत्तावपि क्रमेणैकाश्रये विद्याविद्ये स्यातामिति चेत् यदि पूर्व्वमविद्या पश्चात्तु विद्येति क्रमस्तर्हीष्यत एव यदि पश्चात्तर्ह्यसम्भव इत्याह । न विद्योत्पत्ताविति । पूर्व्वसिद्धाया अविद्यायाः प्रध्वस्तत्वादन्यस्याश्चोत्पत्तौ कारणासम्भवात् बाधाभावेन भ्रमसंशयादीनामपि विदुषोऽनुपपत्तिरित्यर्थः । विद्योत्पत्तौ माभूदविद्या कामकर्म्म तु भविष्यति विदुषो

समूह । तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषः सोऽहमस्मि ॥ १६ ॥

वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् । ॐ क्रतो स्मर कृतꣳ स्मर क्रतो स्मर कृतꣳ स्मर ॥ १७ ॥

---

अत्ययवद्याचे योऽसावादित्यमण्डलस्थो व्याहृत्यवयवपुरुषः पुरुषाकारत्वात् पूर्णम् । अनेन प्राणबुद्ध्यात्मना जगत्समस्तमिति पुरुषः पुरिशयनाद्वा पुरुषः सोऽहमस्मि भवामि ॥१६॥

अथेदानीं मम मरिष्यतो वायुः प्राणोऽध्यात्मपरिच्छेदं हित्वाऽधिदेवतात्मानं सर्वात्मकमनिलममृतं सूत्रात्मानं प्रतिपद्यतामिति वाक्यशेषः । लिङ्गं चेदं ज्ञानकर्मसंस्कृतं उत्क्रामत्विति द्रष्टव्यम् । मार्गयाचनसामर्थ्यादथेदं शरीरमग्नौ हुतं भस्मान्तं भूयात् ॥ ओमिति यथोपासनं ॐप्रतीकात्मकत्वात्सत्यात्मकमग्न्याख्यं ब्रह्म अभेदेनोच्यते । हे क्रतो सङ्कल्पात्मक स्मर यन्मम स्मर्तव्यं तस्य कालोऽयं प्रत्युपस्थितोऽतः स्मर एतावन्तं कालं भावितं कृतमग्ने स्मर यन्मया बाल्यप्रभृत्यनुष्ठितं कर्म तच्च स्मर क्रतो स्मर । कृतं स्मरेति पुनर्वचनमादरार्थम् ॥ १७ ॥

---

ऽपि आख्यानभिक्षाटनादिदर्शनादित्याद्यलम् । अविद्यावत्त्वादिति ॥ चोदनाप्रवृत्ताद्युत्पन्नं हि कर्म ज्ञानेन सह तव सर्वाविरोधी-पितं ब्रह्मात्मैकत्वं साक्षादनुभवतो न चोदना सम्भवति कामाभावात्कामिनो हि सर्वाचोदनाः । अकामतः क्रियाः काश्चिद्दृश्यन्ते न हि कस्य-

पुनरन्येन मन्त्रेण मार्गं याचते । हे अग्ने नय गमय सुपथा शोभनेन मार्गेण । सुपथेति विशेषणं दक्षिणमार्गनिवृत्त्यर्थम् । निर्व्विण्णोऽहं दक्षिणेन मार्गेण गतागतलक्षणेनातो याचे त्वां पुनः पुनर्गमनागमनवर्जितेन शोभनेन पथा नय । राये धनाय कर्मफलभोगायेत्यर्थः । अस्मान्यथोक्तधर्मफलविशिष्टान् विश्वानि सर्व्वाणि हे देव वयुनानि कर्म्माणि प्रज्ञानानि वा विद्वान् जानन् । किञ्च युयोधि वियोजय विनाशय अस्मदस्मत्तो जुहुराणं कुटिलं वञ्चनात्मकमेनः पापम् । ततो वयं विशुद्धाः सन्त इष्टं प्राप्स्याम इत्यभिप्रायः । किन्तु वयमिदानीं ते न शक्नुम परिचर्य्यां कर्त्तुं भूयिष्ठां बहुतराम् । ते तुभ्यं नमउक्तिं नमस्कारवचनं विधेम तव नमस्कारेण परिचरेम इत्यर्थः । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते । विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुत इति श्रुत्वा केचित्संशयं कुर्व्वन्त्यतस्तन्निर्द्धारणार्थं सङ्क्षेपतो विचारणां करिष्यामः । तत्र तावत् किंनिमित्तः संशय इत्युच्यते । विद्याशब्देन मुख्या परमात्मविद्यैव कस्मान्न गृह्यतेऽमृतत्वञ्च । ननूक्तायाः परमात्मविद्यायाः कर्मणश्च विरोधात्समुच्चयानुपपत्तिः । सत्यम् ।

---

षित् । यद्यपि कुरुते अन्तस्तत्कामस्य चेष्टितमिति स्मरणात् । विद्वच्छरीरस्थितिस्त्वविद्यालेशाश्रया । कर्म्मशेषनिमित्तं तु विदुषो भिक्षाटनादि न कर्म्मचोदनाभावात्किन्तु यावत्प्रारब्धशरीरसंयोगभावि-

वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो

विरोधोऽस्तु नावगम्यते विरोधाविरोधयोः शास्त्रप्रमाण-
कत्वात् । यथाऽविद्यानुष्ठानं विद्योपासनञ्च शास्त्रप्रमाणकं
तथा तद्विरोधाऽतद्विरोधावपि । यथा च न हिंस्यात्सर्वा-
भूतानि इति शास्त्रावगतं पुनः शास्त्रेणैव बाध्यतेऽध्वरे-
ऽपि हिंसा स्यादिति । एवं विद्याविद्ययोरपि स्यात् ।
विद्याकर्मणोश्च समुच्चये न दूरमेते विपरीते विषूची
अविद्या या च विद्येति श्रुतेः । विद्याञ्चाविद्याञ्चेति वचना-
दविरोध इति चेन्न । हेतुस्वरूपफलविरोधात् । विद्यावि-
द्याविरोधाविरोधयोर्विकल्पासम्भवादविरोध एवेति चेन्न ।
सहसम्भवानुपपत्तेः । क्रमेण स्यातां विद्याविद्ये इति
चेन्न । विद्योत्पत्तौ तदाश्रयेऽविद्यानुपपत्तेः । न ह्यग्निरुष्णः
प्रकाशश्चेति विज्ञानोत्पत्तौ यस्मिन्नाश्रये तदुत्पन्नं तस्मिन्ने-
वाश्रये शीतोऽग्निरप्रकाशो वेत्यविद्याया उत्पत्तिर्नापि
संशयोऽज्ञानं वा । यस्मिन् सर्वाणि भूतानि आत्मैवाऽभू-
द्विजानतस्तत्र को मोहः कः शोक एकत्वमनुपश्यत इति
शोकमोहाद्यसम्भवश्रुतेः । अविद्यासम्भवात्तदुपादानस्य
कर्मणोऽप्यनुपपत्तिमवोचाम । अमृतमश्नुत इत्यापेक्षिकम-
मृतं विद्याशब्देन परमात्मविद्याग्रहणे हिरण्मयेनेत्यादिना

तत्कर्माभावं तत्र विद्वान् स्वगतं मन्यते कर्मोपादानाविद्याया
असम्भवान्नैव किञ्चित्करोमीति मन्यमानश्चेति भावः । ब्रह्मामृत-
शब्देन मुख्यमेवामृतत्वं किं न गृह्यते । विद्याशब्देन च परमात्मविद्येति

भूयिष्ठान्ते नमउक्तिं विधेम ॥ १८ ॥ इति वाज-
सनेयसंहितोपनिषत्सम्पूर्णा ॥

---

द्वारमार्गयाचनमनुपपन्नं स्यात्तस्मादस्याऽस्याभिव्याख्यात-
एव मन्त्राणामर्थ इत्युपरम्यते ॥ १८ ॥ इति श्रीगोविन्द-
भगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीश-
ङ्करभगवतः कृतौ वाजसनेयसंहितोपनिषद्भाष्यं सम्पूर्णम् ॥*॥
॥ ॐ तत्सत् ॥

---

सत्याह । अमृतमिति ॥ सत्यात्मतत्त्वपक्षे हिरण्मयादिमन्त्रेष्व
द्वारमार्गयाचनमनुपपन्नं स्यात्तस्य न प्राणा उत्क्रामन्त्यत्र ब्रह्म समश्नुते
इत्यादिश्रुतेः । ततो सत्यार्थबाधात्सौत्रार्थपक्षत्वं युक्तमित्यर्थः । यथा-
र्थान्तरं न गम्यते तथादित्युपसंहारः ॥ १२ । १४ । १५ । १६ । १७ ।
१८ ॥ ईशाप्रभृतिभाष्यस्य शाङ्करस्य परात्मनः । मन्त्रोपकृतिसिध्यर्थं
प्रणीतं टिप्पनं स्फुटम् ॥ इति श्रीपरमहंसपरिव्राजकाचार्यश्रीपु-
र्णानन्दभगवत्पूज्यपादशिष्यभगवदानन्दज्ञानकृता वाजसनेयसंहि-
तोपनिषद्भाष्यटीका समाप्ता ॥ ॐ तत्सत् ॥

---

## ॐ तत्सत् ॥

### सामवेदीयतलवकारोपनिषद्भाष्यम् ॥

ॐ परमात्मने नमः। केनेषितमित्याद्योपनिषत्परब्रह्मविषया वक्तव्येति नवमस्याध्यायस्यारम्भः॥ प्रागेतस्मात्कर्माण्यशेषतः परिसमापितानि समस्तकर्माश्रयभूतस्य च प्राणस्योपासनान्युक्तानि कर्माङ्गसामविषयाणि च। अनन्तरञ्च गायत्रसामविषयदर्शनं वंशान्तमुक्तं कार्य्यं सर्व्वमेतद्यथोक्तं कर्म च ज्ञानञ्च सम्यगनुष्ठितं निष्कामस्य मुमुक्षोः सत्त्वशुद्ध्यर्थं भवति। सकामस्य तु ज्ञानरहितस्य केवलानि श्रौतानि स्मार्त्तानि च कर्म्माणि दक्षिणमार्गप्रतिपत्तये पुनरावृत्तये च भवन्ति। स्वाभाविक्या

---

ॐ परमात्मने नमः। ॐ। यच्छ्रोत्रादेरधिष्ठानं चक्षुर्वागाद्यगोचरम्। सतोऽप्यवाच्यं परं ब्रह्म नित्यमुक्तं भजामि तत् ॥ १ ॥

केनेषितमित्यादिकां तलवकारशाखोपनिषदं व्याचिख्यासुर्भगवान् भाष्यकारोऽहंप्रत्ययगोचरस्यात्मनः संसारित्वादसंसारिब्रह्मभावस्योपनिषत्प्रतिपाद्यस्यासम्भवान्निर्विषयत्वादव्याख्येयत्वमित्याशङ्क्याहङ्कारसाक्षिणः संसारित्वप्रत्यक्षप्रमाणाविषयत्वाद्ब्रह्मत्वप्रतिपादने विरोधासम्भवात्सविषयत्वाद्व्याख्येयत्वं प्रतिजानीते। केनेषितमित्याद्येति॥ कस्तर्हि नवमस्याध्यायस्याष्टाध्याय्या सह नियतपूर्वोत्तरभावानुपपत्तिरतः सम्बन्ध इत्याशङ्क्य हेतुहेतुमद्भावलक्षणसम्बन्धं दर्शयितुं वृत्तमनुवदति। प्रागेतस्मादित्यादिना॥ कर्माङ्गसाम पाञ्चभक्तिकं

ल्पयाब्जीयया प्रवृत्त्या पश्वादिस्थावरान्ता अधोगतिः स्यात्। तथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्त्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयंस्थानमिति श्रुतेः। प्रजा ह तिस्रोऽत्यायमीयुरिति मन्त्रवर्णाद्विशुद्धसत्त्वस्य तु निष्कामस्यैव वाह्यादनित्यात्साध्यसाधनसम्बन्धादिह कृतात्पूर्व्वकृताद्वा संस्कारविशेषोद्भवाद्विरक्तस्य प्रत्यगात्मविषया जिज्ञासा प्रवर्त्तते तदेतद्वस्तु प्रश्नप्रतिवचनलक्षणया श्रुत्या प्रदर्श्यते केनेषितमित्याद्यया। काठके चोक्तम्। पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ्पश्यति नान्तरात्मन्। कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्नित्यादि परीक्ष्य लोकान् कर्म्मचितान् ब्राह्मणो निर्व्वेदमायान्नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमि-

---

स्वाप्नभक्तिकस्य तद्विषयाण्युपासनानि पृथिव्यादिलक्षणोक्तानि। प्राणस्यात्मत्वेनोपासनस्य। शिष्याचार्यसन्तानाविच्छेदो वंशस्तदवसानेन यत्नेन कार्यरूपमेव वस्तूक्तं स्यात्तर्हि प्राणाद्युपासनसहितस्य कर्म्मणः संसारफलत्वात् ब्रह्मज्ञानानुपयोगात्कथं हेतुहेतुमद्भावः सम्बन्धो विधिवित इत्याशङ्क्य नित्यकर्म्मणां तावज्ज्ञानोपयोगित्वं कथयति। सर्व्वमेतदिति॥ काम्यानां प्रतिषिद्धानाञ्च फलं तद्दोषदर्शनेन वैराग्यार्थं कथयति। सकामस्य त्विति॥ एतयोः पथोर्ज्ञानकर्म्मणोर्मध्ये केनापि मार्गेण येन प्रवृत्तास्ते प्रतिषिद्धानुष्ठायिन इत्यर्थः। जायस्व म्रियस्वेति पुनःपुनर्जायन्ते म्रियन्ते चेत्यर्थः। तिस्रः प्रजाः स्वेदजाण्डजोद्भिज्जलक्षणाः। पितृयानदेवयानलक्षणमार्गगमनद्वयमतीत्य कष्टामेव गतिमीयुः प्राप्ता इत्यर्थः॥ एवं कर्म्मफलमुक्त्वा ततो विरक्तस्य विशुद्धसत्त्वस्य ब्रह्मज्ञानेऽधिकार इति दर्शयन् हेतुहेतुमद्भावमाह। विशुद्धसत्त्वस्य त्विति॥ साध्यसाधनसम्बन्धाद्विरक्त इति सम्बन्धः॥ तत्र

त्यादि। आचार्य्यो च॥ एवं हि विरक्तस्य प्रत्यगात्मविषयं विज्ञानं श्रोतुं मन्तुं विज्ञातुञ्च सामर्थ्यमुपपद्यते नान्यथा। एतस्माच्च प्रत्यगात्मब्रह्मविज्ञानात्संसारबीजमज्ञानं कामकर्म्मप्रवृत्तिकारणमशेषतो निवर्त्तते। तत्र को मोहः कः शोक एकत्वमनुपश्यत इति मन्त्रवर्णात्। तरति शोकमात्मविद्भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्म्माणि तस्मिन्दृष्टे परावर इत्यादिश्रुतिभ्यश्च। कर्म्मसहितादपि ज्ञानादेतत्सिध्यतीति चेन्न। वाजसनेयके तस्यान्यकारणत्ववचनाज्जाया मे स्यादिति प्रस्तुत्य पुत्रेणायं लोको जय्यो नान्येन कर्म्मणा कर्म्मणा पितृलोको विद्यया देवलोक इत्यात्मनोऽन्यस्य लोकत्रयस्य कारणत्वमुक्तम्। वाजसनेयके तत्रैव च पारिव्राज्यविधाने हेतुरुक्तः। किं प्रजया करिष्यामो येषां नोऽयमात्मा नायं लोक इति

---

निमित्तस्यादृष्टस्यानियतत्वमाह। इहेह कृतादिति॥ कर्म्मफलाद्विरक्तस्य ब्रह्मजिज्ञासा भवतीत्यत्र संवादमाह। काठके चेति। आवृत्तचक्षुरिति साध्यसाधनभावादुपरतकरणग्रामवत्पुरुषस्योपलक्षणार्थत्वात्॥ अन्वयव्यतिरेकसिद्धत्वञ्चाह एवं हीति॥ नान्यथेत्यविरक्तस्य बहिर्विषयाभिप्रवणस्य प्रत्यगात्मजिज्ञासैवानुपपन्ना कथञ्चिज्जातापि न फलावसाना स्यात् शूद्रयागादिवदित्यर्थः। यद्यप्येवमुपनिषदः कर्म्मकाण्डसम्बन्धोऽस्ति तथाप्युपनिषज्जन्यज्ञानस्य निष्प्रयोजनत्वान्नोपनिषदो व्याख्यारम्भः सम्भवतीत्याशङ्क्याह। एतस्माच्चेति। समुच्चयवादिनोऽभिप्रायं शङ्कते। कर्म्मसहितादपीति॥ एकाध्ययनविधिपरिगृहीतत्वात्कर्म्मज्ञानकाण्डयोरेकं फलं वाच्यं ततः कर्म्मसमुच्चिताज्ज्ञानादज्ञाननिदानसंसारनिवृत्तिलक्षणं फलं सिध्यतीति न कर्म्मसु विरक्तस्योपनिषदारम्भ इत्यर्थः॥

तत्रायं हेत्वर्थः। प्रजाकर्म्मतत्संयुक्तविद्याभिर्मनुष्यपितृदेवलोकत्रयसाधनैरनात्मलोकप्रतिपत्तये कारणैः किं करिष्यामो न चास्माकं लोकत्रयमनित्यं साधनसाध्यमिष्टं येषामस्माकं स्वाभाविकोऽजोऽजरोऽमृतोऽभयो न वर्द्धते कर्म्मणा नो कनीयान् नित्यश्च लोक इष्टः। स च नित्यत्वान्नाविद्यानिवृत्तिव्यतिरेकेणान्यसाधननिष्पाद्यस्तस्मात्प्रत्यगात्मब्रह्मविज्ञानपूर्व्वकः सर्व्वैषणासन्न्यास एव कर्त्तव्य इति। कर्म्मसहभावित्वविरोधाच्च प्रत्यगात्मब्रह्मविज्ञानस्य। न ह्युपात्तकारकफलभेदविज्ञानेन कर्म्मणा प्रत्यस्तमितसर्व्वभेददर्शनस्य प्रत्यगात्मब्रह्मविषयस्य सहभावित्वमुपपद्यते। वस्तुप्राधान्ये सत्यपुरुषतन्त्रत्वाद्ब्रह्मविज्ञानस्य। तस्माद्दृष्टादृष्टेभ्यो बाह्यसाधनसाध्येभ्यो विरक्तस्य प्रत्यगात्मविषया ब्रह्मजिज्ञासेयं केनेषितमित्यादिश्रुत्या

---

अध्ययनविधिपरिग्रहमात्रेण कर्म्मकाण्डस्य न मोक्षफलत्वं कल्पयितुं शक्यं फलान्तरावगमविरोधादित्याह। वाजसनेयक इति॥ किञ्च यदि श्रुतेः कर्म्मसमुच्चिताज्ञानं विवक्षितं स्यात्तदा पारिव्राज्यं नोपदिशेत्॥ श्रुत्या हेत्वभिधानेन ततो न समुच्चयः श्रुत्यर्थ इत्याह। तत्रैव चेति॥ प्रजावद्वस्योपलक्षणार्थत्वमादाय हेत्वर्थमाह। तत्रायमिति॥ किं करिष्यामो न किमप्यात्मकामत्वादेवेति शेषः॥ तत्फलं भुक्त्वा क्रमेण मोक्षसम्भवात्किमिति प्रजादिष्वनादर इत्याशङ्क्याह। न चेति॥ इष्टोऽप्ययमात्मलोकः कर्म्मणा विना न लभ्यते फलत्वान्मोक्षस्यान्यथा स्वभावसिद्धत्वे बन्धमोक्षावस्थयोरविशेषापातादित्याशङ्क्याह। स चेति॥ कर्म्ममोक्षे कार्य्यस्योत्पाद्यादेरसम्भवात्सम्यग्ज्ञानादविद्यानिवृत्त्या फलप्राप्त्युपपत्तेर्न कर्म्मकार्य्यो मोक्ष इत्यर्थः॥ ब्रह्मज्ञानस्यानुभवावसानासिद्धये परोक्षनिश्चयपूर्व्वकः सन्न्यासः कर्त्तव्यः। सिद्धे चानुभवावसाने ब्रह्मा-

# ॐ तत्सत् ॥

## सामवेदीयतलवकारोपनिषत् ॥

### ॐ केनेषितं पतति प्रेषितं मनः केन प्राणः

प्रदर्श्यते ॥ शिष्याचार्य्यप्रश्नप्रतिवचनरूपेण कथनन्तु सूक्ष्मवस्तुविषयत्वात्सुखप्रतिपत्तिकारणं भवति। केवलतर्कागम्यत्वञ्च दर्शितं भवति। नैषा तर्केण मतिरापनेयेति। श्रुतेश्च आचार्य्यवान्पुरुषो वेद आचार्य्याद्धैव विद्या विदिता साधिष्ठं प्रापदिति। तद्विद्धि प्रणिपातेनेत्यादिश्रुतिस्मृतिनियमाच्च। कश्चिद्गुरुं ब्रह्मनिष्ठं विधिवदुपेत्य प्रत्यगात्मविषयादन्यत्र शरणमपश्यन्नभयं नित्यं शिवमचलमिच्छन्नपप्रच्छेति कल्प्यते। केनेषितमित्यादि॥ केनेषितमिति केन कर्त्रा इषितमिष्टमभिप्रेतं सन्मनः पतति स्वविषयं प्रति गच्छति इति सम्बध्यते। इषेराभीक्ष्ण्यार्थस्य गत्यर्थस्य चेहासम्भवादिच्छार्थस्यैवैतद्रूपमिति गम्यते। इषितमितीट्प्रयोगस्तु छान्दसस्तस्यैव प्रपूर्व्वस्य नियोगार्थे प्रेषितमित्येतत्। तत्र प्रेषितमित्येवोक्ते प्रेषयितृप्रेषण-

---

तत्प्राप्ने स्वभावाप्राप्तः पञ्चापि इति द्रष्टव्यः। इतश्च न कर्म्मब्रह्मसतानिश्चयसमुच्चयः शास्त्रार्थ इत्याह। कर्म्मसहभावित्वेति॥ ननु कर्म्मवद्ब्रह्मज्ञानस्य विधितोऽनुष्ठेयत्वाद्विधेश्च विनियोज्यादिभेदापेक्षितत्वात्कथं सर्व्वभेददर्शनं प्रत्यस्तमुच्यते॥ ब्रह्मज्ञाने सतीत्याशङ्क्याह। वस्तुप्राधान्ये सतीति॥ विधिजन्यं प्रयत्नं भाव्यो हि विधिविषय उच्यते ज्ञानं न तथेति तद्विधेरसिद्धिरित्यर्थः। यस्मात्तस्मात्मनो

प्रथमः प्रैति युक्तः । केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति ॥ १ ॥

---

विशेषविषयाकाङ्क्षा स्यात् । केन प्रेषयितृविशेषेण । कीदृशं वा प्रेषणमिति । ईषितमिति तु विशेषणे सति तदुभयं निवर्त्तते । कस्येच्छामात्रेण प्रेषितमित्यर्थविशेषनिर्द्धारणाद्विशेषोऽर्थोऽभिप्रेतः स्यात्केनेषितमित्येतावतैव सिद्धत्वात्प्रेषितमिति न वक्तव्यम् । अपि च शब्दाधिक्यादर्थाधिक्यं युक्तमितीच्छया कर्म्मणा वाचा वा केन प्रेषितमित्यर्थविशेषोऽवगन्तुं युक्तः । न प्रश्नसामर्थ्याद्देहादिसङ्घातादनित्यात्कर्म्मकार्य्याद्विरक्तोऽतोऽन्यत्कूटस्थं नित्यं वस्तु बुभुत्समानः पृच्छतीति सामर्थ्यादुपपद्यते । इतरथेच्छावाक्कर्म्मभिर्देहादिसङ्घातस्य प्रेरयितृत्वं प्रसिद्धमिति प्रश्नोऽनर्थकः स्यात् । एवमपि प्रेषितशब्दस्यार्थेन प्रदर्शित एव न संशयवतोऽयं प्रश्न इति प्रेषितशब्दस्यार्थ-

---

अज्ञातानिश्चयस्य परोक्षस्यापरोक्षस्य वा कर्म्मणा वस्तुनो न प्रामाणिकस्तस्मादित्युपसंहरति । तस्मादिति ॥ प्रश्नप्रतिवचनरूपेण प्रतिपादनस्य तात्पर्य्यमाह । शिष्याचार्य्येति ॥ आपनीया प्रापणीया ज्ञातव्या वा न भवतीत्यर्थः । साधिष्ठं शोभनतमं फलं प्रापयतीत्यर्थः ॥ इष आभीक्ष्ण्ये गतौ चेति धात्वन्तरसम्भवे कथमिच्छार्थस्यैव व्याख्यानमित्याशङ्क्याह । ईषेरिति ॥ आभीक्ष्ण्यं पौनःपुन्यं तद्विषयताया गतिविषयताया वा मनसोऽनभिप्रेतत्वान्मनःप्रवर्त्तकविशेषस्यैव बुभुत्सितत्वादित्यर्थः । इट्प्रयोगे सति मतिगुणेन भवितव्यम् । तदा एषितव्यमिति स्यात्तदभावाच्छान्दसत्वाभिधानं न तु धातोरनिट्त्वादनुबन्धस्य विकल्पविधानाद-

विशेषण उपपद्यते। किं यथा प्रसिद्धमेव कार्य्यकारणसङ्घातस्य प्रेषयितृत्वं किं वा सङ्घातव्यतिरिक्तस्य स्वतन्त्रस्येच्छामात्रेणैव मनआदिप्रेषयितृत्वमित्यस्यार्थस्य प्रदर्शनार्थं केनेषितं पतति। प्रेषितं मन इति विशेषणद्वयमुपपद्यते। न तु स्वतन्त्रं मनः स्वविषये स्वयं पततीति प्रसिद्धम्। तत्र कथं प्रश्न उपपद्यत इत्युच्यते। यदि स्वतन्त्रं मनः प्रवृत्तिनिवृत्तिविषये स्यात्तर्हि सर्व्वस्यानिष्टचिन्तनं न स्यादनर्थं च जानन् सङ्कल्पयति। अत्युग्रदुःखे च कार्य्ये वार्य्यमाणमपि प्रवर्त्तत एव मनस्तस्माद्युक्त एव केनेषितमित्यादिप्रश्नः। केन प्राणो युक्तो नियुक्तः प्रेरितः सन् प्रैति गच्छति स्वव्यापारं प्रति प्रथम इति प्राणविशेषणं स्यात्तत्पूर्व्वकत्वात्सर्व्वेन्द्रियप्रवृत्तीनाम्। केनेषितां वाचमिमां शब्दलक्षणां वदन्ति लौकिकाः। तथा चक्षुःश्रोत्रञ्च स्वे स्वे विषये क उ देवो द्योतनवान् युनक्ति युङ्क्ते प्रेरयति॥ १॥

---

प्रेषितमन्विष्टं वेति वैकल्पिकप्रयोगदर्शनादिति ईषितमिति पदद्वयस्यार्थवत्त्वमाह। तत्र प्रेषितमित्यादिना॥ इच्छामात्रेणेति॥ अप्रयत्नमन्तरेण सन्निधिमात्रेणेति व्याख्यातं चेदं व्याख्यानमपि शोभते। अपर्य्यायशब्दभेदस्यार्थभेदव्यभिचारादित्याह। अपि चेति॥ त्वदुक्तोऽयमर्थविशेषो न घटते सङ्घातस्यैवेच्छादिभिः प्रवर्त्तकत्वसिद्धेः प्रश्नानुपपत्तिप्रसक्तेरित्याह। न प्रश्नेति॥ मनसः स्वातन्त्र्यात्तद्व्यतिरिक्तप्रवर्त्तकसम्भावनाभावात्प्रश्नो न घटत इत्याशङ्क्य समाधत्ते। ननु स्वतन्त्रमित्यादिना॥ अत्युग्रदुःखे चेति॥ १॥

# श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स

एवं पृष्टवते योग्यायाह गुरुः शृणु त्वं यत्पृच्छसि। मनआदिकरणजातस्य को देवः स्वविषयं प्रति प्रेरयिता कथं वा प्रेरयतीति। श्रोत्रस्य श्रोत्रं शृणोत्यनेनेति श्रोत्रं शब्दस्य श्रवणं प्रति करणं शब्दाभिव्यञ्जकं श्रोत्रमिन्द्रियं तस्य श्रोत्रं स यस्त्वया पृष्टश्चक्षुः श्रोत्रं क उ देवो युनक्तीति। असावेवंविशिष्टः श्रोत्रादीनि नियुङ्क्त इति वक्तव्ये न त्वेतदननुरूपं प्रतिवचनं श्रोत्रस्य श्रोत्रमिति। नैष दोषः। तस्यान्यथाविशेषानवगमात्। यदि हि श्रोत्रादिव्यापारव्यतिरिक्तेन स्वव्यापारेण विशिष्टः श्रोत्रादिनियोक्तावगम्येत दात्रादिप्रयोक्तृवत्तदिदमननुरूपं प्रतिवचनं स्यात्। न त्विह श्रोत्रादीनां प्रयोक्ता स्वव्यापारविशिष्टो लवित्रादिवदधिगम्यते। श्रोत्रादीनामेव तु संहतानां व्यापारेणालोचनसङ्कल्पाध्यवसायलक्षणेन फलावसानलिङ्गेनावगम्यते॥ अस्ति हि श्रोत्रादिभिरसंहतो यत्प्रयोजनप्रयुक्तः श्रोत्रादिकलापो गृहादिवदिति संहतानां परार्थत्वादवगम्यते श्रोत्रादीनां प्रयोक्ता। तस्मादननु-

---

अद्यतनीनडुःखे द्यूतादिकार्ये प्रतिवचनस्य प्रश्नाननुरूपत्वाशङ्कां समाधत्ते। असावेवंविशिष्ट इत्यादिना॥ श्रोत्रादयः स्वविषय-शेषिणः संहतत्वाद्गृहादिवदित्यनुमानेन श्रोत्रादिशेषी तावदवगम्यते सोऽपि संहतः स्यात् तर्हि गृहादिवदचेतनः स्यात्। ततस्तस्याप्यन्यः शेषी कल्प्यस्तस्याप्यन्य इत्यनवस्थाप्रसङ्गपरिहारायासंहतश्चेतनो मन्यते।

उ प्राणस्य प्राणश्चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्या
स्माल्लोकादमृता भवन्ति ॥ २ ॥

---

रूपमेवेदं प्रतिवचनं श्रोत्रस्य श्रोत्रमित्यादिकम् । पुनरत्र पदार्थः श्रोत्रस्य श्रोत्रमित्यादेः । न ह्यत्र श्रोत्रस्य श्रोत्रान्तरेणार्थः । यथा प्रकाशस्य प्रकाशान्तरेण । नैष दोषोऽयमत्र पदार्थः । श्रोत्रं तावत्स्वविषयव्यञ्जनसमर्थं दृष्टम् । तच्च स्वविषयव्यञ्जनसामर्थ्यं श्रोत्रस्य चैतन्ये ह्यात्मज्योतिषि नित्ये संहते सर्व्वान्तरे सति भवति नासतीत्यतः श्रोत्रस्य श्रोत्रमित्याद्युपपद्यते । तथा च श्रुत्यन्तराण्यात्मनैवायं ज्योतिषास्ते तस्य भासा सर्व्वमिदं विभाति। येन सूर्य्यस्तपति तेजसेद्ध इत्यादीनि । यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारतेत्यादिगीतासु । काठके च । नित्योऽनित्यानां चेतनश्चेतनानामिति । श्रोत्राद्येव सर्व्वस्यात्मभूतं चेतनमिति प्रसिद्धं तदिह निवर्त्त्यते अस्ति किमपि विद्वद्बुद्धिगम्यं सर्व्वान्तरतमं कूटस्थमजरममृतमभयमजं श्रोत्रादेरपि श्रोत्रादि तत्सामर्थ्यनिमित्तमिति प्रतिवचनम् । शब्दार्थश्चोपपद्यत एव । तथा मनसोऽन्तःकरणस्य मनो न ह्यन्तःकरणमन्तरेण चैतन्य-

---

अतः सर्व्वसाक्षिणं दर्शयितुं युक्तमेव प्रतिवचनमित्यर्थः । फलावसानं फलनिष्पत्तिचिह्नम् । यस्मिन्नवगत्या हि करणस्य व्यापारो विरुद्धे नित्यावगतिव्यञ्जकत्वाद्वा फलावसानविरुद्धव्यापारस्तेन तच्छेषी कथमित्यर्थः । प्रतिवचनस्य सङ्क्षेपतस्तात्पर्य्यमाह । श्रोत्राद्येव सर्व्वस्येति। सर्व्वा-

ज्योतिषा दीपितं स्वविषयसङ्कल्पाध्यवसायादिसमर्थं स्यात्। तस्मान्मनसोऽपि मन इति। इह बुद्धिमनसी एकीकृत्य निर्देशो मनस इति यद्वाचो ह वाचं यच्छब्दो यस्मादर्थे श्रोत्रादिभिः सर्व्वैः सम्बध्यते। यस्माच्छ्रोत्रस्य श्रोत्रम्। यस्मान्मनसो मन इत्येवं वाचो ह वाचमिति द्वितीया प्रथमात्वेन विपरिणम्यते। प्राणस्य प्राण इति दर्शनाद्वाचो ह वाचमित्येतदनुरोधेन प्राणस्य प्राणमिति। कस्माद्द्वितीयैव न क्रियते। न। बहूनामनुरोधस्य युक्तत्वाद्वाचमित्यस्य वागित्येतावद्वक्तव्यं स उ प्राणस्य प्राण इति॥ शब्दद्वयानुरोधेनैवं हि बहूनामनुरोधो युक्तः कृतः स्यात्पृष्टञ्च वस्तु प्रथमयैव निर्द्देष्टुं युक्तम्। स यस्त्वया पृष्टः प्राणस्य प्राणाख्यश्चेष्टितविशेषस्य प्राणस्तत्कृतं हि प्राणस्य प्राणनसामर्थ्यम् न। ह्यात्मनानधिष्ठितस्य प्राणनमुपपद्यते। को ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्। ऊर्द्ध्वंप्राणमुन्नयत्यपानं प्रत्यगस्यतीत्यादिश्रुतिभ्यः। इहापि च वक्ष्यते येन प्राणः प्रणीयते तदेव ब्रह्म त्वं विद्धीति। श्रोत्रादीन्द्रियप्रस्तावे घ्राणप्राणस्य न तु युक्तं ग्रहणम्। सत्यमेवं प्राणग्रहणेनैव तु

---

दर्शितं श्रोत्रस्य श्रोत्रं तस्माच्छ्रोत्रादावात्मबुद्धिः सन्त्यक्तव्येति शेषः॥ प्राणचेष्टा चेतनाधिष्ठानाधिष्ठानपूर्व्विका चेतनप्रवृत्तित्वाद्रथादिप्रवृत्तिवदित्यभिप्रेत्याह। न ह्यात्मनाधिष्ठितस्येति॥ प्राणेतिपदाध्याहारे कारणमाह। प्रष्टुः पृष्टस्येति॥ सामर्थ्यादिति॥ श्रोत्राद्यात्मभावत्यागमन्तरेणामृतत्वासम्भवाज्ज्ञानवताच्छ्रोत्राद्यात्मभावं त्यक्त्वाऽमृता भवन्तीति सम्बन्धः॥ एतत्स्फुटयति। श्रोत्रादौ हीत्यादिना॥ त्यक्त्वेति विदेहमुक्तिर्व्विवक्षिता प्रारब्धभोगक्षये शरीरान्तरोत्पादे कारणाभा-

प्राणस्य प्रणयने कृते एव मन्यते श्रुतिः। सर्व्वस्यैव करणक-
लापस्य यदर्थप्रयुक्ता प्रवृत्तिस्तद्ब्रह्मेति प्रकरणार्थो विव-
क्षितः। तथा चक्षुश्चक्षूरूपप्रकाशकस्य चक्षुषो यद्रूपग्रहण-
सामर्थ्यं तदात्मचैतन्याधिष्ठितस्यैव अतश्चक्षुषश्चक्षुः प्रष्टुः
दृष्टस्यार्थस्य ज्ञातुमिष्टत्वाच्छ्रोत्रादिलक्षणं यथोक्तं ब्रह्म
ज्ञात्वेत्यध्याह्रियते। अमृता भवन्तीति फलश्रुतेश्च। ज्ञाना-
द्ध्यमृतत्वं प्राप्यते। ज्ञात्वाऽतिमुच्यत इति सामर्थ्यात्। श्रोत्रा
दिकरणकलापमुज्झित्वात् श्रोत्रादौ ह्यात्मभावं कृत्वा तदु-
पाधिः संस्तदात्मना जायते म्रियते संसरति च। अतः
श्रोत्रादेः श्रोत्रादिलक्षणं ब्रह्मात्मेति विदित्वाऽतिमुच्य
श्रोत्राद्यात्मभावं परित्यज्य ये श्रोत्राद्यात्मभावं परित्य-
जन्ति ते धीरा धीमन्तः। न हि विशिष्टधीमत्त्वमन्तरेण
श्रोत्राद्यात्मभावः शक्यः परित्यक्तुम्। प्रेत्य व्यावृत्यास्मा-
ल्लोकात्पुत्रमित्रकुलबन्धुषु ममाहंभावसंव्यवहारलक्षणात्
त्यक्तसर्व्वैषणा भूत्वेत्यर्थः। अमृता अमरणधर्म्माणो भवन्ति।
न कर्म्मणा न प्रजया न धनेन त्यागेनैकेनामृतत्वमानशुः
पराञ्चि खानि व्यतृणत्। आवृत्तचक्षुरमृतत्वमिच्छन्।
यदा सर्व्वे प्रमुच्यन्ते। अत्र ब्रह्म समश्नुते इत्यादिश्रुतिभ्यः

---

यादवप्रख्याविनी विदुषोऽविदुषश्च ज्ञप्तिरित्यर्थः॥ सर्व्वाध्यासाधि-
ष्ठानरज्ज्ववच्छ्रोत्राद्यध्यासाधिष्ठानचैतन्यं श्रोत्रस्य श्रोत्रमित्यादिना
लक्षितं तर्हि रज्ज्ववदधिष्ठानत्वाद्विषयत्वप्रसक्त इति शङ्कां निवर्त्तयति।
यस्माच्छ्रोत्रादेरपीत्यादिना॥ अध्यस्तस्य ह्यधिष्ठानमेव स्वरूपमाद्य-

न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनो न विद्मो न विजानीमो यथैतदनुशिष्यादन्यदेव

---

अथ वातिमुच्येत्यनेनैवैषणात्यागस्य सिद्धत्वादस्माल्लोकात्प्रेत्यास्माच्छरीरात्प्रेत्य मृत्वेत्यर्थः ॥ २ ॥

यस्माच्छ्रोत्रादेरपि श्रोत्राद्यात्मभूतं ब्रह्म अतो न तत्र तस्मिन् ब्रह्मणि चक्षुर्गच्छति । स्वात्मनि गमनासम्भवात् । तथा न वाग्गच्छति । वाचा हि शब्द उच्चार्यमाणोऽभिधेयं प्रकाशयति यदा तदाभिधेयं प्रति वाग्गच्छतीत्युच्यते । तस्य च शब्दस्य तन्निर्वर्त्तकस्य च करणस्यात्मा ब्रह्मातो न वाग्गच्छति । यथाग्निर्दाहकः प्रकाशकश्चापि सन् न ह्यात्मानं प्रकाशयति दहति च तद्वन्नो मनो मनश्चान्यस्य सङ्कल्पयितृ अध्यवसायितृ च सन्नात्मानं सङ्कल्पयत्यध्यवस्यति च । तस्यापि ब्रह्मात्मेतीन्द्रियमनोभ्यां हि वस्तुनो विज्ञानं तदगोचरत्वान्न विद्मस्तद्ब्रह्मेदृशमित्यतो न विजानीमो यथा येन प्रकारेणैतद्ब्रह्मानुशिष्यादुपदिशे-

---

नमध्येय तद्व्यभिचारात्तद्रूपविषयता च न पदार्थधर्मस्ततोऽप्रयोजकोऽयं हेतुरित्यर्थः ॥ २ ॥

अविषयत्वात्तर्हि शास्त्राचार्योपदेश्यत्वमपि न स्यादित्याशङ्क्याऽऽस्त्येव वास्तवमित्याह । इन्द्रियमनोभ्यां हीति ॥ ब्राह्मणोऽयमित्यादि जातितः । कृष्णोऽयमित्यादि गुणतः । पाचकोऽयमित्यादि क्रियातः । राजपुरुष इत्यादि सम्बन्धविशेषत उपदिश्यते । ब्रह्म तु न जात्यादिमत् केवलो निर्गुणश्चेत्यादिश्रुतेः । अन्तेनागमस्य भेदेन प्रतिपन्नत्वात्तद्दृष्टाचार्यस्याप्यविद्यालेशोच्छेदकत्वा व्यावहारिक उपदेश उपपद्यते आगमतस्तस्यैवात्मा ब्रह्मरूपेण लक्षयितुं योग्यतातिशयत्वादित्यभि-

तद्विदितादथो अविदितादधि । इति शुश्रुम
पूर्व्वेषां ये नस्तद्व्याचचक्षिरे ॥ ३ ॥

---

च्छिष्यानित्यभिप्रायः। यद्धि करणगोचरन्तदन्यस्मै उपदेष्टुं शक्यं जातिगुणक्रियाविशेषणैः। न तज्जात्यादिविशेषणवद्ब्रह्म। तस्माद्विषमं शिष्यानुपदेशेन प्रत्याययितुमिति। उपदेशे तदर्थग्रहणे च यत्नातिशयकर्त्तव्यतां दर्शयति न विनेत्यादि। अत्यन्तमेवोपदेशप्रकारप्रत्याख्याने प्राप्ते तदपवादोऽयमुच्यते। सत्यमेवं प्रत्यक्षादिभिः प्रमाणैर्न परः प्रत्याययितुं शक्यः। आगमेन तु शक्यत एव प्रत्याययितुम्। तदुपदेशार्थमागममाह। अन्यदेव तद्विदितादथो अविदितादधीति। अन्यदेव पृथगेव तत्प्रकृतं श्रोत्रादीनां श्रोत्रादीत्युक्तमविषयश्च तेषां तद्विदितादन्यदेव हि विदितं नाम यद्विदिक्रिययाऽतिशयेनाप्तं तद्विदिक्रियाकर्म्मभूतं क्वचित्किञ्चित् कस्यचिद्विदितं स्यादिति तस्मादिति सर्व्वमेव व्याकृतं तद्विदितमेव तत्तस्मादन्यदित्यर्थः। अविदितमज्ञातं तर्हीति प्राप्ते आह। अथोऽप्यविदिताद्विदितविपरीतादव्याकृतादविद्यालक्षणाद्व्याकृतबीजादधीत्युप-

---

प्रेत्याह। अत्यन्तमेवेति॥ वाक्यस्य पदार्थान् व्याख्याय तात्पर्य्यं दर्शयितुमुपक्रमते। यद्विदितं तदल्पमित्यादिना॥ यद्वेदितुरन्यस्तद्विदितमविदितञ्चेति द्वयोर्गतिः। ततो विदितत्वाविदितत्वनिषेधेन वेदितुः स्वरूपं ब्रह्मेत्यत्र तात्पर्य्यमागमस्येत्याह। न ह्यन्यस्येति । उक्तवाक्यार्थे लौकिकतार्किकमीमांसकप्रतिपत्तिविरोधमाशङ्क्य परिहरति। विदि-

र्य्यर्थे लक्षणया अन्यदित्यर्थः । यद्धि यस्मादध्युपरि भवति तत्तस्मादन्यदिति प्रसिद्धं यद्विदितं तदल्पमत्यन्तदुःखात्मकञ्चेति हेयम् ॥ तस्माद्विदितादन्यद्ब्रह्मेत्युक्ते त्वहेयत्वमुक्तं स्यात् । तथाऽविदितादधीत्युक्तेऽनुपादेयत्वमुक्तं स्यात् । कार्य्यार्थं हि कारणमन्यदन्येनोपादीयतेऽतश्च न वेदितुरन्यस्मै प्रयोजनायान्यदुपादेयं न भवतीत्येवं विदिताविदिताभ्यामन्यदिति हेयोपादेयप्रतिषेधेन स्वात्मनोऽन्यत्वाद्ब्रह्मविषया जिज्ञासा शिष्यस्य निर्व्वर्त्तिता स्यात् । न ह्यन्यस्य स्वात्मनो विदिताविदिताभ्यामन्यत्वं वस्तुनः सम्भवतीत्यात्मा ब्रह्मेत्येष वाक्यार्थः । अयमात्मा ब्रह्म य आत्माऽपहतपाप्मा । यत्साक्षादपरोक्षाद्ब्रह्म । य आत्मा सर्व्वान्तर इत्यादिश्रुत्यन्तरेभ्यश्चेत्येवं सर्व्वात्मनः सर्व्वविशेषरहितस्य चिन्मात्रज्योतिषो ब्रह्मत्वप्रतिपादकस्य वाक्यस्याचार्य्योपदेशपरम्परया प्राप्तत्वमाह । इति शुश्रुमेत्यादि । ब्रह्म चैतन्यमाचार्य्योपदेशपरम्परयैवाधिगन्तव्यं न तर्कतः । प्रवचनमेधाबहुश्रुततया यज्ञादिभ्यश्चेत्येवं शुश्रुमः श्रुतवन्तो वयं पूर्व्वेषामाचार्य्याणां

---

तादन्यत्वप्रपञ्चनाय । अन्यदेव तद्विदितादित्यादिना ॥ अष्टसु स्थानेष्विति अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु चेति एतेष्वाकाशप्रदेशेष्वाभिर्निर्गमित्यनेनाकाशोपादानत्वं सूचितम् । आग्नेयमित्यग्निदेवताकमित्यर्थः । न केवलं करणं वागुच्यते वर्णाश्चोच्यन्त इत्याह । वर्णाश्चेति ॥ तदुक्तं यावतो यादृशा ये च यदर्थप्रतिपादका वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधका इति । गौरिति पदं गकारौकारविसर्जनीया एवं क्रमविशेषाव-

वचनम्। ये माचार्य्या नोऽस्मभ्यं तद्ब्रह्म व्याचचक्षिरे व्याख्या-तवन्तो विस्पष्टं कथितवन्तस्तेषामित्यर्थः। अन्यदेव तद्वि-दितादथो अविदितादधीत्यनेन वाक्येनात्मा ब्रह्मेति प्रतिपादिते श्रोतुराशङ्का जाता तत्कथन्त्वात्मा ब्रह्म। आत्मा हि नामाधिकृतः कर्म्मण्युपासने च संसारी कर्म्मो-पासनं वा साधनमनुष्ठाय ब्रह्मादिदेवान् स्वर्गं वा प्राप्तु-मिच्छति तत्तस्मादन्यत्। उपास्यो विष्णुरीश्वर इन्द्रश्च प्राणो वा ब्रह्म भवितुमर्हति न त्वात्मा। लोकप्रत्ययविरोधात्। यथाऽन्ये तार्किका ईश्वरादन्य आत्मा इत्याचक्षते तथा कर्म्मिणोऽमुं यजामुं यजेत्यन्या एव देवता उपासते। तस्माद्युक्तं यद्विदितमुपास्यं तद्ब्रह्म भवेत्। ततोऽन्य उपासक इति तामेतामाशङ्कां शिष्यलिङ्गेनोपलक्षिततद्वाक्याद्वा मैवं शङ्किष्ठाः। यच्चैतन्यमात्रसत्ताकं वाचा वागिति जिह्वामूलादिष्वष्टसु स्थानेषु विषक्तमाग्नेयं वर्णानामभिव्य-ञ्जकं करणं वर्णाश्चार्थसङ्केतपरिच्छिन्ना एतावन्त एवं क्रम-प्रयुक्ता इत्येवं तदभिव्यङ्ग्यशब्दः पदं वागित्युच्यते।

---

च्छिन्ना इति मीमांसकाद्यनुसारेणोक्तं स्फोटवादिनोऽनुसारेणाह। तदभिव्यङ्ग्य इति॥ स्फुट्यते व्यज्यते वर्णैरिति स्फोटः पदादिबु-द्धिप्रमापक एकरूपाया बुद्धेरनेकवर्णावलम्बनत्वासम्भवादिति भावः। उक्तं वाक्यार्थं श्रुतिसम्मतिमाह। अकार इति॥ अकारप्रधानोऽकारः-रोपलक्षिता स्फोटाख्या चिच्छक्तिः सर्व्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्य-माना नादयो भावमानाः स्पर्शाः। अन्तस्था अन्तस्थाः। ऊष्मणः ऊष्माणः ते:क्रमविशेषावच्छिन्नव्यज्यमाना नानारूपा विवर्त्तन्ते। मितं ऋगादि।

यद्वाचानभ्युदितं येन वागभ्युद्यते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ४ ॥

अकारो वै सर्व्वा वाक्सैषाऽस्य स्पर्शाऽन्तस्थोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवतीति श्रुतेः। मितममितं स्वरः॥ २॥

सत्यानृते एव विकारो यस्यास्तया वाचा पदत्वेन परिच्छिन्नया करणगुणवत्याऽनभ्युदितमप्रकाशितमनभ्युक्तं येन ब्रह्मणा विवक्षितेऽर्थे सकरणा वागभ्युद्यते चैतन्यज्योतिषा प्रकाश्यते प्रयुज्यत इत्येतत्। यद्वाचो ह वागित्युक्तं वदन्वाक् यो वाचमन्तरो यमयतीत्यादि च वाजसनेयके। या वाक् पुरुषेषु सा घोषेषु प्रतिष्ठिता कश्चित्तां वेद ब्राह्मण इति प्रश्नमुत्थाप्य प्रतिवचनमुक्तं सा वाग्यया स्वप्ने भाष्यत इति। सा हि वक्तुर्वक्तिर्नित्या वाक्चैतन्यज्योतिःस्वरूपा। न हि वक्तुर्वक्तेर्विपरिलोपो विद्यत इति श्रुतेः। तदेवात्मस्वरूपं ब्रह्म निरतिशयं भूमाख्यं बृहत्वाद्ब्रह्मेति विद्धि विजानीहि त्वं यैर्वागाद्युपाधिभिः। वाचो ह वाक्चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रं मनसो मनः कर्त्ता भोक्ता विज्ञाता

---

वाग्दावसानमियत.वरत्वात्। अमितं यजुरादि। अनियताक्षरपाद.वसानत्वात्। स्वरः साम। गीतिप्रधानत्वात्। सत्यं यथा दृष्टार्थवचनम्। अनृतं तद्विपरीतम्। करणं वागिन्द्रियम्। गुण उपसर्जनं यस्याः सा करणगुणवती पुरुषेषु चेतनेषु या वाक्शक्तिः सा घोषेषु वर्णेषु प्रतिष्ठिता तद्वाक्यत्वादित्यर्थः॥ २॥

तदेवेत्येवकारस्य तात्पर्यमाह। यैर्वाग.द्युपाधिभिरिति॥ नियमार्थमिति पक्षे अनात्मन्यपि ब्रह्मबुद्धौ प्राप्तायामात्मैव ब्रह्मेति बुद्धिं

यन्मनसा न मनुते येनाहुर्मनो मतम्। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ५ ॥ यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ६ ॥ यच्छ्रोत्रेण

---

नियन्ता प्रशासिता विज्ञानमानन्दं ब्रह्मेत्येवमादयः संव्यवहारा संव्यवहार्य्ये निर्विशेषे परे सौम्ये ब्रह्मणि प्रवर्त्तन्ते तान् व्युदस्यात्मानमेव निर्विशेषं ब्रह्म विद्धीत्येवशब्दार्थः। नेदं ब्रह्म यदिदमित्युपाधिभेदविशिष्टमनात्मेश्वराद्युपासते ध्यायन्ति। तदेव ब्रह्म त्वं विद्धीत्युक्तेऽपि नेदं ब्रह्मेत्यनात्मनोऽब्रह्मत्वं पुनरुच्यते। नियमार्थमन्यब्रह्मबुद्धिपरिसङ्ख्यानार्थं वा ॥ ४ ॥

यन्मनसा न मनुते। मन इत्यन्तःकरणं बुद्धिमनसोरेकत्वेन गृह्यते। मनुतेऽनेनेति मनः सर्व्वकरणसाधारणम्। सर्व्वविषयव्यापकत्वात्। कामः संकल्पो विचिकित्सा श्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्व्वं मन एवेति श्रुतेः। कामादिवृत्तिमन्मनस्तेन मनसा तच्चैतन्यज्योतिर्मनसोऽवभासकं न मनुते न सङ्कल्पयति नातिनिश्चिनोति। मनसोऽवभासकत्वेन नियन्तृत्वात्। सर्वविषयं प्रति प्रत्यगेवेति स्वात्मनि न वर्त्ततेऽन्तःकरणम्। अन्तस्थेन हि चैतन्यज्योतिषाऽव-

---

नियन्तृमित्यर्थः। अन्यत्विमुपास्ते या ब्रह्मबुद्धिस्तन्निरत्यर्थं वायुनरब्रह्मत्वमुच्यत इत्यर्थः ॥ ४ ॥

न शृणोति येन श्रोत्रमिदं श्रुतम्। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ७ ॥ यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ८ ॥ इति प्रथमः खण्डः ॥ १ ॥

---

भासितस्य मनसो मननसामर्थ्यं तेन सदृत्तिकं मनो ब्रह्मणा मतं विषयीकृतं व्याप्तमाहुः कथयन्ति ब्रह्मविदः। तस्मात्तदेव मनस आत्मानं प्रत्यक्चेतयितारं ब्रह्म विद्धि। नेदमित्यादि पूर्ववत् ॥ यच्चक्षुषा न पश्यति न विषयीकरोत्यन्तःकरणवृत्तिसंयुक्तेन येन चक्षूंषि अन्तःकरणवृत्तिभेदभिन्नाश्चक्षुर्वृत्तीः पश्यति लोकश्चैतन्यात्मज्योतिषा विषयीकरोति व्याप्नोति ॥ यच्छ्रोत्रेण न शृणोति दिग्देवताधिष्ठितेनाकाशकार्येण मनोवृत्तिसंयुक्तेन विषयीकरोति लोको येन श्रोत्रमिदं श्रुतं यत्प्रसिद्धं चैतन्यात्मज्योतिषा विषयीकृतं तदेव पूर्ववत् ॥ यत्प्राणेन प्राणेन पार्थिवेन नासिकापुटान्तरावस्थितेनान्तःकरणप्राणवृत्तिभ्यां सहितेन यन्न प्राणिति गन्धवन्न विषयीकरोति येन चैतन्यात्मज्योतिषावभास्यत्वेन स्वविषयं प्रति प्राणः प्रणीयते। तदेवेत्यादि सर्वं समानम् ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ इति प्रथमः खण्डः ॥ १ ॥

---

सर्वं स्पष्टमिति न व्याख्यातम् ॥ ५ ६ ॥ ७ ॥ ८ ॥ प्रथमःखण्डः ॥

एवं हेयोपादेयविपरीतस्त्वमात्मा ब्रह्मेति प्रत्यायितः शिष्योऽहमेव ब्रह्मेति सुष्ठु वेदाहमिति मा गृह्णीयादित्याशयादाहाचार्यः। शिष्यबुद्धिविचालनार्थं यदीत्यादि। नन्विष्टैव सु वेदाहमिति निश्चिता प्रतिपत्तिः। सत्यमिष्टा निश्चिता प्रतिपत्तिर्न हि सुवेदाहमिति। यद्धि वेद्यं वस्तु विषयी भवति तत्सुष्ठु वेदितुं शक्यं दाह्यमिव दग्धुमग्नेर्दग्धुर्नत्वग्नेः स्वरूपमेव। सर्वस्य हि वेदितुः स्वात्मा ब्रह्मेति सर्ववेदान्तानां सुनिश्चितोऽर्थः। इह च तदेव प्रतिपादितं प्रश्नप्रतिवचनोक्त्या श्रोत्रस्य श्रोत्रमित्याद्यया। यद्वाचानभ्युदितमिति विशेषतोऽवधारितम्। ब्रह्मवित्सम्प्रदायनिश्चयश्चोक्तोऽन्यदेव तद्विदितादथो अविदितादधीत्युपन्यस्तमुपसंहरिष्यति चाविज्ञातं विजानतां विज्ञातमविजानतामिति। तस्माद्युक्तमेव शिष्यस्य सुवेदेति बुद्धिर्निराकर्तुम्। न हि वेदिता वेदितुर्वेदितुं शक्योऽग्निरिव दग्धुरिव दग्धुमग्नेः। न चान्यो वेदिता ब्रह्मणोऽस्ति यस्य वेद्यमन्यत्स्याद्ब्रह्म नान्यदतोऽस्ति विज्ञात्रित्यन्यो

---

यदितः स्वरूपत्वे ब्रह्मणो माभूद्विषयत्वम्। स्वरूपत्वे मानाभावात्। अतिरिक्तस्य विषयत्वे किमनुपपन्नमित्याशङ्क्याह। सर्वस्य हीति॥ यदिशब्दप्रयोगे किं कारणमित्यत आह। कदाचिदिति॥ अक्षिणि शरीरस्य प्रतिच्छाया दृश्यत इति प्रसिद्धवदुपदेशाच्छरीरमात्मेति प्रतिपन्नः। छायाव्यभिचारित्वं बुद्ध्वेत्यर्थः। सकृदिति य एषोऽक्षिणि पुरुषो दृश्यते इत्येकवारमुक्तं य एष स्वप्ने महीयमानश्चरतीति

वेत्थ ब्रह्मणो रूपं यदस्य त्वं यदस्य देवेष्वथ नु

---

विज्ञाता प्रतिषिध्यते। तस्मात्सुष्ठु वेदाहं ब्रह्मेति प्रतिपत्तिर्मिथ्यैव। तस्माद्युक्तमेवाहाचार्य्यो यदीत्यादि। यदि कदाचिन्मन्यसे सु वेदेति सुष्ठु वेदाहं ब्रह्मेति। कदाचिद्यथाश्रुतं दुर्विज्ञेयमपि क्षीणदोषः सुमेधाः कश्चित्प्रतिपद्यते कश्चिन्नेति साशङ्कमाह यदीत्यादि। दृष्टञ्च य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेत्युक्ते प्राजापत्यः पण्डितोऽप्यसुरराड्विरोचनः स्वभावदोषवशादनुपपद्यमानमपि विपरीतमर्थं शरीरमात्मेति प्रतिपन्नः। तथेन्द्रो देवराट् सकृद्द्विस्त्रिरुक्तमप्रतिपद्यमानः स्वभावदोषक्षयमपेक्ष्य चतुर्थे पर्य्याये प्रथमोक्तमेव ब्रह्म प्रतिपन्नवान्। लोकेऽपि एकस्माद्गुरोः शृण्वतां कश्चिद्यथावत्प्रतिपद्यते कश्चिदयथावत्कश्चिद्विपरीतं कश्चिन्न प्रतिपद्यते किमु वक्तव्यमतीन्द्रियमात्मतत्त्वम्। अत्र हि विप्रतिपन्नाः सदसद्वादिनस्तार्किकाः सर्व्वे। तस्माद्विदितं ब्रह्मेति सुनिश्चितोक्तमपि विप्रतिपत्तिस्थानत्वाद्यदि मन्यसे

---

द्वितीयेनोक्तं तच्चैतत्पुनः समस्तः सम्पन्न इति त्रिरुक्तमप्यात्मानमप्रतिपद्यमानः। इन्द्रो ब्रह्मचर्य्याधर्म्मादिदोषक्षयमपेक्ष्य चतुर्थे पर्य्याये य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतीरूपं सम्पद्येत्यत्र प्रथमपर्य्यायोक्तमेव ब्रह्म प्रतिपन्नवानित्यर्थः॥ अर्भकाणि चेति अल्पानि न स्वतो रूपमस्ति ब्रह्मण इत्युक्तं तदाक्षिपति। मनुवेनैवेति॥ केन तर्हि विशेषेण ब्रह्मणो निरूपणमित्याकाङ्क्षायां चैतन्यरूपेणेत्याह। चैतन्यमिति॥ भूतानां समस्तानां वा देहाकारपरिणतानां चैतन्यं धर्म्मो

मीमांस्यमेव ते मन्ये विदितम् ॥ ८ ॥ १ ॥ नाहं

इत्यादि साशङ्कं वचनं श्रुत्वैवाचार्य्यस्य दभ्रमल्पमेवापि नूनं त्वं वेत्थ जानीषे ब्रह्मणो रूपं किमनेकानि ब्रह्मणो रूपाणि महान्त्यर्भकाणि च येनाह दभ्रमेवेत्यादि। बाढम्। अनेकानि हि नामरूपोपाधिकृतानि ब्रह्मणो रूपाणि न स्वतः। स्वतस्तु अशब्दमस्पर्शमरूपमव्ययं तथाऽरसन्नित्य-मगन्धवच्च यत्। यदि शब्दादिभिः सह रूपाणि प्रतिषि-ध्यन्ते। ननु येनैव धर्म्मेण यद्रूप्यते तदेव तस्य स्वरूपमिति ब्रह्मणोऽपि येन विशेषणेन निरूपणं तदेव तस्य रूपं स्यादत उच्यते। चैतन्यं पृथिव्यादीनामन्यतमस्य सर्व्वेषां विप-रिणतानां वा धर्म्मो न भवति। तथा श्रोत्रादीनामन्तः-करणस्य च धर्म्मो न भवतीति ब्रह्मणो रूपमिति ब्रह्म रूप्यते चैतन्येन। तथाचोक्तं विज्ञानमानन्दं ब्रह्म। विज्ञा-नघन एव। सत्यं ज्ञानमनन्तं ब्रह्मेति च ब्रह्मणो रूपं निर्द्दिष्टं श्रुतिषु सत्यमेव तथापि तदन्तःकरणदेहेन्द्रियो-पाधिद्वारेणैव विज्ञानादिशब्दैर्निर्द्दिश्यते तदनुकारित्वा-

---

न भवतीति बहिरनुपलम्भात्तद्धर्म्मत्वे रूपादिवद्बाधकत्वाभाव-प्रसङ्गाच्च। तथा श्रोत्रादीनामपि भौतिकत्वाविशेषाच्चैतन्यधर्मोऽपि भवतीति पारिशेष्यात्ततश्चैतन्यं ब्रह्मणो रूपम्॥ तत्र श्रुतिसम्मतिमाह। तथाचोक्तमिति॥ सत्यमेव चैतन्यं पारमार्थिकं ब्रह्मरूपं श्रुतितात्पर्य्य-गम्यं तथापि यदुक्तं ब्रह्मणो रूपं कथं नास्तीति तदुपाधिद्वारेणैव ब्रह्मणः शब्देन निरूपणं निर्द्देशनं न स्वत इत्यभिप्रेत्यान्तःकरणाद्यभिव्यक्त्यु-पलभ्य हि यदुपाध्यभिव्यक्तिनिमित्तं चैतन्यं तद्ब्रह्मेति निर्द्दिश्यत

मन्ये सुवेदेति नो न वेदेति वेद च। यो नस्त-

देहादिवृद्धिसङ्कोचच्छेदादिषु नाशेषु च न स्वतः। स्वत-स्त्वविज्ञातं जानतां विज्ञातमविजानतामिति स्थितं भवि-ष्यति। यदस्य ब्रह्मणो रूपमिति पूर्व्वेण सम्बन्धः। न केवलमध्यात्मोपाधिपरिच्छिन्नस्यास्य ब्रह्मणो रूपं त्वमल्पं वेत्थ यदप्यधिदैवतोपाधिपरिच्छिन्नस्यास्य ब्रह्मणो रूपं देवेषु वेत्थ त्वं तदपि नूनं दहरमेव वेत्थ इति मन्येऽहम्। यदध्यात्मं तदपि चोपाधिपरिच्छिन्नत्वाद्दहरत्वान्न निव-र्त्तते। यत्तु विध्वस्तसर्व्वोपाधिविशेषं शान्तमनन्तमेक-मद्वैतं भूमाख्यं नित्यं ब्रह्म न तत्सुवेद्यमित्यभिप्रायः। यत एवमथ नु तस्मान्मन्येऽद्यापि मीमांस्यं विचार्य्यमेव ते तव ब्रह्म। एवमाचार्य्योक्तः शिष्य एकान्त उपविष्टः सन् य-थोक्तमाचार्य्येणागममर्थतो विचार्य्य तर्कतश्च निर्द्धार्य्य स्वानु-भवं कृत्वाऽऽचार्य्यसकाशमुपगम्योवाच। मन्येऽहमथेदानीं विदितं ब्रह्मेति। कथमिति शृणु। नाहं मन्ये सु वेदेति नैवाहं मन्ये सु वेदेति ज्ञानविषयं ब्रह्मेति। नैव तर्हि विदितं त्वया ब्रह्मेत्युक्त आह। नो न वेदेति वेद च। वेद चेति च

---

इत्यर्थः॥ ननूपाधिरुपहितसम्बद्धो भवति चैतन्यस्य त्वसङ्गस्य कथं देहादिरुपाधिरित्याशङ्क्याह। तदनुकारीत्यादिना॥ यथा जले कम्पमाने सविता कम्पत इव भिद्यमाने भिद्यत इवेति मिथ्यात्वधर्म्मभागित्वा-त्सवितुर्जलमुपाधिरित्युच्यते न तु सम्बन्धाद्दूरस्थयोः संयोगाद्ययोगात्तद्व-द्देहादेर्वृद्धिह्रासोच्छेदादिषु दाहादिषु नाशेषु चैतन्यस्य मिथ्यादेह-धर्म्मभागित्वाद्देहादेरुपाधित्वमभिधीयत इत्यर्थः। ननु न स्वतश्चैतन्यतया

द्वेद तद्वेद नो न वेदेति वेद च ॥ १० ॥ २ ॥
यस्यामतं तस्य मतं मतं यस्य न वेद सः ।

---

यस्मान्न वेद त्वम् । ननु विप्रतिषिद्धं नाहं मन्ये सुवेदेति नो न वेदेति वेद चेति । यदि न मन्यसे सुवेदेति कथं मन्यसे वेद चेति । अथ मन्यसे वेदैवेति कथं न मन्यसे सुवेदेति । एकं वस्तु येन ज्ञायते तेनैव तदेव वस्तु न सुविज्ञायत इति विप्रतिषिद्धं संशयविपर्ययौ वर्जयित्वा । न च ब्रह्म संशयितत्वेन ज्ञेयं विपरीतत्वेन वेति नियन्तुं शक्यम् । संशयविपर्ययौ हि सर्व्वत्रानर्थकरत्वेनैव प्रसिद्धौ । एवमाचार्य्येण विचाल्यमानोऽपि शिष्यो न विचचाल । अन्यदेव तद्विदितादथो अविदितादधीत्याचार्य्योक्तागमसम्प्रदायबलादुपपत्त्यनुभवबलाच्च जगर्ज्ज च ब्रह्मविद्यायां दृढनिश्चयतां दर्शयन्नात्मनः । कथमित्युच्यते । यो यः कश्चिन्नोऽस्माकं सब्रह्मचारिणां मध्ये तन्मदुक्तं वचनं तत्त्वतो वेद स तद्ब्रह्म वेद । किं पुनस्तद्वचनमित्यत आह नो न वेदेति वेद चेति । यदेवान्यदेव तद्विदितादथो अविदितादधीत्युक्तं वस्तु तदेव अनुमानानुभवाभ्यां संयोज्य निश्चितं वाक्यान्तरेण नो न

---

निरूप्यते ब्रह्म कथं तर्हि तदनुभव इत्याशङ्क्याह । स्वतर्कितेति । अविषयतयैव विषयानुपरक्तचित्स्फुरणं ब्रह्मानुभव इत्यर्थः । तर्कतश्चेति वेद्यत्वे घटादिवदनात्मत्वादिप्रसङ्गादित्यादितर्कतः चातो वेद्यं ब्रह्म न भवत्येवेति निर्धार्य्याज्ञानसंशयाद्यभावेन स्वानुभवं कृत्वेत्यर्थः आचार्य्यवचनादन्यदेव वचनं शिष्य उवाचेति नामङ्कमीवमित्याह । यदेवान्य-

अविज्ञातं विजानतां विज्ञातमविजानताम् ॥
११ ॥ ३ ॥

---

वेदेति वेद चेत्यवोचदाचार्यबुद्धिसंवादार्थं मन्दबुद्धिग्रहणव्यपोहार्थं च । तथा च गर्जितमुपपन्नं भवति यो नस्तद्वेदेति ॥ ८ ॥ १ ॥ १० ॥ २ ॥

शिष्याचार्यसंवादात्प्रतिनिवर्त्य स्वेन रूपेण श्रुतिः समस्तसंवादनिर्वृत्तमर्थमेव बोधयति यस्यामतमित्यादिना । यस्य ब्रह्मविदोऽमतमविज्ञातं ब्रह्मेति मतमभिप्रायः निश्चयस्तस्य मतं ज्ञातं सम्यग्ब्रह्मेत्यभिप्रायः । यस्य पुनर्मतं ज्ञातं विदितं मया ब्रह्मेति निश्चयो न वेदैव स न ब्रह्म विजानाति सः । विद्वदविदुषोर्यथोक्तौ पक्षाववधारयत्यविज्ञातममतमविदितमेव ब्रह्म विजानतां सम्यग्विदवतामित्येतद्विज्ञातं विदितं ब्रह्माविजानतामसम्यग्दर्शिनामिन्द्रियमनोबुद्धिष्वेवात्मदर्शिनामित्यर्थः । न त्वत्यन्तमेवाव्युत्पन्नबुद्धीनाम् । न हि तेषां विज्ञातमस्माभिर्ब्रह्मेति मतिर्भवति । इन्द्रियमनोबुद्ध्युपाधिष्वात्मदर्शिनान्तु ब्रह्मोपाधिविवेकानुपलम्भात् । बुद्ध्याद्युपाधेश्च विज्ञातत्वाद्विदितं ब्रह्मेत्युपपद्यते भ्रान्तिरतोऽसम्यग्दर्शन-

---

देवेति॥ तथा चेत्याचार्यबुद्धिसंवादे ग्रन्थान्तराभिधाने वतीत्यर्थः । अथवा चेत्यर्थ इति केचे युक्तादितत्त्वं विजानतां यतोऽध्यस्तस्माद्य-विज्ञातमभवति । अजानतामेव तु अध्यस्तविज्ञानमभवतीति प्रसिद्धम् ।

प्रतिबोधविदितं मतममृतत्वं हि विन्दते।

पूर्व्वपक्षत्वेनोपन्यस्यते विज्ञातमविजानतामिति। अथवा हेत्वर्थ उत्तरार्द्धविज्ञातमित्यादि॥ ११॥ २॥

अविज्ञातं विजानतामित्यवधृतम्। यदि ब्रह्मात्यन्तमेवाविज्ञातं लौकिकानां ब्रह्मविदाञ्चाविशेषः प्राप्तः। अविज्ञातं विजानतामिति च परस्परविरुद्धम्। कथन्तु तद्ब्रह्म सम्यग्विदितं भवतीत्येवमर्थमाह। प्रतिबोधविदितं बोधं बोधं प्रति विदितम्। बोधशब्देन बौद्धाः प्रत्यया उच्यन्ते। सर्व्वे प्रत्यया विषयीभवन्ति यस्य स आत्मा सर्वबोधानुप्रतिबुध्यते सर्व्वप्रत्ययदर्शी चिच्छक्तिस्वरूपमात्रः प्रत्ययैरेव प्रत्ययेष्वविशिष्टतया लक्ष्यते नान्यद्द्वारान्तरात्मनो विज्ञानायातः प्रत्ययप्रत्यगात्मतया विदितं ब्रह्म यदा तन्मतं तदा तत्सम्यग्दर्शनमित्यर्थः। सर्व्वप्रत्ययदर्शित्वे चोप-

तथा ब्रह्मापि ज्ञेयत्वसाधनत्वादेव तत्त्वविदो न ज्ञातं ब्रह्म पश्यन्तीत्यर्थः॥ ॥ ८॥ १॥ १०॥ २॥ ११॥ ३॥

ज्ञातब्रह्मत्वादर्शने ब्रह्मास्मीति कथं व्यवहरतीति चेत्किमनवेटकावाङ्कानां रत्नपेटकचर्चितया ज्ञातस्य व्यवहाराकृत्वं वदतोऽपि वस्तुप्रकाशस्य व्यवहाराकृत्वस्येष्टत्वाद्दासवज्ञाततानपेक्षकत्वादित्यव्युत्पन्नव्युत्पादनाय चोद्यसङ्गावर्वति। अविज्ञात मित्यादिना॥ नीलपीताद्याकाराणां जडानां यश्चैतन्यव्याप्तत्वेनाजडवदवभासनं साक्षित्वमुपलक्ष्य सोऽहमात्मा ब्रह्मेति महावाक्यादविषयतयैव यो वेत्ति स ब्रह्मविदुच्यते॥ तेन नाविशेषप्रसङ्गादिचोद्यावकाश इत्याह। प्रतिबोधविदितमिति॥ प्रत्येक विशिष्टतयानुगतरूपेणेत्यर्थः। येन चित्स्वरूपेणाहमनसाक्षी तस्य सर्व्वमात्रियेणानैकक्तिमेव देहेऽहं साक्षी भेदेनत्पादेनां साक्ष्यगतत्वेन

आत्मना विन्दती वीर्य्यं विद्यया विन्दतीऽमृतम् ॥ १२ ॥ ४ ॥

---

जननापायवर्ज्जितदृक्स्वरूपतानित्यत्वं विशुद्धस्वरूपत्वमात्मत्वं निर्विशेषतैकत्वञ्च सर्व्वभूतेषु सिद्धं भवेल्लक्षणभेदाभावाद्व्योम्न इव घटगिरिगुहादिषु। विदिताविदिताभ्यामन्यद्ब्रह्मेत्यागमवाक्यार्थः। एवं परिशुद्ध एवोपसंहृतो भवति। दृष्टेर्द्रष्टा श्रुतेः श्रोता मतेर्मन्ता विज्ञातेर्विज्ञातेति हि श्रुत्यन्तरम्। यदा पुनर्बोधक्रियाकर्त्तेति बोधक्रियालक्षणेन तत्कर्त्तारं विजानातीति बोधलक्षणेन विदितं प्रतिबोधविदितमिति व्याख्यायते। यथा यो वृक्षशाखाश्चालयति स वायुरिति तद्वत्। तदा बोधक्रियाशक्तिमानात्मा द्रव्यं न बोधस्वरूप एव। बोधस्तु जायते विनश्यति च। यदा बोधो जायते तदा बोधक्रियया सविशेषः। यदा बोधो नश्यति तदा नष्टबोधो द्रव्यमात्रं निर्विशेषः। तत्रैवं सति विक्रियात्मकः सावयवोऽनित्योऽशुद्ध

---

साक्षित्व एकत्वनित्यत्वादिकमपि सिध्यतीत्याह। सर्व्वप्रत्ययदर्शित्वे चेति॥ विदितत्वाविदितत्वयोः साध्यगतत्वेन तदन्यत्वमर्थादनुपपत्ते सम्भवतीत्याह। विदिताविदिताभ्यामन्यदिति॥ एकदेशिव्याख्यानमुद्भाव्य दूषयति। यदा पुनरित्यादिना॥ अग्निसंयोगाद्घटवौष्ण्यवन्मनःसंयोगादसमवायिकारणादात्मन्यचेतने चैतन्यमुपपद्यत इत्येतच्च केवलं श्रुतिविरुद्धमसम्भावितत्वञ्चेत्याह। आत्मनो निरवयवत्वेनेति॥ प्रदेशवता प्रदेशवतो लोके संयोगो दृष्टः। आत्मनो निष्प्रदेशत्वान्मनसा संयोगो न भवतीत्युक्तं तदयुक्तम्॥ युगपत्सर्व्वमूर्त्तसंयोगित्वं सर्व्वगतत्वमात्मनस्ततो मनसः संयोगोऽपीति चेत्तत्राह। नित्येति॥

इत्यादयो दोषा न परिहर्त्तुं शक्यन्ते । यदपि काणा-
दानामात्मनः संयोगजो बोध आत्मनि समवैति । अत
आत्मनि बोद्धृत्वं न तु विज्ञानात्मक आत्मा । द्रव्यमा-
त्वन्तु भवति घट इव रागसमवायी । अस्मिन् पक्षेऽप्यचे-
तनं द्रव्यमात्रं ब्रह्मेति ज्ञानमानन्दं प्रज्ञानं ब्रह्मेत्याद्याः
श्रुतयो बाधिताः स्युः । आत्मनो निरवयवत्वेन प्रदेशा-
भावान्नित्यसंयुक्तत्वाच्च मनसः स्मृत्युत्पत्तिनियमानुपपत्ति-
रपरिहार्य्या स्यात् । संसर्गधर्म्मित्वञ्चात्मनः श्रुतिस्मृति-
न्यायविरुद्धं कल्पितं स्यात् । असङ्गो न हि सज्जते । असक्तं
सर्व्वभृदिति श्रुतिस्मृती च । न्यायश्च । गुणवद् गुणवता संसृज्यते
नातुल्यजातीयम् । अतो निर्गुणं निर्विशेषं सर्व्वविलक्षणं केन-
चिदपि अतुल्यजातीयेन संसृज्यत इत्येतन्न्यायविरुद्धं भवेत् ।
तस्मान्नित्यानुभवज्ञानस्वरूपज्योतिरात्मा ब्रह्मेत्ययमर्थः ।
सर्व्वबोधबोद्धृत्वे चात्मनः सिध्यति नान्यथा । तस्मात्प्रति-
बोधविदितं मतमिति यथा व्याख्यात एवार्थोऽस्माभिः ।

---

अक्षपादकणादमताव एव स्मृतीनां क्रमेणैवोत्पत्तिरिति नियमो
वैशेषिकस्य नोपपद्यते अक्षपादेऽपि स्मृत्युत्पत्तिप्रसङ्गात् संस्कारव-
दात्मनःसंयोगस्याविशेषादित्यर्थः ॥ सर्व्वगतत्वस्य सर्व्वात्म्यप्रधानमात्रं
न तु संयोगित्वं कल्पनीयमित्याह । संसर्गधर्म्मित्वञ्चेति ॥ न्यायविरुद्धमि-
त्युक्तं तत्स्फुटयति न्यायश्चेति ॥ एकदेशिव्याख्यानान्तरमनूद्य दूषयति ।
यत्पुनरित्यादिना ॥ यद्वेद्यं तद्विदितवेदनाच्च भिन्नं यथा घटादीति
व्याप्तिविरोधात्स्वसंवेद्यत्वं वास्तवं नोपपद्यते ततो बुद्ध्यादावात्मभाव-
मारोप्यात्मना तस्य वेद्यत्वं वाच्यमिति निरुपाधिकस्वरूपस्थितिर्न स्यादि-
त्याह । तत्र भवति सोपाधिकत्वमिति ॥ काणादस्य स्वसंवेद्यत्वानङ्गीकार-

यत्पुनः स्वसंवेद्यता प्रतिबोधविदितमित्यस्य वाक्यस्यार्थो वर्ण्यते तत्र भवति सोपाधिकत्वमात्मनो बुद्ध्युपाधिस्वरूपत्वेन भेदं परिकल्प्यात्मानं वेत्तीति संव्यवहारः। आत्मनैवात्मानं पश्यति स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तमेति न तु निरुपाधिकस्यात्मन एकत्वे स्वसंवेद्यता वा सम्भवति। संवेदनस्वरूपत्वात्संवेदनान्तरापेक्षा च न सम्भवति। यथा प्रकाशस्य प्रकाशान्तरापेक्षाया न सम्भवस्तद्वत्। बौद्धपक्षे स्वसंवेद्यतायान्तु क्षणभङ्गुरत्वं निरात्मकत्वञ्च विज्ञानस्य स्यात्। न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्। नित्यं विभुं सर्व्वगतं स एवैष महानज आत्माऽजरोऽमरोऽमृतोऽभय इत्याद्याः श्रुतयो बाध्येरन्। यत्पुनः प्रतिबोधशब्देन निर्निमित्तो बोधः प्रतिबोधो यथा सुप्तस्येत्यर्थं

---

वस्त्वन्तरवेद्यत्वं प्रसज्जत इत्यपि न वाच्यमित्याह। संवेदनस्वरूपत्वादिति। बौद्धेन स्वसंवेद्यत्वविज्ञानमिष्टं तच्च किं स्यादित्यत आह। बौद्धपक्ष इति॥ प्रत्यक्षस्य वर्त्तमानाभासकत्वात्क्षणान्तरविशिष्टे स्वात्मनि क्षणान्तरविशिष्टं तदेव विज्ञानं प्रकाशाभिव्यक्तस्य न सम्भवति अतः स्वात्मनि स्वयमेव विज्ञानं प्रत्यक्षं चेद्वर्त्तमानक्षणमात्रं क्षणं स्यात्। स्वसंवेद्यत्वेन वादिनोऽनङ्गीकारान्निरात्मत्वञ्च स्यादेव तच्छ्रुतिविरुद्धमित्यर्थः॥ प्रतिबोधवाक्यस्यार्थान्तरं वक्तुं यत्पुनरिति॥ प्रज्ञाहमचोति चिन्नयतो सावशेतो व्याप्टतिस्तः वतृसम्प्रज्ञातसमाधिर्निरुद्धचेतोव्यापारे यः परमानन्दसाक्षात्कारः सौषप्रायनन्दसाक्षात्कारवतृषोऽसम्प्रज्ञातसमाधिप्रतिबोध उच्यते। तदुक्तं वार्त्तिककृता। अपरोक्षबोधो हि निदिध्यासनमुच्यत इति। अथवा क्रियाप्रज्ञात्मत्वानुभवे सति प्रमातृत्वानुपपत्तौ पुनर्ज्ञानासम्भवात्पुरुषो ब्रह्मिकारत्वं सर्वदृज्ञानं प्रतिबोध उच्यते सकलमहत्त्या मद्गातिक्रियाकारकरूपभेदज्ञान-

परिकल्पयन्ति सकृद्विज्ञानं प्रतिबोध इत्यपरे। निर्निमित्तः सनिमित्तः सकृद्वाऽसकृद्वा प्रतिबोध एव हि सः। अमृतत्वममरणभावं स्वात्मन्यवस्थानं मोक्षं हि यस्माद्विन्दते लभते यथोक्तात्प्रतिबोधात्प्रतिबोधविदितात्मकात्तस्मात्प्रतिबोधविदितमेव मतमित्यभिप्रायः। बोधस्य हि प्रत्यगात्मात्मविषयं मतममृतत्वे हेतुः। न ह्यात्मनोऽनात्मत्वादात्मनोऽमृतत्वं निर्निमित्तमेव। एवं मर्त्यत्वमात्मनो यदविद्ययाऽनात्मप्रतिपत्तिः कथं पुनर्यथोक्तयाऽऽत्मविद्ययाऽमृतत्वं विन्दत इत्यत आह। आत्मना स्वेन स्वरूपेण विन्दते लभते वीर्य्यं बलं सामर्थ्यं धनसहायमन्त्रौषधितपोयोगकृतं वीर्य्यं मृत्युं न शक्नोत्यभिभवितुमनित्यवस्तुकृतत्वात्। आत्मविद्याकृतं तु वीर्य्यमात्मनैव विन्दते नान्येनेत्यतोऽनन्यसाधनत्वादात्मविद्यावीर्य्यस्य तदेव वीर्य्यं मृत्युं

---

ज्ञानमज्ञानवाज्ञत्वं नाश्नुतेऽनयोरिति पक्षद्वयेऽप्यविशेषमाह। निर्निमित्त इति॥ अयमाशयस्तावदविद्यानिवर्त्तकस्यागन्तुकस्य बोधस्य निर्निमित्तत्वं सम्भवति कार्य्यस्य सनिमित्तत्वव्याप्तेः। बोधरूपस्यापि न निर्निमित्तत्वमविद्यायाः पूर्व्वपूर्व्वनिरोधावस्थासंस्कारोद्भूततादव-स्थभिव्यक्तचैतन्यस्य तत्र सुखबाधाद्याकारोपगमादत एव वृत्तिविशिष्टस्य विनाशे मरणमुपपद्यते। अत्रापि तद्वृत्तिसंस्कारप्रचयाविच्छिन्नेऽपि चित्ते प्रज्ञाभिव्यक्तं स्यादिति ध्येयम्। तथा सत्यप्रमात्वेन विनष्टपुनामरोषादिवाविद्यानिवर्त्तनं स्यात्स्वाद्ध्यानसम्बन्धात्प्रमात्वे परतन्त्रत्वप्रसङ्गः स्वरूपसत्त्वात्प्रमात्वेन निर्निमित्ततेति प्रकृतकर्म्मफलप्रतिबन्धाद्वर्त्तमानप्रमाणत्वाभावानिवृत्तेरसकृद्बोधोऽपि पक्षद्वयेऽपि नादरः सर्व्वथापि परमात्मा प्रतिबोध एव बोधं प्रति बोध प्रति साक्षितया भातीति॥ वाक्यपदार्थविवेचनपूर्व्वकं महावाक्योत्थं परमात्मास्मीति ज्ञानमेव

इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्-

---

शक्नोत्यभिभवितुम्। यत एवमात्मविद्याकृतं वीर्य्यमात्मनैव विन्दतेऽतो विद्ययाऽऽत्मविषयया विन्दतेऽमृतं नायमात्मा बलहीनेन लभ्य इत्याथर्व्वणे। अतः समर्थो हेतुः अमृतत्वं विन्दत इति ॥ १२ ॥ ४ ॥

कष्टा खलु सुरनरतिर्य्यक्प्रेतादिषु संसारदुःखबहुलेषु प्राणिनिकायेषु जन्मजरामरणरोगादिसम्प्राप्तिरज्ञानादत इहैव चेन्मनुष्योऽधिकृतः समर्थः सन् यद्यवेदीदात्मानं यथोक्तलक्षणं विदितवान् यथोक्तेन प्रकारेणाथ तदास्ति सत्यं मनुष्यजन्मन्यस्मिन्नविनाशोऽर्थवत्ता वा सद्भावो वा परमार्थता वा सत्यं विद्यते न चेदवेदीदिति। न चेदिह जीवंश्चेदधिकृतोऽवेदीन्न विदितवान्

---

सम्यग्ज्ञानं यस्यास्तत एवामृतत्वं लभत इत्याह अमृतत्वमिति॥ उक्तमर्थं सङ्क्षिप्याह। बोधस्य हीति॥ बुद्धिपरिणामस्य सर्व्वस्य भासकं प्रत्यक्चैतन्यं परमात्मा न भवति किन्तु ब्रह्मावस्थाद्बहिःस्थितस्याप्तिर्मोक्ष इत्याशङ्क्याह। न हीति॥ अनात्मप्राप्तिकर्म्मफलवदनित्यत्वे नामृतत्वप्रसिद्धिर्न स्यादित्यर्थः। यदुक्तं दोषपरिहाराय औपाधिकभेदेन भिन्नत्वं ब्रह्मणः स्वतः स्वात्मत्वमेवेति मन्यसे तत्राह। आत्मत्वादिति॥ ब्रह्मण आत्मत्वादेवात्मनोऽमृतत्वं स्वाभाविकं तर्हि विद्याया आनर्थक्यं प्राप्तमित्याशङ्क्याह एवं मर्त्त्यत्वमिति। अविद्यया देहाद्यात्मत्वप्रतिपत्तिरिति यत्तदात्मनो मर्त्त्यत्वं तन्निवृत्तिर्विद्याफलमित्यर्थः॥ १२॥ ४॥

वीर्य्यं विद्याकृतमुक्तम्। मुक्तत्वे दार्ढ्यं तत्र स्वाभाविकमेव मुक्तत्वं वास्तवं सर्व्वशरीराद्यसंसर्गित्वान्नभोवन्निरवयवत्वादेव। ततश्च नित्यमुक्त

महती विनष्टिः। भूतेषु भूतेषु विचित्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥ १३ ॥ ५ ॥

द्वितीयः खण्डः ॥ २ ॥

ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो वि-

---

तदा महती दीर्घाऽनन्ता विनष्टिर्विनाशनं जन्मजरामरणादिप्रबन्धाविच्छेदलक्षणा संसारगतिस्तस्मादेवं गुणदोषौ विजानन्तो ब्राह्मणा भूतेषु भूतेषु सर्व्वभूतेषु स्थावरेषु चरेषु चैकमात्मतत्त्वं विचित्य विज्ञाय साक्षात्कृत्य धीरा धीमन्तः प्रेत्य व्यावर्त्य ममाहंभावलक्षणादविद्यारूपादस्माल्लोकादुपरम्य सर्व्वात्मैकत्वभावमद्वैतमापन्नाः सन्तोऽमृता भवन्तीत्यर्थः। स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवतीति श्रुतेः ॥ १३ ॥ ५ ॥ इति द्वितीयः खण्डः ॥ २ ॥

ब्रह्म ह देवेभ्यो विजिग्येऽविज्ञातं विजानतां विज्ञातमविजानतामित्यादिश्रवणाद्यदस्ति तद्विज्ञातं प्रमाणैर्नास्ति तदविज्ञातं शशविषाणकल्पमत्यन्तमेवासद्दृष्टम्। तथेदं

---

एवाहमित्यवष्टम्भो विद्याकृतं बलमित्यर्थः॥ उत्तरवाक्यस्यापेक्षितमर्थमाह। कष्टा स्त्विति॥ लौकिकमपि सत्यं चिरं जीवनधनवत्त्वं सद्भावः साधुभावः ख्यातिः। एतदपि सर्व्वं ब्रह्मविदो भवतीति स्तुत्यर्थमुच्यते परमार्थतो ब्रह्मरूपस्थितिस्तु फलमवगन्तव्यमित्यर्थः ॥ १३ ॥ ५ ॥ द्वितीयः खण्डः समाप्तः ॥ २ ॥

उत्तरग्रन्थस्य प्रतीकमादाय तात्पर्यमाह। ब्रह्मेत्यादिना ॥ अभिप्रेतं तात्पर्यमाह। वक्ष्यमाणेति॥ उत्तमाधिकारिगोचरमविषयं

---

ब्रह्माविज्ञातत्वादसदेवेति मन्दबुद्धीनां व्यामोहो माभूदिति तदर्थेयमाख्यायिकाऽऽरभ्यते। तदेव हि ब्रह्म सर्व्वप्रकारेण प्रशास्तृ देवानामपि परो देव ईश्वराणामपीश्वरो दुर्विज्ञेयो देवानां जयहेतुरसुराणां पराजयहेतुस्तत्कथं नास्तीत्येतस्यार्थस्यानुकूलानि ह्युत्तराणि वचांसि दृश्यन्ते। अथवा ब्रह्मविद्यायाः स्तुतये। कथं ब्रह्मविज्ञानाद्ध्यग्न्यादयो देवानां श्रेष्ठत्वं जग्मु स्ततोऽप्यतितरामिन्द्र इति। अथवा दुर्विज्ञेयं ब्रह्मेत्येतत्प्रदर्श्यते। येनाग्न्यादयोऽतितेजसोऽपि क्लेशेनैव ब्रह्म विदितवन्तस्तथेन्द्रो देवानामीश्वरोऽपि सन्निति वक्ष्यमाणोपनिषद्विधिपरं वा सर्व्वं ब्रह्मविद्याव्यतिरेकेण प्राणिनां कर्तृत्वाद्यभिमानो मिथ्यैतद्दर्शनार्थं वाऽऽख्यायिका। यथा देवानां जयाद्यभिमानस्तद्वदिति। ब्रह्म यथोक्तलक्षणं परं ह किल देवेभ्योऽथ विजिग्ये जयं लब्धवद्देवानामसुराणाञ्च संग्रामेऽसुरान् जित्वा जगदरातीनीश्वरसेतुभेतॄन्देवेभ्यो जयं तत्फलञ्च प्रायच्छत् जगतः स्थेम्ने। तस्य ह किल ब्रह्मणो विजये देवा अग्न्यादयो महीयन्तो महिमानं प्राप्नुवन्तस्तदात्मसंस्थस्य प्रत्यगात्मन ईश्वरस्य सर्व्वज्ञस्य सर्व्वक्रियाफलसंयोजयितुः प्राणिनां

---

ब्रह्मात्मतत्त्वज्ञानं पूर्व्वोक्तमुत्तरत्र तु मन्दाधिकारिगोचरं सगुणब्रह्मोपासनं वक्ष्यते तत्परं वक्ष्यमाणं सर्व्ववाक्यजातमप्रविधिदर्शनादतोऽत्रैव तात्पर्य्यमर्थान्तरतात्पर्य्यप्रदर्शनं तु सम्भावनामात्रेणेति द्रष्टव्यम्। ईश्वरस्य

विजयोऽस्माकमेवायं महिमेति ॥ १४ ॥ १ ॥
तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न व्यजानन्त
किमिदं यक्षमिति ॥ १५ ॥ २ ॥

तेऽग्निमब्रुवन् जातवेद एतद्विजानीहि

---

सर्व्वशक्तेर्जगतः स्थितिं चिकीर्षोरयं जयो महिमा चेत्यजानन्तस्ते देवा ऐक्षन्त ईक्षितवन्तोऽग्न्यादिस्वरूपपरिच्छिन्नात्मकृतोऽस्माकमेवायं विजयोऽस्माकमेवायं महिमाऽग्निवाय्विन्द्रत्वादिलक्षणो जयफलभूतोऽस्माभिरनुभूयते नास्मत्प्रत्यगात्मभूतेश्वरकृत इत्येवं मिथ्याभिमानेक्षणवतां तद्ध किलैषां मिथ्येक्षणं विजज्ञौ विज्ञातवद्ब्रह्म । सर्व्वेक्षितृ हि तत्सर्व्वभूतकरणप्रयोक्तृत्वाद्देवानाञ्च मिथ्याज्ञानमुपलभ्यैवासुरवन्मिथ्याभिमानात्पराभवेयुरिति तदनुकम्पया देवान्मिथ्याभिमानापनोदनेनानुगृह्णीयामिति तेभ्यो देवेभ्यो ह किलार्थाय प्रादुर्ब्बभूव स्वयोगमाहात्म्यनिर्म्मितेनात्यद्भुतेन विस्मापनीयेन रूपेण देवानामिन्द्रियगोचरे प्रादुर्ब्बभूव । तत्प्रादुर्भूतं ब्रह्म न व्यजानन्त नैव विज्ञातवन्तः देवाः । किमिदं यक्षं पूज्यं महद्भूतमिति ॥ १४ ॥ १ ॥ १५ ॥ २ ॥

ते तदजानन्तो देवाः सान्तर्भयास्तद्विजिज्ञासवोऽग्निमग्रगामिनं जातवेदसं सर्व्वज्ञकल्पमब्रुवन्नुक्तवन्तो हे जात-

---

सेतवो मर्य्यादा वर्णाश्रमादिधर्म्मासङ्करकाः जगतः क्षोभः स्थैर्याय सत्त्वरजस्तमसां लयानां गुणानां योगो युक्तिर्घटनमाया तन्माहात्म्येनेत्यर्थः ॥ १४ ॥ १ ॥ १५ ॥ २ ॥

किमेतद्यक्षमिति तथेति ॥ १६ ॥ ३ ॥ तदभ्यद्रव-त्तमभ्यवदत् कोऽसीति अग्निर्वा अहमस्मीत्यब्रवी-ज्जातवेदा वा अहमस्मीति ॥ १७ ॥ ४ ॥ तस्मिं-स्त्वयि किं वीर्य्यमित्यपीदꣳ सर्वं दहेयं यदिदं पृथिव्यामिति ॥ १८ ॥ ५ ॥ तस्मै तृणं निदधा-वेतद्दहेति तदुपप्रेयाय सर्वजवेन तन्न शशाक

---

वेद एतदस्माद्गोचरस्थं यक्षं विजानीहि विशेषतो बुध्यस्व त्वं नस्तेजस्वी किमेतद्यक्षमिति। तथास्त्विति तद्यक्षमभ्यद्रवत्तत्प्रतिगतवानग्निः। तं च गतवन्तं पिपृच्छिषुं तत्समीपे ऽप्रगल्भत्वात्तूष्णीम्भूतं तद्यक्षमभ्यद्रवदग्निं प्रत्यभाषत कोऽसीति। एवं ब्रह्मणा पृष्टोऽग्निरब्रवीदग्निर्वै अग्निनामाहं प्रसिद्धो जातवेदा इति च। नामद्वयेन प्रसिद्धतयात्मानं श्लाघयन्निति। एवमुक्तवन्तं ब्रह्मोवाचतस्मिन्नेवं प्रसिद्धगुणनामवति त्वयि किं वीर्य्यं सामर्थ्यमिति। सोऽब्रवीदिदं जगत्सर्वं दहेयं भस्मीकुर्य्याम्। यदिदं स्थावरादिपृथिव्यामिति। पृथिव्यामित्युपलक्षणार्थं यतोऽन्तरिक्षस्थमपि दह्यत एवाग्निना। तस्मै एवमभिमानवते ब्रह्म तृणं निदधौ पुरोऽग्नेः स्थापितवद्ब्रह्मैतत्तृणमात्रं ममाग्रतो दह नचेदस्य दग्धुं समर्थो मुञ्च दग्धृत्वाभिमानं सर्व्वत्रेत्युक्तः तत्तृणमुपप्रेयाय तृणसमीपं गत्वा सर्व्वजवेन सर्व्वोत्साहकृतेन गत्वा न शशाक नाग-

---

तृतीयखण्डभाष्यं स्पष्टमतो न विवृतमिति ॥

दग्धुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥ १९ ॥ ६ ॥

अथ वायुमब्रुवन् वायवेतद्विजानीहि किमेतद्यक्षमिति तथेति ॥ २० ॥ ७ ॥ तदभ्यद्रवत्तमभ्यवदत्कोऽसीति वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति ॥२१॥८॥ तस्मिंस्त्वयि किं वीर्य्यमित्यपीदं सर्वमाददीयं यदिदं पृथिव्यामिति ॥ २२ ॥ ९ ॥ तस्मै तृणं निदधावेतदादत्स्वेति तदुपप्रेयाय सर्वजवेन तन्न शशाका-

---

कदग्धुं स जातवेदास्तृणं दग्धुमशक्तो व्रीडितो हतप्रतिज्ञस्तत एव यक्षादेव तूष्णीं देवान् प्रतिनिववृते निवृत्तः प्रतिगतवान् नैतद्यक्षमशकं शक्तवानहं विज्ञातुं विशेषतो यदेतद्यक्षमिति ॥ १६ ॥ ३ ॥ १७ ॥ ४ ॥ १८ ॥ ५ ॥ १९ ॥ ६ ॥

अथ वायुमित्यथानन्तरं वायुमब्रुवन्हे वायो एतद्विजानीहि इत्यादि समानार्थं पूर्व्वेण। वानाद्गमनाद्गन्धनाद्वा वायुः। मातर्य्यन्तरिक्षे श्वयतीति मातरिश्वा। इदं सर्व्वमप्याददीयं गृह्णीयाम्। यदिदं पृथिव्यामित्यादि समानमेव। अथेन्द्रमित्यथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि इत्यादि पूर्व्ववदिन्द्रः परमेश्वरो मघवान् बलवत्त्वात्तथेति तदभ्यद्रवत्तस्मादिन्द्रादात्मसमीपगतात्तद्ब्रह्म तिरोदधे तिरोभूतमिन्द्रत्वाभिमानोऽतितरां निराकर्त्तव्य इत्यतः संवादमात्रमपि नादाद्ब्रह्मेन्द्राय तद्यक्षं यस्मिन्नाकाशे आकाश-

ज्ञातुं स तत एव निववृते नैतदशकं विज्ञातुं यदे-तद्यक्षमिति ॥ २३ ॥ १० ॥ अथेन्द्रमब्रुवन्मघवन्ने-तद्विजानीहि किमेतद्यक्षमिति तथेति तदभ्यद्र-वत्तस्मात्तिरोदधे ॥ २४ ॥ ११ ॥ स तस्मिन्नेवा-काशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीं ताᳪं होवाच किमेतद्यक्षमिति ॥ २५ ॥ १२ ॥ तृतीयः खण्डः समाप्तः ॥ ३ ॥

---

यद्देशे आत्मानं दर्शयित्वा तिरोभूतमिन्द्रश्च ब्रह्मणस्ति-रोधानकाले यस्मिन्नाकाशे आसीत् स इन्द्रस्तस्मिन्नेवा-काशे तस्थौ। किं तद्यक्षमिति ध्यायन्न निववृतेऽन्यादिवत्त-स्येन्द्रस्य यक्षे भक्तिं बुद्ध्वा विद्या उमारूपिणी प्रादुरभूत् स्त्रीरूपा। स इन्द्रस्तामुमां बहुशोभमानां सर्व्वेषां हि शोभमानानां शोभनतमां विद्यां तदा बहुशोभमानेति विशेषणमुपपन्नम्भवति। हैमवतीं हेमकृताभरणवतीमिव बहुशोभमानामित्यर्थः। अथवा उमैव हिमवतो दुहिता हैमवती नित्यमेव सर्व्वज्ञेन ईश्वरेण सा वर्त्तत इति ज्ञातुं समर्था इति कृत्वा तामुपजगाम इन्द्रस्तां ह उमां किलोवाच पप्रच्छ ब्रूहि किमेतद्दर्शयित्वा तिरोभूतं यक्षमिति॥ २० ॥ ७ ॥ २१ ॥ ८ ॥ २२ ॥ ९ ॥ २३ ॥ १० ॥ ॥ २४ ॥ ११ ॥ २५ ॥ १२ ॥ इति तृतीयखण्डभाष्यम् ॥ ॥ ३ ॥

सा ब्रह्मेति होवाच ब्रह्मणो वाएतद्विजये महीयध्वमिति ततो हैव विदाञ्चकार ब्रह्मेति ॥२६॥१॥ तस्माद्वा एते देवा अतितरामिवान्यान्देवान् यदग्निर्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठं पस्पर्शुस्ते ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति ॥ २७ ॥ २ ॥ तस्माद्वा इन्द्रोऽतितरामिवान्यान् देवान् स ह्येनन्नेदिष्ठं

---

सा ब्रह्मेति होवाच ह किल ब्रह्मण ईश्वरस्यैव विजये ईश्वरेणैव जिता असुरा यूयं तत्र निमित्तमात्रं तस्यैव विजये यूयं महीयध्वं महीमानं प्राप्नुथ। एतदिति क्रियाविशेषणार्थम्। मिथ्याभिमानस्तु युष्माकमेव महिमेति। ततस्तस्मादुमावाक्याद्ध एव विदाञ्चकार ब्रह्मेतीन्द्रोऽवधारणात्ततो हैवेति न स्वातन्त्र्येण। यस्मादग्निवायविन्द्रा एते देवा ब्रह्मणः संवाददर्शनादिना समीपमुपगतास्तस्मादैश्वर्यगुणैरतितरामिव शक्तिगुणादिमहाभाग्यैरन्यान्देवानतितरामतिशयेन शेरते इवैते देवाः। इवशब्दोऽनर्थकोऽवधारणार्थो वा। यदग्निर्वायुरिन्द्रस्ते हि देवा यस्मादेतद्ब्रह्म नेदिष्ठमन्तिकं समीपं प्रियतमं पस्पर्शुः स्पृष्टवन्तो यथोक्तैर्ब्रह्मणः संवादादिप्रकारैस्ते हि यस्माच्च हेतोरेनद्ब्रह्म प्रथमः प्रथमाः प्रधानाः सन्त इत्येतद्विदा-

---

विद्युतः प्रकाशादिद्योतनं कृतवदित्यनुपपन्नं ब्रह्मणः स्वयं ज्योतिष्ट्वात्पराधीनप्रकाशानुपपत्तेर्विद्युद्वच्चाग्नि द्योतनं कृतवदित्यनुपपन्न-

पस्पर्श स ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति ॥ २८ ॥ ३ ॥

तस्यैष आदेशो यदेतद्विद्युतो व्यद्युतदा इतीति न्यमीमिषदा इत्यधिदैवतम् ॥ २९ ॥ ४ ॥

---

ञ्चकार विदाञ्चक्रुरित्येतद्ब्रह्मेति। यस्मादग्निवायू अपीन्द्रवाक्यादेव विदाञ्चक्रुः इन्द्रेण ह्युमावाक्यात्प्रथमं श्रुतं ब्रह्मेत्यतस्तस्मादै इन्द्रोऽतितरामतिशयेन शेत इवान्यान्देवान् स ह्येनन्नेदिष्ठं पस्पर्श यस्मात्स ह्येनत्प्रथमो विदाञ्चकार ब्रह्मेत्युक्तार्थं वाक्यम् ॥ २६॥ १ ॥ २७ ॥ २ ॥ २८॥३॥

तस्य प्रकृतस्य ब्रह्मण एष आदेश उपमोपदेशो निरुपमस्य ब्रह्मणो येनोपमानेनोपदेशः सोऽयमादेश इत्युच्यते। किन्तद्यदेतत्प्रसिद्धं लोके विद्युतो व्यद्युतद्विद्योतनं कृतवदित्येतदनुपपन्नमिति। विद्युतो विद्योतनमिति कल्प्यते। आ इत्युपमार्थे। विद्युतो विद्योतनमिवेत्यर्थः। यथा सकृद्विद्युतमिति श्रुत्यन्तरे च दर्शनाद्विद्युदिव हि सकृदात्मानं दर्शयित्वा तिरोभूतं ब्रह्म देवेभ्योऽथवा 'विद्युतस्तेज इत्यध्याहार्य्यं व्यद्युतद्विद्योतितवत् आ इव विद्युतस्तेजः

---

मन्वाश्रयस्य विद्योतनस्यान्यकर्तृत्वानुपपत्तेरतो यथा श्रुतासम्भवादन्यथा तात्पर्यं वक्तव्यमित्यर्थः॥ २६ ॥ १ ॥ २७ ॥ २ ॥ २८ ॥ ३ ॥

प्रतिनिर्द्देश्यार्थ इति परामर्शार्थः। चक्षुषो निमेषणं कृतं भवतीति प्रसिद्धं तद्ब्रह्मापि क्षिप्रकारित्वं सृष्ट्यादौ प्रतिबन्धाभावेनोपादानाभावेन च कृतकारित्वं धर्मः अधिदैवतं यद्वेयं ब्रह्मरूपं तद्यथा विद्युतः प्रकाशो

अथाध्यात्मं यदेतद्गच्छतीव च मनोऽनेन चैत दुपस्मरत्यभीक्ष्णं सङ्कल्पः ॥ ३० ॥ ५ ॥ तत्र तद्वनं

---

सक्तद्विद्योतितवदित्यभिप्रायः। इतिशब्द आदेशप्रतिनिर्देशार्थ इत्ययमादेश इति। इच्छब्दः समुच्चयार्थः। अयञ्चापरस्तस्यादेशः। कोऽसौ न्यमीमिषत्। यथा चक्षुर्न्यमीमिषन्निमेषं कृतवत् स्वार्थे णिच्। उपमार्थे एवकारः। चक्षुषो विषयं प्रति प्रकाशतिरोभाव इव चेत्यर्थः। इत्यधिदैवतं देवताविषयं ब्रह्मण उपमानदर्शनम् ॥ २९ ॥ ४ ॥

अथानन्तरमध्यात्मं प्रत्यगात्मविषयमादेश उच्यते। यदेतद्गच्छतीव च मन एतद्ब्रह्म ढौकत इव विषयीकरोतीव यथाऽनेन मनसा एतद्ब्रह्मोपस्मरति समीपतः स्मरति साधकोऽभीक्ष्णं भृशं सङ्कल्पश्च मनसो ब्रह्मविषयो मन उपाधिकत्वाद्धि मनसः सङ्कल्पस्मृत्यादिप्रत्ययैरभिव्यज्यते ब्रह्मविषयीक्रियमाणं इव वातः स एष ब्रह्मणोऽध्यात्ममादेशो विद्युन्निमेषणवदधिदैवतं द्रुतं प्रकाशनधर्म्मि अध्यात्मं च मनःप्रत्ययसमकालाभिव्यक्तिधर्म्मीत्येष आदेशः। एवमादिश्यमानं हि ब्रह्म मन्दबुद्धिगम्यं भवतीति ब्रह्मण आदेशोपदेशः। नहि निरुपाधिकमेव ब्रह्म मन्दबुद्धि-

---

युगपद्विश्वव्यापकस्तथा निरतिशयज्योतीरूपं इतं सकलजगदादिकारि परमैश्वर्यसम्पन्नमित्युपमानोपदेशेनोक्तम् ॥ २९ ॥ ४ ॥

अधुना प्रत्यगात्मतया ब्रह्मणो यथाभिव्यक्तिः स्यात्तथोपदिश्यत इत्याह। अथानन्तरमिति॥ एतत्प्रकृतज्योतीरूपं ब्रह्म प्रति मदीयं मनो गच्छद्वर्त्तत इति चिन्तयेदित्युपदेशः। स आध्यात्मिकोऽभीक्ष्णं पौनः

नाम तद्वनमित्युपासितव्यं स य एतदेवं वेदाऽभि हैनं सर्व्वाणि भूतानि संवाञ्छन्ति ॥ ३१॥६॥

उपनिषदं भो ब्रूहीत्युक्ता त उपनिषद्ब्राह्मीं वाव त उपनिषदमब्रूमेति ॥ ३२ ॥ ७॥ तस्यै

---

भिराकुलयितुं शक्यम् । किञ्च तद्ब्रह्म ह किल तद्वनं नाम तस्य वनं तद्वनं तस्य प्राणिजातस्य प्रत्यगात्मभूतत्वाद्वननीयं सम्भजनीयमतस्तद्वनं नाम प्रख्यातं ब्रह्म तद्वनमिति यतस्तस्मात्तद्वनमित्यनेनैव गुणाभिधानेनोपासितव्यं चिन्तनीयमित्यनेन नाम्नोपासकस्य फलमाह । स यः कश्चिदेतद्यथोक्तं ब्रह्मैवं यथोक्तगुणं वेदोपास्ते ह एवमुपासकं सर्व्वाणि भूतान्यभिसंवाञ्छन्ति ह प्रार्थयत एव यथा ब्रह्म एवमनुशिष्टः शिष्य आचार्य्यमुवाच ॥ २० ॥ ५ ॥ २१॥६॥

उपनिषदं रहस्यं यच्चिन्त्यं भो भगवन्ब्रूहीत्येवमुक्तवति शिष्ये आह आचार्य्यः । उक्ताभिहिता ते तवोपनिषत् । का पुनः सेत्याह । ब्राह्मीं ब्रह्मणः परमात्मन इयत्तां

---

पुण्येन मम मनसः सङ्कल्पो ब्रह्मविषय एवेति ध्यायतः प्रत्यग्भूतब्रह्माभिव्यक्तिः स्यादित्याह । मन उपाधिकत्वाद्धीति ॥ उक्तमर्थं सङ्क्षिप्याह । विद्युन्निमेषवदिति ॥ सगुणब्रह्मोपासनमैश्वर्यफलकमुक्तम् । तत्र विरक्त उत्तमाधिकारी परमरहस्यं पृच्छतीत्याह । एवमनुशिष्ट इति ॥ ३० ॥ ५ ॥ ३१ ॥ ६ ॥

परमरहस्यं ओमित्यादिनोक्तमेवोत्तरार्थमित्युत्तरग्रन्थेन विद्याप्राप्त्युपायविधानार्थमुक्ताविद्यानिरपेक्षेत्यवधारयति ॥ अवधारणार्थं प्रतिवचनस्य चोद्यमुखेन स्फुटयति । परमात्मविषयामित्यादिना ॥ किं

तपो दमः कर्म्मेति प्रतिष्ठा वेदाः सर्व्वाङ्गानि

---

परमात्मविषयत्वादतीतविज्ञानस्य वाव एव ते उपनिषदमब्रूमेत्युक्तमेव परमात्मविद्यामुपनिषदमब्रूमेत्यवधारयत्युत्तरार्थम्। परमात्मविषयामुपनिषदं श्रुतवत उपनिषदं मे ब्रूहीतीच्छतः शिष्यस्य कोऽभिप्रायः। यदि तावच्छ्रुतस्यार्थस्य प्रश्नः कृतस्ततः पिष्टपेषणवत्पुनरुक्तोऽनर्थकः प्रश्नः स्यात्। अथ सावशेषोक्तोपनिषत्स्यात्ततस्तस्याः फलवचनेनोपसंहारो न युक्तः प्रेत्यास्माल्लोकादमृता भवन्तीति। तस्मादुक्तोपनिषच्छेषविषयोऽपि प्रश्नोऽनुपपन्न एवानवशेषितत्वात्। कस्तर्ह्यभिप्रायः प्रष्टुरित्युच्यते। किं पूर्व्वोक्तोपनिषच्छेषतया तत्सहकारिसाधनान्तरापेक्षा। अथ निरपेक्षैव सापेक्षितविषयामुपनिषदं ब्रूहि। अथ निरपेक्षा चेदवधारय पिप्पलादवन्नातः परमस्तीत्येवमभिप्रायः एतदुपपन्नमाचार्य्यस्यावधारणवचनमुक्ता त उपनिषदिति। ननु नावधारणमिदं यतोऽन्यद्वक्तव्यमित्याह। तस्यै तपो दम इत्यादि सत्यं वक्तव्यमुच्यते आचार्य्येण नतूक्तोपनिषच्छेषतया तत्सहकारिसाधनान्तराभिप्रायेण वा॥ किन्तु

---

पूर्व्वोक्तोपनिषच्छेषतयान्यदपेक्षते। शेषशब्देन फलोपकार्य्यङ्गं विवक्षितम्। सहकारिशब्देनानुपसर्ज्जनमपि समुच्चयार्थं विवक्षितम्। एवं वेदवेदाङ्गैः शिष्याभिप्रायमुपवर्ण्य समाधानमाह। एतदुपपन्नमिति॥ विद्याकृत्स्नमीनैरिति पाठात्तपःप्रभृतीनां विद्याङ्गत्वं नास्तीत्युक्तम्॥ तत्र येऽन्यतावमेन शेषशेषिभावः सहपाठस्याकिञ्चित्कर इति मन्यते। सहपठितानामपीति॥ अग्निरिदं हविरजुषत अवीवृधत महो ज्यायोऽकृत। अग्नीषोमा-

सत्यमायतनम् ॥ ३३ ॥ ८ ॥ यो वा एतामेवं

ब्रह्मविद्याप्राप्त्युपायाभिप्रायेण वेदैस्तदङ्गैश्च सह पाठेन समीकरणात् तपःप्रभृतीनाम्। न हि वेदानां शिक्षाद्यङ्गानाञ्च साक्षाद्ब्रह्मविद्याशेषत्वं तत्सहकारिसाधनं वा सहपठितानामपि यथायोग्यं विभज्य विनियोगः स्यादिति चेद्यथा सूक्तवाकानुमन्त्रणमन्त्राणां यथा दैवतं विभागस्तथा तपो दमः कर्म्म सत्यादीनां ब्रह्मविद्याशेषत्वं तत्सहकारिसाधनत्वं वेति कल्प्यते। वेदानां तदङ्गानाञ्चार्थप्रकाशकत्वेन कर्म्मात्मज्ञानोपायत्वमित्येवं ह्ययं विभागो युज्यते। अर्थसम्बन्धोपपत्तिसामर्थ्यादिति चेत्। नायुक्तेः। न ह्ययं विभागो घटनां प्राञ्चति। न हि सर्व्वक्रियाकारकफलभेदबुद्धितिरस्कारिण्या ब्रह्मविद्यायाः शेषापेक्षा सहकारिसाधनसम्बन्धो वा युज्यते॥ सर्व्वविषयव्यावृत्तप्रत्यगात्मविषयनिष्ठत्वाच्च ब्रह्मविद्यायास्तत्फलस्य च निःश्रेयसस्य मोक्षमिच्छन् सदा कर्म्म त्यजेदेव ससाधनं त्यजतैव हि तज्ज्ञेयन्त्यक्तुः प्रत्यक्परं पदम्। तस्मात्कर्म्मणां सहकारित्वं कर्मशेषा

---

विदं हविरजुषेताम्। अवीवृधेतां महो ज्यायोऽक्रातामित्यादिनैव सूक्तवाकेन सर्व्वत्यागसमाप्तौ देवता तु मन्त्रेण क्रियते। तत्र यद्यप्येकस्मिन्सूक्तवाके बहवो देवताः पठ्यन्ते तथापि यस्मिन्यागे या देवता हुता तस्या एव विसर्जने योग्यतावशादस्य सूक्तवाकस्य यथा विनियोगस्तथा तपःप्रभृतीनामेव विद्याशेषत्वेन विनियोगो भविष्यतीत्यर्थः। भवेत् सूक्तवाकस्य विनियोगो योग्यतासम्भवात्। न कर्म्मणां विद्याविरुद्धत्वेन योग्यताऽयोग्यत्वादित्याह। नायुक्तेरिति॥ विद्याया विषयपर्य्यालोचनया

वेदापहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रति-

पेक्षा वा न ज्ञानस्योपपद्यते। ततोऽसदेव सूक्तवाक्यानुमन्त्र-णवद्यथायोगं विभाग इति। तस्मादवधारणार्थतैव प्रश्न-प्रतिवचनस्योपपद्यते। एतावत्येवेयमुपनिषदुक्तान्यनिरपेक्षा म्टतत्वाय। यामिमां ब्राह्मीमुपनिषदं तवाग्रे ब्रूमेति तस्यै-तस्या उक्ताया उपनिषदः प्राप्त्युपायभूतानि तपआदीनि। तपःकायेन्द्रियमनसां समाधानम्। दम उपशमः। कर्माग्नि-होत्रादि। एतैर्हि संस्कृतस्य सत्त्वशुद्धिद्वारा तत्त्वज्ञानोत्पत्ति-र्दृष्टा। षद्य चदितकल्मषस्योक्तेऽपि ब्रह्मण्यप्रतिपत्तिर्विपरी-तप्रतिपत्तिश्च यथेन्द्रविरोचनप्रभृतीनाम्। तस्मादिह वा ऽतीतेषु वा बहुषु जन्मान्तरेषु तपआदिभिः कृतसत्त्व-शुद्धेर्ज्ञानं समुत्पद्यते यथाश्रुतम्। यस्य देवे परा भक्ति-र्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन इतिमन्त्रवर्णात्। ज्ञानमुत्पद्यते पुंसां क्षया-त्पापस्य कर्मण इति स्मृतेः। इतिशब्द उपलक्षणप्रदर्श-नार्थः। इत्येवमाद्यन्यदपि ज्ञानोत्पत्तेरुपकारकममानित्व-मदम्भित्वमित्याद्युपदर्शितं भवति। प्रतिष्ठा पादौ पादा-विवास्यास्तेषु हि सत्सु प्रतितिष्ठति ब्रह्मविद्या प्रवर्त्तते।

फलपर्य्यालोचनया च नास्ति तत्त्वतः सम्बन्धयोग्यता प्रत्युत कर्मणाम-नुपयोगात्कर्मणां त्याग एव मुमुक्षूणां कर्त्तव्य इत्याह। सर्व्वं विषयेति॥ सर्व्वेभ्य उत्पाद्यादिभ्यः कर्म्मगोचरेभ्यो व्यावृत्तो यः प्रत्यगात्मा स एव ब्रह्मरूपेण विद्याया व्यावर्त्तको विषयस्तन्निष्ठत्वाद्विद्यायास्तत्

तिष्ठति प्रतितिष्ठति ॥ ३४ ॥ ९ ॥ इति चतुर्थः

---

पद्भ्यामिव पुरुषो वेदाश्चत्वारः सर्व्वाणि चाङ्गानि शिक्षादीनि षट्कर्म्मज्ञानप्रकाशकत्वाद्वेदानां तद्रक्षणार्थत्वादङ्गानां प्रतिष्ठात्वम्। अथवा प्रतिष्ठाशब्दस्य पादरूपकल्पनार्थत्वाद्वेदास्त्वितराणि सर्व्वाङ्गानि शिरआदीन्यस्मिन् पक्षे शिक्षादीनां वेदग्रहणेनैव ग्रहणं कृतं प्रत्येतव्यम्। अङ्गिनि गृहीतेऽङ्गानि गृहीतान्येव भवन्ति। तदायतनत्वादङ्गानाम्। सत्यमायतनं यत्र तिष्ठत्युपनिषत्तदायतनं सत्यमिति। अमायिता अकौटिल्यं वाङ्मनःकायानान्तेषु ह्याश्रयति विद्या। ये अमायाविनः साधवो नासुरप्रकृतिषु मायाविषु। न येषु जिह्ममनृतं न माया चेति श्रुतेः। तस्मात्सत्यमायतनमिति कल्प्यते। तपआदिष्वेव प्रतिष्ठात्वेन प्राप्तस्य सत्यस्य पुनरायतनत्वेन ग्रहणं साधनातिशयत्वज्ञापनार्थम्। अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम्। अश्वमेधसहस्राद्धि सत्यमेकं विशिष्यत इति स्मृतेः। यो वै एतां ब्रह्मविद्यां केनेषितमित्यादिना यथोक्तामेवं महाभगां ब्रह्म ह देवेभ्य इत्यादिस्तुतां सर्व्वविद्याप्रतिष्ठां वेदामृतत्वं हि विन्दत

---

फलस्य च कर्म्मवैलक्षण्यादित्यर्थः॥ तच्छब्दापेक्षितं यच्छब्दं पूरयति। यामिमामिति॥ प्राप्तां सगुणविषयां निर्गुणब्रह्मात्मविषयाञ्चेत्यर्थः। पादरूपकल्पनेति प्रसिद्धपादसामान्यस्य कल्पितत्वादितरैरप्यङ्गैः कल्पनारूपैर्भवितव्यमित्यर्थः। तस्मै तपो दमः कर्म्मेत्यत्रेतिशब्दस्योपलक्षणार्थत्वात्सत्यमपि सङ्गृहीतव्यं कथं पृथगुच्यत इत्याशङ्क्याह। तपआदिष्वेवेति॥ सगुणविद्यायाः क्रममुक्त्यर्थत्वात्क्रमेण प्र.प्यं यत्कैवल्यं

खण्डः समाप्तः ॥ ४ ॥ इति सामवेदीयतलवकारोपनिषत्समाप्ता ॥ ॐ तत्सत् ॥

---

इत्युक्तमपि ब्रह्मविद्याफलमन्ते निगमयते । अपहत्य पाप्मानमविद्याकामकर्म्मलक्षणं संसारवीजं विधूयानन्तेऽपर्य्यन्ते स्वर्गे लोके सुखात्मके ब्रह्मणीत्येतदनन्ते इति विशेषणात्र त्रिपिष्टपेऽनन्तशब्द औपचारिकोऽपि स्यादित्यत आह । ज्येये इति ॥ ज्येये ज्यायसि सर्व्वमहत्तरे स्वात्मनि मुख्य एव प्रतीतः । न पुनः संसारमापद्यत इत्यभिप्रायः । इति श्रीगोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्य्यस्य श्रीशङ्करभगवतः कृतौ तलवकारोपनिषद्भाष्यं समाप्तम् ॥ २२ ॥ ७ ॥ २२ ॥ ८ ॥ २४ ॥ ९ ॥ ✻ ॥

---

निर्गुणविद्याफलं तत्पूर्व्वोक्तमिहोपसंह्रियते इत्याह । यो वै एतामित्यादिना ॥ योऽसौ सर्व्वेश्वरो विष्णुः सर्व्वात्मा सर्व्वदर्शनः । एको बोधाम्बुधिः साक्षात्सोऽहं नित्यात्मकः प्रभुः ॥ २२ ॥ ७ ॥ २३ ॥ ८ ॥ ॥ २४ ॥ ९ ॥ इति श्रीपरमहंसपरिव्राजकाचार्य्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यश्रीमदानन्दज्ञानकृतायां श्रीमच्छाङ्करतलवकारोपनिषद्भाष्यटिप्पणं सम्पूर्णम् ॥ ॐ ॥ तत्सत् ॥ ॐ ॥ हरिः ॐ ॥ * ॥

---

## ॥ ॐ तत्सत् ॥

### यजुर्व्वेदीयकठोपनिषद्भाष्यम् ॥

ॐ परमात्मने नमः। ॐ नमो भगवते वैवस्वताय मृत्यवे ब्रह्मविद्याचार्य्याय नचिकेतसे च। अथ काठोपनिषद्वल्लीनां सुखार्थप्रबोधनार्थमल्पग्रन्था वृत्तिरारभ्यते। सदेर्धातोर्व्विशरणगत्यवसादनार्थस्योपनिपूर्व्वस्य क्विप्प्रत्ययान्तस्य रूपमुपनिषदिति। उपनिषच्छब्देन च व्याचिख्यासितग्रन्थप्रतिपाद्यवेद्यवस्तुविषया विद्योच्यते। केन पुनरर्थयोगेनोपनिषच्छब्देन विद्योच्यत इति। उच्यते। ये मुमुक्षवो दृष्टानुश्राविकविषयवितृष्णाः सन्त उपनिषच्छब्दवाच्यां वक्ष्यमाणलक्षणां विद्यामुपसद्योपगम्य तन्निष्ठतया निश्चयेन शीलयन्ति तेषामविद्यादेः संसारबीजस्य विशरणाद्धिंसनाद्विनाशनादित्यनेनार्थयोगेन विद्योपनिषदित्युच्यते। तथा च वक्ष्यति। निचाय्य तं मृत्युमुखात्प्रमु-

---

### यजुर्व्वेदीयकठोपनिषद्भाष्यटीका ॥

ॐ॥ धर्म्माधर्म्माद्यसंस्पृष्टं कार्य्यकारणवर्जितम्। कालादिभिरविच्छिन्नं ब्रह्म यत्तन्नमाम्यहम्॥ १ ॥

यः साक्षात्कृतपरमानन्दो यावदधिकारं याम्ये पदे वर्त्तमानो कर्त्तृब्रह्मात्मतानुभववत्तो भूतयातनानिमित्तदोषैरस्पृष्टस्वभाव आचार्य्यो वरप्रदानेन परब्रह्मात्मैक्यविद्यामुपदिदेश। यस्मै चोपदिदेश ताभ्यां नमस्कुर्वन्नाचार्य्यभक्तेर्विद्याप्राप्त्यङ्गत्वं दर्शयति। ॐ नमो भगवते वैवस्वतायेति॥ अथशब्दो मङ्गलार्थः॥ चिकीर्षितं प्रतिजानीते। काठकेति।

## यजुर्वेदीयकठोपनिषत्।

॥ॐ॥ उशन् ह वै वाजश्रवसः सर्ववेदसन्ददौ।

---

च्यत इति पूर्वोक्तविशेषणान्मुमुक्षून् वा परं ब्रह्म गमयतीति ब्रह्मगमयितृत्वेन योगाद्ब्रह्मविद्योपनिषत्। तथा च वक्ष्यति। ब्रह्म प्राप्तो विरजोऽभूद्विमृत्युरिति। लोकादिर्ब्रह्मजज्ञो योऽग्निस्तद्विषयाया विद्याया द्वितीयेन वरेण प्रार्थ्यमानायाः स्वर्गलोकफलप्राप्तिहेतुत्वेन गर्भवासजन्मजराद्युपद्रववृन्दस्य लोकान्तरे पौनः पुन्येन प्रवृत्तस्यावसादयितृत्वेन शैथिल्यापादनेन धात्वर्थयोगादग्निविद्याप्युपनिषदित्युच्यते। तथा च वक्ष्यति। स्वर्गलोका अमृतत्वं भजन्त इत्यादि। ननु चोपनिषच्छब्देनाध्येतारो ग्रन्थमप्यभिलपन्ति। उपनिषदमधीमहेऽध्यापयाम इति च। एवं नैष दोषोऽविद्यादिसंसारहेतुविशरणादेर्धात्वर्थस्य ग्रन्थमात्रेऽसम्भवाद्विद्यायाञ्च सम्भवात्। ग्रन्थस्यापि तादर्थ्येन तच्छब्दोपपत्तेः।

---

ननूपनिषदो व्युत्पत्तिर्नारब्धव्या प्रार्थिनां कामकलुषितचेतसामुपनिषच्छ्रवणात्पराङ्मुखत्वाद्विशिष्टस्याधिकारिणो दुर्निरूपत्वात्कर्मणश्च सत्त्वस्य कर्मभ्य एव निवृत्तेरुपनिषज्जन्यविद्याया निष्प्रयोजनत्वाज्जीवस्य च संसारिब्रह्मात्मतायाः प्रतिपादयितुमशक्यत्वेन निर्विषयत्वाच्चेत्याशङ्क्योपनिषच्छब्दनिर्वचनेन विद्याया विशिष्टाधिकार्यादिमत्त्वप्रदर्शनेन तज्जनकस्य ग्रन्थस्यापि विशिष्टाधिकार्यादिमत्त्वेन व्याख्येयत्वं दर्शयितुं प्रथममुपनिषच्छब्दस्य व्युत्पत्तिं तावदाह। उपनिपूर्वस्येति॥ ब्रह्मविद्यायामुपनिषच्छब्दस्योपनिषदं भो ब्रूहीत्यादिप्रयोगदर्शनात् भावार्थमाह। उपनिषच्छब्देनेति॥ लुप्तावयवशब्दस्यैव प्रयोगसत्त्वे

तस्य ह नचिकेता नाम पुत्र आस ॥ १ ॥ तꣳ ह

आयुर्वै घृतमित्यादिवत्। तस्माद्विद्यायां मुख्यया वृत्त्योपनिषच्छब्दो वर्त्तते। ग्रन्थे तु भक्त्येत्येवमुपनिषन्निर्व्वचनेनैव विशिष्टोऽधिकारी विद्याया उक्तः। विषयश्च विशिष्ट उक्तो विद्यायाः परं ब्रह्म प्रत्यगात्मभूतं प्रयोजनञ्चास्या उपनिषद आत्यन्तिकी संसारनिवृत्तिर्ब्रह्मप्राप्तिलक्षणा। सम्बन्धश्चैवम्भूतप्रयोजनेनोक्तोऽतो यथोक्ताधिकारिविषयप्रयोजनसम्बन्धाया विद्यायाः करतलन्यस्तामलकवत्प्रकाशकत्वेन विशिष्टाधिकारिविषयप्रयोजनसम्बन्धा एता वल्ल्यो भवन्तीत्यतस्ता यथा प्रतिभानं व्याचक्ष्महे। तत्राख्यायिका विद्यास्तुत्यर्था॥ उशन् कामयमानो ह वै इति वृत्तार्थस्मरणार्थौ निपातौ वाजमन्नं तद्दानादिनिमित्तं श्रवो यशो यस्य स वाजश्रवा रूढितो वा तस्यापत्यं वाजश्रवसः किल विश्वजिता सर्व्वमेधेनेजे तत्फलं कामयमानः। स चैतस्मिन् क्रतौ

समुदायवर्त्तिरुपनिषच्छब्दस्य न वक्तव्यमित्याह। केन पुनरिति॥ षद्लृ विशरणगत्यवसादनेष्विति धातोर्विशरणमर्थमादाय योगवृत्तिमाह। उच्यत इति॥ विषयेषु चयिष्णुत्वादिदोषदर्शनाद्विरक्ताः केवलं मुमुक्षवः प्रविष्टा न सर्व्वे भवादृशाः कामुका एवेति चशब्देन प्रसिद्धावद्योतकेन कथयति। आनुश्रविकाः शब्दप्रतिपन्नाः स्वर्गभोगादय उपसद्येत्याचार्योपदेशाद्ब्रह्म वा ब्रह्मसाक्षात्कारं शीलयन्ति संसारसंसार्य्यैक्यावस्थापनादि निरस्यन्तीत्यर्थः॥ गमपूर्व्वोक्तेति अग्निविद्यायामप्यवसादनमादायोपनिषच्छब्दस्य वृत्तिमाह। लोकादीति॥ भूरादिलोकानामादिः प्रथमजो ब्रह्मणो जातो ब्रह्मजः स एव जानातीति ज्ञः।

कुमारꣳ सन्तं दक्षिणासु नीयमानासु श्रद्धाऽऽवि-
वेश सोऽमन्यत ॥ २ ॥

पीतोदका जग्धतृणा दुग्धदोहा निरि-

---

सर्ववेदसं सर्वस्वं धनं ददौ दत्तवान्। तस्य यजमानस्य ह नचिकेता नाम पुत्त्रः किलास बभूव ॥ १ ॥ तं ह नचिकेतसं कुमारं प्रथमवयसं सन्तमप्राप्तप्रजननशक्तिं बालमेव श्रद्धाऽऽस्तिक्यबुद्धिः पितुर्हितकामप्रयुक्ता आविवेश प्रविष्टवती। कस्मिन् काल इत्याह ॥ ऋत्विग्भ्यः सदस्येभ्यश्च दक्षिणासु नीयमानासु विभागेनोपनीयमानासु दक्षिणार्थासु गोषु स आविष्टश्रद्धो नचिकेता अमन्यत ॥ २ ॥

कथमित्युच्यते पीतोदका इत्यादिना। दक्षिणार्था गावो विशेष्यन्ते। पीतमुदकं याभिस्ताः पीतोदकाः। जग्ध भक्षितं तृणं याभिस्ता जग्धतृणाः। दुग्धो दोहः क्षीराख्यो यासां ता दुग्धदोहाः। निरिन्द्रिया अप्रजननसमर्था जीर्णा

---

अन्ये तु भाक्तेत्युपचारेणोपनिषच्छब्दप्रयोग इत्यर्थः॥ उपनिषच्छब्दनिर्वचनेन सिद्धमर्थमाह। एवमित्यादिना॥ आत्यन्तिकी निदाननिवृत्त्या निवृत्तिर्विवक्षिता। निदानस्यान्वयव्यतिरेकाभ्यामवगम्यावेभ्यः संसारस्यात्मैकत्वाविद्या। सा च न कर्मणा विनिवर्त्ततेऽतो विद्यायाः प्रयोजनेन साध्यसाधनभावलक्षणः सम्बन्ध इत्यर्थः। वय कान्तावित्यस्य प्रकान्तंरूपमुशन्निति। श्रवः कीर्त्तिः। सर्वमेधेन सर्वस्वदक्षिणेनेज्जे यजनं कृतवानित्यर्थः। सदसि यज्ञसभायां येऽन्ये मिलिता ब्राह्मणास्तेभ्यश्च ॥ १ ॥ २ ॥

पीतमुदकं प्रागेव नोत्तरकालं पानशक्तिरस्त्यासामित्यर्थः। यथावत्तरं

न्द्रियाः। अनन्दा नाम ते लोकास्तान् स गच्छति ता ददत्॥ ३॥ स होवाच पितरं तत कस्मै मां दास्यसीति। द्वितीयं तृतीयन्तꣳ होवाच मृत्यवे त्वा ददामीति॥ ४॥ बहूनामेमि प्रथमो

---

निष्फला गाव इत्यर्थः। पीता एवम्भूता गा ऋत्विग्भ्यो दक्षिणाबुद्ध्या ददत्प्रयच्छदनन्दा अनानन्दा असुखा नामेत्येतत्। ये ते लोकास्तान्स यजमानो गच्छति ता ददत्॥ ॥ ३॥ तदिदं क्रतुसम्पत्तिनिमित्तं पितुरनिष्टं फलं मया-पुत्रेण सता निवारणीयमात्मप्रदानेनापि क्रतुसम्पत्तिं कृत्वेत्येवं मत्वा पितरमुपागम्य स होवाच पितरं हे तत तात कस्मै ऋत्विग्विशेषाय दक्षिणार्थं मां दास्यसीति प्रयच्छसीति। एतदेवमुक्तेनापि पित्रोपेक्ष्यमाणोऽपि द्वितीयं तृतीयमप्युवाच कस्मै मां दास्यसि कस्मै मां दास्यसीति। नायं कुमारस्वभाव इति क्रुद्धः सन् पिता तं ह पुत्रं किलोवाच मृत्यवे वैवस्वताय त्वां ददामीति॥ ४॥ स एवमुक्तः पुत्र एकान्ते परिदेवयाञ्चकार। कथमित्युच्यते। बहूनां शिष्याणां पुत्राणां वैमि गच्छामि प्रथमः सन्मुख्यया शिष्यादिवृत्त्येत्यर्थः। मध्यमानाञ्च बहूनां मध्यमो मध्यमयैव वृत्त्यैमि। नाधमया कदाचिदपि। तमेवं विशिष्टगुणमपि पुत्रं मां मृत्यवे ददामीत्युक्तवान्पिता। स

---

गुरोरिष्टं ज्ञात्वा शुश्रूषणे प्रवृत्तिर्मुख्या। आज्ञावशेन मध्यमा तदपरिपालनेनाधमा। मया दत्तेन यत्कर्त्तव्यमद्य यमस्य करिष्यति

बहूनामेमि मध्यमः। किꣳ स्विद्यमस्य कर्त्तव्यं यन्मयाद्य करिष्यति ॥ ५ ॥

अनुपश्य यथा पूर्व्वे प्रतिपश्य तथापरे। सस्यमिव मर्त्त्यः पच्यते सस्यमिवाजायते पुनः ॥ ॥ ६ ॥ वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान्। तस्यैताꣳ शान्तिं कुर्व्वन्ति हर वैवस्वतोदकम्॥७॥ आशाप्रतीक्षे सङ्गतꣳ सूनृताञ्चेष्टापूर्त्ते पुत्रपशूꣳश्च

---

किंस्विद्यमस्य कर्त्तव्यं प्रयोजनं मया प्रत्तेन किं करिष्यति यत्कर्त्तव्यमद्य नूनं प्रयोजनमनपेक्ष्यैव क्रोधवशादुक्तवान् पिता। तथापि तत्पितुर्वचो मृषा माभूदित्येव मत्वा परि-देवनापूर्वकमाह पितरं शोकाविष्टं किं मयोक्तमिति॥ ५ ॥

अनुपश्याऽऽलोचय निभालयानुक्रमेण यथा येन प्रकारेण वृत्ताः पूर्व्वेऽतिक्रान्ताः पितृपितामहादयस्तव तान् दृष्ट्वा च तेषां वृत्तमास्थातुमर्हसि। वर्त्तमानाश्चापरे साधवो यथा वर्त्तन्ते तांश्च प्रतिपश्यालोचय तथा। न च तेषु मृषा करणं वृत्तं वर्त्तमानं वास्ति। तद्विपरीतमसतांश्च वृत्तं मृषा करणम्। न च मृषा कृत्वा कश्चिदजरामरो भवति। यतः सस्यमिव मर्त्त्यो मनुष्यः पच्यते जीर्णो म्रियते। जत्वा च सस्यमिव आ जायते आविर्भवति पुनरेवमनित्यजी-

---

तत्किं कर्त्तव्यमासीत्सासीदेव विधानाभावात्। कथं तर्ह्युक्तवानित्यत आह। नूनमिति॥ २॥४॥५॥

ऋत्यनुक्तपूर्व्वभावादिकमपि कथायामपेक्षितं पूरयति। च

सर्व्वान्। एतद्वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन् वसति ब्राह्मणो गृहे ॥ ८ ॥

---

वल्लोके किं मृषाकरणेन। पालयात्मनः सत्यम्। प्रेषय मां यमायेत्यभिप्रायः ॥ ६ ॥ स एवमुक्तः पिताऽऽत्मनः सत्यतायै प्रेषयामास। स च यमभवनं गत्वा तिस्रो रात्रीरुवास यमे प्रोषिते। प्रोष्यागतं यमममात्या भार्य्या वा ऊचुर्बोधयन्तो वैश्वानरोऽग्निरेव साक्षात्प्रविशत्यतिथिः सन् ब्राह्मणो गृहान् दहन्निव तस्य दाहं शमयन्त इवाग्नेरेतां पाद्यासनादिदानलक्षणां शान्तिं कुर्वन्ति सन्तोऽतिथयेऽतो हराहर हे वैवस्वतोदकं नचिकेतसे पाद्यार्थम्। यतश्चाकरणे प्रत्यवायः श्रूयते ॥ ७ ॥ आशाप्रतीक्षेऽनिर्ज्ञातप्राप्तीष्टार्थप्रार्थनाऽऽशा। अनिर्ज्ञातप्राप्तार्थं प्रतीक्षणं प्रतीक्षा ते आशाप्रतीक्षे। सङ्गतं सत्संयोगजं फलम्। सूनृतां च सूनृता हि प्रिया वाक्तन्निमित्तञ्च। इष्टापूर्त्ते इष्टं यागजम्। पूर्त्तमारामादिक्रियाजं फलम्। पुत्रपशूंश्च पुत्रांश्च पशूंश्च सर्व्वानेतत्सर्व्वं यथोक्तं वृङ्क्ते आवर्जयति विनाशयतीत्येतत् पुरुषस्याल्पमेधसोऽल्पप्रज्ञस्य। यस्यानश्नन्नभुञ्जानो ब्राह्मणो गृहे वसति। तस्मादनुपेक्षणीयः सर्व्वावस्थास्वप्यतिथिरित्यर्थः ॥ ८ ॥

---

एवमुक्तः पितेति ॥ ६ ॥ ७॥ ८ ॥

तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन् ब्रह्मन्नतिथिर्नमस्यः। नमस्तेऽस्तु ब्रह्मन् स्वस्ति मेऽस्तु तस्मात्प्रति त्रीन् वरान् वृणीष्व ॥९॥ शान्तसङ्कल्पः सुमना यथा स्याद्वीतमन्युर्गौतमो माभिमृत्यो। त्वत्प्रसृष्टं माभिवदेत् प्रतीत एतत्त्रयाणां प्रथमं

---

एवमुक्तो मृत्युरुवाच नचिकेतसमुपगम्य पूजापुरःसरम्। किन्तदित्याह। तिस्रो रात्रीर्यद्यस्मादवात्सीरुषितवानसि गृहे मे ममानश्नन् हे ब्रह्मन्नतिथिः सन्नमस्यो नमस्कारार्हश्च तस्मान्नमस्ते तुभ्यमस्तु भवतु। हे ब्रह्मन् स्वस्ति भद्रं मेऽस्तु। तस्माद्भवतोऽनशनेन मद्गृहवासनिमित्ताद्दोषात् प्राप्त्युपशमेन यद्यपि भवदनुग्रहेण सर्व्वं मम स्वस्ति स्यात्तथापि त्वदधिकसम्प्रसादनार्थमनशनेनोपोषितामेकैकां रात्रिं प्रति त्रीन्वरान्वृणीष्वाभिप्रेतार्थविशेषान् प्रार्थयस्व ॥ ९ ॥ अतो नचिकेतास्त्वाह। यदि दित्सुर्वरान् शान्तसंकल्पः। उपशान्तः सङ्कल्पो यस्य मां प्रति यमं प्राप्य किन्नु करिष्यति मम पुत्र इति स शान्तसङ्कल्पः सुमनाः प्रसन्नमनाश्च यथा स्याद्वीतमन्युर्विगतरोषश्च गौतमो मम पिता माभि मां प्रति हे मृत्यो

---

प्रेतीभूतोऽभ्युपगतो नावश्यं कमनीय इति मत्वोपेक्षां यथा न करोति तथा प्रसादं कुर्व्वित्याह। किञ्च त्वत्प्रसृष्टमिति॥ सौहार्द्दविकरिति॥ तन्त्रितः स्वार्थे व्याख्यातोऽन्यार्थे व्याख्येय इत्याह। व्याख्यायमानो वेति॥ अमुष्य प्रख्यातस्यापत्यमामुष्यायणः। द्वयोः पित्रोः पूर्व्वभावादिना

वरं वृणे ॥ १० ॥ यथा पुरस्ताद्भविता प्रतीत
औद्दालकिरारुणिर्मत्प्रसृष्टः । सुखꣳ रात्रीः
शयिता वीतमन्युस्त्वां ददृशिवान्मृत्युमुखात्प्र-
मुक्तम् ॥ ११ ॥

स्वर्गे लोके न भयं किञ्चन नास्ति न तत्र त्वं न

---

किञ्च त्वत्प्रसृष्टं त्वया विनिर्मुक्तं प्रेषितं गृहं प्रति माम-
भिवदेत्प्रतीतो लब्धस्मृतिः स एवायं पुत्रो ममागत इत्येवं
प्रत्यभिजानन्नित्यर्थः । एतत् प्रयोजनं त्रयाणां वराणां प्रथ-
ममाद्यं वरं वृणे प्रार्थयेयम् ॥ १० ॥ मृत्युरुवाच यथा बुद्धिस्त्वयि पुरस्तात्पूर्वमासीत्स्नेहसम-
न्विता पितुस्तव भविता प्रीतिसमन्वितस्तव पिता तथैव
प्रतीतः प्रतीतवान्सन्नौद्दालकिः । उद्दालक एवौद्दालकिः ।
अरुणस्यापत्यमारुणिर्द्व्यामुष्यायणो वा मत्प्रसृष्टो मया-
ऽनुज्ञातः सन्नितरा अपि रात्रीः सुखं प्रसन्नमनाः शयिता
सुप्तो वीतमन्युर्विगतमन्युश्च भविता स्यात्त्वां पुत्रं ददृ-
शिवान्दृष्टवान् सन्मृत्युमुखान्मृत्युगोचरात् प्रमुक्तं सन्तं नचि-
केता उवाच ॥ ११ ॥

स्वर्गे लोके रोगादिनिमित्तं भयं किञ्चिदपि नास्ति । न
च तत्र त्वं मृत्यो सहसा प्रभवस्यतो जरया युक्त इह लोक-

---

सम्बन्धी चासावामुष्यायणश्च न जारज इत्यर्थः ॥ ९ ॥ १० ॥ ११ ॥

स्वर्गसाधनमग्निं ज्ञातुं प्रष्टुः स्वर्गस्वरूपं तावदाह । स्वर्गे लोक-

जरया बिभेति । उभे तीर्त्वाऽशनायापिपासे शोकातिगो मोदते स्वर्गलोके ॥१२॥ स त्वमग्निꣳ स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तꣳ श्रद्दधानाय मह्यम् । स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेण ॥ १३ ॥ प्र ते ब्रवीमि तदु मे निबोध स्वर्ग्य-

---

अतो न बिभेति कुतश्चित्तत्र किञ्चोभेऽशनायापिपासे तीर्त्वाऽतिक्रम्य शोकमतीत्य गच्छतीति शोकातिगः सन्मानसेन दुःखेन वर्जितो मोदते हृष्यति स्वर्गलोके दिव्ये ॥१२॥ एवं गुणविशिष्टस्य स्वर्गलोकस्य प्राप्तिसाधनभूतमग्निं स्वर्ग्यं स त्वं मृत्युरध्येषि स्मरसि जानासीत्यर्थः । हे मृत्यो यतस्त्वं प्रब्रूहि कथय श्रद्दधानाय श्रद्धावते मह्यं स्वर्गार्थिने । येनाग्निना चितेन स्वर्गलोकाः स्वर्गो लोको येषान्ते स्वर्गलोका यजमाना अमृतत्वममरणतां देवत्वं भजन्ते प्राप्नुवन्ति तदेतदग्निविज्ञानं द्वितीयेन वरेण वृणे ॥ १३ ॥ मृत्योः प्रतिज्ञेयं प्र ते तुभ्यं प्रब्रवीमि । यत्त्वया प्रार्थितं तदु मे मम वचो निबोध बुध्यस्वैकाग्रमनाः सन् स्वर्ग्यं स्वर्गाय हितं स्वर्गसाधनमग्निं हे नचिकेतः प्रजानन् विज्ञातवानहं सन्नित्यर्थः । प्रब्रवीमि तन्निबोधेति च शिष्यबुद्धिसमाधानार्थं वचनम् । अधुनाऽग्निं स्तौति अनन्तलोकाप्तिं स्वर्गलोकफलप्राप्तिसाधनमित्येतत् । अथो अपि

---

इति । इयञ्च वक्ष्यमाणा मृत्योः प्रतिज्ञाऽवगन्तव्या । स मेधाऽऽत्मानं

मग्निन्नचिकेतः प्रजानन्। अनन्तलोकाप्तिमथो प्रतिष्ठां विद्धि त्वमेतन्निहितं गुहायाम् ॥ १४ ॥

लोकादिमग्निन्तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा। स चापि तत्प्रत्यवदद्यथोक्तमथास्य मृत्युः पुनरेवाह तुष्टः ॥ १५ ॥ तमब्रवीत्प्रीयमाणो महात्मा वरन्तवेहाद्य ददामि भूयः।

---

प्रतिष्ठामाश्रयं जगतो विराड्रूपेण तमेतमग्निं मयोच्यमानं विद्धि जानीहि त्वं निहितं स्थितं गुहायां विदुषां बुद्धौ निविष्टमित्यर्थः॥ १४ ॥

इदं श्रुतेर्वचनं लोकादिं लोकानामादिं प्रथमशरीरित्वादग्निं तं प्रकृतं नचिकेतसा प्रार्थितमुवाचोक्तवान्मृत्युस्तस्मै नचिकेतसे। किञ्च या इष्टकाश्चेतव्याः स्वरूपेण। यावतीर्वा सङ्ख्यया। यथा चीयतेऽग्निर्येन प्रकारेण सर्वमेतदुक्तवानित्यर्थः। स चापि नचिकेतास्तत्प्रत्यवदद्यथोक्तमथास्य तन्मृत्युनोक्तं यथा यत्प्रत्यर्थेनावदत्प्रत्युच्चारितवान्। तस्य प्रत्युच्चारणेन तुष्टः सन्मृत्युः पुनरेवाह वरत्रयव्यतिरेकेणाऽन्यं वरं दित्सुः॥ १५ ॥ कथं तं नचिकेतसमब्रवीत्प्रीयमाणः शिष्यस्य योग्यतां पश्यन् प्रीयमाणः प्रीतिमनुभवन्महात्मा ऽक्षुद्रबुद्धिर्वरं तव चतुर्थ-

---

व्याकृतेति श्रुतेरग्निवाय्वादित्यरूपेण समष्टिरूपो विराडेव व्यवस्थित इति॥ १२ ॥ १३ ॥ १४ ॥

तेन विराड्रूपेणाग्निर्जगतः प्रतिष्ठेत्युच्यते। समयश्चमग्निज्ञान-

तवैव नाम्ना भविताऽयमग्निः सृङ्काञ्चेमामनेकरूपाङ्गृहाण ॥ १६ ॥

त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्म्मकृत्तरति जन्ममृत्यू । ब्रह्मजज्ञन्देवमीड्यं विदित्वा

---

मिह प्रीतिनिमित्तम् । अथेदानीं ददामि भूयः प्रयच्छामि । तवैव नचिकेतसो नाम्नाभिधानेन प्रसिद्धो भविता मयोच्यमानोऽयमग्निः । सृङ्कां शब्दवतीं रत्नमयीं मालामिमामनेकरूपां विचित्रां गृहाण स्वीकुरु । यद्वा सृङ्कामाकुत्सितां गतिं कर्म्ममयीं गृहाण । अन्यदपि कर्म्मविज्ञानमनेकफलहेतुत्वात्स्वीकुर्वित्यर्थः ॥ १६ ॥

पुनरपि कर्म्मस्तुतिमेवाह । त्रिणाचिकेतस्त्रिः कृत्वो नाचिकेतोऽग्निश्चितो येन स त्रिणाचिकेतस्तद्विज्ञानस्तदनुष्ठानवान् वा । त्रिभिर्मातृपित्राचार्य्यैरेत्य प्राप्य सन्धिं सन्धानं सम्बन्धं मात्राद्यनुशासनं यथावत् प्राप्येत्येतत् । तद्धि प्रामाण्यकारणं श्रुत्यन्तरादवगम्यते । यथा मातृमानित्यादिर्वेदस्मृतिशिष्टैर्वा प्रत्यक्षानुमानागमैर्वा तेभ्यो हि विशुद्धिप्रत्ययात् त्रिकर्म्मकृदिज्याध्ययनदानानां कर्त्ता तरत्यतिक्रामति जन्ममृत्यू ॥ किञ्च ब्रह्मजज्ञं ब्रह्मणो हिरण्यगर्भाज्जातो ब्रह्मजः । ब्रह्मजश्चासौ ज्ञश्चेति ब्रह्म-

---

चयनप्रकाराद्द्रष्टव्यमिति श्रुतिरन्यानुबोधयतीत्याह । इदं श्रुतेर्व्वचनमिति ॥ विशुद्धिरिति धर्म्माद्यवगतिः ॥ १५ ॥ १६ ॥

दृढा चात्मभावेनेत्यर्थः । विंशत्यधिकानि सप्तशतानि इष्टकानां

निचाय्येमाꣳ शान्तिमत्यन्तमेति ॥ १७ ॥ त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वाꣳश्चिनुते नाचिकेतम्। स मृत्युपाशान् पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके ॥ १८ ॥ एष तेऽग्निर्नचिकेतः स्वर्ग्योऽयमवृणीथा द्वितीयेन वरेण।

---

ज्ञः सर्व्वज्ञो ह्यसौ। तं देवं द्योतनाज्ज्ञानादिगुणवन्तमीड्यं स्तुत्यं विदित्वा शास्त्रतो निचाय्य दृष्ट्वा चात्मभावेनेमां स्वबुद्धिप्रत्यक्षां शान्तिमुपरतिमत्यन्तमेति अतिशयेनैति वैराजं पदं ज्ञानकर्म्मसमुच्चयानुष्ठानेन प्राप्नोतीत्यर्थः॥ १७ ॥ इदानीमग्निविज्ञानचयनफलमुपसंहरति। प्रकरणञ्च त्रिणाचिकेतस्त्रयं यथोक्तं या इष्टका यावतीर्वा यथा वेत्येतद्विदित्वाऽवगम्य यश्चैवमात्मरूपेणाग्निं विद्वांश्चिनुते निर्व्वर्त्तयति नाचिकेतमग्निं क्रतुं स मृत्युपाशानधर्म्माज्ञानरागद्वेषादिलक्षणान्पुरतोऽग्रतः पूर्व्वमेव शरीरपातादित्यर्थः। प्रणोद्यापहाय। शोकातिगो मानसैर्दुःखैर्वर्जित इत्येतन्मोदते स्वर्गलोके वैराजे विराडात्मस्वरूपप्रतिपत्त्या ॥ १८ ॥ एष ते तुभ्यमग्निर्वरो हे नचिकेतः स्वर्ग्यः स्वर्गसाधनो यमग्निं वरमवृणीथाः प्रार्थितवानसि द्वितीयेन वरेण सोऽग्निर्वरो दत्त इत्युक्तोपसंहारः। किञ्चैतमग्निं तवैव नाम्ना प्रवक्ष्यन्ति जनासो जना इत्येतदेष वरो दत्तो मया

---

त्रय्या संवत्सरस्याहोरात्राणि च तावद्धइष्टकाश्चैव त्रय्याणामाग्न्या-

एतमग्निं तवैव प्रवक्ष्यन्ति जनासस्तृतीयं वरं नचिकेतो वृणीष्व ॥ १९ ॥

येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके। एतद्विद्यामनुशिष्टस्त्वयाऽहं

---

चतुर्थः। तुष्टेन तृतीयं वरं नचिकेतो वृणीष्व। तस्मिन् ह्यदत्ते ऋणवानहमित्यभिप्रायः॥ १९॥

एतावद्व्यतिक्रान्तेन विधिप्रषेधार्थेन मन्त्रब्राह्मणेनावगन्तव्यं यद्वरद्वयसूचितं वस्तु नात्मतत्त्वविषययाथात्म्यविज्ञानम्। अतो विधिप्रतिषेधार्थस्य विषयस्यात्मनि क्रियाकारकफलाध्यारोपलक्षणस्य स्वाभाविकस्याज्ञानस्य संसारबीजस्य निवृत्त्यर्थं तद्विपरीतब्रह्मात्मैकत्वविज्ञानं क्रियाकारकफलाध्यारोपणलक्षणशून्यमात्यन्तिकनिःश्रेयसप्रयोजनं वक्तव्यमित्युत्तरो ग्रन्थ आरभ्यते। तमेतमर्थं द्वितीयवरप्राप्त्याप्यकृतार्थत्वं तृतीयवरगोचरमात्मज्ञानमन्तरेणेत्याख्यायिकया प्रपञ्चयति। यतः पूर्वस्मात्कर्मगोचरात्साध्यसाधनलक्षणादनित्याद्विरक्तस्यात्मज्ञानेऽधिकार इति तन्निन्दार्थं पुत्राद्युपन्यासेन प्रलोभनं क्रियते। नचिकेता उवाच तृतीयं वरं नचिकेतो वृणीष्वेत्युक्तः

---

संरिष्टकाख्यामीदृश्चितोऽग्निरहमित्यात्मभावेन ध्यात्वेति ॥ १७ ॥ ॥ १८ ॥ १९ ॥

पितापुत्रस्नेहादिस्वर्गलोकावसानं यद्वरद्वयसूचितं संसाररूपं तदेव कर्मकाण्डप्रतिपाद्यमात्मन्यारोपितं तन्निवर्तकस्यात्मज्ञानस्याध्यारोपापवादभावेन पूर्वोत्तरग्रन्थयोः सम्बन्धमाह। एतावदिति॥ प्रथमवल्लीसमाप्तिपर्यन्ताख्यायिकाया अवान्तरसम्बन्धमाह। तमेतम-

वराणामेष वरस्तृतीयः ॥ २० ॥ देवैरत्रापि विचिकित्सितं पुरा न हि सुविज्ञेयमणुरेष धर्म्मः । अन्यं वरं नचिकेतो वृणीष्व मा मोपरोत्सीरति मा सृजैनम् ॥ २१ ॥

---

सन् । येयं विचिकित्सा संशयः प्रेते मृते मनुष्येऽस्तीत्येके ऽस्ति शरीरेन्द्रियमनोबुद्धिव्यतिरिक्तो देहान्तरसम्बन्ध्यात्मा इत्येके नायमस्तीति चैके नायमेवंविधोऽस्तीति चैके ऽतश्चास्माकं न प्रत्यक्षेण नाप्यनुमानेन निर्णयविज्ञानमेतद्विज्ञानाधीनो हि परः पुरुषार्थ इत्येतद्विद्यां विजानीयामहमनुशिष्टो ज्ञापितस्त्वया वराणामेष वरस्तृतीयोऽवशिष्टः ॥ २० ॥ किमयमेकान्ततो निःश्रेयससाधनात्मज्ञानार्हो न वेत्येतत्परीक्षार्थमाह देवैरप्यत्रैतस्मिन् वस्तुनि विचिकित्सितं संशयितं पुरा पूर्व्वं न हि सुज्ञेयं सुष्ठु ज्ञेयं श्रुतमपि प्राकृतैर्जनैर्यतोऽणुः सूक्ष्म एष आत्माख्यो धर्म्मोऽतोऽन्यमसन्दिग्धफलं वरं नचिकेतो वृणीष्व मा मां मोपरोत्सीरुपरोधं माकार्षीरधमर्णमिवोत्तमर्णः । अतिसृज विमुञ्चैनं वरं मां प्रति ॥ २१ ॥

---

र्थमिति ॥ देहव्यतिरिक्तास्तित्वे वादिविप्रतिपत्तेः संशयश्चेत्तर्हि प्रत्यक्षादिना स्वस्यैव निर्णयसम्भवात्तन्निर्णयस्य निष्प्रयोजनत्वाच्च न तदर्थः प्रश्नः कर्त्तव्य इत्याशङ्क्याह । अतश्चास्माकमिति । प्रत्यक्षेण स्वात्मा निर्णीते पुरुषो न वेति सन्देहादर्शनाद्व्यतिरिक्तात्मास्तित्वे च देहदर्शनान्न प्रत्यक्षेण निर्णयः परलोकसम्बन्ध्यात्मना च कस्यचिल्लिङ्गस्याविनाभावादर्शनान्नानुमानेनापि निर्णय इत्यर्थः ॥ २० ॥ २१ ॥

देवैरत्रापि विचिकित्सितं किल त्वञ्च मृत्यो यन्न सुविज्ञेयमात्थ। वक्ता चास्य त्वादृगन्यो न लभ्यो नान्यो वरस्तुल्य एतस्य कश्चित् ॥ २२ ॥ शतायुषः पुत्रपौत्रान् वृणीष्व बहून् पशून् हस्तिहिरण्यमश्वान् । भूमेर्महदायतनं वृणीष्व स्वयञ्च

एवमुक्तो नचिकेता आह देवैरत्रापि विचिकित्सितं किलेति । भवत एवमुपश्रुतं त्वञ्च मृत्यो यद्यस्मान्न सुज्ञेयमात्मतत्त्वमात्थ कथयस्यतः पण्डितैरप्यवेदनीयत्वाद्वक्ता चास्य धर्मस्य त्वादृक्तुल्योऽन्यः पण्डितश्च न लभ्योऽन्विष्यमाणोऽप्ययं तु वरो निःश्रेयसप्राप्तिहेतुरतो नान्यो वरस्तुल्यः सदृशोऽस्त्येतस्य कश्चिदप्यनित्यफलत्वादन्यस्य सर्वस्यैवेत्यभिप्रायः ॥ २२ ॥ एवमुक्तोऽपि पुनः प्रलोभयन्नुवाच मृत्युः । शतायुषः शतं वर्षाण्यायूंषि येषां तान् शतायुषः पुत्रपौत्रान्वृणीष्व । किञ्च गवादिलक्षणान् बहून्पशून् । हस्तिहिरण्यं हस्ती च हिरण्यञ्च हस्तिहिरण्यम् । अश्वांश्च । किञ्च भूमेः पृथिव्या महद्विस्तीर्णमायतनमाश्रयं मण्डलं साम्राज्यं राज्यं वृणीष्व । किञ्च सर्वमप्येतदनर्थकं स्वयञ्चेदल्पायुरित्यतश्चाह । स्वयञ्च जीव त्वं जीवं धारय शरीरं समग्रेन्द्रियकलापं शरदो वर्षाणि

एकैकं पुत्रधनादीनां वरत्वेनोपन्यस्य समुच्चितमिदानीमुपन्यस्यति । किञ्च वित्तं प्रभूतमिति ॥ जीवेति धातोर्जीवनमर्थमपुरथे

जीव शरदो यावदिच्छसि ॥ २३ ॥ एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिरजीविकाञ्च । महाभूमौ नचिकेतस्त्वमेधि कामानां त्वा कामभाजं करोमि ॥ २४ ॥

ये ये कामा दुर्लभा मर्त्यलोके सर्वान् कामाꣳ-श्छन्दतः प्रार्थयस्व । इमा रामाः सरथाः सतूर्या नहीदृशा लम्भनीया मनुष्यैः । आभिर्मत्प्रत्ताभिः

---

यावदिच्छसि जीवितुमित्यर्थः ॥ २३ ॥ एतत्तुल्यमेतेन यथोपदिष्टेन सदृशमन्यमपि यदि मन्यसे वरं तमपि वृणीष्व । किञ्च वित्तं प्रभूतं हिरण्यरत्नादि चिरजीविकाञ्च सह वित्तेन वृणीष्वेत्येतत् । किं बहुना महाभूमौ महत्यां भूमौ राजा नचिकेतस्त्वमेधि भव । किञ्चान्यत्कामानां दिव्यानां मनुष्याणाञ्च त्वा त्वां कामभाजं कामभागिनं कामार्हं करोमि सत्यसङ्कल्पो ह्यहं देव इतिभावः ॥ २४ ॥

ये ये कामाः प्रार्थनीया दुर्लभाश्च मर्त्यलोके सर्वांस्तान् कामांश्छन्दतः प्रार्थयस्व । किञ्चेमा दिव्या अप्सरसो रमयन्ति पुरुषानिति रामाः सह रथैर्वर्त्तन्त इति सरथाः । सतूर्याः सवादित्रास्ताश्च नहि लम्भनीयाः प्रापणीया ईदृशा एवंविधा मनुष्यैर्मर्त्यैरस्मदादिप्रसा-

---

त्ववचनात्तस्य निपातः । एधीति ततो भवेति व्याख्यातम् ॥ २२ ॥ २३ ॥ २४ ॥

परिचारयस्व नचिकेतो मरणं मानुप्राक्षीः॥२५॥
श्वोभावा मर्त्त्यस्य यदन्तकैतत् सर्व्वेन्द्रियाणाञ्जरयन्ति तेजः। अपि सर्व्वञ्जीवितमल्पमेव तवैव वाहास्तव नृत्यगीते ॥२६॥ न वित्तेन तर्पणीयो मनुष्यो लप्स्यामहे वित्तमद्राक्ष्म चेत्त्वा।

---

इमन्मत्प्रदत्ताभिर्मत्प्रत्ताभिर्मया दत्ताभिः परिचारिणीभिः परिचारयस्वात्मानं पादप्रक्षालनादिशुश्रूषां कारयात्मन इत्यर्थः। नचिकेतो मरणं मरणसम्बद्धं प्रश्नं प्रेत्यास्ति नास्तीति काकदन्तपरीक्षारूपं मानुप्राक्षीर्मैवं प्रष्टुमर्हसि ॥२५॥ एवं प्रलोभ्यमानोऽपि नचिकेता महाह्रदवदक्षोभ्याह। श्वो भविष्यन्ति न भविष्यन्ति वेति संदिह्यमान एव येषां भावो भवनं त्वयोपन्यस्तानां भोगानां ते श्वोभावाः। किञ्च मर्त्त्यस्य मनुष्यस्यान्तक हे मृत्यो यदेतत्सर्व्वेन्द्रियाणां तेजस्तज्जरयन्ति अपक्षयन्ति अप्सरःप्रभृतयो भोगा अनर्थायैवैते। धर्म्मवीर्य्यप्रज्ञातेजोयशःप्रभृतीनां क्षययितृत्वात्। याञ्चापि दीर्घजीविकां त्वं दित्ससि तत्रापि शृणु सर्व्वम्। यद्ब्रह्मणोऽपि जीवितमायुरल्पमेव किमुतास्मदादिदीर्घजीविकाम्। अतस्तवैव तिष्ठतु वाहा रथादयस्तथा तव नृत्यगीते च ॥२६॥ किञ्च न प्रभूतेन वित्तेन तर्पणीयो मनुष्यः। न हि लोके वित्तलाभः कस्यचित्तृप्तिकरो दृष्टः यदि नामास्माकं वित्ततृष्णा स्याल्लप्स्यामहे प्राप्स्यामह इति। एतद्वित्तम-

जीविष्यामो यावदीशिष्यसि त्वं वरस्तु मे वरणीयः स एव ॥ २७ ॥

अजीर्यताममृतानामुपेत्य जीर्यन्मर्त्यः क्वधःस्थः प्रजानन्। अभिध्यायन् वर्णरतिप्रमोदानतिदीर्घे जीविते को रमेत ॥ १८ ॥ यस्मि-

द्राक्ष्म दृष्टवन्तो वयं चेत्त्वा त्वां जीवितमपि तथैव जीविष्यामो यावद्याम्ये पदे त्वमीशिष्यसि त्वमीशिष्यसे प्रभुः स्याः । कथं हि मर्त्यः त्वयासमेत्याल्पधनायुर्भवेत् । वरस्तु मे वरणीयः स एव यदात्मविज्ञानम् ॥ २७ ॥

यतश्च जीर्यतां वयोहानिमाप्नुवताममृतानां सकाशमुपेत्योपगम्यात्मन उत्कृष्टं प्रयोजनान्तरं प्राप्तव्यं तेभ्यः प्रजानन्नुपलभ्यमानः स्वयन्तु जीर्यन्मर्त्यो जरामरणवान् क्वधःस्थः कुः पृथिव्यधश्चान्तरिक्षादिलोकापेक्षया तस्यां तिष्ठतीति क्वधःस्थः सन् कथमेवं विवेकिभिः प्रार्थनीयं पुत्रवित्तहिरण्याद्यस्थिरं वृणीते । क्व तदास्थ इति वा पाठान्तरम् । अस्मिन् पक्षेऽक्षरयोजना तेषु पुत्रादिष्वास्था आस्थितिस्तात्पर्य्येण वर्त्तनं यस्य स तदास्थस्ततोऽधिकतरं पुरुषार्थं दुष्प्रापमपि प्रापयितुः क्व तदास्था भवेन्न कश्चित्तदसारज्ञस्तदर्थी स्यादित्यर्थः । सर्व्वो ह्युपर्य्युपर्य्येव बुभूषति लोकस्तस्मान्न पुत्रवित्तादिलोभैः प्रलोभ्योऽहं

किञ्चोत्कृष्टपुरुषार्थलाभे सम्भवत्यधमं कामयमानो मूर्ख एवाहं

न्निदं विचिकित्सन्ति मृत्यो यत्साम्पराये महति ब्रूहि नस्तत्। योऽयं वरो गूढमनुप्रविष्टो नान्यन्तस्मान्नचिकेता वृणीते ॥ २९ ॥ इति प्रथमा वल्ली ॥ १ ॥

अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं

---

किन्नरायमरःप्रसुखान् वर्णरतिप्रमोदान् अनवस्थितरूपतयाऽभिध्यायन् निरूपयन् यथा वर्तते दीर्घे जीविते को विवेकी रमेत अतो विज्ञायानित्यैः कामैः प्रलोभनं यन्मया प्रार्थितम् ॥ २८ ॥ यस्मिन् प्रेते इदं विचिकित्सनं विचिकित्सन्ति अस्ति नास्तीत्येवंप्रकारं हे मृत्यो साम्पराये परलोकविषये महति महत्प्रयोजननिमित्ते आत्मनो निर्णयविज्ञानं यत्तद्ब्रूहि कथय नोऽस्मभ्यं किं बहुना योऽयं प्रकृतात्मविषयो वरो गूढं गहनं दुर्विवेचनं प्राप्तो ऽनुप्रविष्टः। तस्मादेतदन्यमविवेकिभिः प्रार्थनीयमनित्यविषयं वरं नचिकेता न वृणीते मनसापीति श्रुतेर्वचनमिति ॥ २९ ॥ इति काठवल्ल्यां प्रथमवल्लीभाष्यम् ॥ १ ॥

परीक्ष्य शिष्यं विद्यायोग्यतांश्चावगम्याह। अन्यत्पृथगेव श्रेयो निःश्रेयसं तथाऽन्यदुतैवापि च प्रेयः प्रियतरमपि ते प्रेयःश्रेयसी उभे नानार्थभिन्नप्रयोजने सति

---

त्वां ततोऽपि मम स एव वर इत्याह। मतवाजीर्यतामित्यादिना ॥ इति प्रथमवल्लीभाष्यव्याख्या ॥ २९ ॥ १ ॥

अभ्युदयनिःश्रेयसविभागप्रदर्शनेन विद्याऽविद्याप्रदर्शनेन च

सिनीतः। तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते ॥ १ ॥ श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीरः ॥ श्रेयो

---

पुरुषमधिकृतं वर्णाश्रमादिविशिष्टं सिनीतो बध्नीतस्ताभ्यां विद्याऽविद्याभ्यामात्मकर्त्तव्यतया प्रयुज्यते सर्व्वः पुरुषः। श्रेयःप्रेयसोर्ह्यभ्युदयामृतत्वार्थी पुरुषः प्रवर्त्तते। अतः श्रेयःप्रेयःप्रयोजनकर्त्तव्यतया ताभ्यां बद्ध इत्युच्यते। सर्व्वः पुरुषस्ते यद्यप्येकैकपुरुषार्थसम्बन्धिनी विद्याऽविद्यारूपत्वाद्विरुद्धे इत्यन्यतरापरित्यागेनैकेन पुरुषेण सहानुष्ठातुमशक्यत्वात्तयोर्हित्वा विद्यारूपं प्रेयः श्रेय एव केवलमाददानस्योपादानं कुर्व्वतः साधु शोभनं शिवं भवति। यस्त्वदूरदर्शी विमूढो हीयते वियुज्यते अर्थात्पुरुषार्थात्पारमार्थिकात्प्रयोजनान्नित्यात्प्रच्यवत इत्यर्थः। कोऽसौ य उ प्रेयो वृणीते उपादत्त इत्येतत् ॥ १ ॥ यद्युभेऽपि कर्त्तुं स्वायत्ते पुरुषेण किमर्थं प्रेय एवादत्ते बाहुल्येन लोक इत्युच्यते। सत्यं स्वायत्ते तथापि साधनतः फलतश्च मन्दबुद्धीनां दुर्विवेकरूपे सती व्यामिश्रीभूते इव मनुष्यमेतं पुरुषं आ इतः प्राप्नुतः श्रेयश्च प्रेयश्च। अतो हंस इवाम्भसः पयस्तौ श्रेयःप्रेयःपदार्थौ सम्परीत्य सम्यक्परिगम्य सम्यङ्मनसाऽऽलोच्य गुरुलाघवं विविनक्ति पृथक्-

---

केवलविद्यार्थितया शिष्यं प्रथमं स्तौतीत्याह। परीक्ष्येति॥ श्रेयःप्रेयसोरन्यतरपरित्यागेनैवान्यतरापादाने हेतुमाह। ते यद्यपीति॥ ते

हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमा-
द्वृणीते ॥ २ ॥

स त्वं प्रियान् प्रियरूपाꣳश्च कामानभिध्यायन्न-
चिकेतोऽत्यस्राक्षीः। नैताꣳसृङ्कां वित्तमयीमवाप्तो
यस्यां मज्जन्ति बहवो मनुष्याः ॥ ३ ॥ दूरमेते

---

रोति धीरः धीमान्विविच्य श्रेयो हि श्रेय एवाभिवृ-
णीते श्रेयसोऽभ्यर्हितत्वात्। कोऽसौ ऽधीरो यस्तु मन्दो
ऽल्पबुद्धिः स विवेकासामर्थ्यात् योगक्षेमाद्योगक्षेमनिमित्तं
शरीराद्युपचयरक्षणनिमित्तमित्येतत्प्रेयः पशुपुत्रादिल-
क्षणं वृणीते ॥ २ ॥

स त्वं पुनः पुनर्मया प्रलोभ्यमानोऽपि प्रियान् पुत्रा-
दीन् प्रियरूपांश्चाप्सरःप्रभृतिलक्षणान् कामानभिध्यायं
चिन्तयन् तेषां अनित्यत्वासारत्वादिदोषान् हे नचिकेतो
ऽत्यस्राक्षीरतिसृष्टवान्परित्यक्तवानसि अहो बुद्धिमत्ता तव
नैतामवाप्तवानसि सृङ्कां सृतिं कुत्सितां मूढजनप्रवृत्तां
वित्तमयीं धनप्रायाम्। यस्यां सृतौ मज्जन्ति सीदन्ति बहवो
ऽनेके मूढा मनुष्यास्तयोः श्रेय आददानस्य साधु भवति
हीयतेऽर्थात् ॥ ३ ॥ य उ प्रेयो वृणीत इत्युक्तं तत्कस्मा-
द्यतो दूरं दूरेण महतान्तरेणैते विपरीतेऽन्योन्यव्यावृ-

---

यद्यप्येकैकपुरुषसम्बन्धिनी तथापि विरुद्धे ॥ १ ॥ २ ॥

विपरीते विषूची अविद्या या च विद्येति ज्ञाता। विद्याभीप्सिनन्नचिकेतसंमन्येन त्वा कामा बहवो लोलुपन्तः॥४॥ अविद्यायामन्तरे वर्त्तमानाः स्वयन्धीराः पण्डितम्मन्यमानाः। दन्द्रम्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धाः॥ ५॥

---

स्वरूपे विवेकाविवेकात्मकत्वात्तमःप्रकाशाविव। विषूची विषूच्यौ नानागती भिन्नफले संसारमोक्षहेतुत्वेनेत्येतत्। के ते इत्युच्यते। या चाविद्या प्रेयोविषया विद्येति च श्रेयोविषया। ज्ञाताऽनिर्ज्ञाताऽवगता पण्डितैस्तत्र विद्याभीप्सिनं विद्यार्थिनं नचिकेतसं त्वामहं मन्ये। कस्माद्यस्मादविद्वद्बुद्धिप्रलोभिनः कामाऽप्सरःप्रभृतयो बहवोऽपि त्वा त्वां न लोलुपन्तो न विच्छेदं कृतवन्तः श्रेयोमार्गादात्मोपभोगाभिवाञ्छासम्पादनेन। अतो विद्यार्थिनं श्रेयोजनं मन्य इत्यभिप्रायः॥ ४॥ ये तु संसारभाजो जना अविद्यायामन्तरे मध्ये घनीभूत इव तमसि वर्त्तमाना वेष्ट्यमानाः पुत्रपश्वादितृष्णापाशशतैः स्वयं धीराः प्रज्ञावन्तः पण्डिताः शास्त्रकुशलाश्चेति मन्यमानास्ते दन्द्रम्यमाणा अत्यर्थं कुटिलामनेकरूपां गतिं गच्छन्तो जरामरणरोगादिदुःखैः पर्य्यन्ति परिगच्छन्ति मूढा अविवेकिनोऽन्धेनैव दृष्टिविहीनेनैव नीयमाना विषमो पथि यथा बहवो अबोधा महान्तमनर्थमृच्छन्ति तद्वत्त एव मूढत्वात्॥ ५॥

न साम्परायः प्रतिभाति बालम्प्रमाद्यन्तं वित्त-मोहेन मूढम् । अयं लोको नास्ति पर इति मानी पुनः पुनर्व्वशमापद्यते मे ॥ ६ ॥ श्रवणायापि बहु-भिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यन्न विद्युः । आश्चर्य्यो वक्ता कुशलोऽस्य लब्धाऽऽश्चर्य्यो ज्ञाता

---

न साम्परायः प्रतिभाति । सम्परेयत इति साम्परायः परलोकस्तत्प्राप्तिप्रयोजनः साधनविशेषः शास्त्रीयः साम्प-रायः स च बालमविवेकिनं प्रति न भाति न प्रकाशते नोपतिष्ठत इत्येतत्प्रमाद्यन्तं प्रमादं कुर्व्वन्तं पुत्रपश्वादि-प्रयोजनेष्वासक्तमनसतया वित्तमोहेन वित्तनिमित्तेना-विवेकेन मूढं तमसाच्छन्नं सन्तमयमेव लोको योऽयं दृश्यमानः स्त्र्यन्नपानादिविशिष्टो नास्ति परोऽदृष्टो लोक इत्येवं मननशीलो मानी पुनः पुनर्जनित्वा वशमधी-नतामापद्यते मे मृत्योर्मम जन्ममरणादिलक्षणदुःखप्रब-न्धारूढ एव भवतीत्यर्थः । प्रायेण ह्येवंविध एव लोकः ॥ ६ ॥ यस्तु श्रेयोऽर्थी सहस्रेषु कश्चिदेवात्मविद्भवति त्वद्विधो यस्माच्छ्रवणायापि श्रवणार्थं श्रोतुमपि येन लभ्य आत्मा बहुभिरनेकैः शृण्वन्तोऽपि बहवोऽनेकेऽन्ये यमात्मानं न विद्युर्न विन्द्यभागिनोऽसंस्कृतात्मानो न विजानीयुः । किञ्चास्य वक्ताप्याश्चर्य्योऽद्भुतवदेवानेकेषु कश्चि-

---

सम्यक्प्रकाशे देहपातादूर्द्ध्वमेव ईयते गम्यत इति साम्प-रायः ॥ ६ ॥ ७ ॥ अचुत्वं परोक्षत्वं मया जानतापि बह्वावास्वं कर्म्म

कुशलानुशिष्टः ॥ ७ ॥ न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः। अनन्यप्रोक्ते गतिरत्र नास्त्यणीयान् ह्यतर्क्यमणुप्रमाणात् ॥ ८॥

---

देव भवति। तथा श्रुत्वाप्यस्यात्मनः कुशलो निपुण एवानेकेषु लब्धः कश्चिदेव भवति। यस्मादाश्चर्यो ज्ञाता कश्चिदेव कुशलानुशिष्टः कुशलेन निपुणेनाचार्येणानुशिष्टः सन् ॥ ७ ॥ कस्मान्न हि नरेण मनुष्येणावरेण प्रोक्तोऽवरेण हीनेनेत्येतदुक्त एष आत्मा यं त्वं मां पृच्छसि। न हि सुष्ठु सम्यग्विज्ञेयो विज्ञातुं शक्यो यस्माद्बहुधा अस्ति नास्ति कर्त्ताऽकर्त्ता शुद्धोऽशुद्ध इत्याद्यनेकधा चिन्त्यमानो वादिभिः। कथं पुनः सुविज्ञेय इत्युच्यते। अनन्यप्रोक्तेऽनन्येनापृथग्दर्शिनाचार्येण प्रतिपाद्यब्रह्मात्मभूतेन प्रोक्ते उक्ते आत्मनि गतिरनेकधा अस्तिनास्तीत्यादिलक्षणा चिन्ता गतिरस्मिन्नात्मनि नास्ति न विद्यते सर्व्वविकल्पगतिप्रत्यस्तमितत्वादात्मनः। अथवा स्वात्मभूतेऽनन्यस्मिन्नात्मनि प्रोक्ते अत्र गतिरन्यस्यावगतिर्नास्ति ज्ञेयस्यान्यस्याभावात्। ज्ञानस्य ह्येषा निष्ठा यदात्मैकत्वविज्ञानम्। अतोऽवगन्तव्याभावान्न गतिरत्रावशिष्यते। संसारगतिर्वात्र नास्त्यनन्य आत्मनि प्रोक्ते नान्तरीयकत्वात्तद्विज्ञानफलस्य मोक्षस्य। अथवा प्रोच्यमानब्रह्मात्मभूतेनाचार्येण प्रोक्ते आत्मन्यवगतिः। अनवबोधोऽपरि-

---

क्तं त्वं दीयमानमपि तत्फलं न व्यञ्जासि अतोऽधिकयशोऽसीति सन्तोषात् सौतौत्साह। पुनरपि तुष्ट आहेति॥ यत्र त्वया देहव्यतिरिक्त

नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञा-
नाय प्रेष्ठ। यां त्वमापः सत्यधृतिर्वतासि त्वादृङ्नो
भूयान्नचिकेतः प्रष्टा ॥ ९ ॥

ज्ञानमत्र नास्ति। भवत्येवावगतिस्तद्विषया श्रोतुस्तद-
नन्योऽहमित्याचार्य्यस्येत्यर्थः। एवं सुविज्ञेय आगमवता
ऽऽचार्य्येणानन्यतया प्रोक्त इत्यर्थः। अणीयानणुप्रमाणादपि
सम्पद्यते आत्मा। अतर्क्यमणुप्रमाणेन तर्क्यः। स्वबुद्ध्यभ्यूहेन
केवलेन तर्कमाणोऽणुपरिमाणे केनचित्स्थापिते आत्मनि
ततोऽणुतरमन्योऽभ्यूहति ततोऽप्यन्योऽणुतममिति। न हि
तर्कस्य निष्ठा क्वचिद्विद्यते ॥ ८ ॥ अतोऽनन्यप्रोक्ते आत्म-
न्युत्पन्ना येयमागमप्रतिपाद्यात्मनि मतिर्नैषा तर्केण
स्वबुद्ध्यभ्यूहमात्रेणापनेया न प्रापणीयेत्यर्थः। नापनेतव्या
वा न हन्तव्या। तार्किको ह्यनागमज्ञः स्वबुद्धिपरिकल्पितं
यत्किञ्चिदेव कथयति। अत एव च येयमागमप्रसूता
मतिरन्येनैवागमाभिज्ञेनाचार्य्येणैव तार्किकात्प्रोक्ता सती
सुज्ञानाय भवति हे प्रेष्ठ प्रियतम। का पुनः सा तर्कागम्या
मतिरित्युच्यते। यां त्वं मतिं मद्वरप्रदानेन प्राप्तवानसि।
सत्याऽवितथविषया धृतिर्यस्य तव स त्वं सत्यधृतिर्वता-
सीत्यनुकम्पयन्नाह मृत्युर्नचिकेतसम्। वक्ष्यमाणविज्ञानस्तुत-
ये त्वादृक्तुल्यो नोऽस्मभ्यं भूयात् भवतात्त्वत्तोऽन्यः पुत्रः

---

आत्मा ग्रहणस्यैव परमार्थस्वरूपज्ञानं धर्मिदानबन्धनिवर्त्तकं परमान-

जानाम्यहꣳ शेवधिरित्यनित्यं न ह्यध्रुवैः प्राप्यते हि ध्रुवन्तत्। ततो मया नाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम् ॥ १० ॥ कामस्याप्तिं जगतः प्रतिष्ठां क्रतोरनन्त्यमभयस्य पारम्।

---

शिष्यो वा प्रष्टा। कीदृग्याहृक् त्वं हे नचिकेतः प्रष्टा ॥ ९ ॥

पुनरपि तुष्ट आह जानाम्यहं शेवधिर्निधिः कर्म्मफललक्षणो निधिरिव प्रार्थ्यत इत्यसावनित्यमिति जानामि। न हि यस्मादनित्यैरध्रुवैर्नित्यं ध्रुवं तत्प्राप्यते परमात्माख्यम्। शेवधिर्यस्त्वनित्यः सुखात्मकः शेवधिः स एवानित्यैर्द्रव्यैः प्राप्यते हि यतस्तस्मान्मया जानतापि नित्यमनित्यसाधनैर्न प्राप्यत इति। नाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः पश्वादिभिः स्वर्गसुखसाधनभूतोऽग्निर्निर्व्वर्त्तित इत्यर्थः। तेनाहमधिकारापन्नो नित्यं याम्यं स्थानं स्वर्गाख्यं नित्यमापेक्षिकं प्राप्तवानस्मि ॥ १० ॥

त्वं तु कामस्याप्तिं समाप्तिं अत्र हि सर्व्वे कामाः परिसमाप्ताः जगत आध्यात्माधिभूताधिदैवादेः प्रतिष्ठामाश्रयं सर्व्वात्मकत्वात्क्रतोः फलं हैरण्यगर्भं पदं आनन्त्यम्। अभयस्य च पारं परां निष्ठाम्। स्तोमं स्तुत्यं महदणिमाद्यैश्वर्य्याद्यनेकगुणसंहितं स्तोमश्च तन्महच्च निरतिशयत्वा-

---

न्द्रप्राप्तिसाधनं धर्म्म्यं च नातःपरं श्रेयःसाधनमस्तीति ॥ ८ ॥ ९ ॥

ष्ट एतस्य वस्तुनः प्रशंसया च प्रष्टारं प्रशंसन्ति। यं त्वं प्राप्तुमिच्छसी-

स्तोममहदुरुगायम्प्रतिष्ठान्दृष्ट्वा धृत्या धीरो न-चिकेतोऽत्यस्राक्षीः ॥ ११ ॥

तन्दुर्दर्शङ्गूढमनुप्रविष्टं गुहाहितङ्गह्वरेष्ठम्पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥ १२ ॥ एतच्छ्रुत्वा सम्परिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य। स मोदते

---

त्स्तोममहत्। उरुगायं विस्तीर्णां गतिम्। प्रतिष्ठां स्थितिमात्मन उत्तमामपि दृष्ट्वा धृत्या धैर्येण धीरो नचिकेतो धीमान्सन्नत्यस्राक्षीः परमेवाकाङ्क्षन्नतिसृष्टवानसि सर्वमेतत्संसारभोगजातम्। अहो बतानुत्तमगुणोऽसि यं त्वं प्राप्तु मिच्छस्यात्मानम् ॥ ११ ॥

तं दुर्दर्शं दुःखेन दर्शनमस्येति दुर्दर्शं अतिसूक्ष्मत्वात्। गूढं गहनम्। अनुप्रविष्टं प्राकृतविषयविकारविज्ञानैः प्रच्छन्नमित्येतत्। गुहाहितं गुहायां बुद्धौ स्थितं तत्रोपलभ्यत्वात्। गह्वरे विषमेऽनेकानर्थसङ्कटे तिष्ठतीति गह्वरेष्ठम्। यत एवं गूढमनुप्रविष्टो गुहाहितश्च अतो गह्वरेष्ठः। अतो दुर्दर्शः। तं पुराणं पुरातनं अध्यात्मयोगाधिगमेन विषयेभ्यः प्रतिसंहृत्य चेतस आत्मनि समाधानमध्यात्मयोगस्तस्याधिगमस्तेन मत्वा देवमात्मानं धीरो हर्षशोकावात्मन उत्कर्षा-

---

त्यादिना ॥ १० ॥ ११ ॥

यदि देहव्यतिरिक्तस्यात्मनः प्रथमं पृष्टस्य परमार्थस्वरूपज्ञानमेव श्रेयःसाधनं तर्हि तदेव गृहीत्वाह । तदहं योग्य इत्यादिना ॥ अत

मोदनीयꣳ हि लब्ध्वा विवृतꣳ सद्म नचिकेतसम्मन्ये ॥ १३ ॥ अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ॥ १४ ॥

---

पकर्षयोरभावाज्जहाति ॥ १२ ॥ किञ्चैतदात्मतत्त्वं यदहं वक्ष्यामि तच्छ्रुत्वाऽऽचार्य्यसकाशात्सम्यगात्मभावेन परिगृह्य उपादाय मर्त्यो मरणधर्म्मा धर्म्मादनपेतं धर्म्म्यं प्रवृह्योद्यम्य पृथक्कृत्य शरीरादेः अणुं सूक्ष्मं एतमात्मानमाप्य प्राप्य स मर्त्यो विद्वान्मोदते मोदनीयं हि हर्षणीयमात्मानं लब्ध्वा तदेतदेवंविधं ब्रह्मसद्मभवनं नचिकेतसं त्वां प्रत्यपावृतद्वारं विवृतमभिमुखीभूतं मन्ये मोक्षार्हं त्वां मन्य इत्यभिप्रायः ॥ १३ ॥ एतच्छ्रुत्वा नचिकेताः पुनराह । यद्यहं योग्यः प्रसन्नश्चासि भगवन्मां प्रत्यन्यत्र धर्म्माच्छास्त्रीयाद्धर्म्मानुष्ठानात्तत्फलात्तत्कारकेभ्यश्च पृथग्भूतमित्यर्थः । तथाऽन्यत्राधर्म्मात्तथाऽन्यत्रास्मात्कृताकृतात् । कृतं कार्य्यमकृतं कारणमस्मादन्यत्र । किञ्चान्यत्र भूताच्चातिक्रान्तात्कालाद्भव्याच्च यत्तद्भविष्यतश्च । तथा वर्त्तमानात्कालत्रयेण यन्न परिच्छिद्यत इत्यर्थः । यदीदृशं वस्तु सर्वव्यवहारगोचरातीतं पश्यसि जानासि तद्वद मह्यम् ॥ १४ ॥

---

एव वरदानव्यतिरेकेण पूर्व्वोऽयं प्रश्न इति नाशङ्कनीयं पूर्व्वपृष्टस्यैव याथातथ्यप्रश्नः पृष्टस्य वस्तुनो विशेषणान्तरं ज्ञानसाधनं वक्तुमित्यर्थः ॥

॥ १२ ॥ १३ ॥ १४ ॥

सर्व्वे वेदा यत्पदमामनन्ति तपांऽसि सर्व्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्य्यञ्चरन्ति तत्ते पदऽं सङ्ग्रहेण ब्रवीम्योमित्येतत् ॥ १५ ॥
एतद्ध्येवाक्षरम्ब्रह्म एतद्धेवाक्षरम्परम्। एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ १६ ॥

---

इत्येवं पृष्टवते मृत्युरुवाच पृष्टं वस्तु विशेषणान्तरञ्च विवक्षन्। सर्व्वे वेदा यत्पदं पदनीयमविभागेनामनन्ति तपांसि सर्व्वाणि च यद्वदन्ति यत्प्राप्त्यर्थानीत्यर्थः। यदिच्छन्तो ब्रह्मचर्य्यं गुरुकुलवासलक्षणमन्यद्वा ब्रह्मप्राप्त्यर्थञ्चरन्ति तत्ते तुभ्यं पदं यज्ज्ञातुमिच्छसि सङ्ग्रहेण सङ्क्षेपतो ब्रवीमि ओँ इत्येतत् तदेतत्पदं यद्बुभुत्सितञ्च वा। यदेतदोमित्योंशब्दवाच्यमोंशब्दप्रतीकञ्च ॥ १५ ॥ अत एतद्ध्येवाक्षरं ब्रह्मापरमेतद्ध्येवाक्षरञ्च परं तयोर्हि प्रतीकमेतदक्षरमेतद्ध्येवाक्षरं ज्ञात्वोपास्यब्रह्मेति यो यदिच्छति परमपरं वा तस्य तद्भवति। परञ्चेज्ज्ञातव्यमपरञ्चेत्प्राप्तव्यं ॥ १६ ॥ यत एवं अत एवैतदालम्बनं ब्रह्मप्राप्त्यालम्बनानां श्रेष्ठं प्रशस्यतमम्। एतदालम्बनं परमपरञ्च। परापरब्रह्मविषयत्वात्। अत एतदालम्बनं ज्ञात्वा ब्रह्म-

---

सर्व्वे वेदा इति वेदैकदेशा उपनिषदः। तेनोपनिषदो ज्ञानसाधनत्वेन शास्त्राद्विनियुक्तास्तपांसि तेषां कर्म्माणि शुद्धिद्वारेणावगतिसाधनानि ॥ मन्दाधिकारिणो विचारासमर्थस्य क्रमेणावगतिसाधनं सङ्क्षिप्याह। सङ्ग्रहेणेति ॥ यस्य शब्दस्योच्चारणे यत् स्फुरति तत्तस्य वाच्यं प्रसिद्ध

एतदालम्बनꣳ श्रेष्ठमेतदालम्बनम्परम् । एतदा
लम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥ १७ ॥
न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न

---

लोके महीयते। परस्मिन् ब्रह्मण्यपरस्मिंश्च ब्रह्मभूते ब्रह्मवदुपास्यो भवतीत्यर्थः ॥ १७ ॥

अन्यत्र धर्मादित्यादिना पृष्टस्यात्मनोऽशेषविशेषरहितस्यालम्बनत्वेन प्रतीकत्वेन चोङ्कारो निर्द्दिष्टः । अपरस्य च ब्रह्मणो मन्दमध्यमप्रतिपत्तॄन् प्रति । अथेदानीं तस्योङ्कारालम्बनस्यात्मनः साक्षात्स्वरूपनिर्द्दिधारयिषयेदमुच्यते । न जायते नोत्पद्यते म्रियते वा न म्रियते चोत्पत्तिमतो वस्तुनोऽनित्यस्यानेकविक्रियास्तासामाद्यन्ते जन्मविनाशलक्षणे विक्रिये इहात्मनि प्रतिषिध्येते प्रथमं सर्व्वविक्रियाप्रतिषेधार्थं जायते म्रियते वेति । विपश्चिन्मेधावी सर्व्वज्ञः । अपरिलुप्तचैतन्यस्वभावात् । किञ्च नायमात्मा कुतश्चित्कारणान्तराद्बभूव । अस्माच्चात्मनो न बभूव कश्चिदर्थान्तरभूतः । अतोऽयमात्माऽजो नित्यः शाश्वतोऽपक्षयविवर्जितः । यो ह्यशाश्वतः सोऽप्यपक्षीयते । अयन्तु शाश्वतोऽत एव पुराणः पुरापि नव एवेति । यो ह्यवयवोपचयद्वारेणाभि-

---

समाहितचित्तस्योङ्कारोच्चारणे यद्विषयानुपरक्तं संवेदनं स्फुरति तदोङ्कारमवलम्ब्य तदहमस्मि ब्रह्मास्मीति ध्यायेत्तत्राप्यसमर्थ ॐशब्द एव ब्रह्मदृष्टिं कुर्यादित्यर्थः ॥ १५ ॥ १६ ॥ १७ ॥

साधनहीनायोपदेशोऽनर्थक इति मत्वोङ्कारावलम्बनगतिसाधनमुक्त्वा ब्रह्मणःस्वरूपं यत्पृष्टं तदभिधानायोपक्रमत इत्याह । अन्यत्र धर्मादित्या-

बभूव कश्चित्। अजो नित्यः शाश्वतोऽयम्पुराणो न हन्यते हन्यमाने शरीरे ॥ १८ ॥

हन्ता चेन्मन्यते हन्तुꣳ हतश्चेन्मन्यते हतम्। उभौ तौ न विजानीतो नायꣳ हन्ति न हन्यते ॥ १९ ॥

---

निर्वर्त्त्यते स इदानीं नवो यथा कुम्भादिस्तद्विपरीतस्त्वात्मा पुराणो वृद्धिविवर्जित इत्यर्थः। यत एवमतो न हन्यते न हिंस्यते हन्यमाने शस्त्रादिभिः शरीरे। तत्स्थोऽप्याकाशवदेव भवतीत्यर्थः ॥ १८ ॥

एवम्भूतमप्यात्मानं शरीरमात्रात्मदृष्टिर्हन्ता चेद्यदि मन्यते चिन्तयति हन्तुं हनिष्याम्येनमिति योऽप्यन्यो हतः सोऽपि चेन्मन्यते हतमात्मानं हतोऽहमित्युभावपि तौ न विजानीतः स्वमात्मानं यतो नायं हन्ति अविक्रियत्वादात्मनस्तथा न हन्यते आकाशवदेवाविक्रियत्वादेव। अतोऽनात्मज्ञविषय एव धर्माधर्मादिलक्षणः संसारो न ब्रह्मज्ञस्य श्रुतिप्रामाण्यान्न्यायाच्च धर्माधर्माद्यनुपपत्तेः ॥ १९ ॥ कथं पुनरात्मानं जानातीत्युच्यते अणोः

---

दिनेति ॥ यद्यात्मनोऽन्यस्य स्यात्तत्र जन्मादिप्राप्त्यभावादप्राप्तनिषेधः स्यादतो जन्मादिप्रतिषेधेन ब्रह्मोपदिश्यात्मस्वरूपमेवोपदिश्यतीति मन्यते। मरणनिमित्तास्तित्वाशङ्कात्मनो मरणाभावेऽस्तित्वविषयप्रश्नस्याभावे तदेव वचनं भवतीति द्रष्टव्यम् ॥ १८ ॥

यद्यविक्रिय एवात्मा तर्हि धर्माद्यधिकार्यभावात्तदधिष्ठौ संसारोपलम्भ एव न स्यादित्याशङ्क्याह। अनात्मज्ञविषय एवेति ॥ यद-ज्ञानात्प्रवृत्तिः स्यात्तज्ज्ञानात्मा कुतो भवेदिति न्यायाच्चात्मज्ञस्य

**अणोरणीयान्महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम्। तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः॥ २०॥**

---

सूक्ष्मादणीयान् श्यामाकादेरणुतरः। महतो महत्परिमाणान्महीयान्महत्तरः पृथिव्यादेरणु महद्वा यदस्ति लोके वस्तु तत्तेनैवात्मना नित्येनात्मवत्सम्भवति। तदात्मना विनिर्मुक्तमसत्सम्पद्यते। तस्मादसावेवात्माणोरणीयान्महतो महीयान्सर्व्वनामरूपवस्तूपाधिकत्वात्। स आत्मास्य जन्तोर्ब्रह्मादिस्तम्बपर्य्यन्तस्य प्राणिजातस्य गुहायां हृदये निहित आत्मभूतः स्थित इत्यर्थः। तमात्मानं दर्शनश्रवणमननविज्ञानलिङ्गं अक्रतुरकामोऽदृष्टबाह्यविषयोपरतबुद्धिरित्यर्थः। यदा चैवं तदा मनआदीनि करणानि धातवः शरीरस्य धारणात्प्रसीदन्तीति। एषां धातूनां प्रसादादात्मनो महिमानं कर्मनिमित्तवृद्धिक्षयरहितं पश्यति वीतशोकः। धातुप्रसादान्महिमानमात्मनोऽयमहमस्मीति साक्षाद्विजानाति। ततो विगतशोको भवति। अन्यथा दुर्विज्ञेयोऽयमात्मा कामिभिः प्राकृतैः पुरुषैः॥ २०॥

---

धर्म्मादि नोपपद्यते अत आत्मनः सदा शुद्ध एवेत्याह। अशरीरमिति॥ तदुक्तम्। विवेकी सर्व्वदा मुक्तः कुर्व्वतो नास्ति कर्तृता। अलेपवादं समाश्रित्य श्रीकृष्णजनको यथेति॥ अकामत्वादिसाधनान्तरविधानार्थमुत्तरवाक्यमवतारयति कथं पुनरिति॥ एकस्याणुत्वं च विरुद्धं कथमनूद्यत इत्याशङ्क्याणुत्वाद्यध्यासाधिष्ठानत्वादिव्यवहारो न तत्त्वत इत्यविरोधमाह। अणुर्महदिति॥ १९॥ २०॥

आसीनो दूरं व्रजति शयानो याति सर्वतः ।
कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति ॥ २१ ॥

---

यस्मादासीनोऽवस्थितोऽचल एव सन् दूरं व्रजति शयानो याति सर्वत एवमसावात्मा देवो मदामदः समदोऽमदश्च सहर्षोऽहर्षश्च विरुद्धधर्मवानतोऽशक्यत्वाज्ज्ञातुं कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति । अस्मदादेरेव सूक्ष्मबुद्धेः पण्डितस्य सुविज्ञेयोऽयमात्मा स्थितिगतिनित्यादिविरुद्धानेकविधर्मोपाधिकत्वाद्विरुद्धधर्मवत्त्वाद्विश्वरूप इव चिन्तामणिवदवभासत इति दुर्विज्ञेयत्वं दर्शयति । कस्तं मदन्यो ज्ञातुमर्हतीति । करणानामुपशमः शयनं करणजनितस्यैकदेशविज्ञानस्योपशमः शयानस्य भवति । यदा चैवं केवलसामान्यविज्ञानत्वात्सर्वतो यातीव यदा विशेषविज्ञानस्थः स्वेन रूपेण स्थित एव सन्मनआदिगतिषु

---

विरुद्धानेकधर्मवत्त्वाद्दुर्विज्ञेयश्चेदात्मा कथं तर्हि पण्डितस्यापि सुज्ञेयः स्यादित्याशङ्क्याह । स्थितिगतीति ॥ विश्वरूपो मणिर्यथा नानारूपोऽवभासते परं नानाविधोपाधिसन्निधानात् न स्वतो नानारूपः । चिन्तामणौ वा यद्यच्चिन्त्यते तत्तच्चिन्तोपाधिकमेवावभासते न तत्त्वतः । तथा स्थितिगतिनित्यानित्यादयो विरुद्धानेकधर्मा येषां तदुपाधिवशादात्मा विरुद्धधर्मवानिवावभासत इति योजना । इति तस्य सुविज्ञेयो भवति । उपाध्यविविक्तदर्शिनस्तु दुर्विज्ञेय एवेत्यर्थः ॥ स्वतो विरुद्धधर्मत्वं नास्तीत्येतदेव श्रुतियोजनया दर्शयति । करणानामित्यादिना ॥ एकदेशविज्ञानस्येति ॥ मनुष्योऽहं नीलं पश्यामीत्यादिपरिच्छिन्नविज्ञानस्येत्यर्थः । न बहुना श्रुतेनेत्यात्मप्रतिपादकोपनिषद्विचारातिरिक्त-

अशरीरꣳ शरीरेष्वनवस्थेष्ववस्थितम्। महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥२२॥ नाय-मात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।

---

तदुपाधिकत्वाद्दूरं व्रजतीव। स चेहैव वर्त्तते ॥ २१ ॥

तद्विज्ञानाच्च शोकात्यय इत्यभिदर्शयति। अश-रीरं स्वेन रूपेणाकाशकल्प आत्मा तमशरीरं शरीरेषु देवपितृमनुष्यादिशरीरेष्वनवस्थेष्वनित्येष्ववस्थितिरहितेष्व वस्थितं नित्यमविकृतमित्येतत्। महान्तं महत्त्वस्यापेक्षिकत्वश ङ्कायामाह विभुं व्यापिनमात्मानम्। आत्मग्रहणं स्वतोऽनन्य-त्वप्रदर्शनार्थम्। आत्मशब्दः प्रत्यगात्मविषय एव मुख्यस्तमीदृ-शमात्मानं मत्वा अयमहमिति धीरो धीमान् न शोचति। न ह्येवम्विधस्यात्मविदः शोकोपपत्तिः ॥ २२ ॥ यद्यपि दुर्विज्ञेयोऽयमात्मा तथाप्युपायेन सुविज्ञेय एवेत्याह। ना-यमात्मा प्रवचनेनानेकवेदस्वीकरणेन लभ्यो ज्ञेयो नापि मेधया ग्रन्थार्थधारणशक्त्या न बहुना श्रुतेन केवलेन। केन तर्हि लभ्य इत्युच्यते। यमेव स्वमात्मानमेष साधको वृणुते

---

शास्त्रश्रवणेन न लभ्य उपनिषद्विचारेणापि केवलेनेति शिष्टोपदेशरहितेन न लभ्यत इत्यर्थः ॥२१॥

परमेश्वराचार्यानुग्रहेण तु लभ्यत इत्याह। यमेवेति॥ आत्मान-मेव साधकः श्रवणमननादिभिर्वृणुते सम्भजते श्रवणादिकालेऽप्येषोऽह-मित्युपायेनैवानुसन्धत्त इत्यर्थः॥ तमेवेति लक्षणया परमात्मानुग्रहेणैव वरित्वाऽभेदानुसन्धानवता यथानुसन्धानमात्मतत्त्वानुसन्धानवता यथा-नुसन्धानमात्मतयैव परमात्मा लभ्यो भवतीत्यर्थः। वैपरीत्येन वा योजना।

यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूᳪ स्वाम् ॥ २३ ॥

नाविरतो दुश्चरितान्नाशान्तो नासमाहितः।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥२४॥

---

प्रार्थयते तेनैवात्मना वरित्रा स्वयमात्मा लभ्यो ज्ञायत इत्येतन्निष्कामश्चात्मानमेव प्रार्थयते। आत्मनैवात्मा लभ्यत इत्यर्थः। कथं लभ्यत इत्युच्यते। तस्यात्मकामस्यैष आत्मा विवृणुते प्रकाशयति पारमार्थिकीं स्वां तनूं स्वकीयं याथात्म्यमित्यर्थः ॥ २३ ॥

किञ्चान्यत्। दुश्चरितात्प्रतिषिद्धाच्छ्रुतिस्मृत्यविहितात्पापकर्मणो नाविरतोऽनुपरतः। नापीन्द्रियलौल्यादशान्त उपरतः। नाप्यसमाहितो नैकाग्रमना विक्षिप्तचित्तः समाहितचित्तोऽपि सन् समाधानफलार्थित्वात्। नाप्यशान्तमानसो व्यापृतचित्तो वात्मानं प्राप्नुयात्। केन प्राप्नुयादित्युच्यते। प्रज्ञानेन ब्रह्मविज्ञानेन। एनं प्रकृतमात्मानमाप्नुयात्। यस्तु दुश्चरिताद्विरत इन्द्रियलौल्याच्च समाहितचित्तः समाधानफलादप्युपशान्त-

---

आत्मा त्वेव प्रकरणोपरमात्सर्वाभिरूपेण वा अवस्थितोऽयमेव सुलभो भवति उपपद्यत इति। तेनैव परमेश्वरानुगृहीतेनाभेदानुसन्धानवता लभ्यत इत्यर्थः ॥ २२ ॥ २३ ॥

दुश्चरितं कायिकं पापम्। यस्त्वेवम्भूत उक्तसाधनसम्पन्नो न भवति स कथं वेदेति सम्बन्धः। शमवत्त्वेऽप्यपर्याप्त इत्यशान्तत्वेऽप्यसमर्थः प्राकस्थानीय इत्यर्थः ॥ अत्र ये पठन्ति स विशेषणं-

यस्य ब्रह्म च क्षत्रञ्च उभे भवत ओदनम्। मृत्यु-र्यस्योपसेचनं क इत्था वेद यत्र सः ॥ २५ ॥

इति कठोपनिषदि द्वितीया वल्ली ॥ २ ॥

ऋतं पिबन्तौ सुकृतस्य लोके गुहाम्प्रविष्टौ

---

मानसश्चाचार्य्यवान् प्रज्ञानेन यथोक्तमात्मानं प्राप्नोतीत्यर्थः ॥ २४ ॥ यस्त्वनेवम्भूतो यस्यात्मनो ब्रह्म च क्षत्रञ्च ब्रह्मक्षत्रे सर्व्वधर्म्मविधारकेऽपि सर्व्वत्राणभूते उभे ओदनं अशनं भवतः स्याताम्। सर्व्वहरोऽपि मृत्युर्यस्योपसेचनमेवौदनस्याशनत्वेऽप्यपर्य्याप्तस्तं प्राकृतबुद्धिर्यथोक्तसाधनरहितः सन् क इत्था इत्थमेवं यथोक्तसाधनवानिवत्यर्थः वेद विजानाति यत्र स आत्मेति ॥ २५ ॥

इति द्वितीयवल्लीभाष्यम् ॥ २ ॥

ऋतम्पिबन्तावित्यस्या वल्याः सम्बन्धो विद्याविद्ये नानाविरुद्धफल इत्युपन्यस्ते न तु सफले ते यथावन्निर्णीते। तन्निर्णयार्था रथरूपककल्पना तथा च प्रतिपत्तिसौकर्य्यम्। एवञ्च प्राप्तृप्राप्यगन्तृगन्तव्यविवेकार्थं रथरूपकद्वारा

---

हन्ता वर्त्तते तथाभूतं तं को वेदेति सम्बन्धः ॥ २४ ॥ २५ इति द्वितीयवल्लीभाष्यटीका ॥

रथरूपककल्पनेति प्रसिद्धरथसादृश्यकल्पनेत्यर्थः। ऋतपानकर्त्ता जीवस्तावदेकश्चेतनः सिद्धो द्वितीयान्वेषणायां लोके सङ्ख्यान्वये समानस्वभावे प्रथमप्रतीतिदर्शनाच्चेतनतया समानस्वभावः परमात्मैव द्वितीयो प्रतीयते। तस्य चोपचारादृतपातृत्वमित्यर्थः। बाह्यपुरुषाकाशसंस्थानं देहाभ्यन्तर आकाशप्रदेशः। पञ्चाग्नय इति गार्हपत्यो दक्षि-

परमे परार्द्धे। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः॥ १॥

यः सेतुरीजानानामक्षरम्ब्रह्म यत्परम्। अभयं

---

द्वावात्मानावुपन्यस्येते। ऋतमिति। ऋतं सत्यमवश्यम्भावित्वात्कर्म्मफलं पिबन्तौ। एकस्तत्र कर्म्मफलं पिबति भुङ्क्ते नेतरस्तथापि पातृसम्बन्धात्पिबन्तावित्युच्यते। छत्रिन्यायेन सुकृतस्य स्वयं कृतस्य कर्म्मण ऋतमिति पूर्व्वेण सम्बन्धः। लोकेऽस्मिञ्छरीरे। गुहां गुहायां बुद्धौ प्रविष्टौ। परमे बाह्यपुरुषाकाशसंस्थानापेक्षया परमम्। परार्द्धे परस्य च ब्रह्मणोऽर्द्धं स्थानं परार्द्धं हार्द्दाकाशं तस्मिन् हि परम्ब्रह्मोपलक्ष्यते। तस्मिन् परमे परार्द्धे हार्द्दाकाशे प्रविष्टावित्यर्थः। तौ च छायातपाविव विलक्षणौ संसारित्वासंसारित्वेन ब्रह्मविदो वदन्ति कथयन्ति। न केवलमकर्म्मिण एव वदन्ति। पञ्चाग्नयो गृहस्थाः। ये च त्रिणाचिकेताः त्रिःकृत्वो नाचिकेतोऽग्निश्चितो यैस्ते त्रिणाचिकेताः॥ १॥

यः सेतुः सेतुरिव सेतुरीजानानां यजमानानां कर्म्मिणां दुःखसन्तरणार्थत्वान्नाचिकेतं नाचिकेतोऽग्निस्तं वयं ज्ञातुं

---

गार्हपत्यो दक्षिणाग्निराहवनीयः सभ्यावसथ्यौ वेत्येते पञ्चाग्नयो येषां ते तथोक्ताः। द्युपर्जन्यपृथिवीपुरुषयोषित्स्वग्निदृष्टिं ये कुर्व्वन्ते तेऽग्निहोत्राधिकारिणस्ते वा पञ्चाग्नय इत्यर्थः॥ १॥

ननु न सन्ति ब्रह्मविदः पञ्चाग्निविदश्च साम्प्रतमनुपलम्भादित्याशङ्क्य पूर्व्वविद्वदनुभवविरोधमाह। यः सेतुरित्यादिना॥ पूर्व्वेषां यद्यपि

तितीर्षताम्पारं नाचिकेतꣳ शकेमहि ॥ २ ॥
आत्मानꣳ रथिनं विद्धि शरीरꣳ रथमेव तु ।
बुद्धिन्तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ ३ ॥

---

चेतुञ्च शकेमहि शक्नुवन्तः । किञ्च यच्चाभयं भयशून्यं संसारस्य पारं तितीर्षतां तर्त्तुमिच्छतां ब्रह्मविदां यत्पर-माश्रयमक्षरमात्माख्यं ब्रह्म तच्च ज्ञातुं शकेमहि परापरे ब्रह्मणी कर्म्मब्रह्मविदाश्रये वेदितव्ये इति वाक्यार्थः । एत-योरेव ह्युपन्यासः कृतः । ऋतम्पिबन्ताविति ॥ २ ॥ तत्र य उपाधिकृतः संसारी विद्याविद्ययोरधिकृतो मोक्षगमनाय संसारगमनाय च तस्य तदुभयगमने साधनो रथः कल्प्यत इत्याह । तत्रात्मानमृतपं संसारिणं रथिनं रथस्वामिनं विद्धि विजानीहि । शरीरं रथं एव तु रथबद्धहयस्थानी-यैरिन्द्रियैराकृष्यमाणत्वाच्छरीरस्य । बुद्धिं तु अध्यवसाय-लक्षणां सारथिं विद्धि बुद्धिनेतृप्रधानत्वाच्छरीरस्य । सार-थिनेतृप्रधान इव रथः । सर्व्वं हि देहगतं कार्य्यं बुद्धि-कर्त्तव्यमेव प्रायेण । मनःसङ्कल्पविकल्पादिलक्षणं प्रग्रहमेव च रशनामेव विद्धि । मनसा हि प्रगृहीतानि श्रोत्रादीनि करणानि प्रवर्त्तन्ते रशनयेवाश्वाः ॥ ३ ॥

---

ब्रह्मविद्यादि सम्भवति प्रभावातिशया तथापि आधुनिकानामल्पप्रज्ञानां सम्भवतीत्याशङ्क्य चेतनत्वात्स्वाभाविकी ज्ञातृत्वयोग्यतास्तीत्यभिप्रेत्य तात्पर्य्यमाह । परापर इति ॥ २ ॥ २ ॥ तत्रेति तयोः प्रथमप्रश्नोक्त-योरात्मनोर्मध्ये आत्मा रथस्वामी ॥

इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः॥ ४॥
यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः॥ ५॥
यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा।

---

इन्द्रियाणि चक्षुरादीनि हयानाहुः रथकल्पनाकुशलाः शरीररथाकर्षणसामान्यात्। तेष्वेवेन्द्रियेषु हयत्वेन परिकल्पितेषु गोचरान् मार्गान् रूपादीन् विषयान् विद्धि। आत्मेन्द्रियमनोयुक्तं शरीरेन्द्रियमनोभिः सहितं संयुक्तमात्मानं भोक्तेति संसारीत्याहुर्मनीषिणो विवेकिनः। न हि केवलस्यात्मनो भोक्तृत्वमस्ति बुद्ध्याद्युपाधिकृतमेव तस्य भोक्तृत्वम्। तथा च श्रुत्यन्तरं केवलस्याभोक्तृत्वमेव दर्शयति। ध्यायतीव लेलायतीवेत्यादि। एवञ्च सति वक्ष्यमाणरथकल्पनया वैष्णवस्य पदस्यात्मतया प्रतिपत्तिरुपपद्यते नान्यथा स्वभावानतिक्रमात्॥ ४॥ तत्रैवं सति यस्तु बुद्ध्याख्यः सारथिरविज्ञानवाननिपुणोऽविवेकी प्रवृत्तौ च निवृत्तौ च भवति। यथेतरो रथचर्यायामयुक्तेनाप्रगृहीतेनासमाहितेन मनसा प्रग्रहस्थानीयेन सदा युक्तो भवति तस्याकुशलस्य बुद्धिसारथेरिन्द्रिया-

---

यः कल्पितस्तस्य भोक्तृत्वञ्च न स्वाभाविकमित्याह। आत्मेन्द्रिय-मनोयुक्तमिति॥ उपाधिके भोक्तृत्वे अन्वयव्यतिरेकौ शास्त्रञ्च प्रमाण-मित्याह। न हि केवलस्येति॥ वैष्णवपदप्राप्तिश्रुत्यनुपपत्त्यापि न

तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ ६ ॥

यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः ।
न स तत्पदमाप्नोति संसारञ्चाधिगच्छति ॥७॥
यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः ।

---

यथाश्वस्थानीयान्यवश्यान्यशक्यान्यनिवारणीयानि दुष्टाश्वा अदान्ताश्वा इवेतरसारथेर्भवति ॥ ५ ॥ यस्तु पुनः पूर्व्वोक्तविपरीतसारथिर्भवति विज्ञानवान् निपुणो विवेकवान्। युक्तेन मनसा प्रगृहीतमनाः समाहितचित्तः सदा तस्याश्वस्थानीयानीन्द्रियाणि प्रवर्त्तयितुं निवर्त्तयितुं वा शक्यानि वश्यानि दान्ताः सदश्वा इवेतरसारथेः ॥ ६ ॥

तत्र पूर्व्वोक्तस्याविज्ञानवतो बुद्धिसारथेरिदं फलमाह। यस्त्वविज्ञानवान् भवति। अमनस्कोऽप्रगृहीतमनस्कः सतत एवाशुचिः सदैव। न स रथी तत्पूर्व्वोक्तमक्षरं यत्परं पदं आप्नोति तेन सारथिना। न केवलं तत् नाप्नोति संसारञ्च जन्ममरणलक्षणमधिगच्छति ॥ ७ ॥ यस्तु द्वितीयो विज्ञानवान् भवति विज्ञानवत्सारथ्युपेतो रथिविद्वानित्येतद्युक्तमनाः समनस्कः सतत एव सदा शुचिः स तु तत्पदमाप्नोति। यस्मादाप्तात्पदादप्रच्युतः सन् भूयः पुनर्न जायते संसारे ॥ ८ ॥ किन्तत्पदमित्याह।

---

स्वाभाविकं भोक्तृत्वं वाच्यमित्याह। एवञ्च सतीति ॥ ४ ॥ ५ ॥ ६ ॥

स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥ ८ ॥
विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमम्पदम् ॥ ९ ॥
इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।

---

विज्ञानसारथिर्यस्तु यो विवेकबुद्धिसारथिः पूर्वोक्तो मनःप्रग्रहवान् प्रगृहीतमनाः समाहितचित्तः सन् शुचिर्नरो विद्वान्सोऽध्वनः संसारगतेः पारम्परमेवाधिगन्तव्यमित्येतदाप्नोति मुच्यते सर्वैः संसारबन्धनैस्तद्विष्णोर्व्यापनशीलस्य ब्रह्मणः परमात्मनो वासुदेवाख्यस्य परमं प्रकृष्टं पदं स्थानं तत्त्वमित्येतत्तत्पदमेवाप्नोति विद्वान् ॥ ९ ॥

अधुना यत्पदं गन्तव्यं तस्येन्द्रियाणि स्थूलान्यारभ्य सूक्ष्मतारतम्यक्रमेण प्रत्यगात्मतयाऽधिगमः कर्त्तव्य इत्येवमर्थमिदमारभ्यते । स्थूलानि तावदिन्द्रियाणि तानि यै रर्थैरात्मप्रकाशनायारब्धानि तेभ्य इन्द्रियेभ्यः स्वकार्येभ्यस्ते परा ह्यर्थाः सूक्ष्मा महान्तश्च प्रत्यगात्मभूताश्च । तेभ्यो ह्यर्थेभ्यश्च परं सूक्ष्मतरं महत्प्रत्यगात्मभूतञ्च मनः ।

---

प्रत्यगात्मभूताश्चेति । अप्रत्यगनपायिस्वरूपभूता इत्यर्थः ॥७॥८॥९॥

नन्वर्थेभ्यो मनस आरम्भकं भूतसूक्ष्मं परम् । तथा ह्यारम्भकं भूतसूक्ष्मं परमिति न युक्तम् । कार्यापेक्षया ह्युपादानमुपचितावयवं व्यापकमनपायिस्वरूपञ्च प्रसिद्धम् । यथा घटादेर्मृदादिः । न चेह भूतसूक्ष्माणां परस्परकार्यकारणभावे मानमस्ति । सत्यं तथापि विषयेन्द्रियव्यवहारस्य मनोऽधीनतादर्शनान्मनस्तावद्व्यापकं कल्प्यते । तच्च पर-

**मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥ १० ॥**
**महतः परमव्यक्तमव्यक्तात् पुरुषः परः । पुरु-**

---

मनःशब्दवाच्यं मनस आरम्भकं भूतसूक्ष्मं सङ्कल्पविकल्पाद्यारम्भकत्वात् । मनसोऽपि परा सूक्ष्मतरा महत्तरा प्रत्यगात्मभूता बुद्धिः । बुद्धिशब्दवाच्यमध्यवसायाद्यारम्भकं भूतसूक्ष्मम् । बुद्धेरात्मा सर्वप्राणिबुद्धीनां प्रत्यगात्मभूतत्वादात्मा महान्सर्व्वमहत्त्वादव्यक्ताद्यत्प्रथमं जातं हैरण्यगर्भतत्त्वं बोधा बोधात्मकं महानात्मा बुद्धेः पर इत्युच्यते ॥ १० ॥

महतोऽपि परं सूक्ष्मतरं प्रत्यगात्मभूतं सर्वमहत्तरञ्चाव्यक्तं सर्वस्य जगतो बीजभूतमव्याकृतनामरूपसतत्त्वं

---

म:र्थत एवात्मभूतमिति । केषाञ्चिन्मनस्त्वनिरासायोक्तमनःशब्दवाच्यं भूतसूक्ष्ममिति । अन्नमयं हि सोम्य मन इत्यादिश्रुतेर्भौतिकत्वावगमादन्नभावाभावाभ्यामुपचयापचयदर्शनाच्च भौतिकमेव तत् । तस्य च सङ्कल्पादिलक्षणस्याध्यवसायनियम्यत्वाद् बुद्धिस्ततः परमिति बुद्धिरात्मेति केषाञ्चिदभिमानस्तदपनयनार्थमाह । बुद्धिशब्दवाच्यमिति ॥ करणत्वादिन्द्रियबुद्धेर्भौतिकत्वं सिद्धम् । करणत्वं च सुषुप्त्याद्यनुपलम्भ्य इत्यनुभवात्सिद्धम् । ततो भूतावयवसंस्थानेष्वेवार्थादिषूत्तरोत्तरं परापरत्वं कल्प्यते परमपुरुषार्थं दिदर्शयिषया । न त्वर्थादीनां परत्वं प्रतिपादयिषितम् । प्रयोजनाभावाद्वाक्यभेदप्रसङ्गाच्चेति । सुरनरतिर्य्यगादिबुद्धीनां विधारकत्वात्प्रत्यगमनादात्मोच्यते । सूत्रसञ्ज्ञकं हैरण्यगर्भतत्त्वमित्यर्थः । बोधाबोधात्मकमिति ज्ञानक्रियाशक्त्यात्मकमित्यर्थः । अथवाऽधिकारिपुरुषाभिप्रायेण बोधात्मकत्वमव्यक्तस्याद्यः "परिणाम उपाधिरपञ्चीकृतभूतात्मकस्तेन रूपेणाबोधात्मकत्वं हिरण्यगर्भस्येत्यर्थं ॥ १० ॥

प्रलये सर्व्वकार्य्यकारणशक्तीनामवस्थानमभ्युपगन्तव्यं शब्दार्थसर्व्व-

## षान्न परं किञ्चित्सा काष्ठा सा परागतिः ॥११॥

सर्वकार्य्यकारणशक्तिसमाहाररूपमव्यक्तमव्याकृताकाशादिनामवाच्यं परमात्मन्योतप्रोतभावेन समाश्रितम्। वटकणिकायामिव वटवृक्षशक्तिः। तस्मादव्यक्तात्परः सूक्ष्मतमः सर्वकारणकारणत्वात्प्रत्यगात्मत्वाच्च महांश्च अत एव पुरुषः सर्वपूरणात्ततोऽन्यस्य परस्य प्रसङ्गं निवारयन्नाह। पुरुषान्न परं किञ्चिदिति। यस्मान्नास्ति पुरुषाच्चिन्मात्रघनात्परं किञ्चिदपि वस्त्वन्तरं तस्मात्सूक्ष्मत्वमहत्त्वप्रत्यगात्मत्वानां सा काष्ठा निष्ठा पर्य्यवसानम्। अत्र हि इन्द्रियेभ्य आरभ्य सूक्ष्मत्वादिपरिसमाप्तिः। अत एव च गन्तॄणां सर्वगतिमतां संसारिणां सा परा प्रकृष्टा गतिः। यद्गत्वा न निवर्त्तन्त इति स्मृतेः॥ ११॥

---

शक्तिशब्दस्य नित्यत्वनिर्व्वाहाय। तासां शक्तीनां समाहारो मायातत्त्वं भवति। प्रलयेऽप्युक्तत्वादिति शक्तिसमाहाररूपमव्यक्तमित्यर्थः। तद्धेदं तर्ह्यव्याकृतमासीदेतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च। मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमित्यादिश्रुतिप्रसिद्धं चाव्यक्तम्॥ तस्य सांख्याभिमतप्रधानाद्वैलक्षण्यमाह। परमात्मनीति॥ शक्तित्वेनाद्वितीयत्वाविरोधित्वमाह। वटकणिकायामिवेति॥ भाविवटवृक्षशक्तिमद्वटबीजं स्वयमात्मा न सद्वितीयं कथ्यते तद्वद्ब्रह्मापि न मायया सद्वितीयम्। सत्त्वादिरूपेण निरूप्यमाणे व्यक्तिरस्य नास्तीत्यव्यक्तम्। ततोऽव्यक्तशब्दादप्यद्वैताविरोधित्वं द्रष्टव्यम्। सर्व्वस्य प्रपञ्चस्य कारणमव्यक्तम्। तस्य परमात्मपारतन्त्र्यात्परमात्मन उपचारेण कारणत्वमुच्यते न स्वव्यक्तसद्विकारितयाऽनादित्वादव्यक्तस्य पारतन्त्र्यं च पृथक्सत्त्वस्फूर्त्याद्यभावादात्मसत्तयैव सत्तावत्त्वाच्चेत्यर्थः॥ ११॥

एष सर्व्वेषु भुतेषु गूढोत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ १२ ॥

---

ननु गतिश्चेदगत्यापि च भवितव्यं कथं यस्माद्भूयो न जायत इति। नैष दोषः। सर्वस्य प्रत्यगात्मत्वादवगतिरेव गतिरित्युपचर्य्यते। प्रत्यगात्मत्वञ्च दर्शितमिन्द्रियमनोबुद्धिपरत्वेन। यो हि गन्ता सोऽयमप्रत्यग्रूपं गच्छति अनात्मभूतं न विपर्य्ययेण। तथा च श्रुतिः। अनध्वगा अध्वसु पारयिष्णव इत्याद्याः तथाच दर्शयति प्रत्यगात्मत्वं सर्वस्य। एष पुरुषः सर्वेषु ब्रह्मादिस्तम्बपर्य्यन्तेषु भूतेषु गूढः संवृतो दर्शनश्रवणादिकर्म्माविद्यामायाच्छन्न आत्मा न प्रकाशते आत्मत्वेन कस्यचिदहोतिगम्भीरा दुरवगाह्या विचित्रा माया चेयम्। यदयं सर्व्वो जन्तुः परमार्थतः परमार्थतत्त्वोऽप्येवम्बोध्यमानोऽहं परमात्मेति न गृह्णात्यनात्मानं देहेन्द्रियादिसङ्घातमात्मनो दृश्यमानमपि घटादिवदात्मत्वेनाहममुष्य पुत्र इत्यनूच्यमानोऽपि गृह्णाति। नूनं परस्यैव मायया मोमुह्यमानः सर्व्वो लोकोऽयं बम्भ्रमीति। तथा स्मरति। नाहं प्रकाशः

---

पारयिष्णव इति संसारपारं गता इत्यर्थः॥ न प्रकाशते चेत्तर्हि नास्त्येवेति न वाच्यं विद्वद्दर्शनादित्याह। दर्शनश्रवणादीति॥ कर्म्माख्यस्येति तथोक्तेः। जीवस्य स्वप्रकाशत्वे ब्रह्मात्मत्वे सत्यपि योऽयं ब्रह्मस्वरूपाऽनवभासः स केनापि प्रतिबन्धेन कृत इति कल्प्यते॥ तच्च प्रतिबन्धकं न वस्तुभूतमित्युक्तम्। मुक्तेर्बाधप्रसङ्गात्। ततोऽविद्यैव प्रतिबन्धिकेत्याह। अविद्यामायाच्छन्न इति॥ निदिध्यासप्रचयेनैका-

**यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि। ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि॥ १३॥**

---

सर्वस्य योगमायासमावृत इत्यादि। ननु विरुद्धमिदमित्युच्यते। मत्वा धीरो न शोचति न प्रकाशत इति च। नैतदेवमसंस्कृतबुद्धेरविज्ञेयत्वान्न प्रकाशत इत्युक्तम्। दृश्यते तु संस्कृतयाऽग्र्ययाग्रमिवाग्र्या तया एकाग्रतयोपेतयेत्येतत्सूक्ष्मया सूक्ष्मवस्तुनिरूपणपरया। कैः। सूक्ष्मदर्शिभिरिन्द्रियेभ्यः परा ह्यर्था इत्यादिप्रकारेण सूक्ष्मतापारम्पर्य्यदर्शनेन परं सूक्ष्मं द्रष्टुं शीलं येषान्ते सूक्ष्मदर्शिनस्तैः सूक्ष्मदर्शिभिः पण्डितैरित्यर्थः ॥ १२॥ एतत्प्रतिपत्त्युपायमाह। यच्छेन्नियच्छेदुपसंहरेत्प्राज्ञो विवेकी। किम्। वाग्वाचम्। वागत्रोपलक्षणार्था सर्व्वेन्द्रियाणाम्। क्व। मनसी मनसि। छान्दसं दैर्घ्यम्। तच्च मनो यच्छेज्ज्ञाने प्रकाशस्वरूपे बुद्धावात्मनि। बुद्धिर्हि मनआदिकरणान् प्राप्नोतीत्यात्मा तेषां प्रत्यग् ज्ञानं बुद्धिमात्मनि महति प्रथमजे नियच्छेत्। प्रथमजवत्स्वच्छस्वभावमात्मनो विज्ञानमापादयेदित्यर्थः। तञ्च महान्तमात्मानं यच्छेच्छान्ते सर्व्व-

---

धर्मायत्तमन्तःकरणं यदा सहकारि सम्पद्यते तदा तत्सहकृतात्मभावाक्यादहं ब्रह्मास्मीति या बुद्धिवृत्तिरुत्पद्यते तस्यामभिव्यक्तो ब्रह्मभाव इति स्वतोऽपरोक्षतया व्यवह्रियत इति दृश्यत्वमुपपद्यते। यो हि यत्प्रयुक्तव्यवहारः स तद्दृश्य इति प्रसिद्धम्॥ क्रमेणैवं विषयदोषदर्शनेनाभ्यासेन च बाह्यकरणान्तःकरणव्यापारप्रविलापने सति प्रविलापन-

उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत । क्षुरस्य धारा निशिता दुरत्यया दुर्गम्पथस्तत्कवयो वदन्ति ॥ १४ ॥ अशब्दमस्पर्शमरूपमव्ययं तथा ऽरसन्नित्यमगन्धवच्च यत् । अनाद्यनन्तम्महतः

---

विशेषं प्रत्यस्तमितरूपमविक्रिये सर्व्वान्तरे सर्वबुद्धिप्रत्ययसाक्षिणि मुख्ये आत्मनि ॥ १३ ॥

एवं पुरुषे आत्मनि सर्वं प्रविलाप्य नामरूपकर्म्मत्रयं यन्मिथ्याज्ञानविजृम्भितं क्रियाकारकफललक्षणं स्वात्मयाथात्म्यज्ञानेन मरीच्युदकरज्जुसर्पगगनमलानीव मरीचिरज्जुगगनस्वरूपदर्शनेनैव स्वस्थः प्रशान्तः कृतकृत्यो भवति यतोऽतस्तद्दर्शनार्थमनाद्यविद्याप्रसुप्ता उत्तिष्ठत हे जन्तवः आत्मज्ञानाभिमुखा भवत जाग्रत अज्ञाननिद्राया घोररूपायाः सर्व्वानर्थबीजभूतायाः क्षयं कुरुत । कथम् । प्राप्य उपगम्य वरान् । प्रकृष्टानाचार्य्यांस्तद्विदस्तदुपदिष्टं सर्व्वान्तरमात्मानमहमस्मीति निबोधत अवगच्छत । न ह्युपेक्षितव्यमिति श्रुतिरनुकम्पयाऽऽह । मातृवदतिसूक्ष्मबुद्धिविषयत्वाद्विज्ञेयस्य किमिव सूक्ष्मबुद्धिरित्युच्यते क्षुरस्य धाराग्रं निशिता तीक्ष्णीकृता दुरत्यया । दुःखेनात्ययो यस्याः सा दुरत्यया यथा सा पद्भ्यां दुर्गमनीया । तथा दुर्गं दुःसम्पाद्यमित्येतत्पथः पन्थानं तत्त्वज्ञा-

---

कर्त्तुः कः पुरुषार्थः सिध्यतीत्याशङ्क्याह । पुरुष इत्यादिना ॥ १२ ॥ १२ ॥

यावद्यावद्बुद्ध्यापचयस्तावत्तारतम्येन सौक्ष्म्यं दृष्टं पृथि-

परन्ध्रुवं निचाय्य तन्मृत्युमुखात्प्रमुच्यते ॥ १५ ॥ नाचिकेतमुपाख्यानं मृत्युप्रोक्तꣳ सनातनम् । उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ॥ १६ ॥ य इमं परमं गुह्यं श्रावयेद्ब्रह्मसंसदि । प्रयतः श्राद्ध-

नलक्षणं मार्गं कवयो मेधाविनो वदन्ति ॥ १४ ॥ ज्ञेयस्यातिसूक्ष्मत्वात्तद्विषयस्य ज्ञानमार्गस्य दुःसम्पाद्यत्वं वदन्तीत्यभिप्रायस्तत्कथमतिसूक्ष्मत्वं ज्ञेयस्येत्युच्यते । स्थूला तावदियं मेदिनी शब्दस्पर्शरूपरसगन्धोपचिता सर्व्वेन्द्रियविषयभूता । तथा शरीरं तत्रैकैकगुणापकर्षेण गन्धादीनां सूक्ष्मत्वमहत्त्वविशुद्धत्वनित्यत्वादितारतम्यं दृष्टमबादिषु यावदाकाशमिति । ते गन्धादयः सर्व्वं एव स्थूलत्वाद्विकाराः शब्दान्ता यत्र न सन्ति किमु तस्य सूक्ष्मत्वादिनिरतिशयत्वं वक्तव्यमित्येतद्दर्शयति श्रुतिः । अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यदेतद्व्याख्यातं ब्रह्माव्ययं यद्धि शब्दादिमत्तद्व्येतीदन्त्वशब्दादिमत्त्वादव्ययं न व्येति न क्षीयतेऽत एव च नित्यं यद्धि व्येति तदनित्यमिदन्तु न इतश्च नित्यमनाद्यविद्यमानमनादि कारणमस्य तदिदमनादि । यच्चादिमत्तत्कार्य्यत्वादनित्यं कारणे प्रलीयते । यथा पृथिव्यादि । इदन्तु सर्व्वकारणत्वादकार्य्यमकार्य्यत्वान्नित्यं न तस्य कारणमस्ति यस्मिँल्लीयेत तथाऽऽनन्तमविद्यमानोऽन्तो यस्य तदनन्तं यथा

त्वादिषु परमात्मनि तु गुणानुमत्त्वाभावान्निरतिशयसौक्ष्म्यं

काले वा तदानन्त्याय कल्पते तदानन्त्याय कल्पत इति ॥ १७ ॥ इति प्रथमाध्याये तृतीया वल्ली ॥ ३ ॥ इति प्रथमोऽध्यायः समाप्तः ॥

---

कटुत्वादेः फलादिकार्य्योत्पादनेनाप्यनित्यत्वं दृष्टम्। न च तथाप्यन्तवत्त्वं ब्रह्मणोऽतोऽपि नित्यं महतो महत्त्वात् बुद्ध्याख्यात्परं विलक्षणं नित्यविज्ञप्तिस्वरूपत्वात्सर्व्वसाक्षि हि सर्व्वभूतात्मत्वाद्ब्रह्म। उक्तं ह्येष सर्व्वेषु भूतेष्वित्यादि। ध्रुवञ्च कूटस्थं नित्यं न पृथिव्यादिवदापेक्षिकं नित्यत्वम्। तदेवम्भूतं ब्रह्मात्मानं निचाय्य,वगम्य तमात्मानं मृत्युमुखान्मृत्युगोचरादविद्याकामकर्म्मलक्षणात्प्रमुच्यते वियुज्यते ॥ १५ ॥ प्रस्तुतविज्ञानस्तुत्यर्थमाह श्रुतिः। नाचिकेतं नचिकेतसा प्राप्तं नाचिकेतं मृत्युना प्रोक्तं मृत्युप्रोक्तमिदमाख्यानं वल्लीत्रयलक्षणं सनातनं चिरन्तनं वैदिकत्वादुक्त्वा ब्राह्मणेभ्यः श्रुत्वाऽऽचार्य्येभ्यो मेधावी ब्रह्मैव लोको ब्रह्मलोकस्तस्मिन् ब्रह्मलोके महीयते आत्मभूत उपास्यो भवतीत्यर्थः ॥ १६ ॥ यः कश्चिदिमं ग्रन्थं परमं प्रकृष्टं गुह्यं गोप्यं श्रावयेद्ग्रन्थतोऽर्थच ब्राह्मणानां संसदि ब्रह्मसंसदि प्रयतः शुचिर्भूत्वा श्राद्धकाले वा श्रावयेद्भुञ्जानम्। तच्छ्राद्धमस्यानन्त्यायानन्तफलाय कल्पते समर्थते। द्विर्वचनमध्यायपरिसमाप्त्यर्थम् ॥ १७ ॥ इति श्रीगोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्य्यस्य श्रीशङ्करभगवतः कृतौ कठोपनिषद्भाष्ये प्रथमोऽध्यायः ॥ १ ॥

---

विद्यतीत्याह। स्थूला तावदित्यादिना ॥ १४ ॥ १५ ॥ १६ १७ ॥

# पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ्-

---

एष सर्व्वेषु भूतेषु गूढाऽऽत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या इत्युक्तम्। कः पुनः प्रतिबन्धोऽग्र्याया बुद्धेर्येन तदभावादात्मा न दृश्यत इति तद्दर्शनकारणप्रदर्शनार्था वल्ली आरभ्यते। विद्यमाने हि श्रेयःप्रतिबन्धकारणे तदपनयनाय यत्न आरब्धुं शक्यते नान्यथेति॥ पराञ्चि पराग्गच्छन्ति गच्छन्तीति खोपलक्षितानि श्रोत्रादीनीन्द्रियाणि खानीत्युच्यन्ते। तानि पराञ्च्येव शब्दादिविषयप्रकाशनाय प्रवर्त्तन्ते। यस्मादेवं स्वाभाविकानि तानि व्यतृणद्धिंसितवान्हननं कृतवानित्यर्थः। कोऽसौ। स्वयम्भूर्यः परमेश्वरः स्वयमेव स्वतन्त्रो भवति सर्वदा न परतन्त्र इति। तस्मात्पराङ् प्रत्यग्रूपाननात्मभूतान् शब्दादीन् पश्यत्युपलभते। उपलब्धा नान्तरात्मन् नान्तरात्मानमित्यर्थः। एवं स्वभावेऽपि सति लोकस्य कश्चिन्नद्याः प्रतिस्रोतःप्रवर्त्तनमिव धीरो धीमान्विवेकी प्रत्यगात्मानं प्रत्यक्चासावात्मा चेति प्रत्यगात्मा प्रतीच्येवात्मशब्दो रूढो लोके नान्यस्मिन् व्युत्पत्तिपक्षेऽपि तत्रैवात्मशब्दो वर्त्तते।

---

अनादिरविद्याप्रतिबन्धः प्रागुक्तोऽधुनाऽऽगन्तुकप्रतिबन्धदर्शनायोत्तरवल्ल्यारम्भ इति सम्बन्धमाह। एष सर्वेष्वित्यादिना॥ इन्द्रियाख्यन्मुखानि खुसदा तान्यात्मनिष्ठतयाऽमृतत्वमापुरत इन्द्रियाणि बहिर्मुखानि सृष्टानीति यत्तेषां हननमेव कृतमित्यर्थः। आप्लृ व्याप्ताविति धात्वर्थानुसारेण व्यापक आत्मशब्दार्थः॥ यद्यस्मादादत्ते संहरति

पश्यति नान्तरात्मन्। कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्॥ १॥

पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति

---

यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह यच्चास्य सन्ततो भावस्तस्मादात्मेति कीर्त्यत इत्यात्मशब्दव्युत्पत्तिस्मरणात्। तं प्रत्यगात्मानं स्वस्वभावमैक्षदपश्यदित्यर्थः। छन्दसि कालानियमात्। कथं पश्यतीत्युच्यते। आवृत्तचक्षुरावृत्तं व्यावृत्तं चक्षुःश्रोत्रादिकमिन्द्रियजातमशेषविषयाद्यस्य स आवृत्तचक्षुः स एवं संस्कृतः प्रत्यगात्मानं पश्यति। न हि बाह्यविषयालोचनपरत्वं प्रत्यगात्मेक्षणं चैकस्य सम्भवतीति। किमिच्छन् पुनरित्थं महता प्रयासेन स्वभावप्रवृत्तिनिरोधं कृत्वा धीरः प्रत्यगात्मानं पश्यतीत्युच्यते। अमृतत्वममरणधर्मत्वं नित्यस्वभावतामिच्छन्नात्मन इत्यर्थः॥ १॥

यत्तावत्स्वाभाविकं परागेवानात्मदर्शनं तदात्मदर्शनस्य प्रतिबन्धकारणमविद्या तत्प्रतिकूलत्वाद्या च परागेवाविद्योपप्रदर्शितेषु दृष्टादृष्टेषु भोगेषु तृष्णा ताभ्यामविद्यातृष्णाभ्यां प्रतिबद्धात्मदर्शनाः पराचो बहिर्गता-

---

स्वात्मन्येव सर्वमिति जगदुपादानं लभ्यते विषयानतीत्यात्मेति व्युत्पत्त्या स्वचैतन्याभासेनोपलब्धृत्वमात्मशब्दार्थः। येन कारणेनास्यात्मनः सन्ततो निरन्तरो भावः। कल्पितस्याधिष्ठानसत्त्वामन्तरेण सत्ताभावाद्यथा रज्ज्वमध्यस्ते सर्पे रज्ज्वा व्याप्तत्वं तथा कल्पितं सर्वं येन स्वस्वरूपवत्तया व्याप्तमित्यर्थः॥ १॥

विततस्य पाशम्। अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ २ ॥

येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान्।

---

नैव कामान् काम्यान् विषयाननुयन्ति अनुगच्छन्ति बाला अल्पप्रज्ञास्ते तेन कारणेन मृत्योरविद्याकामकर्म्मसमुदायस्य यन्ति गच्छन्ति विततस्य विस्तीर्णस्य सर्व्वतो व्याप्तस्य पाशं पाश्यते बध्यते येन तं पाशं देहेन्द्रियादिसंयोगवियोगलक्षणमनवरतं जन्ममरणजरारोगाद्यनेकानर्थव्रातं प्रतिपद्यन्त इत्यर्थः। यत एवमथ तस्माद्धीरा विवेकिनः प्रत्यगात्मस्वरूपावस्थानलक्षणममृतत्वम्। देवाद्यमृतत्वं ह्यध्रुवमिदन्तु प्रत्यगात्मस्वरूपावस्थानलक्षणं ध्रुवम्। न कर्मणा वर्द्धते नो कनीयानिति श्रुतेः। तदेवम्भूतं कूटस्थमविचाल्यममृतत्वं विदित्वाऽध्रुवेषु सर्वपदार्थेष्वनित्येषु ब्राह्मणा इह संसारेऽनर्थप्राये न प्रार्थयन्ते किञ्चिदपि। प्रत्यगात्मदर्शनप्रतिकूलत्वात्। पुत्रवित्तलोकैषणाभ्यो व्युत्तिष्ठन्त्येवेत्यर्थः ॥ २ ॥

यद्विज्ञानात् न किञ्चिदन्यत्प्रार्थयन्ते ब्राह्मणाः कथं तदधिगम इति। उच्यते। विज्ञानस्वभावेनात्मना रूपं रसं गन्धं स्पर्शान् शब्दांश्च मैथुनान्मैथुननिमित्तान् सुखप्रत्ययान्

---

समागमस्यवत् ॥ २ ॥

कथं तदधिगम इति किं वैदिकत्वादर्थवत्परोक्षत्वेन किंवा घटादिवत्सिद्धत्वादपरोक्षत्वेनापीत्याकाङ्क्षायामात्मत्वादब्रह्मणोऽपरोक्षत्वे-

एतेनैव विजानाति किमत्र परिशिष्यते। एतद्वै तत् ॥ ३ ॥

---

विजानाति विस्पष्टं जानाति सर्व्वो लोकः। ननु नैवं प्रसिद्धिर्लोकस्यात्मना देहादिविलक्षणेनाहं विजानामीति। देहादिसङ्घातोऽहं विजानामीति तु सर्व्वो लोकोऽवगच्छति। नन्वेवं देहादिसङ्घातस्यापि शब्दादिस्वरूपत्वाविशेषाद्विज्ञेयत्वाविशेषाच्च न युक्तं विज्ञातृत्वम्। यदि देहादिसङ्घातो रूपाद्यात्मकः सन्रूपादीन्विजानीयात् तदा बाह्या अपि रूपादयोऽन्योन्यं स्वं स्वं रूपञ्च विजानीयुर्न चैतदस्ति। तस्माद्देहादिलक्षणांश्च रूपादीनेतेनैव देहादिव्यतिरिक्तेनैव विज्ञानस्वभावेनात्मना विजानाति लोकः। यथा येन लौहो दहन् दहति सोऽग्निरिति तद्वदात्मनोऽविज्ञेयं किमत्रास्मिँल्लोके परिशिष्यते न किञ्चित्परिशिष्यते सर्व्वमेव त्वात्मना विज्ञेयम्। यस्यात्मनोऽविज्ञेयं न किञ्चित्परिशिष्यते स आत्मा सर्वज्ञः। एतद्वै तत्। किन्तद्यन्नचिकेतसा पृष्टं देवादिभिरपि विचिकित्सितं धर्म्मादिभ्योऽन्यद्विष्णोः परमं पदं यस्मात्परं नास्ति तद्वै तदधिगतमित्यर्थः ॥ २ ॥

---

नैवावगमः सम्यगवगम इत्युच्यते। येनेत्यादिना॥ मूढानां व्यतिरिक्तेनात्मना देहादेर्वेद्यत्वं यद्यपि न प्रसिद्धं तथापि विचारकाणां व्यतिरिक्तेनैव वेद्यत्वं प्रसिद्धं ततो यच्छब्देन प्रसिद्धवत्परामर्शो न विरुध्यत इति परिहरति। नन्वेवं देहादीत्यादिना॥ दैहिकाः शब्दादयो न स्वात्मानमन्यच्च विजानीयुः॥ शब्दादित्वाद्दृश्यत्वाच्च बाह्यवत्॥ विपक्षे बाधकमाह। यदि हीति॥ ३॥

स्वप्नान्तं जागरितान्तञ्चोभौ येनानुपश्यति।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति॥४॥
य इमं मध्वदं वेद आत्मानं जीवमन्तिकात्।
ईशानम्भूतभव्यस्य न ततो विजुगुप्सते। एत-

अतः सूक्ष्मत्वाद्दुर्विज्ञेयमिति मत्वैतमेवार्थं पुनः पुनराह। स्वप्नान्तं स्वप्नमध्यं स्वप्नविज्ञेयमित्यर्थः। तथा जागरितान्तं जागरितमध्यं जागरितविज्ञेयं चोभौ स्वप्नजागरितान्तौ येनात्मनानुपश्यति लोक इति सर्व्वं पूर्व्ववत्तं महान्तं विभुमात्मानं मत्वावगम्यात्मभावेन साक्षादहमस्मि परमात्मेति धीरो न शोचति॥४॥ किञ्च यः कश्चिदिमं मध्वदं कर्म्मफलभुजं जीवं प्राणादिकलापस्य धारयितारमात्मानं अन्तिकादन्तिके समीपे ईशानमीशितारं वेद विजानाति भूतभव्यस्य कालत्रयस्य ततस्तद्विज्ञानादूर्द्ध्वमात्मानं न विजुगुप्सते न गोपायितुमिच्छति अभयप्राप्तत्वात्। यावद्धि भयमध्यस्थोऽनित्यमात्मानं मन्यते तावद्गोपायितुमिच्छत्यात्मानम्। यदा तु नित्यमद्वैतमात्मानं विजानाति तदा किं कः कुतो वा गोपायितुमिच्छेदेतद्वै तदिति पूर्व्ववत्॥५॥ यः प्रत्यगात्मेश्वर

यः कश्चित्पूर्व्वं तपसो जातं पश्यति स प्रकृतं ब्रह्मैव पश्यतीति सम्बन्धः। अद्भ्यः पूर्व्वमित्यादिना हिरण्यगर्भस्य विशेषणमन्तःकरणांशो न जीवावच्छेदकत्वाज्जीवतादात्म्यविवक्षया विशेषणं सत्त्वादीनुपलभमानमिति। यदिति यच्छब्दोऽव सप्तम्यन्तात् कृत्स्नं सप्तम्यमेव

द्वैतत् ॥ ५ ॥ यः पूर्व्वन्तपसो जातमद्भ्यः पूर्व्व-मजायत । गुहां प्रविश्य तिष्ठन्तं यो भूतेभि-र्व्यपश्यत । एतद्वैतत् ॥ ६ ॥

या प्राणेन सम्भवत्यदितिर्देवतामयी । गुहां प्रविश्य तिष्ठन्तीं या भूतेभिर्व्यजायत । एतद्वै-

---

भावेन निर्द्दिष्टः स सर्व्वात्मेत्येतद्दर्शयति । यः कश्चिन्मुमुक्षुः पूर्वं प्रथमं तपसो ज्ञानादिलक्षणाद्ब्रह्मण इत्येतज्जात-मुत्पन्नं हिरण्यगर्भम् । किमपेक्ष्य पूर्वमित्याह । अद्भ्यः पूर्व-मप्सहितेभ्यः पञ्चभूतेभ्यो न केवलाभ्योऽद्भ्य इत्यभिप्रायः । अजायत उत्पन्नो यस्तं प्रथमजं देवादिशरीराण्युत्पाद्य सर्व्वप्राणिगुहां हृदयाकाशं प्रविश्य तिष्ठन्तं शब्दादीनुप-लभमानं भूतेभिर्भूतैः कार्य्यकारणलक्षणैः सह तिष्ठन्तं यो व्यपश्यत यः पश्यतीत्यर्थः । य एवं पश्यति स एतदेव पश्यति यत्तत्प्रकृतं ब्रह्म ॥ ६ ॥

किञ्च या सर्वदेवतामयी सर्वदेवात्मिका प्राणेन हिरण्यगर्भरूपेण परस्माद्ब्रह्मणः सम्भवति शब्दादीनाम-दनाददितिस्तां पूर्ववद्गुहां प्रविश्य तिष्ठन्तीमदितिम् । तामेव विशिनष्टि । या भूतेभिर्भूतैः समन्विता व्यजायत उत्प-न्नेत्येतत् ॥ ७ ॥ किञ्च योऽधियज्ञ उत्तराधरारण्यो-

---

भवति तत्सृष्टो जातो हिरण्यगर्भोऽपि ब्रह्मात्मक एवेत्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥

तत् ॥ ७ ॥ अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो गर्भिणीभिः। दिवे दिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः। एतद्वै तत् ॥ ८ ॥ यतश्चोदेति सूर्य्योऽस्तं यत्र च गच्छति। तन्देवाः सर्व्वेऽर्पितास्तदु नात्येति कश्चन। एतद्वैतत् ॥ ९ ॥

---

निहितः स्थितो जातवेदा अग्निः पुनः सर्वहविषां भोक्ताऽध्यात्मञ्च योगिभिर्गर्भ इव गर्भिणीभिरन्तर्वत्नीभिरगर्हितान्नभोजनादिनाऽयं यथा गर्भः सुभृतः सुष्ठु सम्यग्भृतो लोक इवेत्थमेव ऋत्विग्भिर्योगिभिश्च सुभृत इत्येतत्। किञ्च दिवे दिवेऽहन्यहनि ईड्यः स्तुत्यो वन्द्यश्च कर्म्मिभिर्योगिभिश्चाध्वरे हृदये च जागृवद्भिर्जागरणशीलैरप्रमत्तैरित्येतद्धविष्मद्भिराज्यादिमद्भिर्ध्यानभावनावद्भिश्च मनुष्येभिर्मनुष्यैरग्निरेतद्वैतत्तदेव प्रकृतं ब्रह्म ॥८॥ किञ्च यतश्च यस्मात्प्राणादुदेत्युत्तिष्ठति सूर्य्योऽस्तं निम्लोचनं च यत्र यस्मिन्नेव च प्राणेऽहन्यहनि गच्छति तं प्राणमात्मानं देवाः सर्वेऽग्न्यादयोऽधिदैवतं वागादयश्चाध्यात्मं सर्व्वे विश्वे अर्पिताः सम्प्रवेशिताः स्थितिकाले सोऽपि ब्रह्मैव तत्सर्व्वात्मकं ब्रह्म उ नात्येति नातीत्य तदात्मकतां तदन्यत्वं गच्छति कश्चन कश्चिदपि। एतद्वैतत् ॥ ९ ॥

---

हिरण्यगर्भस्यैव विशेषणान्तरमाह। किञ्चेति ॥ ७ ॥ ८ ॥ ९ ॥

यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योः
स मृत्युमाप्नोति य इह नानेव पश्यति ॥ १० ॥

---

यद्ब्रह्मादिषु स्थावरान्तेषु वर्त्तमानं तत्तदुपाधित्वाद्ब्रह्मवदवभासमानं संसार्य्यन्यः परस्माद्ब्रह्मण इति माभूत्कस्यचिदाशङ्केतीदमाह । यदेवेह कार्य्यकारणोपाधिसमन्वितं संसारधर्म्मवदवभासमानमविवेकिनां तदेव स्वात्मस्थममुत्र नित्यविज्ञानघनस्वभावं सर्व्वसंसारधर्म्मवर्जितं ब्रह्म। यच्चामुत्रामुष्मिन्नात्मनि स्थितं तदन्विह तदेवेह नामरूपकार्य्यकारणोपाधिमनुभाव्यमानं नान्यत् । तत्रैवं सत्युपाधिस्वभावभेददृष्टिलक्षणयाऽविद्यया मोहितो यः सन्निह ब्रह्मण्यनानाभूते परस्मादन्योऽहं मत्तोऽन्यत्परं ब्रह्मेति नानेव भिन्नमिव पश्यत्युपलभते स मृत्योर्मरणान्मृत्युं मरणं पुनः पुनर्जन्ममरणभावमाप्नोति प्रतिपद्यते ।

---

सर्व्वात्मकं ब्रह्मोक्तं तदयुक्तमुपाध्यवच्छिन्नचैतन्यस्य जीवस्य संसारित्वाद्ब्रह्मणश्चासंसारित्वादिविरुद्धधर्म्माक्रान्तयोरैक्यायोगादित्याशङ्क्य विरुद्धधर्म्मत्वस्योपाधिनिबन्धनत्वात्स्वभावैक्येन किञ्चिदनुपपन्नमित्याह । यद्ब्रह्मादीत्यादिना । कल्पितजगत्कारणत्वोपाधावुपाधिस्वभावश्च भेददृष्टिश्च ताभ्यां कारणतया लक्ष्यत इत्युपाधिस्वभावभेददृष्टिलक्षणा न ह्यन्तःकरणाद्युपाधेर्भेददृष्टेश्चानिर्व्वाच्याविद्यामन्तरेण सम्भवः कार्य्यकारणभावस्य सम्बन्धस्य च दुर्निरूपत्वान्नानेवेत्युपमार्थ इवशब्दः । यथा स्वप्ने नानात्वाभावेऽपि नानात्वमध्यारोप्य सत्यत्वाभिनिवेशेन यो व्यवहरति तथा जागरितेऽपि नानात्वमध्यारोप्य सत्यत्वाभिनिवेशेन

मनसैवेदमाप्तव्यन्नेह नानास्ति किञ्चन। मृत्योः स मृत्युङ्गच्छति य इह नानेव पश्यति ॥ ११ ॥ अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्य न ततो विजुगुप्सते। एतद्वै तत् ॥ १२ ॥ अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवा

---

तस्मात्तथा न पश्येद्विज्ञानैकरसं नैरन्तर्य्येणाकाशवत्परिपूर्णं ब्रह्मैवाहमस्मीति पश्येदिति वाक्यार्थः ॥ १० ॥

प्रागेकत्वविज्ञानादाचार्य्यागमसंस्कृतेन मनसैवेदं ब्रह्मैकरसमाप्तव्यमात्मैव नान्यदस्तीत्याप्ते च नानात्वप्रत्युपस्थापिकाया अविद्याया निवृत्तत्वादिह ब्रह्मणि नाना नास्ति किञ्चन अणुमात्रमपि। यस्तु पुनरविद्यातिमिरदृष्टिं न मुञ्चति इह ब्रह्मणि नानेव पश्यति स मृत्योर्मृत्युं गच्छत्येव स्वल्पमपि भेदमध्यारोपयन्नित्यर्थः ॥ ११ ॥ पुनरपि तदेव प्रकृतं ब्रह्माह। अङ्गुष्ठमात्रोऽङ्गुष्ठपरिमाणम्। हृदयपुण्डरीकं तच्छिद्रवर्त्त्यन्तःकरणोपाधिरङ्गुष्ठमात्रोऽङ्गुष्ठमात्रवंशपर्वमध्यवर्त्त्यम्बरवत्पुरुषः पूर्णमनेन सर्वमिति मध्ये आत्मनि शरीरे तिष्ठति यस्तमात्मानमीशानं भूतभव्यस्य विदित्वा न ततो विजुगुप्सते। एतद्वै तत्पूर्व-

---

यो अन्तरन्तरं पश्यति तस्य निन्दितत्वादेकरसं ब्रह्मैवास्मीति प्रतिपत्तव्यमित्यर्थः ॥ १० ॥

एकरसस्य ब्रह्मणः कथं प्राप्तिरेयविभागरहितस्य ब्रह्मणः प्रतिकल्पितभेदेनेत्याह। प्रागेकत्वविज्ञानादिति ॥ अङ्गुष्ठपरिमाणं जीवमनूद्य

धूमकः । ईशानो भूतभव्यस्य स एवाद्य स उ श्वः । एतद्वै तत् ॥ १३ ॥

यथोदकन्दुर्गे वृष्टम्पर्व्वतेषु विधावति एवं धर्म्मान् पृथक् पश्यंस्तानेवानुविधावति ॥ १४ ॥

---

वत् ॥ १२ ॥ किञ्चाङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकोऽधूमकमित्युक्तं ज्योतिःपरत्वात् । यश्चैवं लक्षितो योगिभिर्हृदय ईशानो भूतभव्यस्य स एव नित्यः कूटस्थोऽद्येदानीं प्राणिषु वर्त्तमानः स उ श्वोऽपि वर्त्तिष्यते नान्यस्तत्समोऽन्यश्च जनिष्यत इत्यर्थः ॥ १३ ॥

अनेन नायमस्तीति चैके इत्ययं पक्षो न्यायतः प्राप्तोऽपि स्ववचनेन श्रुत्या प्रत्युक्तस्तथा क्षणभङ्गवादश्च । पुनरपि भेददर्शनाय वादं ब्रह्मणा आह । यथोदकं दुर्गे दुर्गमे देशे उच्छ्रिते वृष्टं सिक्तं पर्वतेषु पर्व्वतवत्सु निम्नप्रदेशेषु विधावति विकीर्णं सद्विनश्यति एवंधर्म्मानात्मनो भिन्नान् पृथक् पश्यन् पृथगेव प्रति शरीरं पश्यंस्तानेव शरीरभेदानुवर्त्तिनोऽनुविधावति शरीरभेदमेव पुनः पुनः प्रतिपद्यत इत्यर्थः ॥ १४ ॥ यस्य पुनर्विद्यावतो विध्वस्तोपाधिकृतभेददर्शनस्य विशुद्धविज्ञानघनैकरसमद्वयमात्मानं पश्यतो विजानतो मुनेर्मननशीलस्यात्मस्वरूपं

---

अङ्गुष्ठमात्रविधानादिश्रुतीनामविरोधादङ्गुष्ठमात्रस्याविवक्षितत्वाद्ब्रह्मपरमेव वाक्यमित्याह । पुनरपि तदेवेति ॥ ११ ॥ १२ ॥ १३ ॥

यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति। एव-
म्मुनेर्विजानत आत्मा भवति गौतम ॥ १५ ॥
इति चतुर्थी वल्ली समाप्ता ॥ ४ ॥

पुरमेकादशद्वारमजस्यावक्रचेतसः। अनु-

---

कथं सम्भवतीत्युच्यते। यथोदकं शुद्धे प्रसन्ने शुद्धं प्रसन्न-मासिक्तं प्रक्षिप्तमेकरसमेव नान्यथा तादृगेव भवत्यात्मा-प्येवमेवात्मा भवत्येकत्वं विजानतो मुनेर्मननशीलस्य हे गौतम। तस्मात्कुतार्किकभेददृष्टिं नास्तिककुदृष्टिञ्चो-ज्झित्वा मातृपितृसहस्रेभ्योऽपि हितैषिणा वेदेनोपदिष्ट-मात्मैकत्वदर्शनं शान्तदर्पैरादरणीयमित्यर्थः॥ १५ ॥ इति काठकभाष्ये चतुर्थी वल्ली समाप्ता ॥ ४ ॥

पुनरपि प्रकारान्तरेण ब्रह्मतत्त्वनिर्द्धारणार्थोऽयमारम्भः। दुर्विज्ञेयत्वाद्ब्रह्मणः पुरं पुरमिव पुरं द्वारं द्वारपालाधिष्ठात्राद्यनेकपुरोपकरणसम्पत्तिदर्शनाच्छरीरं पुरञ्च सोपकरणं स्वात्मना संहतं स्वतन्त्रस्वाम्यर्थं दृष्टम्। तथेदं पुरसामान्यादनेकोपकरणसंहतं शरीरं स्वात्मना संहतराजस्थानीयस्वाम्यर्थं भवितुमर्हति। तच्चेदं शरी-राख्यं पुरमेकादशद्वारमेकादशद्वाराण्यस्य सप्तशीर्षण्यानि नाभ्या सहार्वाञ्चि त्रीणि शिरस्येकं तैरेकादशद्वारं

---

पौनरुक्त्यं परिहरन् सम्बन्धमाह। पुनरपीति॥ भूयोऽपि पथ्यं वक्तव्यमिति न्यायेनोपायान्तरेण ब्रह्म प्राप्यते तत्रोपाया एव भिद्यन्ते। नोपेयस्य भेदोऽस्तीति पुरेणासंहतत्वं स्वामिनः

ष्ठाय न शोचति विमुक्तश्च विमुच्यते। एतद्वै-
तत् ॥ १ ॥

हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषद-

पुरम्। कस्याजस्य जन्मादिविक्रियारहितस्यात्मनो राज-
स्थानीयस्य पुरधर्मविलक्षणस्यावक्रचेतसः। अवक्रमकुटिल-
मादित्यप्रकाशवन्नित्यमेवावस्थितमेकरूपं चेतो विज्ञानम-
स्येत्यवक्रचेतास्तस्यावक्रचेतसो राजस्थानीयस्य ब्रह्मणः।
यस्येदं पुरं तं परमेश्वरं पुरस्वामिनमनुष्ठाय ध्यात्वा ध्यानं
हि तस्यानुष्ठानं सम्यग्विज्ञानपूर्वकं तं सर्वैषणाविनिर्मुक्तः
सन् समं सर्वभूतस्थं ध्यात्वा न शोचति। तद्विज्ञानाद-
भयप्राप्तेः शोकावसराभावात्। कुत इहैवाविद्याकृतकाम-
कर्म्मबन्धनैर्विमुक्तो भवति। विमुक्तश्च सन्विमुच्यते पुनः
शरीरं न गृह्णातीत्यर्थः॥ १ ॥

स तु नैकशरीरपुरवर्त्त्यात्मा किन्तर्हि सर्वपुर-
वर्त्ती कथं हंसः हन्ति गच्छतीति। शुचिषच्छुचौ दिव्यादि-
त्यात्मना सीदतीति। वसुर्वासयति सर्व्वानिति। वाय्वात्मना
अन्तरिक्षे सीदतीत्यन्तरिक्षसत्। होता अग्निरग्निर्वै होतेति

---

पुरोपचयापचयाभ्यामुपचयापचयराहित्यं तत्सम्बन्धाप्रतीतिमन्तरेण
वक्ताप्रतीतिमत्त्वं स्वातन्त्र्यम्॥ १ ॥

वा यज्ञे प्रसिद्धा वेदिः पृथिव्याः परोऽन्तः परस्वभाव इति वेद्याः
पृथिवीस्वभावत्वश्रुतेस्तस्मात्पृथिवी वेदिशब्दवाच्या भवतीत्यर्थः। असौ
वाऽऽदित्यो हंसः शुचिषदि त्याम्नाये नादित्यो मन्त्रार्थतया व्याख्यातः

तिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम्बृहत् ॥ २ ॥

---

श्रुतेः। वेद्यां पृथिव्यां सीदतीति वेदिषत्। इयं वेदिः परोऽन्तः पृथिव्या इत्यादिमन्त्रवर्णात्। अतिथिः सोमः सन्द्रोणे कलशे सीदतीति दुरोणसत्। ब्राह्मणोऽतिथिरूपेण वा दुरोणेषु गृहेषु सीदतीति। नृषत् नृषु मनुष्येषु सीदतीति नृषत्। वरेषु देवेषु सीदतीति वरसत्। ऋतसदृतं सत्यं यज्ञो वा तस्मिन् सीदतीति। व्योमसत् व्योम्न्याकाशे सीदतीति व्योमसत्। अब्जा अप्सु शङ्खशुक्तिमकरादिरूपेण जायत इति। गोजाः गवि पृथिव्यां व्रीहियवादिरूपेण जायत इति। ऋतजाः यज्ञाङ्गरूपेण जायत इति। अद्रिजाः पर्वतेभ्यो नद्यादिरूपेण जायत इति। सर्वात्मापि सन्नृतमवितथस्वभाव एव बृहन्महान् सर्वकारणत्वात्। यदाप्यादित्य एव मन्त्रेणोच्यते तदाप्यात्मस्वरूपत्वमादित्यस्याङ्गीकृतत्वाद्ब्राह्मणो व्याख्यानेऽप्यविरोधः। सर्वथाप्येक एवात्मा जगतो नात्मभेद इति मन्त्रार्थः ॥ २ ॥

---

कथं तर्हि ब्राह्मणमिदं व्याख्यानमित्याशङ्क्याह। यदाप्यादित्य एवेति। सूर्य आत्मा जगतस्तस्थुषश्चेति मन्त्रान्तरवर्णोपलक्षितस्य चिद्धातोरिष्यत एव सर्वात्मत्वमित्यर्थः ॥ २ ॥

ऊर्द्धं प्राणमुन्नयत्यपानं प्रत्यगस्यति। मध्ये वामनमासीनं विश्वे देवा उपासते ॥ ३ ॥ अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः। देहाद्विमुच्यमानस्य किमत्र परिशिष्यते। एतद्वै तत् ॥ ४ ॥

---

आत्मनः स्वरूपाधिगमे लिङ्गमुच्यते। ऊर्द्धं हृदयात्प्राणं प्राणवृत्तिं वायुमुन्नयति ऊर्द्धं गमयति। तथाऽपानं प्रत्यगधोऽस्यति क्षिपति। य इति वाक्यशेषः। तं मध्ये हृदयपुण्डरीकाकाशे आसीनं बुद्धावभिव्यक्तविज्ञानप्रकाशनं वामनं सम्भजनीयं विश्वे सर्व्वे देवाश्चक्षुरादयः प्राणा रूपादिविज्ञानं बलिमुपाहरन्तो विश इव राजानमुपासते तादर्थ्येनानुपरतव्यापारा भवन्तीत्यर्थः ॥ ३ ॥ यदर्था यत्प्रयुक्ताश्च सर्व्वे वायुकरणव्यापाराः सोऽन्यः सिद्ध इति वाक्यार्थः। किञ्चास्य शरीरस्थस्यात्मनो विस्रंसमानस्यावस्रंसमानस्य भ्रंशमानस्य देहिनो देहवतो विस्रंसनशब्दार्थमाह देहाद्विमुच्यमानस्येति। किमत्र परिशिष्यते प्राणादिकलापे न किञ्चन परिशिष्यतेऽत्र देहे पुरस्वामिनि विद्रवण इव पुरवासिनं यस्यात्मनोऽपगमे क्षणमात्रात्कार्य्यकरणकलापं सर्वमिदं हतबलं विध्वस्तं

---

येयं प्रेते विचिकित्सा मनुष्ये इति याऽपूर्व्वविचिकित्सा प्रश्नभूतत्वेनोद्भाविता सापि निर्मूलैवेत्येतद्दर्शयितुं देहव्यतिरिक्तात्मास्तित्वं साधयति ॥ आत्मनः स्वरूपाधिगम इत्यादिना ॥ सर्व्वे प्राणकरणव्यापाराश्चेतनार्थास्तत्प्रयुक्ता भवितुमर्हन्ति अचेतनत्वाद्रथचेष्टावदि-

न प्राणेन नापानेन मर्त्त्यो जीवति कश्चन।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ। ५ ॥
हन्त त इदम्प्रवक्ष्यामि गुह्यम्ब्रह्म सनातनम्। यथा

---

भवति नष्टं भवति सोऽन्यः सिद्धः। स्वाम्मतं प्राणापानाद्य-पगमादेवेदं विध्वस्तं भवति न तु व्यतिरिक्तात्मापगमा-त्प्राणादिभिरेवेह मर्त्त्या जीवन्तीति ॥ ४ ॥

किञ्च न प्राणेन नापानेन चक्षुरादिना वा मर्त्त्यो मनुष्यो देहवान् कश्चन जीवति न कोऽपि जीवति। न ह्येषां परार्थानां संहत्यकारित्वाज्जीवनहेतुत्वमुपपद्यते। स्वार्थेन संहतेन परेण केनचिदप्रयुक्तं संहतानामवस्थानं न दृष्टम्। यथा गृहादीनां लोके तथा प्राणादीनामपि संहतत्वाद्भवितुमर्हत्यत इतरेणैव संहतप्राणादिविलक्षणेन तु सर्व्वे संहताः सन्तो जीवन्ति प्राणान्धारयन्ति। यस्मिन् संहननविलक्षणे आत्मनि सति परस्मिन्नेतौ प्राणापानौ चक्षुरादिभिः संहतावुपाश्रितौ। यस्यासंहतस्यार्थे प्राणा-पानादिः सर्व्वव्यापारं कुर्व्वन् वर्त्तते संहतः सन् स ततो ऽन्यः सिद्ध इत्यभिप्रायः ॥ ५ ॥ हन्तेदानीं पुनरपि ते तुभ्यमिदं गुह्यं गोप्यं ब्रह्म सनातनं चिरन्तनं प्रव-

---

न्यर्थः। शरीरं चेतनशेषं तद्विगमे भोगानर्हत्वाद्राजपुरवदित्यर्थः। किञ्चास्येत्यन्यथासिद्धं शङ्कते। स्वाम्मतमिति ॥ २ ॥ ४ ॥

ननु जीव प्राणधारणे इति धातुस्मरणाच्छरीरस्य जीवनं नाम प्राणधारणं प्राणसंयोगश्च प्राणधारणं कुरुते दधिधारणवत्तस्य च प्राण-

च मरणं प्राप्य आत्मा भवति गौतम ॥ ६ ॥
योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणु-
मन्येऽनुसंयन्ति यथा कर्म यथा श्रुतम् ॥ ७ ॥
य एष सुप्तेषु जागर्ति कामं कामं पुरुषो

---

क्ष्यामि। यद्विज्ञानात्सर्वसंसारोपरमो भवति अविज्ञा-
नाच्च यस्य मरणं प्राप्य यथा चात्मा भवति यथा संस-
रति तथा शृणु हे गौतम ॥ ६ ॥ योनिं योनिद्वारं
शुक्रबीजसमन्विताः सन्तोऽन्ये केचिदविद्यावन्तो मूढाः
प्रपद्यन्ते प्रविशन्ति शरीरत्वाय शरीरग्रहणार्थं देहिनो
देहवन्तः। स्थाणुं स्थावरभावमन्येऽत्यन्ताधमा मरणं
प्राप्यानुसंयन्ति अनुगच्छन्ति यथा कर्म। यद्यस्य कर्म
तद्यथा कर्म तैर्यादृशं कर्मेह जन्मनि कृतं तद्वशेनेत्येतत्।
तथा यथाश्रुतं यादृशञ्च विज्ञानमुपार्जितं तदनुरूपमेव
शरीरं प्रतिपद्यन्त इत्यर्थः ॥ ७ ॥

यथा प्रज्ञं हि सम्भवा इतिश्रुत्यन्तराद्यत्प्रतिज्ञातं गुह्यं
ब्रह्म तत् प्रवक्ष्यामीति तदाह। य एष सुप्तेषु प्राणादिषु

---

स्यैव हेतुत्वं संयोगाश्रयत्वात् कथमुच्यते। जीवनहेतुत्वं प्राणादीनां
न सम्भवतीति तत्राह। स्वार्थेनासंहतेनेति ॥ कादाचित्कस्य प्राणशरीर-
संयोगस्य स्वभावतोऽनुपपत्तेः सङ्घातस्य च लोके परप्रयुक्तस्यैव दर्शना-
द्भवितव्यमन्येन सङ्घातप्रयोजकेनेत्यर्थः। येऽयं प्रेत इति प्रश्नः परलोका-
स्तित्वेऽपि सन्देह आसीत्। विशेषतस्तन्निर्णयार्थमुच्यत इत्याह।
इदानीमिति ॥ ५ ॥ ६ ॥ ७ ॥

जननमरणकरणानां प्रति नियमादयुगपत्प्रवृत्तेश्च पुरुषबहुत्वं
सिद्धम्। त्रैगुण्यविपर्ययाच्चेति नानात्मानो व्यवस्थिता इत्यनेकताकिं-

निर्मिमाणः । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ॥ एतद्वै तत् ॥ ८ ॥ अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एकस्तथा सर्वभूता-

जागर्त्ति न स्वपिति । कथम् । कामं कामं तं तमभिप्रेतं स्त्र्याद्यर्थमविद्यया निर्म्मिमाणो निष्पादयन् जागर्त्ति पुरुषः । तदेव शुक्रं शुभ्रं शुद्धं तद्ब्रह्म नान्यद्गुह्यं ब्रह्मास्ति । तदेवामृतमविनाश्युच्यते सर्वशास्त्रेषु । किं च पृथिव्यादयो लोकास्तस्मिन्नेव सर्व्वे ब्रह्मण्याश्रिताः सर्वलोककारणत्वात्तस्य । तदु नात्येति कश्चनेत्यादि पूर्व्ववदेव ॥ ८ ॥ अनेकतार्किककुबुद्धिविचालितान्तःकरणानां प्रमाणोपपन्नमप्यात्मैकत्वविज्ञानमसकृदुच्यमानमप्यनृजुबुद्धीनां ब्राह्मणानां चेतसि नाधीयत इति तत्प्रतिपादने आदरवती श्रुतिः पुनः पुनराह । अग्निर्यथैक एव प्रकाशात्मा सन् भुवनं भवन्त्यस्मिन् भूतानीति भुवनमयं लोकस्तमिमं प्रविष्टोऽनुप्रविष्टः । रूपं रूपं प्रति दार्वादिदाह्यभेदं प्रतीत्यर्थः । प्रतिरूपस्तत्र तत्र प्रतिरूपवान् दाह्यभेदेन बहुविधो बभूव एक एव । तथा सर्वभूतान्तरात्मा रूपं रूपं सर्वेषां भूतानामभ्यन्तर आत्मा अतिसूक्ष्मत्वाद्दार्वादिष्विव सर्वदेहम्प्रति प्रविष्टत्वात्प्रतिरूपो बभूव बहिश्च

कर्त्तृविरोधात् सर्व्वपुरवर्त्त्येक एवात्मेत्यत्र न चित्तस्थैर्य्यं सम्भवतीत्याशङ्क्यौपाधिकभेदसाधने सिद्धसाधनं स्वाभाविकभेदसाधने चानेकात्मकत्वं दृष्टविरुद्धं प्रसजत इत्याह । अनेकतार्किकेत्यादिना ॥ ८ ॥ ९ ॥ १० ॥

# न्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ ९ ॥ वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव। एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रति-

स्वेनाविकृतेन रूपेणाकाशवत् ॥ ९ ॥ तथाऽन्यो दृष्टान्तः। वायुर्यथैक इत्यादि। प्राणात्मना देहेष्वनुप्रविष्टो रूपं रूपं प्रतिरूपो बभूवेति समानम् ॥ १० ॥ एकस्य सर्वात्मत्वे संसारदुःखित्वं परस्यैव तदिति प्राप्त इदमुच्यते। सूर्यो यथा चक्षुष आलोकेनोपकारं कुर्वन् मूत्रपुरीषाद्यशुचिप्रकाशनेन तद्दर्शिनः सर्वलोकस्य चक्षुरपि सन्न लिप्यते चाक्षुषैरशुच्यादिदर्शननिमित्तैराध्यात्मिकैः पापदोषैर्बाह्यैश्चाशुच्यादिसंसर्गदोषैः। एको बाह्यः। तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन। लोको ह्यविद्यया स्वात्मन्यध्यस्तया कामकर्मोद्भवं दुःखमनुभवति न तु सा परमार्थतः स्वात्मनि। यथा रज्जुशुक्तिकोषरगगनेषु सर्परजतोदकमलानि न रज्ज्वादीनां स्वतो रूपाणि। संसर्गिणि विपरीतबुद्ध्या सन्निमित्तत्वात्तद्दोषवद्विभाव्यन्ते। न तद्दोषैस्तेषां लेपो विपरीतबुद्ध्यध्यासबाह्या हि ते। तथा-

प्रतिरूपोपाधिभासमानत्वादिधर्मके हि दारवित तद्रूपो बहिश्चापि लिप्यत इत्यर्थः। परमात्मा दुःखी स्यादुद्धृत्य भिन्नत्वाल्लोकवदित्याह। एकस्य सर्वात्मत्वमिति। अविद्यायाः प्रतिबिम्बतश्चिदात्मनो भ्रान्तो भवति। भ्रान्तश्च कामादिदोषप्रयुक्तः कर्म कुरुते तन्निमित्तं च दुःखं स तत्त्वध्यस्यति। परमात्मा तु निरविद्यत्वाद्दुःखसाधनशून्यत्वाच्च दुःखी ततो न प्रयोजको हेतुरित्याह। लोको ह्यविद्ययेति। स्वरूपेण

रूपो वहिश्च ॥१०॥ सूर्य्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्वाह्यदोषैः। एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन वाह्यः ॥ ११ ॥

एको वशी सर्वभूतान्तरात्मा एकं रूपम्बहुधा यः करोति। तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां

---

त्मनि सर्व्वो लोकः क्रियाकारकफलात्मकं विज्ञानं सर्पादिस्थानीयं विपरीतमध्यस्य तन्निमित्तं जन्मजरामरणादिदुःखमनुभवति नत्वात्मा सर्वलोकात्मापि सन्विपरीताध्यारोपनिमित्तैर्न लिप्यते लोकदुःखेन वाह्यो वहिः सतो वाह्यो रज्ज्वादिवदेव। विपरीतबुद्ध्यध्यासवाह्यो हि सः ॥ ११ ॥

किञ्च स हि परमेश्वरः सर्वगतः स्वतन्त्र एको न तत्समोऽभ्यधिको वाऽन्योऽस्ति। वशी सर्वं ह्यस्य जगद्वशे वर्त्तते। कुतः सर्वभूतान्तरात्मा। यत एकमेव सदैकरसमात्मानं विशुद्धविज्ञानरूपं नामरूपाद्यशुद्धोपाधिभेदवशेन वहुधा वहुप्रकारेण यः करोति स्वात्मसत्तामात्रेणाचिन्त्यशक्तित्वात्। तमात्मस्थं स्वशरीरहृदयाकाशे वुद्धौ चैतन्याकारेणाभिव्यक्तमित्येतत्। न हि शरीरस्याधारत्वमात्मनः। आकाशवदमूर्त्तत्वात्। आदर्शस्थमुखमिति

---

भ्रमाविषयत्वं विपरीतबुद्ध्यध्यासवाह्यत्वं रज्ज्वादीनां तथा चैतन्यस्योपाधिस्वरूपेणाध्यासाश्रयत्वेऽपि निरुपाधिकबिम्बकल्पब्रह्मरूपेणाध्यासानाश्रयत्वान्न दुःखित्वप्राप्तिरित्यर्थः ॥ ११ ॥

परोत्कर्षदर्शनं पारतन्त्र्यं च स्वस्य हीनत्वं दुःखकारणं प्रसिद्धं तदभावाच्च परमात्मा दुःखी ततस्तत्प्राप्तिः परः पुरुषार्थो भविष्यतीत्याह।

सुखं शाश्वतं नेतरेषाम् ॥ १२ ॥ नित्योऽनित्याना-
ञ्चेतनश्चेतनानामेको बहूनां यो विदधाति
कामान् । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां
शान्तिः शाश्वती नेतरेषाम् ॥ १३ ॥

---

वदत् । तमेतमीश्वरमात्मानं ये निवृत्तबाह्यवृत्तयोऽनुपश्यन्ति आचार्य्यागमोपदेशमनु साक्षादनुभवन्ति धीरा विवेकिनस्तेषां परमेश्वरभूतानां शाश्वतं नित्यं सुखमात्मानन्दलक्षणं भवति नेतरेषां बाह्यासक्तबुद्धीनामविवेकिनां स्वात्मभूतमप्यविद्याव्यवधानात् ॥ १२ ॥ किञ्च नित्योऽविनाशी अनित्यानामविनाशिनाम् । चेतनश्चेतनानां चेतयितृणां ब्रह्मादीनां प्राणिनामग्निनिमित्तमेव दाहकत्वमनग्नीनामुदकादीनामात्मचैतन्यनिमित्तमेव चेतयितृत्वमन्येषाम् । किञ्च स सर्वेश्वरः सर्वज्ञः कामिनां संसारिणां कर्म्मानुरूपं कामान् कर्म्मफलानि स्वानुग्रहनिमित्तांश्च कामान् य एको बहूनामनेकेषामनायासेन विदधाति

---

किञ्च स हीत्यादिना ॥ १२ ॥ इदानीं परमात्मन्युपपत्तिप्रदर्शनार्थमाह । किञ्च नित्य इति ॥ सूर्य्याचन्द्रमसौ धाता यथा पूर्व्वमकल्पयदित्यादिश्रुतेरकृतविप्रणाशप्रसङ्गपरिहाराच्च कल्पान्तरीयभावानां प्रलीनानां कल्पान्तरे सजातीयरूपेणोत्पादः प्रतीयते स तदा स्याद्यदि विनाशिनां भावानां शक्तिशेषो लयः स्यात् । प्रलये विनश्यत्सर्व्वं यत्र शक्तिशेषो विलीयते सोऽभ्युपगन्तव्य इत्यर्थः । बुद्धिमतामपि ब्रह्मेन्द्रादीनां परमानन्दाभिमुख्यं हित्वा या बहिर्म्मुखा चेतनोपलभ्यते सापि नियन्तारं गमयतीत्याह । चेतनश्चेतनानामिति ॥ ब्रह्मादिशब्दवाच्यानां

तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम्। कथन्नु तद्विजानीयां किमु भाति विभाति वा ॥ ॥ १४ ॥ न तत्र सूर्य्यो भाति न चन्द्रतारकन्नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तम-

ददाति प्रयच्छतीत्येतत्तमात्मस्थं योऽनुपश्यन्ति धीरास्तेषां शान्तिरुपरतिः शाश्वती नित्या स्वात्मभूतैव स्यान्नेतरेषामनेवंविधानाम् ॥ १३ ॥

यत्तदात्मविज्ञानं सुखमनिर्देश्यं निर्देष्टुमशक्यं परमं प्रकृष्टं प्राकृतपुरुषवाङ्मनसयोरगोचरमपि सन्निवृत्तैषणा ये ब्राह्मणास्ते तदेतत्प्रत्यक्षमेवेति मन्यन्ते। कथन्नु केन प्रकारेण तत् सुखमहं विजानीयाम्। इदमित्यात्मबुद्धिविषयमापादयेयम्। यथा निवृत्तैषणा यतयः। किमु तद्भाति दीप्यते प्रकाशात्मकं तद्यतोऽस्मद्बुद्धिगोचरत्वेन विभाति विस्पष्टं दृश्यते किंवा नेति ॥ १४ ॥ तत्रोत्तरमिदं भाति च विभाति चेति। कथं नु तत्र तस्मिन् स्वात्मभूते ब्रह्मणि सर्व्वावभासकोऽपि सूर्य्यो भाति तद्ब्रह्म न प्रकाशयतीत्यर्थः। तथा न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमस्मद्दृष्टिगोचरोऽग्निः। किं बहुना यदिदमादित्यादिकं सर्वं

---

चक्षुगतानां वा चेतयितृत्वं यश्चैतन्यनिमित्तं सोऽस्ति पर आत्मेत्यर्थः। विमतं कर्म्मफलं तत्स्वरूपाद्यभिज्ञेन दीयमानं व्यवस्थितफलत्वात् सेवाफलवदित्याह। किञ्च स इति ॥ १३ ॥

विद्वदनुभवेऽपि परमानन्दे प्रमाणमित्याह। यत्तदात्मविज्ञानमिति ॥ तस्मादसम्भावितत्वा न जिज्ञासितव्यं परमात्मदर्शनं किन्तु

नुभाति सर्वन्तस्य भासा सर्वमिदं विभाति ॥ १५॥
इति पञ्चमी वल्ली समाप्ता ॥ ५ ॥

ऊर्द्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः ।

---

भाति तत्तमेव परमेश्वरं भान्तं दीप्यमानमनुभात्यनुदीप्यते । यथा जलोल्मुकाद्यग्निसंयोगादग्निं दहन्तमनु दहति न स्वतस्तद्वत्तस्यैव भासा दीप्त्या सर्वमिदं सूर्य्यादि विभाति । यत एवं तदेव ब्रह्म भाति च विभाति च कार्य्यं गतेन विविधेन भासा तस्य ब्रह्मणो भारूपत्वं स्वतोऽवगम्यते । न हि स्वतो विद्यमानं भासनं अन्यस्य कर्त्तुं शक्यम् । घटादीनामन्यावभासकत्वादर्शनाद्भारूपाणामादित्यादीनां तद्दर्शनात् ॥ १५ ॥ इति काठकवल्लीभाष्ये पञ्चमी वल्ली समाप्ता ॥ ५ ॥ इति द्वितीयाध्यायः ॥ २ ॥

तूलावधारणेनैव मूलावधारणं वृक्षस्य क्रियते लोके यथैवं संसारकार्य्यवृक्षावधारणेन तन्मूलस्य ब्रह्मणः स्वरूपावदिधारयिषया इयं षष्ठी वल्ली आरभ्यते । ऊर्द्ध्वमूलः ऊर्द्ध्वं मूलं यत्तद्विष्णोः परमम्पदमस्येति सोऽयमव्यक्तादिस्थावरान्तः संसारवृक्ष ऊर्द्ध्वमूलः । वृश्चनाज्जन्ममर-

---

प्रत्याधीनतया विचारयितव्यमेवेत्याह । कथं न्विति ॥ १४ ॥ १५ ॥ इति पञ्चमी वल्ली समाप्ता ॥ ५ ॥

शाखाद्यादितूलदर्शनेनाद्दष्टमपि वृक्षमूलं यथाऽस्तीत्यवधार्य्यते तद्वदत्रापि ब्रह्मणोऽवधारणाय प्रक्रमत इत्याह । तूलावधारणेनेति ॥ वृक्षशब्दस्य प्रवृत्तिनिमित्तमाह । वृश्चनादिति ॥ ओ व्रश्चू छेदने अस्य धातोः वप्रत्ययान्तस्य रूपं वृक्ष इति । छेद्यत्वे युक्तिमाह । जन्मजरेत्या-

तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते। तस्मिँल्लोकाः

---

णजराशोकाद्यनेकानर्थात्मकः प्रतिक्षणमन्यथा स्वभावो मायामरीच्युदकगन्धर्वनगरादिवद्दृष्टनष्टस्वरूपत्वादवसाने च वृक्षवदभावात्मकः कदलीस्तम्भवन्निःसारो नैकशतपाषण्डबुद्धिविकल्पास्पदः तत्त्वविजिज्ञासुभिरनिर्धारितेदंतत्त्वो वेदान्तनिर्द्धारितपरब्रह्ममूलसारोऽविद्याकामकर्म्माव्यक्तबीजप्रभवः परब्रह्मविज्ञानक्रियाशक्तिद्वयात्मकहिरण्यगर्भाङ्कुरः सर्वप्राणिलिङ्गभेदस्कन्धस्तृष्णाजलाशयसेकोद्भूतदर्पः बुद्धीन्द्रियविषयप्रवालाङ्कुरः श्रुतिस्मृतिन्यायविद्योपदेशपलाशः यज्ञदानतपआद्यनेकक्रियासुपुष्पः सुखदुःखवेदनानेकरसप्राण्युपजीव्यानन्तफलस्तृष्णासलिलावसेकप्ररूढजटिलीकृतदृढबद्धमूलः सत्यनामादिसप्तलोकब्रह्मादिभूतपक्षिकृतनीडः प्राणिसुखदुःखोद्भूतहर्षशोकजातनृत्यगीतवादित्रक्ष्वेलितास्फोटितहसिताकृष्टरुदितहाहामुञ्चमुञ्चेत्याद्यनेकशब्दकृततुमुलीभूतमहारवो वेदान्तवि-

---

दिना॥ प्रतिक्षणध्वंसात्मता इत्यस्य प्रयोग इत्यभिप्रेत्याह। अवसाने चेत्यादिना॥ प्रसिद्धो वृक्षः स्थाणुर्वा पुरुषो वेति विकल्पास्पदो दृष्टस्तथाऽयमपि सङ्घातो वा परिणामो वाऽऽरम्भो वा सदाऽसद्वेत्यादीनामनेकेषां शतसङ्ख्याकया पाषण्डबुद्धिविकल्पानां विषय इत्यर्थः। किंसंज्ञकोऽयं वृक्ष इत्यनध्यवसायगोचरः कश्चिद्वृक्षो दृष्टस्तथाऽयमपीति व्याख्यान्तरमाह। तत्त्वविजिज्ञासुभिरिति॥ परस्य ब्रह्मणो विज्ञानक्रियाद्वयात्मको हिरण्यगर्भः प्रथमोऽवस्थाभेदोऽङ्कुरोऽस्येति तथोक्तः। बुद्धीन्द्रियाणां विषयाः शब्दादयः प्रवालाङ्कुराः किसलयान्यस्येति च

श्रिताः सर्व्वे तदु नात्येति कश्चन। एतद्वै तत्॥१॥

---

चितब्रह्मात्मदर्शनात्तस्याप्यत्यन्तोच्छेदः। एष संसारवृक्षो ऽश्वत्थोऽश्वत्थवत्कामकर्म्मवातेरितनित्यप्रचलितस्वभावः। स्वर्गनरकतिर्य्यक्प्रेतादिभिः शाखाभिरवाक्शाखः अवाञ्चः शाखा यस्य सः। सनातनोऽनादित्वाच्चिरप्रवृत्तः। यदस्य संसारवृक्षस्य मूलं तदेव शुक्रं शुभ्रं शुद्धं ज्योतिष्मच्चैतन्यात्मज्योतिःस्वभावं तदेव ब्रह्म सर्वमहत्त्वात्। तदेवामृतमविनाशिस्वभावमुच्यते कथ्यते। सत्यत्वात्। वाचारम्भणं विकारो नामधेयमनृतमन्यदतो मर्त्त्यम्। तस्मिन्परमार्थसत्ये ब्रह्मणि लोका गन्धर्व्वनगरमरीच्युदकमायासमाः परमार्थदर्शनाभावावगम्यमानाः श्रिता आश्रिताः सर्वे समस्ता उत्पत्तिस्थितिलयेषु तदु तद्ब्रह्म नात्येति नातिवर्त्तते मृदादिकमिव घटादिकार्य्यं कश्चन कश्चिदपि विकारः। एतद्वै तद्बुद्धिस्थानादृश्यता भवन्तीत्युच्यते। जगतो मूलं तदेव नास्ति ब्रह्मासदेवेदं निःसृतमिति॥१॥

---

तथोक्तः। स्त्र्यादीनि पत्राणि पत्राण्यस्येति॥ सुखदुःखे प्राणिवेदना एवानेको रसोऽस्येति फलवत्स्येव सलिलावसेकस्तेन प्ररूढानि कर्म्म वासनादीनि सात्त्विकादिभावेन मिश्रीकृतानि दृढबन्धनान्यवान्तरमूलान्यस्य वटवृक्षस्येव तथोक्तः सत्यनामादिषु सप्तलोकेषु ब्रह्मादीनि भूतान्येव पक्षिणस्तैः कृतं नीडं यस्मिन् प्राणिनां सुखदुःखाभ्यामुद्भूतौ हर्षशोकौ ताभ्यां यथासम्भ्रमं जातानि नृत्यादीनि रुदितादिवद्भाव तैः कृततुमुलीभूतो महारवो यस्मिन्निति विग्रहः॥१॥

यदिदं किञ्च जगत्सर्व्वं प्राण एजति निःसृतम्।
महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥
॥ २ ॥ भयादस्याग्निस्तपति भयात्तपति सूर्य्यः।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ ३ ॥

---

तत्र यदिदं किञ्च यत्किञ्चेदं जगत्सर्व्वं प्राणे परस्मिन् ब्रह्मणि सत्येजति कम्पते तत एव निःसृतं निर्गतं सत्प्रचलति नियमेन चेष्टते। यदेवं जगदुत्पत्त्यादिकारणं ब्रह्म तन्महद्भयम्। महच्च तत् भयञ्च बिभेत्यस्मादिति महद्भयम्। वज्रमुद्यतमुद्यतमिव वज्रम्। यथा वज्रोद्यतकरं स्वामिनमभिमुखीभूतं दृष्ट्वा भृत्या नियमेन तच्छासने प्रवर्त्तन्ते तथेदं चन्द्रादित्यग्रहनक्षत्रतारकादिलक्षणं जगत् सेश्वरं नियमेन क्षणमप्यविश्रान्तं वर्त्तत इत्युक्तं भवति। य एतद्विदुः स्वात्मप्रवृत्तिसाक्षिभूतमेकं ब्रह्मामृता अमरणधर्म्माणस्ते भवन्ति ॥२॥ कथं तद्भयाज्जगद्वर्त्तत इत्याह। भयाद्भीत्या परमेश्वरस्याग्निस्तपति भयात्तपति सूर्य्यः भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः। न हीश्वराणां लोकपालानां समर्थानां सतां नियन्ता चेद्वज्रोद्यतकरवन्न स्यात् स्वामिभयभीतानामिव भृत्यानां नियता प्रवृत्तिरुपपद्यते ॥ ३ ॥

---

कार्य्यस्य शून्यतापर्य्यन्तं महत्त्वासत्त्वपूर्व्वकमेव जन्म ततो नास्ति मूलमिति शङ्कते। यदिदमा प्राणादिति॥ तत्र प्रयविनाशादेरसतः सत्त्वप्रदर्शनात्सत्पूर्व्वकत्वप्रसिद्धेश्चास्ति सद्रूपं वस्तु जगतो मूलं तच्च प्राणपदलक्ष्यं प्राणप्रवृत्तेरपि हेतुत्वादित्यर्थः ॥ २ ॥ ३ ॥

इह चेदशकद्बोद्धुम्प्राक् शरीरस्य विस्रसः।
ततः सर्गेषु लोकेषु शरीरत्वाय कल्पते ॥ ४ ॥
यथाऽऽदर्शे तथाऽऽत्मनि यथा स्वप्ने तथा पितृ-

---

तच्चेह जीवन्नेव चेद्यद्यशकच्छक्नोति शक्तः सन् जानात्येतद्भयकारणं ब्रह्म बोद्धुमवगन्तुं प्राक् पूर्व्वं शरीरस्य विस्रसोऽवस्रंसनात् पतनात्संसारबन्धनाद्विमुच्यते। न चेदशकद्बोद्धुं ततोऽनवबोधात्सर्गेषु सृज्यन्ते येषु स्रष्टव्याः प्राणिन इति सर्गाः पृथिव्यादयो लोकास्तेषु सर्गेषु लोकेषु शरीरत्वाय शरीरभावाय कल्पते समर्थो भवति शरीरं गृह्णातीत्यर्थः। तस्माच्छरीरविस्रंसनात्प्रागात्मबोधाय यत्न आस्थेयः यस्मादिहैवात्मनो दर्शनमादर्शस्थस्येव मुखस्य स्पष्टमुपपद्यते न लोकान्तरेषु ब्रह्मलोकादन्यत्र। स च दुष्प्रापः ॥ ४ ॥ कथमित्युच्यते। यथाऽऽदर्शे प्रतिबिम्बभूतमात्मानं पश्यतिलोकोऽत्यन्तविविक्तं तथेहात्मनि स्वबुद्धावादर्शवन्निर्मलीभूतायां विविक्तमात्मनो दर्शनं भवतीत्यर्थः। यथा स्वप्ने विविक्तं जाग्रद्वासनोद्भूतं तथा पितृलोकेऽविविक्तमेवात्मनो दर्शनं कर्म्मफलोपभोगासक्तत्वात्। यथा वाऽप्स्वविविक्तावयवमात्मरूपं परीव ददृशे परिदृश्यत इव तथा गन्धर्व्वलोकेऽविविक्तमेव दर्शनमात्मनः। एवञ्च लोकान्तरेष्विति शास्त्रप्रामाण्यादवगम्यते। छायातपयोरिवा-

---

सूर्य्यादीनां नियतप्रवृत्त्यनुपपत्त्या नियन्तृत्वेन सम्भावितं यत्पारमेश्वरं रूपं तदवगमायैवेह यत्नः कर्त्तव्य इत्याह। तच्चेति॥ इहैव

लोके। यथाप्सु परीव ददृशे तथा गन्धर्व्वलोके छायातपयोरिव ब्रह्मलोके ॥ ५ ॥

इन्द्रियाणाम्पृथग्भावमुदयास्तमयौ च यत्।
पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ॥ ६ ॥

इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम्। सत्त्वा-

---

त्यन्तविविक्तं ब्रह्मलोक एवैकस्मिन्। स च दुष्प्रापोऽत्यन्तविशिष्टकर्मज्ञानसाध्यत्वात्। तस्मादात्मदर्शनायैव यत्नः कर्त्तव्य इत्यभिप्रायः ॥ ५ ॥

कथमसौ बोद्धव्यः किंवा तदवबोधे प्रयोजनमित्युच्यते। इन्द्रियाणां श्रोत्रादीनां स्वस्वविषयग्रहणप्रयोजनेन स्वकारणेभ्य आकाशादिभ्यः पृथगुत्पद्यमानानामत्यन्तविशुद्धात् केवलाच्चिन्मात्रात्मस्वरूपात् पृथग्भावं स्वभावविलक्षणात्मकतां तथा तेषामेवेन्द्रियाणामुदयास्तमयौ च यत्पृथगुत्पद्यमानानामुत्पत्तिप्रलयौ च जाग्रत्स्वापावस्थापेक्षया नात्मन इति मत्वा ज्ञात्वा विवेकतो धीरो धीमान् न शोचति। आत्मनो नित्यैकत्वस्वभावत्वादव्यभिचाराच्छोकादिकारणत्वानुपपत्तेः। तथा च श्रुत्यन्तरं तरति शोकमात्मविदिति ॥ ६ ॥ यस्मादात्मन इन्द्रि-

---

चैव चेष्टोक्तं यत्नः यदिहैव चेज्जानाति तदा छायावत् एवेति सम्बन्धः ॥ ५ ॥

इन्द्रियेभ्यः परा ह्यर्था इति पूर्व्वमुक्तम्। इह त्वर्थानामपकृष्टात्वर्थं प्रत्यगात्मत्वं न सम्भवतीत्याशङ्क्याह। अर्थानामिवेति ॥ बुद्धिसुख-दुःखादिः आश्रयो गुणत्वाद्रूपवदिति वैशेषिकैरनुमीयते तद्वत्।

दिध महानात्मा महतोऽव्यक्तमुत्तमम् ॥७॥ अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च। यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वञ्च गच्छति ॥ ८ ॥

न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति

---

याणां पृथग्भावे उक्तो नाऽसौ बहिरधिगन्तव्यः। यस्मात्प्रत्यगात्मा सर्वस्य तत्कथमित्युच्यते। इन्द्रियेभ्यः परं मन इत्यादि। अर्थानामिहेन्द्रियसमानजातीयत्वादिन्द्रियग्रहणेनैव ग्रहणं पूर्ववदन्यत्। सत्त्वशब्दाद्बुद्धिरिहोच्यते॥७॥ अव्यक्तात्तु परः पुरुषो व्यापको व्यापकस्याप्याकाशादेः सर्वस्य कारणत्वात्। अलिङ्गो लिङ्ग्यते गम्यते येन तल्लिङ्गं बुद्ध्यादि तदविद्यमानमस्येति सोऽयमलिङ्ग एव च। सर्वसंसारधर्मवर्जित इत्येतद्रूपं ज्ञात्वाऽऽचार्य्यतः शास्त्रतश्च मुच्यते जन्तुरविद्यादिहृदयग्रन्थिभिर्जीवन्नेव पतितेऽपि शरीरेऽमृतत्वञ्च गच्छति। सोऽलिङ्गः परो व्यक्तात्पुरुष इति पूर्व्वेण सम्बन्धः॥ ८ ॥

कथं तर्हि तस्यालिङ्गस्य दर्शनमुपपद्यत इत्युच्यते। न सन्दृशे दर्शनविषये न तिष्ठति प्रत्यगात्मनोऽस्य रूपम्। अतो

---

सान्वयत्वमात्मसाधने सिद्धसाधनत्वान्मनस एव कामादिगुणवत्त्वश्रवणादात्मान्वयत्वकल्पने च निर्गुणत्वशास्त्रविरुद्धत्वादात्मना सह बुद्ध्यादेरविनाभावापहृणाच्च बुद्ध्यादि नात्मलिङ्गमित्याह। लिङ्ग्यते गम्यते येनेति॥ ६ ॥ ७ ॥ ८

कथं दर्शनमुपपद्यत इति प्रष्टुः कोऽभिप्रायः किं विषयतया दर्शनं वक्तव्यं उताविषयतयैव दर्शनोपायो वाच्यः॥ प्रथमं प्रत्याह। न सन्दृश

# कश्चनैनम्। हृदा मनीषा मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥ ९ ॥

---

न चक्षुषा सर्वेन्द्रियेण। चक्षुर्ग्रहणस्योपलक्षणार्थत्वात्। पश्यति नोपलभते कश्चन कश्चिदप्येनं प्रकृतमात्मानम्। कथं तर्हि तत्पश्येदित्युच्यते। हृदा हृत्स्थया बुद्ध्या। मनीषा मनसः सङ्कल्पादिरूपस्येष्टे नियन्तृत्वेनेति मनीट् तया मनीषाऽविकल्पयित्र्या। मनसा मननरूपेण सम्यग्दर्शनेन। अभिक्लृप्तोऽभिसमर्थितोऽभिप्रकाशित इत्येतत्। आत्मा

---

इति॥ रूपादिमत्त्वविशेषणस्य दर्शनविषयत्वेऽन्वयं भवति तदभावादित्यर्थः॥ द्वितीयं प्रत्याह। कथं तर्हीति॥ बाह्यकरणग्रामोपरमेऽपि यदा मनो विषयाननुसङ्कल्पते तदा सम्यग्धीर्बुद्धिस्तस्य नियन्त्री भवति। हे मनः किमर्थं त्वं पिशाचवत्प्रधावसि। न तावत्त्वत्प्रयोजनार्थम्॥ तव जडत्वात्प्रयोजनसम्बन्धानुपपत्तेर्विषयाणां च क्षयिष्णुत्वादिदोषदुष्टानां सम्बन्धेन प्रयोजनानुपपत्तेः। नापि चेतनार्थम्। तस्यासङ्गत्वात्परमानन्दस्वभावत्वाच्चेति नियन्तृत्वेन बुद्धिर्मनीडुच्यत इत्याह। मनस इति॥ अविकल्पयित्र्येति॥ विषयकल्पनाशून्यया प्रत्यगात्मविषयत्वयैव प्रत्यगीभावव्यञ्जकया महावाक्योत्थया बुद्धिवृत्त्या ज्ञातुं शक्यत इति सम्बन्धः॥ कथम्भूत आत्मेत्यत आह। मनसेति॥ यद्यन्मया दृश्यते बाह्यं घटादि तत्तदहं यथा न भवामि तथाऽस्मिन्नपि शरीरे यद्यद्दृश्यते तदहं न भवामि किन्तु योऽस्य सोऽयमसोऽस्मि सर्वशरीरेष्वेकस्यावस्थितत्वादेक एवेति विचारेण प्रथमं सम्भावित इत्यर्थः॥ श्रुतवेदान्तानामपि केषाञ्चिद्ब्रह्मा-ऽस्मीति बुद्धिस्थैर्यादर्शनादस्ति किञ्चित्प्रतिबन्धकान्तरं तदपनयनायोपायोऽप्यन्यो वक्तव्य इत्यभिप्रेत्याह। हृदा हृदीति॥ श्रवणमननाभ्यां प्रमाणप्रमेयासम्भावनानिरासेऽपि चित्तस्यानैकाग्र्यतादोषः प्रतिबन्धकः

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च विचेष्टति तामाहुः परमाङ्गतिम् ॥ १० ॥

---

ज्ञातुं शक्यत इति वाक्यशेषः। तमात्मानं य एतद्विदुरमृतास्ते भवन्ति ॥ ९ ॥

कथं प्राप्यत इति तदर्थो योग उच्यते। यदा यस्मिन् काले स्वविषयेभ्यो निवर्त्तितान्यात्मन्येव पञ्च ज्ञानार्थत्वात् श्रोत्रादीनीन्द्रियाणि ज्ञानान्युच्यन्तेऽवतिष्ठन्ते सह मनसा। यदनुगतानि तेन सङ्कल्पादिव्यावृत्तेनान्तःकरणेन बुद्धिश्चाध्यवसायलक्षणा न विचेष्टते स्वव्यापारेषु न चेष्टते न व्याप्रियते तामाहुः परमाङ्गतिम् ॥ १० ॥ तामीदृशीं तदवस्थां योगमिति मन्यन्ते वियोगमेव सन्तम्। सर्व्वानर्थसंयोगवियोगलक्षणा हीयमवस्था योगिनः। एतस्यां ह्यवस्थायामविद्याध्यारोपणवर्जितस्वरूपप्रतिष्ठ आत्मा स्थिरामिन्द्रियधारणाम्। स्थिरामचलामिन्द्रियधारणां बाह्यान्तःकरणानां धारणामित्यर्थः। अप्रमत्तः प्रमादवर्जितः समाधानं प्रति नित्यं प्रयत्नवांस्तदा तस्मिन् काले यदैव

---

सम्भवति तदपनयाय योगोऽनुष्ठातव्य इत्युपदिश्यत इत्यर्थः ॥ ९ ॥

यदनुगतानीति येन मनसाऽधिष्ठितानि तेन सहाऽवतिष्ठन्ते निवृत्तव्यापाराणि भवन्तीत्यर्थः ॥ वियोगमेव सन्तं योगमिति विरुद्धलक्षणया मन्यन्त इत्युक्तं तत्स्फुटयति। सर्व्वानर्थेति ॥ उपसंहृतं मनो यदि सुषुप्तिं गच्छेत्तदा सानर्थबीजावस्था भवति। तद्व्यावृत्तये पूर्वं प्रज्ञाणीत्यादौ योजयेदादौ नियन्तुं विषयेषु विक्षिप्तं चेत्स्यात्तदो-

तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥ ११ ॥
नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा ।

---

प्रवृत्तयोगो भवतीति सामर्थ्यादवगम्यते । न हि बुद्ध्यादिचेष्टाभावे प्रमादसम्भवोऽस्ति । तस्मात्प्रागेव बुद्ध्यादिचेष्टोपरमादप्रमादो विधीयते । अथवा यदैवेन्द्रियाणां स्थिरा धारणा तदानीमेव निरङ्कुशमप्रमत्तत्वमित्यतोऽभिधीयतेऽप्रमत्तस्तदा भवतीति । कुतः । योगो हि यस्मात्प्रभवाप्ययौ उपजनापायधर्म्मका इत्यर्थोऽतोऽपायपरिहारायाप्रमादः कर्त्तव्य इत्यभिप्रायः ॥ ११ ॥

बुद्ध्यादिचेष्टाविषयं चेद्ब्रह्मेदं तदिति विशेषतो गृह्येत बुद्ध्याद्युपरमे च ग्रहणकारणाभावादनुपलभ्यमानं नास्त्येव ब्रह्म यद्धि करणगोचरं तदस्तीति प्रसिद्धं लोके । विपरीतश्चासदित्यतश्चानर्थको योगोऽनुपलभ्यमानत्वाद्वा नास्तीत्युपलब्धव्यं ब्रह्मेत्येवं प्राप्ते इदमुच्यते । सत्यं नैव वाचा

---

यद्दर्शनेन ततो व्यावृत्तमपि तत्तटस्थं चेत्तयाप्यापि यावत्क्रमावस्था ततो निरुद्धं मनो यदा न जागर्त्ति न स्वपिति न चान्तरालावस्थं भवति पूर्णब्रह्मावभासकतयैव क्षीणं भवति तदा सर्वानर्थवियोगलक्षणाऽवस्था भवतीत्यर्थः । योगारम्भकाले प्रमादवर्जनं विधेयतया व्याख्यायानुवादपरतया व्याचष्टे । अथवेति ॥ विधिपक्षे हेतुं पृच्छति । कुत इति ॥ १० ॥ ११ ॥

उत्तरमन्त्रमवतारयितुं शङ्कामुद्भावयति । बुद्ध्यादिचेष्टाविषयश्चेदिति ॥ घटोऽस्तीति प्रतिपन्नस्य घटस्य मुद्गराभिघातादिनाशने घटाकार एव विलीयते । नास्तित्वांशस्तस्य कपालादावप्यनुवृत्तिदर्शनात् । अतः कार्य-

अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥ १२ ॥

---

मनसा न चक्षुषा नान्यैरपीन्द्रियैः प्राप्तुं शक्य इत्यर्थः। तथापि सर्वविशेषरहितोऽपि जगतो मूलमित्यवगतत्वा-दस्त्येव कार्यप्रविलापनस्यास्तित्वनिष्ठत्वात्। तथा हीदं कार्यं सूक्ष्मतारतम्यपारम्पर्येणानुगम्यमानं सद्बुद्धिनिष्ठा-मेवावगमयति। यदापि विषयप्रविलापनेन प्रविलाप्य-माना बुद्धिस्तदापि सा सत्प्रत्ययगर्भैव विलीयते। बुद्धिर्हि नः प्रमाणं सदसतोर्याथात्म्यावगमे मूलं चेज्जगतो न स्यादसदन्वितमेवेदं कार्यमसदित्येवं गृह्येत न त्वेतदस्ति सत्सदित्येव तु गृह्यते। यथा मृदादिकार्यं घटादि मृद-न्वितम्। तस्माज्जगतो मूलमात्मास्तीत्येवोपलब्धव्यम्। तस्मा-दस्तीति ब्रुवतोऽस्तित्ववादिन आगमार्थानुसारिणः श्रद्द-धानादन्यत्र नास्तिकवादिनि नास्ति जगतो मूलमात्मा निरन्वयमेवेदं कार्यमभावान्तं प्रविलीयत इति मन्यमाने

---

प्रविलापनस्यास्तित्वनिष्ठत्वाच्च शून्यतापर्यवसायी क्व इत्युक्तमेतत् स्फुटयति। तथा हीति ॥ स्थूलस्य कार्यस्य विलये सूक्ष्मं तत्कारणमव-शिष्यते तस्यापि विलये ततः सूक्ष्ममिति यावद्दर्शनव्याप्तिमुपलभ्य यत्र न दृश्यते तत्रापि मूर्त्तविलयस्यावध्यन्भावित्वान्न सन्मात्रमेवामूर्त्तमवति-ष्ठत इति कार्यमेव सौक्ष्म्यतारतम्यपारम्पर्येणानुगम्यमानं सद्बुद्धिनिष्ठां पुरुषस्य गमयतीत्यर्थः ॥ ननु यददृश्यं तदसत् यथा स्वप्नदर्शनमिति व्यभिदर्शनादस्तित्वेन दृश्यस्यासत्त्वाद्बुद्धिरपि नास्त्येवेत्याशङ्क्याह। यदापीति ॥ सद्बुद्धिरपि नास्तीत्येवम्भूतः प्रतीत्याऽवश्यमस्तीत्यभ्यु-पगन्तव्यम् अन्यथा निषेधव्यवहारायोगात्। अतोऽन्ततो गत्वा सद्बुद्धिः शेषता स्यादित्यर्थः ॥ ततः किमित्यत आह। बुद्धिर्हीति ॥ अभि-

अस्तीत्येवोपलब्धव्य स्तत्त्वभावेन चोभयोः । अ-
स्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति॥ १३ ॥

---

विपरीतदर्शिनि कथं तद्ब्रह्म तत्त्वत उपलभ्यते न कथञ्च-
नोपलभ्यत इत्यर्थः ॥ १२ ॥ तस्मादपोह्यासद्वादिपक्षमा-
सुरमस्तीत्येवात्मोपलब्धव्यः सत्कार्य्यबुद्ध्याद्युपाधिः । यदा
तु तद्रहितोऽविक्रिय आत्मा कार्य्यञ्च कारणव्यतिरेकेण
नास्ति वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य-
मिति श्रुतेः तदा तस्य निरुपाधिकस्यालिङ्गस्य सदस-
दादिप्रत्ययविषयत्ववर्जितस्यात्मनस्तत्त्वभावो भवति । तेन
च रूपेणात्मोपलभ्यत इत्यनुवर्त्तते । तत्राप्युभयोः सोपा-
धिकनिरुपाधिकयोरस्तित्वतद्भावयोर्निर्द्धारणार्था षष्ठी ।
पूर्वमस्तीत्येवोपलब्धस्यात्मनः सत्कार्य्योपाधिकृतास्तित्वप्र-
त्ययेनोपलब्धस्येत्यर्थः । पश्चात्प्रत्यस्तमितसर्व्वोपाधिरूप

---

चारिष्वपि विषयेषु सन्मात्रबुद्धेरव्यभिचारदर्शनाद्बुद्धेश्च स्वतः प्रामा-
ण्यात्सन्मात्रं वस्त्वभ्युपगन्तव्यमित्यर्थः । इतश्च सदेव मूलं जगतो
वाच्यमित्याह । मूलञ्चेदिति ॥ नास्ति जगतो मूलं ब्रह्मेत्यवगमेऽपि
प्रतियोगितया ब्रह्मज्ञानस्यावश्यकत्वात् ॥ किमिति तस्तथा ब्रह्मज्ञान-
कामेनास्तीत्येवोपलब्धव्यमित्याह । कस्मादिति ॥ प्रतियोगितया ज्ञानस्य
निषेध्यत्वादात्मतया ज्ञानं न स्यादतो ब्रह्मज्ञानकामेनास्ति जगन्मूल-
मित्यवगन्तव्यमेवेत्याह । अस्तीति ब्रुवत इत्यादिना ॥ १२ ॥ सोपा-
धिकस्यात्मनो ज्ञानाञ्ज्ञानस्य चासिद्धनिरुपाधिकज्ञानायापि प्रयति-
तव्यमित्याह । यदा त्विति ॥ सोपाधिके प्रथमं स्थिरीभूतस्य तद्द्वारेण
तत्त्वपदार्थावगमे सति क्रमेण वाक्यार्थावगतिः सम्भाव्यत इत्याह ।
तत्राप्युभयोरित्यादिना ॥ सदुपलब्धव्यमात्मकार्य्यमुपाधिर्यस्य कारणत्वस्य

**यदा सर्व्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः।**
**अथ मर्त्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते॥ १४॥**

---

आत्मनस्तत्त्वभावो विदिताविदिताभ्यामन्योऽद्वयस्वभावो नेति न्यस्थूलमनण्वह्रस्वमदृश्येऽनात्म्येऽनिलय इत्यादि-श्रुतिनिर्द्दिष्टः प्रसीदत्यभिमुखीभवति आत्मनः प्रकाश-नाय पूर्व्वमस्तीत्युपलब्धवत इत्येतत्॥ १३॥

एवं परमार्थदर्शिनः यदा यस्मिन् काले सर्वे कामाः कामयितव्यस्यान्यस्याभावात्प्रमुच्यन्ते विशीर्य्यन्ते येऽस्य प्राक् प्रतिबोधाद्विदुषो हृदि बुद्धौ श्रिता आश्रिताः। बुद्धिर्हि कामानामाश्रयो नात्मा कामः सङ्कल्प इत्या-दिश्रुत्यन्तराच्च। अथ तदा मर्त्त्यः प्राक् प्रबोधादासीत् स प्रबोधोत्तरकालमविद्याकामकर्म्मलक्षणस्य मृत्योर्विनाशा-दमृतो भवति गमनप्रयोजकस्य वा मृत्योर्विनाशाद्गमना-नुपपत्तेः। अत्रेहैव प्रदीपनिर्व्वाणवत्सर्वबन्धनोपशमाद्ब्रह्म समश्नुते ब्रह्मैव भवतीत्यर्थः॥ १४॥ कदा पुनः कामानां मूलतो विनाश इत्युच्यते। यदा सर्वे प्रभिद्यन्ते भेदमुप-यान्ति विनश्यन्ति हृदयस्य बुद्धेरिह जीवत एव ग्रन्थ-यो ग्रन्थिवद्दृढबन्धनरूपा अविद्याप्रत्यया इत्यर्थः। अह-

---

तत्कृतो योऽस्तित्वप्रत्ययः कारणत्वादस्तिपर आत्मेति तेनोपलब्धस्येति योजना॥ १३॥

सर्व्वे कामा इति। प्रवृत्तफलकर्म्मोपस्थापिते शरीरस्थितिनिमि-त्तान्नपानादौ प्रवृत्तिकारणेच्छाव्यतिरिक्ताः सर्व्वे कामाः काम्येन काम्येन ज्योतिष्टोमादिना स्वर्गं प्राप्स्यामि त्वैपुत्र्याराधनेन जनं वशीकरि-

यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः। अथ मर्त्योऽमृतो भवत्येतावदनुशासनम्॥ १५॥

शतञ्चैका च हृदयस्य नाड्यस्तासां मूर्धानम-

---

मिदं शरीरं ममेदं धनं सुखी दुःखी चाहमित्येवमादिलक्षणास्तद्विपरीतब्रह्मात्मप्रत्ययोपजननाद्ब्रह्मैवाहमस्म्यसंसारीति विनष्टेष्वविद्याग्रन्थिषु तन्निमित्ताः कामा मूलतो विनश्यन्ति। अथ मर्त्योऽमृतो भवत्येतावद्ध्येतावदेवैतावन्मात्रं नाधिकमस्तीत्याशङ्का कर्त्तव्या। अनुशासनमनुशिष्टिरुपदेशः सर्ववेदान्तानामिति वाक्यशेषः॥ १५॥

निरस्ताशेषविशेषव्यापिब्रह्मात्मप्रतिपत्त्या प्रभिन्नसमस्ताविद्यादिग्रन्थेर्जीवत एव ब्रह्मभूतस्य विदुषो न गतिर्विद्यत इत्युक्तम्। अत्र ब्रह्म समश्नुत इत्युक्तत्वाच्च तस्य प्राणा उत्क्रामन्ति। ब्रह्मैव सन् ब्रह्माप्येतीति श्रुत्यन्तराच्च। ये पुनर्मन्दब्रह्मविदो विद्यान्तरशीलिनश्च ब्रह्मलोकभाजो ये च तद्विपरीताः संसारभाजस्तेषामेष गतिविशेष उच्यते। प्रकृतोत्कृष्टब्रह्मविद्याफलस्तुतये। किञ्चान्यदग्नि-

---

कामोऽस्त्वेवमादयः स्वर्गादिदेशेष्वहमेव तिष्ठामि। तल्लोकाच्च प्राप्ता एवाप्राप्तविषयश्च कामो ऽर्थो मिथ्या चावाविति विचारेण विमोक्षेन्त इत्यर्थः कामाश्रय आत्मेति वैशेषिकमतं श्रुतिबाह्यत्वादपनीयमेवेत्याह। बुद्धिरिति॥ कामप्रविषयस्य सुषुप्तेऽपि भावादस्तत्वचिकृत्वं भवतीति मत्वाह। यदा पुनरिति॥ १४॥ १५॥

प्रकरणविच्छेदेनोक्तस्य सम्यक्त्वं दर्शयति। निरस्ताशेषेत्यादिना॥ यदभाविभाष्यकृतैव प्रकरणाद्ब्रह्मविद्विषयैवेयं गति-

भिनिःसृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्व-
ङ्ङन्या उत्क्रमणे भवन्ति ॥ १६ ॥
अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां

---

विद्या इष्टा प्रत्युक्ता च। तस्याश्च फलप्राप्तिप्रकारो वक्तव्य इति मन्त्रारम्भः। तत्र शतञ्च शतसङ्ख्याका एका च सुषुम्ना नाम पुरुषस्य हृदयाद्विनिःसृता नाड्यः शिरास्तासां मध्ये मूर्द्धानं भित्त्वाऽभिनिःसृता निर्गता एका सुषुम्ना नाम तयाऽन्तकाले हृदये आत्मानं वशीकृत्य योजयेत्। तया नाड्योर्द्ध्वमुपर्य्यायन् गच्छन्नादित्यद्वारेणामृतत्वमम-रणधर्म्मत्वमापेक्षिकम्। आभूतसंप्लवं स्थानममृतत्वं हि भाष्यत इति स्मृतेः। ब्रह्मणा वा सह कालान्तरेण मुख्यममृतत्व-मेति भुक्ता भोगाननुपमान् ब्रह्मलोकगतान् विष्वक् नानाविधगतयोऽन्या नाड्य उत्क्रमणे निमित्तं भवन्ति संसारप्रतिपत्त्यर्था एव भवन्तीत्यर्थः॥ १६ ॥

इदानीं सर्ववल्ल्यर्थोपसंहारार्थमाह। अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां सम्बन्धिनि हृदये सन्नि-विष्टो यथा व्याख्यातस्तं स्वादात्मीयाच्छरीरात्प्रवृहेदुद्य-

---

रिति तदसङ्गतिप्रवणेन लिङ्गेन परिच्छिन्ने आत्मानयोन्येऽस्या गतेः सम्बन्ध्यागमे दुर्दर्शेन प्रकरणेन प्रकृतब्रह्मविद्यासम्बन्धानुपपत्तेः। नाड्य-न्तराणामपि सम्बन्धप्रसङ्गाच्छ्रुतिविरुद्धप्रसङ्गाच्च। विस्तरस्तु प्रकटार्थे द्रष्टव्यः॥ १६॥

आत्मानं देहमधिकृत्य वर्त्तत इत्यध्यात्मं प्रत्यक्स्वरूपमेव ब्रह्म

हृदये सन्निविष्टः। तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण। तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ॥१७॥ मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिञ्च कृत्स्नम्। ब्रह्मप्राप्तो विरजोऽभूद्विमृत्युरन्योऽप्येवं यो

---

च्छेन्निःकर्षेण पृथक्कुर्यादित्यर्थः। किमिवेत्युच्यते। मुञ्जादिवेषीकां मध्यस्थां धैर्येणाप्रमादेन। तं शरीरान्निष्कृष्टं चिन्मात्रं विद्याद्विजानीयाच्छुक्रं शुद्धममृतं यथोक्तं ब्रह्मेति। तं विद्याच्छुक्रममृतमिति द्विर्वचनमुपनिषत्समाप्त्यर्थमिति। ॥ १७ ॥ विद्यास्तुत्यर्थोऽयमाख्यायिकार्थोपसंहारोऽधुनोच्यते। मृत्युप्रोक्तां यमोक्तामेतां विद्यां ब्रह्मविद्यां योगविधिञ्च कृत्स्नं समस्तं सोपकरणं सफलमित्येतन्नचिकेतोऽथ वरप्रदानान्मृत्योर्लब्ध्वा प्राप्येत्यर्थः। किञ्च ब्रह्मप्राप्तोऽभून्मुक्तोऽभवदित्यर्थः। कथं विद्याप्राप्त्या विरजो विगतधर्माधर्मौ विमृत्युर्विगतकामाविद्यश्च सन् पूर्वमित्यर्थः। न केवलं नचिकेता एव अन्योऽपि य एवं नचिकेतोवदध्यात्ममेवं निरुपचरितं प्रत्यक्स्वरूपं प्राप्य तमेवेत्यभिप्रायः। नान्यद्रूपमप्रत्यग्रूपं तदेवमध्यात्ममेवमुक्तप्रकारेण यो वेद विजानाति एवंवित्सोऽपि विरजः सन् ब्रह्मप्राप्त्या विमृत्युर्भवतीति वाक्यशेषः ॥ १८ ॥

---

प्राप्य विमृत्युर्भवति॥ नान्यद्रूपमर्चिरादिमार्गगम्यं प्राप्य। संयोगत्वे विनिर्मोमवासनात्वादित्यर्थः। एवंभूतस्य विधुष्टेन सह सम्बन्ध एवंविधः।

विद्ध्यात्ममेव ॥१८॥ सहनाववतु सह नौ भुनक्तु सह वीर्य्यं करवावहै तेजस्वि नावधीतमस्तु मा विद्विषावहै॥ओँ शान्तिः शान्तिः शान्तिः ॥ हरिः ओँ ॥ १९ ॥ इति कठोपनिषदि द्वितीयाध्याये षष्ठी वल्ली समाप्ता ॥ ६ ॥ ओँ तत्सत् ॥ ओँ ॥

---

अथ शिष्याचार्य्ययोः प्रमादकृतान्यायेन विद्याग्रहणप्रतिपादननिमित्तदोषशमनार्थेयं शान्तिरभिधीयते। सह नावावामवतु पालयतु विद्यास्वरूपप्रकाशनेन। कः। स एव परमेश्वर उपनिषत्प्रकाशितः। किञ्च सह नौ भुनक्तु तत्फलप्रकाशनेन नौ पालयतु। सहैवावां विद्याकृतं वीर्य्यं सामर्थ्यं करवावहै निष्पादयावहै। किञ्च तेजस्विनौ तेजस्विनोरावयोर्यदधीतं तत्स्वधीतमस्तु। अथवा तेजस्वि नावावाभ्यां यदधीतं तदधीव तेजस्वि वीर्य्यवदस्त्वित्यर्थः। मा विद्विषावहै शिष्याचार्य्यावन्योन्यं प्रमादकृताभ्यामध्ययनाध्यापनदोषनिमित्तं द्वेषं मा करवावहा इत्यर्थः ॥ शान्तिः शान्तिः शान्तिरिति त्रिर्वचनं सर्वदोषोपशमार्थम् ॥ इत्युपनिषत्समाप्त्यर्थः ॥ १९॥ इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यस्य श्रीमच्छङ्करभगवतः कृतौ काठकभाष्ये द्वितीयाध्याये षष्ठी वल्ली समाप्ता ॥ ६ ॥ इति कठोपनिषद्भाष्यं सम्पूर्णम् ॥ ओँ तत्सत् ओँ

---

एवंविदिति॥ इति श्रीमच्छङ्करस्य कठोपनिषद्भाष्यटीका श्रीमदानन्दज्ञानकृता समाप्ता ॥ १७॥ १८ ॥ ओँ । हरिः ओँ ॥

## अथर्ववेदीयप्रश्नोपनिषद्भाष्यम् ॥

ॐ नमः परमात्मने नमः। मन्त्रोक्तस्यार्थस्य विस्तरानुवादीदं ब्राह्मणमारभ्यते। ऋषिप्रश्नप्रतिवचनाख्यायिका तु विद्यास्तुतये एवं संवत्सरब्रह्मचर्य्यसंवासादियुक्तैस्तपोयुक्तैर्ग्राह्या पिप्पलादादिवत्सर्वज्ञकल्पैराचार्यैर्वक्तव्या च। न सा येन केनचिदिति विद्यां स्तौति। ब्रह्मचर्य्यादिसाधनसूचनाच्च तत्कर्त्तव्यता स्यात् ॥

---

ॐ परमात्मने नमः ॥ अथर्वणे ब्रह्म देवानामित्यादिमन्त्रैरेवात्मतत्त्वस्य निर्णीतत्वात्तत्रैव ब्राह्मणेन तदभिधानं पुनरुक्तमित्याशङ्क्य तस्यैवेह विस्तरेण प्राणोपासनादिसाधनसाहित्येनाभिधानान्न पौनरुक्त्यमिति वदन् ब्राह्मणमवतारयति। मन्त्रेति ॥ विस्तरेति ॥ मन्त्रे हि द्वे विद्ये वेदितव्ये परा चैवापरा चेति उक्त्वा तत्रापरा ऋग्वेद इत्यभिधेयमुक्तम्। सा चाविद्याकर्मरूपोपासनारूपा च। तत्र द्वितीया द्वितीयतृतीयप्रश्नाभ्यां विस्तीर्यते। आद्या कर्मकाण्डे विस्तृतेति नेह विस्तीर्यते। उभयोः फलन्तु ततो वैराग्यार्थं प्रथमप्रश्ने स्पष्टीक्रियते। परविद्या च अथ परा यया तदक्षरमधिगम्यत इत्युपक्रम्य कृत्स्नेन खण्डेन प्रतिपादिता। तत्रापि यथा सुदीप्तादित्यादिरुक्तस्याध्योक्तार्थस्य विस्तरार्थं चतुर्थः प्रश्नः। प्रणवो धनुरित्यत्रोक्तस्यार्थस्य स्पष्टीकरणार्थः षष्ठः प्रश्न इतीदं ब्राह्मणं तद्विस्तरानुवादीत्यर्थः। अत एव विषयप्रयोजनादिकं तत्रैवोक्तमिति नेह पुनरुच्यत इति बोध्यः ॥ आख्यायिकायाः ब्रह्मचर्यतपआदिसाधनविधाने पुराकल्परूपेण प्रयोजनान्तरमप्यस्तीत्याह। ब्रह्मचर्यादिसाधनेति ॥

अथर्ववेदीयप्रश्नोपनिषदारम्भः॥

ॐ नमःपरमात्मने॥ हरिः ॐ॥ सुकेशा च भारद्वाजः शैब्यश्च सत्यकामः सौर्य्यायणी च गार्ग्यः कौशल्यश्चाश्वलायनो भार्गवो वैदर्भिः कबन्धी कात्यायनस्ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति

---

सुकेशा च नामतः भरद्वाजस्यापत्यं भारद्वाजः। शैब्यश्च शिबेरपत्यं शैब्यः सत्यकामो नामतः। सौर्य्यायणी सूर्य्यस्यापत्यं सौर्य्यस्तस्यापत्यं सौर्य्यायणिश्छान्दसः सौर्य्यायणीति गार्ग्यः गर्गगोत्रोत्पन्नः। कौशल्यश्च नामतः अश्वलस्यापत्यमाश्वलायनः। भार्गवो भृगोर्गोत्रापत्यं भार्गवः वैदर्भिर्विदर्भे प्रभवः। कबन्धी नामतः कत्यस्यापत्यं कात्यायनः। विद्यमानप्रपितामहो यस्य सः। युवार्थप्रत्ययः। ते हैते ब्रह्मपरा अपरं ब्रह्म परत्वेन गतास्तदनुष्ठाननिष्ठाश्च ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणाः

---

सौर्य्यायणिरिति वक्तव्ये दैर्घ्यं छान्दसमित्यर्थः। युवप्रत्यय इति कत्यस्य युवापत्ये विवक्षिते फक्प्रत्यये तस्याऽयनादेशे च कात्यायन इति सिध्यतीत्यर्थः॥ ब्रह्मपराणां पुनर्ब्रह्मान्वेषणमयुक्तमित्यत आह। अपरं ब्रह्मेति॥ नन्वपरब्रह्मान्वेषणेनैव पुरुषार्थसिद्धेः किं परब्रह्मान्वेषणेनेत्याशङ्क्याह। किन्तदिति॥ तत्र कोऽतिशय इत्यर्थः। तस्यानित्यत्वेन तत्प्राप्तेरप्यनित्यहेतुत्वेनापुरुषार्थत्वात् परस्यैव नित्यत्वात्तत्प्राप्तेः स्वरूपावस्थानसाध्यत्वेनापि नित्यत्वाच्च तस्यैवान्वेषणीयत्वमिति परस्वरूप-

ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः ॥ १ ॥

तान् ह स ऋषिरुवाच भूय एव तपसा ब्रह्मचर्य्येण श्रद्धया संवत्सरं संवत्स्यथ यथाकामं

---

किन्तत्। यन्नित्यं विज्ञेयमिति तत्प्राप्त्यर्थं यथाकामं यतिष्याम इत्येवं तदन्वेषणं कुर्वन्तस्तदधिगमाय एष ह वै तत्सर्व्वं वक्ष्यतीत्याचार्य्यमुपजग्मुः। कथम्। ते ह समित्पाणयः समिद्भारगृहीतहस्ताः सन्तो भगवन्तं पूजावन्तं पिप्पलादमाचार्य्यमुपसन्ना उपजग्मुः ॥ १ ॥

तानेवमुपगतान् ह स किल ऋषिरुवाच भूयः पुनरेव यद्यपि पूर्व्वं तपस्विन एव तपसेन्द्रियसंयमेन तथापीह विशेषतो ब्रह्मचर्य्येण श्रद्धया चास्तिक्यबुद्ध्याऽऽदरवन्तः संवत्सरं कालं संवत्स्यथ सम्यग्गुरुशुश्रूषापराः सन्तो वत्स्यथ। ततो यथाकामं यो यस्य कामस्तमनतिक्रम्य

---

कथमायाह। यदिति॥ परंब्रह्मान्वेषमाणानां कोऽतिशय इत्यत आह। तत्प्राप्त्यर्थमिति॥ तत्प्राप्त्यर्थं तदधिगमाय तदन्वेषणं कुर्व्वन्तो यथाकामं यतिष्याम इत्येवमभिप्रायेणेत्यन्वयः॥ समिदिति॥ समिद्ग्रहणं यथायोग्यं दन्तकाष्ठाद्युपहारोपलक्षणार्थम्॥ १॥

तथापीत्यस्य तपस्विनः पूर्व्वमन्वयः। विशेषत इत्यस्य पूर्व्वेणान्वयः॥ निष्कृष्टमर्थमाह। यद्विषय इति॥ प्रश्नानामाद्यर्थत्वाभावे हेतुमाह। प्रश्नेति॥ अत इतिशब्दोऽध्याहार्य्यः। सर्व्वप्रश्नानां निर्णयादत्रानाद्यसम्भवादित्यर्थः॥ परंब्रह्मान्वेषमाणा इत्युपक्रान्तेऽस्मिन् ब्रह्मप्रकरणे प्रजा-

प्रश्नान् पृच्छथ यदि विज्ञास्यामः सर्वं ह वो वक्ष्याम इति ॥ २ ॥ अथ कबन्धी कात्यायन उपेत्य पप्रच्छ । भगवन् कुतो ह वा इमाः प्रजाः प्रजायन्त इति ॥ ३ ॥

---

यद्विषये यस्य जिज्ञासा तद्विषयान् प्रश्नान् पृच्छथ । यदि तद्युष्मत्पृष्टं विज्ञास्यामः । अनुद्धतत्वप्रदर्शनार्थो यदिशब्दो नाज्ञानसंशयार्थः । प्रश्ननिर्णयादवसीयते सर्वं ह वो वः पृष्टं वक्ष्याम इति ॥ २ ॥ अथ संवत्सरादूर्ध्वं कबन्धी कात्यायन उपेत्यागत्य पप्रच्छ पृष्टवान् । हे भगवन् कुतः कस्माद्ध वै इमा ब्राह्मणाद्याः प्रजाः प्रजायन्ते उत्पद्यन्ते । अपरविद्याकर्मणोः समुच्चितासमुच्चितयोर्यत्कार्यं या गतिस्तद्वक्तव्यमिति तदर्थोऽयं प्रश्नः ॥ ३ ॥

---

पतिकर्तृकप्रजादिविषयप्रश्नप्रत्युक्तेरवतारितमायद्युप्रश्नप्रत्युक्तिरूपायाः श्रुतेस्तात्पर्यमाह । अपरविद्येति ॥ तेषामसौ विरजो ब्रह्मलोक इति समुच्चितकार्यस्य ब्रह्मलोकस्याथोत्तरेणेति तद्गतेर्देवयानमार्गस्य चेह वक्ष्यमाणत्वादित्यर्थः । इदमुपलक्षणं केवलकर्मणश्चेत्यपि द्रष्टव्यम् ॥ केवलकर्म कार्यस्यापि चन्द्रलोकस्य तद्गतेः पितृयानस्य च । तेषामेवैष ब्रह्मलोकः । प्रजाकामा दक्षिणं प्रतिपद्यन्त इति वक्ष्यमाणत्वादिति । यद्यपीदमपि परब्रह्मजिज्ञासावसरेऽसङ्गतमेव तथापि केवलकर्म कार्यात्समुच्चितं कर्म कार्याच्च विरक्तस्यैव तत्राधिकार इति । ततो वैराग्यार्थमिदमुच्यते । यद्यपि श्रुततः स्पष्टं प्रतीयते तथापि तदुक्तौ प्रयोजनाभावात्पृच्छाव्याजेन परविद्याफलमेवात्रोच्यत इति भावः ॥ २ ॥ ३ ॥

तस्मै स होवाच प्रजाकामो वै प्रजापतिः स तपोऽतप्यत स तपस्तप्त्वा स मिथुनमुत्पादयते।

---

तस्मा एवं पृष्टवते स होवाच। तदपाकरणायाह। प्रजाकामः प्रजा आत्मनः सिसृक्षुर्वै प्रजापतिः सर्व्वात्मा सन् जगत् स्रक्ष्यामीत्येवं विज्ञानवान् यथोक्तकारी तद्भावभावितः कल्पादौ निर्वृतो हिरण्यगर्भः सृज्यमानानां प्रजानां स्थावरजङ्गमानां पतिः सन् जन्मान्तरभावितं ज्ञानं श्रुतिप्रकाशितार्थविषयं तपोऽन्वालोचयदतप्यत। अथ तु स एवं तपस्तप्त्वा श्रौतं ज्ञानमन्वालोच्य सृष्टिसाधनभूतं

---

प्रश्न इति प्रतिवचनश्चेत्यपि द्रष्टव्यम्॥ ताभ्यामेव तदुक्तेरिति तस्मै स होवाचेति प्रतिज्ञातं विशेषतो दर्शयति। तदपाकरणायेति॥ आद्यस्य सविशेषस्य प्रश्नस्य सविशेषस्यैव यथोक्तकारीति ज्ञानकर्म्मसमुच्चयकारीत्यर्थः। तद्भावभावित इति प्रजापतिरहं सर्व्वात्मेत्युपासनयाधीनप्रजापतिभावनायुक्त इत्यर्थः। पूर्व्वकल्पीयतद्भावभावित एतत्कल्पादौ हिरण्यगर्भात्मना निर्वृत्तः प्रजापतिः सन् पश्चात्प्रजाकामः सन् तपो जन्मान्तरभावितं ज्ञानं श्रुतिप्रकाशितार्थं विषयमाश्रित्य अन्वालोचयन्नित्यादिना ततृसंस्कारसहितोऽश्व ज्ञानमुत्पादितवानित्यन्वयः॥ तत प्रथममादित्यचन्द्रोत्पादनेन तद्भावमापद्य पश्चाच्चन्द्रादित्यसाध्यसंवत्सरभावमापद्य एवमेव तदवयवावयवमासपक्षाहोरात्रभावमापद्य ततस्तत्साध्यव्रीह्याद्यन्नभावं रेतोभावञ्चापद्य तेन रेतसा प्रजाः सृजेयमित्येवं निश्चित्य प्रथमं रयिं प्राणशब्दितसूर्य्यचन्द्रद्वन्द्वमुत्पादितवानित्याह। स एवमिति॥ रयिशब्देन धनवाचिना भोग्यजातं लक्षयित्वा भोग्यस्य सोमकिरणाश्रितयुक्तत्वात्तद्द्वारा सोमो लक्ष्यत इत्याह। रयिश्चेति॥ एवं प्राणशब्देनापि। अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः। प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधमिति

रयिञ्च प्राणञ्चेत्येतौ मे बहुधा प्रजाः करिष्यत इति ॥ ४ ॥

आदित्यो ह वै प्राणो रयिरेव चन्द्रमा

---

मैथुनमुत्पादयते मिथुनं द्वन्द्वमुत्पादितवान्। रयिञ्च सोममन्नं प्राणञ्चाग्निमत्तारमेतावग्नीषोमावत्त्रन्नभूतौ मे मम बहुधाऽनेकधा प्रजाः करिष्यत इत्येवं सञ्चिन्त्याण्डोत्पत्तिक्रमेण सूर्य्याचन्द्रमसावकल्पयत् ॥ ४ ॥

तत्रादित्यो ह वै प्राणोऽत्ताग्निः। रयिरेव चन्द्रमाः। रयिरेवान्नं सोम एव। तदेतदेकमत्ता चान्नञ्च प्रजापतिरेकं तु मिथुनम्। गुणप्रधानकृतो भेदः कथम्। रयिर्वै अन्नं वै एतत्सर्वं किन्तद्यन्मूर्त्तञ्च स्थूलञ्च अमूर्त्तञ्च सूक्ष्मञ्च मूर्त्तामूर्त्ते

---

श्रुतेः। अग्नेः प्राणसम्बन्धादग्निर्भोक्ता सम्पन्न इत्याह। प्राणञ्चेति॥ अग्नीषोमयोरण्डान्तर्गतत्वेनाण्डोत्पत्त्यनन्तरमुत्पत्तिरित्याशयेनाह। अण्डेत्यत्तीति॥ उद्यन्तं वाऽऽदित्यमग्निरनुसमारोहतीति श्रुतेः। सूर्य्याग्न्योरेकत्वमभिप्रेत्याग्निसूर्य्यपदेनाह। सूर्य्याचन्द्रमसाविति ॥ ४ ॥

रयिप्राणौ श्रुतिः स्वयमेव व्याचष्ट इत्याह। तत्रादित्य इति॥ प्रजापतेरेव संवत्सरादिप्रजापर्य्यन्तं स्रष्टृत्वं वक्तुं रयिप्राणयोः संवत्सरस्रष्ट्रोः प्रजापत्युपादानत्वात्प्रजापत्यात्मत्वमाह। तदेतदेकमिति॥ कथमेकस्यात्ताऽन्नञ्चेति भेद इत्याशङ्क्य तस्यैव गुणभावविवक्षयाऽन्नत्वं प्राधान्यविवक्षया चात्तृत्वमिति भेद इत्याह। गुणेति॥ रयिप्राणयोः कथं प्रजापत्यात्मत्वमिति शङ्कते। कथमिति॥ तत्र रयेः सर्व्वात्मकत्वात्प्रजापतित्वमित्याह। रयिरिति॥ अमूर्त्तस्यापि वाय्वादेः केनचिद्दृश्यमानत्वाद्रयित्वमित्यर्थः। ननु मूर्त्तामूर्त्तयोरन्नयोरुभयोरपि रयि-

रयिर्वा एतत्सर्वं यन्मूर्त्तञ्चामूर्त्तञ्च तस्मान्मूर्त्तिरेव रयिः ॥ ५ ॥

अथादित्य उदयन्यत्प्राचीं दिशं प्रविशति तेन प्राच्यान् प्राणान्रश्मिषु सन्निधत्ते। यद्दक्षिणां यत्प्रतीचीं यदुदीचीं यदधो यदूर्द्ध्वं यदन्तरा दिशो

---

अन्नमन्नरूपे रयिरेव। तस्मात्प्रविभक्तादमूर्त्ताद्यदन्यन्मूर्त्तंरूपं मूर्त्तिः सैव रयिरमूर्त्तं अन्नाद्यमानत्वात् ॥ ५ ॥

तथाऽमूर्त्तोऽपि प्राणोऽत्ता सर्वमेव यच्चाद्यम्। कथं अथ आदित्य उदयन् उद्गच्छन् यत्प्राचीं दिशं प्रविशति तेन तत्प्राचीं दिशं स्वप्रकाशेन प्रविशति व्याप्नोति। तेन स्वात्मव्याप्त्या सर्वांस्तत्स्थान् प्राणान् प्राच्यानन्तर्भूतान् रश्मिषु स्वात्मावभासरूपेषु व्याप्तिमत्सु व्याप्तत्वात्प्राणिनः सन्निधत्ते सन्निवेशयति आत्मभूतान् करोतीत्यर्थः। तथैव यत्प्रविशति दक्षिणां यत्प्रतीचीं यदुदीचीमध ऊर्द्ध्वं यत्प्रविशति यच्चान्तरा दिशो कोणदिशोऽवान्तरदिशो यच्चान्यत्सर्वं

---

त्येऽद्यमेव रयिरिति कथमुक्तमित्याशङ्क्य मूर्त्तामूर्त्तत्वे विभागमकृत्वा सर्वस्य गुणभावमात्रविवक्षया सर्वं रयिरित्युच्यते। यदा तूभे विभज्य गुणप्रधानभावेन विवक्ष्येते तदाऽमूर्त्तेन प्राणेन मूर्त्तस्याद्यमानत्वात् मूर्त्तस्यैव रयित्वमित्याह। तस्मादिति ॥ ५ ॥

रयिवद्भिरस्याद्यस्य प्रजापतित्वार्थं सर्वात्मत्वमुक्त्वा प्राणस्यापि तदर्थमेव सर्वात्मत्वमुच्यते अथादित्य इति वाक्येनेत्याह। तथैवादिना ॥ यच्चाद्यं तदपि प्राणोऽत्ता प्राणोऽपि सर्वमेवेति सर्वात्मक इत्यर्थः। स्वप्रकाशे

यत्सर्वं प्रकाशयति तेन सर्व्वान् प्राणान् रश्मिषु सन्निधत्ते ॥६॥ स एष वैश्वानरो विश्वरूपः प्राणो ऽग्निरुदयते। तदेतदृचाभ्युक्तम् ॥ ७ ॥ विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम्।

---

प्रकाशयति तेन स्वप्रकाशव्याप्त्या सर्व्वान् सर्वदिक्स्थान् प्राणान् रश्मिषु सन्निधत्ते ॥ ६॥ स एषोऽत्ता प्राणो वैश्वानरः सर्व्वात्मा विश्वरूपो विश्वात्मत्वाच्च प्राणोऽग्निश्च स एवाऽत्तोदयते उद्गच्छति प्रत्यहं सर्व्वा दिश आत्मसात्कुर्वन्। तदेतदुक्तं वस्तु ऋचा मन्त्रेणाप्यभ्युक्तम्॥७॥ विश्वरूपं सर्वरूपं हरिणं रश्मिमन्तं जातवेदसं जातप्रज्ञानं परायणं सर्वप्राणाश्रयं ज्योतिरेकं सर्वप्राणिनां चक्षुर्भूतमद्वितीयं तपन्तं तापक्रियां कुर्व्वाणं स्वात्मानं सूर्य्यं सूरयो विज्ञातवन्तो ब्रह्मविदः। कोऽसौ यं विज्ञातवन्तः। सहस्र-

---

मेति स्वकीयप्रकाशेन स्वप्रभयेत्यर्थः। अन्तर्भूतामिति यद्यपि प्राणस्यात्तृत्वमुक्तं तथापि रयिश्वैतत्सर्व्वमित्यत्रामूर्त्तस्य प्राणस्यापि गुणभावविवक्षया अत्तृत्वमुक्तमिति। तयोश्चात्मावभासरूपेष्विति स्वात्मप्रभारूपेषु रश्मिष्वित्यर्थः। व्याप्त्यादिति सम्बद्धत्वादित्यर्थः॥ तस्य प्रत्यक्षत्वमाह। स एव इति॥ वैश्वानर इति नरा जीवा विश्वे च ते नराश्च विश्वानराः स एव वैश्वानरः सर्व्वजीवात्मक इत्यर्थः। विश्वरूपः सर्वप्रपञ्चात्मक इति भेदः। उक्तं वक्ष्यतीति आदित्यस्योक्तं माहात्म्यमित्यर्थः। विश्वरूपमित्यादिद्वितीयान्तानां सहस्ररश्मिरित्यादिप्रथमान्तानां सामानाधिकरण्येनान्वयायोगादध्याहारं कृत्वा वाक्याभेदेन व्याचष्टे। स्वात्मानमित्यादिना॥ समिधुनस्तुत्यादयत इत्युपक्रान्तं मिथुनरूपं हरति। यश्चाविति॥ यथाऽसौ चन्द्रमा यथामूर्त्तः प्राणस्तदेवं

सहस्ररश्मिः शतधा वर्त्तमानः प्राणः प्रजाना-मुदयत्येष सूर्य्यः ॥ ८ ॥

संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणञ्चोत्तरञ्च। तद्ये ह वै तदिष्टापूर्त्ते कृतमित्युपा-

---

रश्मिरनेकरश्मिः शतधा अनेकधा प्राणिभेदेन वर्त्तमानः प्रजानामुदयत्येष सूर्य्यः ॥ ८ ॥

यचासौ चन्द्रमा मूर्त्तिरन्नममूर्त्तिश्च प्राणोऽस्यादित्यस्तदेतदेकमेतन्मिथुनं कथं सर्वं प्रजाः करिष्यत इति। उच्यते तदेव। कालः संवत्सरो वै प्रजापतिस्तन्निर्वर्त्यत्वात्संवत्सरस्य। चन्द्रादित्यनिर्वर्त्यतिथ्यहोरात्रसमुदायो हि संवत्सरस्तदनन्यत्वाद्रयिप्राणस्तन्मिथुनात्मक एवेत्युच्यते तत्कथं तस्य संवत्सरस्य प्रजापतेरयने मार्गौ द्वौ दक्षिणं चोत्तरञ्च। द्वे प्रसिद्धे ह्ययने षण्मासलक्षणे याभ्यां दक्षिणेनोत्तरेण च याति सविता केवलकर्मिणां ज्ञानसंयुक्तकर्म्मवताञ्च लोकान् विदधत्। कथं तत्र च आद्य-

---

मिथुनं सर्व्वं सर्व्वात्मकमित्यन्वयः। एतौ मे बहुधाः प्रजाः करिष्यत इत्युक्तं तत्केन प्रकारेणेति पृच्छति। कथमिति ॥ ६ ॥ ७ ॥ ८ ॥

रयिप्राणयोः अन्नतृत्वादिद्वारा प्रजास्रष्टृत्वमित्याह। उच्यत इति॥ तदेव मिथुनमेव संवत्सरः कालः। स च प्रजापतिः प्रजापत्यात्मकमिथुनं निर्व्वर्त्यत्वादित्येत्याह। तन्निर्वर्त्यत्वादिति॥ तदुपपादयति। चन्द्रेति॥ चन्द्रनिर्व्वर्त्त्यास्तिथय आदित्यनिर्व्वर्त्त्या-श्चाहोरात्रा इति विभागस्तन्निर्व्वर्त्त्यत्वेऽपि कालस्य कथं तदात्मतेत्याशङ्क्य कार्य्यकारणयोरभेदादित्याह। तदनन्यत्वादिति॥ न केवलं तिथ्यादिद्वारा चन्द्रादिनिर्व्वर्त्त्यत्वं संवत्सरस्य किन्त्वयन-

सते । ते चान्द्रमसमेव लोकमभिजयन्ते । त एव पुनरावर्त्तन्ते तस्मादेते ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते । एष ह वै रयिर्यः पितृयाणः ॥९॥

---

चादिषु ये वैतदुपासत इति क्रियाविशेषणो द्वितीयश्चब्दः । इष्टञ्च पूर्त्तञ्च इष्टापूर्त्ते इत्यादि कृतमेवोपासते नाकृतं नित्यं ते चान्द्रमसं चन्द्रमसि भवं प्रजापतेर्मिथुनात्मकस्यांशं रयिमन्नभूतं लोकमभिजयन्ते कृतरूपत्वाच्चान्द्रमसस्य । तएव च कृतक्षयात्पुनरावर्त्तन्ते इमं लोकं हीनतरं वा विशन्तीति ह्युक्तम् । यस्मादेवं प्रजापतिमन्नात्मकं फलत्वेनाभिनिर्वर्त्तयन्ति चन्द्रमिष्टापूर्त्तकर्म्मणा ऋषयः स्वर्ग-

---

द्वारापीति वक्तुं तस्यायने इत्यादिवाक्यं तत्प्रश्नपूर्व्वकं व्याचष्टे । तत्कथमिति ॥ चन्द्रादित्यनिर्व्वर्त्यत्वं कुतो हेतुमत्त्वादित्यर्थः । केवलकर्म्मिणां लोकान् विदधद्दक्षिणेन याति । ज्ञानयुक्तकर्म्मवतां लोकान् विदधदुत्तरेण यातीत्यन्वयः । सवितेत्युपलक्षणं चन्द्रस्यापि ज्येष्ठादि दक्षिणायनं मार्गशीर्षाद्युत्तरायणमिति श्रुतिषु प्रसिद्धेः । ततश्च कर्म्मिणां लोकान् विधातुं तयोर्दक्षिणोत्तराभ्यां याम्योत्तरलोकाभ्यां गमनात्तन्निमित्तत्वाच्चायनद्वयप्रसिद्धेस्तन्निर्व्वर्त्यत्वं तयोरनयोरिति तद्द्वारा संवत्सरस्यापि तन्निर्व्वर्त्यत्वमित्यर्थः ॥ चन्द्रादित्ययोः कथं लोकविधायकत्वमिति पृच्छति । कथमिति ॥ चन्द्रादित्यनिर्व्वर्त्यदक्षिणोत्तरायणद्वारा लोकप्राप्तेः प्राप्यस्य लोकस्यापि चन्द्रादित्यात्मकत्वाच्च तयोस्तद्विधायकत्वमिति तद्धे ह वा इत्यादिवाक्येन परिहरति । तत्रेति ॥ इष्टञ्चेति ॥ अग्निहोत्रं तपः सत्यं वेदानामनुपालनम् । आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते । वापीकूपतडागादिदेवतायतनानि च । अन्नप्रदानमारामः पूर्त्तमित्यभिधीयत इत्युभयोर्भेदः कृतमित्युपासत इति । कृतमन्योपरितन-

अथोत्तरेण तपसा ब्रह्मचर्य्येण श्रद्धया विद्यया-त्मानमन्विष्यादित्यमभिजयन्ते एतद्वै प्राणाना-

---

दृष्टार: प्रजाकामा: प्रजार्थिनो गृहस्था:। तस्मात् स्वकृतमेव दक्षिणं दक्षिणायनोपलक्षितं चन्द्रं प्रतिपद्यन्ते। एष ह वै रयिमन्न य: पितृयाण: पितृयाणोपलक्षितश्चन्द्र:॥ ९॥

अथोत्तरेणायनेन प्राजापत्यं प्राणमत्तारमादित्य-मभिजयन्ते। केन। तपसा इन्द्रियजयेन विशेषतो ब्रह्मचर्य्येण श्रद्धया विद्यया च प्रजापत्यात्मविषयया आत्मानं प्राणं सूर्य्यं जगतस्तस्थुषश्चान्विष्याहमस्मीति विदित्वाऽऽदित्यमभिज-यन्तेऽभिप्राप्नुवन्ति। एतद्वै आयतनं सर्वप्राणानां सामान्य-मायतनमाश्रय: एतदमृतमविनाशि अभयं अत एव भय-

---

मितिशब्दविशिष्टपूर्वे इति पूर्वशब्दोपश्लोक्यादिशब्दपर्य्यायतया व्याचष्टे। इत्यादीति॥ इत्तमादिशब्दार्थ:। कृतमेवोपाददते कार्य्यमेवा-नुतिष्ठन्तीत्यर्थ:। इदञ्च विशेषणं पुनरावृत्तौ हेतुतयोक्तम्। कृतरूपे-ष्वादिजन्यत्वाच्चन्द्रस्यापि कृतत्वेनानित्यत्वात्पुनरावृत्तिरित्याह। कृत-रूपत्वादिति॥ पुनरावृत्तौ मन्त्रवाक्यं प्रमाणयति। इमं लोकमिति॥ ९॥

अथेति मार्गान्तरारम्भार्थोऽथशब्द:। प्रजापत्यात्मविषयेति तत्तादात्म्यविषयेत्यर्थ:॥ आदित्यमभिजयन्त इति पूर्वमन्वयार्थमुक्तमि-दानीं व्याख्यानार्थमिति द्रष्टव्यम्। सामान्यमिति समष्टिरूपमित्यर्थ:। विद्यावतामिति कर्म्मानधिकारिणां अत एव केवलोपासनवतामित्यर्थ:। कर्म्मिणाञ्च ज्ञानवतामिति समुच्चयवतामित्यर्थ:। ननु केवलकर्म्मिणाम-प्यादित्यप्राप्तावपुनरावृत्तिर्भविष्यतीत्याशङ्क्य तेषामादित्यप्राप्तिरेव नास्तीति वक्तुमित्येष इति वाक्यं व्याचष्टे। इति यस्मादिति॥ तस्मात्तेषामादि-

मायतनमेतदमृतमभयमेतत् परायणमेतस्मान्न पुनरावर्त्तन्त इत्येष निरोधस्तदेष श्लोकः ॥ १० ॥ पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे

---

वर्जितं न चन्द्रवत् क्षयवृद्धिभयवदित्येतत्परायणं परागतिर्विद्यावतां कर्म्मिणाञ्च ज्ञानवतामेतस्मान्न पुनरावर्त्तन्ते यथेतरे केवलकर्म्मिण इति यस्मादेषोऽविदुषां निरोध आदित्याद्धि निरुद्धा अविद्वांसो नैते संवत्सरमादित्यमात्मानं प्राणमभिप्राप्नुवन्ति। स हि संवत्सरः कालात्माऽविदुषां निरोधः। तत्तत्रास्मिन्नर्थ एष श्लोको मन्त्रः ॥ १० ॥

पञ्चपादं पञ्चर्त्तवः पादा इवास्य संवत्सरात्मन आदित्यस्य तैरसौ पादैरिवर्त्तुभिर्वर्त्तते। हेमन्तशिशि-

---

त्वप्राप्तिरनाशश्चेति। शेषः। यद्वा तस्यायने इत्यारभ्य इत्येष इति। अतः श्रुतिवाक्यमनयोः रयिप्राणरूपत्वप्रतिपादनपरतया व्याख्येयम्। तथा हि संवत्सरस्य रयिप्राणमिथुननिर्व्वर्त्त्यत्वे रयिप्राणरूपत्वञ्च वक्तव्यं तत्कथमिति पृच्छति। कथमिति॥ तदवयवयोरनयोस्तद्रूपत्वं वक्तुं तयोः प्रथमं प्रसिद्धिमाह। तस्येति॥ प्रसिद्धिमेवाह। याभ्यामिति॥ एवमपि कथं तयोस्तदात्मकत्वमित्याह। कथमिति॥ दक्षिणायनस्य रयित्वं वक्तुं कर्म्मिणां रयिरूपचन्द्रनिर्व्वर्त्तकत्वमाह। तत्तत्तेति॥ लोकमिति सोमरूपं शरीरमित्यर्थः॥ तस्य कर्म्मकृतत्वं पुनरावृत्त्या साधयति। कृतरूपत्वादिति॥ रयिरूपचन्द्रस्य दक्षिणायनद्वारा प्राप्यत्वात्तस्यायनस्य तदन्तर्भाव इति वक्तुं तस्य कर्म्मिभिः प्राप्यत्वमाह। यस्मादिति॥ एवञ्चैतस्य रयित्वं सिद्धमित्याह एष इति॥ १०॥

पितृयाणोपलक्षित इति तत्प्राप्य इत्यर्थः। ततश्च तद्विशेष-

अर्द्धे पुरीषिणम् । अथेमे अन्य उ परे विचक्षणं सप्तचक्रे षडर आहुरर्पितमिति ॥ ११ ॥

---

रावेक्षीलत्येयं कल्पना । पितरं सर्वस्य जनयितृत्वात्पितृत्वं तस्य द्वादशमासा ऋतवोऽवयवा आकरणं वा अवयवविकरणमस्य द्वादशमासैस्तं द्वादशाकृतिं दिवः क्व लोकान्तरे ऊर्ध्वे अर्द्धस्थाने तृतीयस्यां दिवीत्यर्थः । पुरीषिणं पुरीषवन्तमुदकवन्तमाहुः कालविदः । विचक्षणं निपुणं सर्वज्ञं सप्तचक्रे सप्तहयरूपे चक्रे सततं गतिकालात्मनि षडरे षडृतुमति आहुः सर्वमिदं जगत्कथयन्ति । अर्पितमरा इव रथनाभौ निविष्टमिति । यदि पञ्चपादो द्वाद-

---

षष्ठायनस्यापि रयित्वमित्यर्थः । इदानीमुत्तरायणस्य प्राणत्वमाह । अथेति ॥ प्राणरूपादित्यप्रापकत्वादुत्तरायणस्य तस्यापि प्राणत्वमिति संवत्सरस्य रयिप्राणमिथुनात्मकत्वमिति तत्कार्यत्वं युक्तमिति भावः ॥ अस्य कर्मसाध्यचन्द्रवैलक्षण्यमाह । एतद्वा इति ॥ इतरत्सर्वं समानम् ॥ पञ्चपादे इति संवत्सरस्वरूप इत्यर्थः । इयं कल्पनेति पञ्चधा कल्पनेत्यर्थः । जनयितृत्वादिति संवत्सरात्मककालस्य सर्वजनकत्वादित्यर्थः ॥ सामानाधिकरण्यबहुव्रीहित्वेन व्याख्या व्यधिकरणबहुव्रीहिमेवाह । आकरणं वेति ॥ अवयवविकरणमित्यवयवित्वेन करणमित्यर्थः । पक्ष-द्वयेऽप्येक एवार्थः ॥ क्व लोकादिति ॥ आकाशरूपादन्तरिक्षलोकादि-त्यर्थः । अन्यथा स्वर्गलोकान्तरस्य चतुर्थत्वेन तृतीयस्यामित्यनन्वयापत्तेः । उदकवन्तमिति आदित्याज्जायते वृष्टिरिति स्मृतेरित्यर्थः । अन्ये इत्यस्य पूर्वार्द्धगतेनाहुरित्यनेन सम्बन्धः । उ इति तु वक्ष्यमाणार्थे निपातः ॥ परे तु तमेव विचक्षणमाहुरित्यन्वयः ॥ किमाहुरित्यत आह । सप्त-चक्र इति । तस्मिन्विचक्षणे सप्तचक्राद्यात्मके सर्वमिदं जगदर्पितमित्या

मासो वै प्रजापतिस्तस्य कृष्णपक्ष एव रयि-

---

शाकृतिर्यदि सप्तचक्रः षडरः सर्वथापि संवत्सरः कालात्मा प्रजापतिश्चन्द्रादित्यलक्षणोऽपि जगतः कारणम् ॥ ११ ॥

यस्मिन्निदं श्रितं विश्वं स एव प्रजापतिः संवत्सराख्यः स्वावयवे मासे कृत्स्नः परिसमाप्यते । मासो वै प्रजापति-र्यथोक्तलक्षण एव । मिथुनात्मकस्तस्य मासात्मनः प्रजापते-रेको भागः कृष्णपक्षो रयिरन्नं चन्द्रमा अपरो भागः । शुक्लः शुक्लपक्षः प्राण आदित्योऽत्ताग्निर्यस्माच्छुक्लपक्षा-त्मानं प्राणं सर्वमेव पश्यन्ति तस्मात्प्राणदर्शिन एते ऋषयः कृष्णपक्षेऽपीष्टं यागं कुर्वन्तः शुक्लपक्ष एव कुर्वन्ति

---

ऊरित्यर्थः । मतद्वयेऽपि कीदृशोऽर्थभेद इत्यत आह । यदीति ॥ पूर्वमते ऋतूनां पादत्वकल्पनया मासानामवयवत्वकल्पनयाऽऽदित्यात्मना संवत्सरः काल एवोक्तः ॥ द्वितीये तु हेमन्तशिशिरौ पृथक्कृत्य षण्णामृतूनामरत्व-कल्पनया संवत्सरस्य परिवर्त्तनगुणयोगेन चक्रत्वकल्पनया कालप्राधान्येन सर्वाश्रयत्वेन च स एवोक्तः । पक्षद्वयेऽपि गुणभेदेन कल्पनाभेदेन च भेदो न धर्म्मिभेद इत्यर्थः ॥ ११ ॥

कारणत्वे श्लोकोक्तं जगदाश्रयत्वं हेतुमाह । यस्मिन्निति ॥ संवत्स-रस्यापि मासाहोरात्ररूपव्यतिरेकेणौषध्यादिजनकत्वाभावात्तस्य मासाद्यात्मकत्वमाह । स एवेति ॥ यथोक्तेति संवत्सररूपो रयिप्राण-मिथुनात्मक इत्यर्थः । शुक्लकृष्णयोरपि दर्शपूर्णमासादिकर्म्मानुष्ठा-नदर्शनात् ॥ तस्मादेते ऋषय इत्यादिवाक्यमनुपपन्नमित्याशङ्क्य शुक्लस्य प्राणात्मत्वज्ञानस्तुतिपरतया व्याचष्टे । यस्मादिति ॥ यस्मात्प्राणं सर्व्वमेव सर्व्वात्मकमेवपश्यन्ति तस्मात् प्राणव्यतिरेकेण कृष्णपक्षस्तैर्न

शुक्लः प्राणस्तस्मादेते ऋषयः शुक्ल इष्टिं कुर्वन्तीतर इतरस्मिन् ॥ १२ ॥

अहोरात्रो वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः प्राणं वा एते प्रस्कन्दन्ति । ये

---

प्राणव्यतिरेकेण कृष्णपक्षमेनं पश्यन्ते यस्मादितरे तु प्राणं न पश्यन्तीत्यदर्शनलक्षणं कृष्णात्मानमेव पश्यन्ति । इतर इतरस्मिन् कृष्णपक्ष एव कुर्वन्ति शुक्ले कुर्वन्तोऽपि ॥ १२ ॥

सोऽपि मासात्मा प्रजापतिः स्वावयवेऽहोरात्रे परिसमाप्यते । पूर्ववत् । तस्याप्यहरेव प्राणोऽत्ताऽग्नीरात्रिरेव रयिः पूर्ववत् प्राणमहरात्मानं वै एते प्रस्कन्दन्ति निर्गमयन्ति शोषयन्ति वा स्वात्मनो विच्छिद्यापनयन्ति । के । ये दिवाऽहनि रत्या रतिकारणभूतया सह स्त्रिया संयुज्यन्ते मिथुनमैथुनमाचरन्ति मूढाः । यत एवं तस्मात्तन्न

---

दृश्यते तस्मादित्यन्वयः । प्राणस्य शुक्लपक्षात्मकत्वात् कृष्णपक्षादिसर्वात्मतः प्राणात्मत्वाभावद्वारा कृष्णपक्षस्यापि शुक्लपक्षत्वे सति कृष्णे कुर्वन्तोऽपि प्रकाशात्मके शुक्ल एव कुर्वन्तीति शुक्लपक्षे प्राणत्वज्ञानस्य स्तुतिरित्यर्थः ॥ एतत्सत्यमेव ज्ञानरहितान्निन्दति । इतरे त्विति ॥ ये तु सर्वात्मानं प्राणं न पश्यन्त्यप्रत्यक्तेषां शुक्लपक्षः प्राणत्वेनाज्ञायमानत्वादज्ञानात्मकः सन् कृष्णपक्षत्वमापद्यते अतः शुक्ले कुर्वन्तोऽपि अदर्शनात्मकत्वात्प्रकाशरहिते कृष्ण एव कुर्वन्तीति ते निन्द्यन्त इत्यर्थः ॥ उक्तमर्थं सुखावबोधं करोति । इतर इति ॥ १२ ॥

रयिः पूर्ववदिति । रयिरन्नं चन्द्रमा इत्यर्थः । अहः प्राणत्वोक्ति-

दिवा रत्या संयुज्यन्ते ब्रह्मचर्य्यमेव तद्यद्रात्रौ रत्या संयुज्यन्ते ॥ १३ ॥

अन्नं वै प्रजापतिस्ततो ह वै तद्रेतस्तस्मादिमाः प्रजाः प्रजायन्त इति ॥ १४ ॥ तद्ये ह

---

कर्त्तव्यमिति प्रतिषेधः प्रासङ्गिकः। यद्रात्रौ संयुज्यन्ते रत्या ऋतौ ब्रह्मचर्य्यमेव तदिति प्रशस्तत्वादृतौ भार्य्यागमनं कर्त्तव्यमिति। अयमपि प्रासङ्गिको विधिः। प्रकृतन्तूच्यते सोऽहोरात्रात्मकः प्रजापतिर्व्रीहियवाद्यन्नात्मना व्यवस्थितः ॥ १३ ॥

एवं क्रमेणाहोरात्रः प्रजापतिरन्ने विपरिणमते अन्नं वै प्रजापतिः। कथम्। ततस्तस्माद्ध वै रेतो नृबीजं तत्प्रजाकारणं तस्माद्योषिति सिक्तादिमा मनुष्यादिलक्षणाः प्रजाः प्रजायन्ते यत्पृष्टं कुतो ह वै प्रजाः प्रजायन्त इति। तदेवं चन्द्रादित्यमिथुनादिक्रमेणाहोरात्रान्तेनान्नरेतोद्वारेणेमाः प्रजाः प्रजायन्त इति निर्णीतम् ॥ १४ ॥ तत्रैवं सति ये गृहस्था ह वै इति प्रसिद्धस्मरणार्थौ निपातौ। तत्प्रजा-

---

प्रसङ्गादृक्षि मैथुनं निषेधति। प्राणमिति ॥ ऋतमिति ॥ कुतो ह वा इमाः प्रजाः प्रजायन्त इति पृष्टमित्यर्थः। पूर्वोक्तं सर्वमेतदुपयो गितयोक्तं न तु साक्षात्प्रकृतमिति भावः ॥ १३ ॥

एवं क्रमेणेति रयिप्राणसंवत्सरादिक्रमेण परिणम्य व्रीह्याद्यात्मना व्यवस्थितः सन् अन्नं वै प्रजापतिरन्नात्मको जातः प्रजापतिरित्यन्वयः। कथमिति ॥ अन्नरूपत्वेऽपि तस्य कथं प्रजाजनकत्वमित्यर्थः। नत इति भक्षितादन्नादित्यर्थः। रेत इति ॥ योषित स्वाम्बु पलक्षणं

तत्प्रजापतिव्रतं चरन्ति ते मिथुनमुत्पादयन्ते। तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्मचर्य्यं येषु सत्यं प्रतिष्ठितम् ॥ १ ॥ तेषामसौ विरजो

---

पतेर्व्रतम्। ऋतौ भार्य्यागमनं चरन्ति कुर्व्वन्ति तेषां दृष्टफलमिदम्। किम्। ते मिथुनं पुत्त्रं दुहितरञ्चोत्पादयन्ते। अदृष्टञ्च फलमिष्टापूर्त्तदत्तकारिणां तेषामेव। एष यश्चान्द्रमसो ब्रह्मलोकः पितृयाणलक्षणो येषां तपः स्नातकव्रतादीनि ब्रह्मचर्य्यम्। ऋतावन्यत्र मैथुनासमाचरणं ब्रह्मचर्य्यम्। येषु च सत्यमनृतवर्ज्जनं प्रतिष्ठितमव्यभिचारितया वर्त्तते ॥ १५ ॥ यस्तु पुनरादित्योपलक्षित उत्तरायणः प्राणात्मभावो विरजः शुद्धो न चन्द्रब्रह्मलोकवद्रजस्वलो वृद्धिक्षयादियुक्तोऽसौ। केषां तेषामित्युच्यते। यथा गृहस्थानामनेकविरुद्धसंव्यवहारप्रयोजनवत्त्वाज्जिह्मं कौटिल्यं वक्रभावोऽवश्यम्भावि। तथा न येषु जिह्मम्। यथा च गृहस्थानां क्रीडादिनिमित्तमनृतमवर्जनीयं तथा न येषु

---

त्तुल्यत्वादिति। प्रजापतिव्रताचरणमात्रेणाऽदृष्टफलं चन्द्रलोकः प्राप्यते मूर्खाणामपि मनुष्याणामिति आह। इष्टापूर्त्तेति॥ चान्द्रमसो ब्रह्मलोक इत्यपरब्रह्मणः प्रजापतेरंशत्वाद्रयिरूपस्य चन्द्रस्य ब्रह्मलोकत्वमित्यर्थः। इष्टादिकारिणां तप आदिकमपि चन्द्रलोकप्राप्त्यर्थमपेक्षितमित्यत आह। येषां तप इति॥ १४॥ १५॥ तेषामसौ विरज इत्यादिवाक्यं व्याचष्टे। यस्त्विति॥ उत्तरायण इति। तेन प्राप्य इत्यर्थः। प्राणात्मभावोऽपरब्रह्मतयाऽवस्थानमित्यर्थः। असौ केषां तेषामिति तेषामसौ विरज इत्यत्र तेषामित्यनेन केषां निर्देश इति प्रश्नार्थः। न येषु

ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति॥
॥ १६॥ इति प्रथमः प्रश्नः॥ १॥

अथ हैनं भार्गवो वैदर्भिः पप्रच्छ। भगवन् कत्येव देवाः प्रजां विधारयन्ते कतर एतत्

---

त्तथा माया गृहस्थानामिव न येषु विद्यते। माया नाम बहिरन्यथात्मानं प्रकाश्यान्यथैव कार्यं करोति सा माया मिथ्याचाररूपा। मायेत्येवमादयो दोषा येष्वधिकारिषु ब्रह्मचारिवानप्रस्थभिक्षुषु निमित्ताभावान्न विद्यन्ते तत्साधनानुरूप्येणैव तेषामसौ विरजो ब्रह्मलोक इत्येषा ज्ञानयुक्तकर्मवतां गतिः। पूर्वोक्तस्तु ब्रह्मलोकः केवलकर्मिणां चन्द्रलोक इति॥ १६॥ इति प्रथम प्रश्नभाष्यं समाप्तम्॥ १॥

प्राणोऽत्ता प्रजापतिरित्युक्तम्। तस्य प्रजापतित्वमत्तृत्वञ्चास्मिञ्छरीरेऽवधारयितव्यमित्ययं प्रश्न आरभ्यते। अथानन्तरं ह किलैनं भार्गवो वैदर्भिः पप्रच्छ। हे भगवन् कत्येव देवाः प्रजां शरीरलक्षणां विधारयन्ते विशेषेण धार-

---

जिह्ममित्यत्र जिह्मादिपदं व्यतिरेकप्रदर्शनेन व्याचष्टे। यथेत्यादिना॥ मायाग्रहणं तादृशानां दोषाणामुपलक्षणमिति वदन् वाक्यार्थं सङ्गृह्य दर्शयति। मायेत्येवमिति॥ भिक्षुष्विति परमहंसव्यतिरिक्तानां कुटीचराणां ग्रहणम्। तेषां ब्रह्मलोकादपि विरक्तत्वेन तन्मार्गाभिवत्वात्॥ इतिशब्दार्थमाह। इत्येषेति॥ १६॥ इति प्रथमः प्रश्नः॥ १॥

प्रश्नान्तरस्यैतेन प्रश्नेन सङ्गतिमाह। प्राणोऽत्तेति॥ अवधारयितव्यमिति॥ अत्ता विश्वस्य सत्पतिरित्यत्तृत्वस्यैषोऽग्निस्तपतीत्यारभ्यारा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम्। प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायस इत्यादिना च प्रजापतित्वस्योत्तरत्र वक्ष्यमाणत्वादित्यर्थः॥

प्रकाशयन्ते कः पुनरेषां वरिष्ठ इति ॥ १ ॥
तस्मै स होवाचाकाशो ह वा एष देवो वायु-
रग्निरापः पृथिवी वाङ्मनश्चक्षुः श्रोत्रञ्च। ते

---

यन्ते। कतरे बुद्धीन्द्रियकर्म्मेन्द्रियविभक्तानामेतत्प्रकाशनं स्वमाहात्म्यप्रख्यापनं प्रकाशयन्ते। कोऽसौ पुनरेषां वरिष्ठः प्रधानः कार्य्यकारणलक्षणानामिति ॥ १ ॥ एवं पृष्टवते तस्मै स होवाच। आकाशो ह वा एष देवो वायुरग्निरापः पृथिवीत्येतानि पञ्च महाभूतानि शरीरारम्भकाणि वाङ्मनश्चक्षुःश्रोत्रमित्यादीनि कर्म्मेन्द्रियबुद्धीन्द्रियाणि च शरीरं धारयन्ते। तन्मध्ये कर्म्मेन्द्रियबुद्धीन्द्रियाणि शरीरे स्वमाहात्म्यप्रख्यापनं प्रकाशयन्ते। कार्य्यलक्षणाः

---

इदमुपलक्षणं पूर्व्वं गतिश्रवणेन विरक्तस्यापि चित्तैकाग्र्यं विना वक्ष्यमाणात्मना स्थितेस्तदर्थं मन्दानां फलविशेषार्थं च प्राणोपासनार्थं प्रश्नद्वयारम्भः। तत्रापि श्रेष्ठत्वात्तत्प्रजापतित्वादिगुणनिर्द्धारणार्थं द्वितीयः प्रश्नः। तदुत्पत्त्यादिनिर्द्धारणपूर्व्वकं तदुपासनविधानार्थं तृतीयः प्रश्न इत्यपि द्रष्टव्यम्। प्रजाशब्देन शरीरमेव गृह्यते न जीवस्तस्य प्राणधारकत्वेन तत्कार्य्यत्वाभावादित्याह। शरीरेति॥ विभक्तानामिति निर्द्धारणे षष्ठी। स्वमाहात्म्यख्यापनमिति अवकाशदानादिकमाकाशादीनां माहात्म्यं तस्य ख्यापने तस्य लोकान् प्रति प्रकटनं तत्प्रकाशयन्ते कुर्व्वन्तीत्यर्थः। पाकं पचतीतिवदवकाशदानादिकं स्वस्वकार्य्यं सर्व्वलोकप्रकटनं यथा तथा कतरे कुर्व्वन्तीत्यर्थः॥ १॥ एष देव इति वक्ष्यमाणाभिवदनादिव्यवहारसिद्ध्यर्थं चेतनत्वं सम्भावयितुं देव इति विशेषणम्। अभिमानिव्यपदेशस्तु विशेषणानुगतिश्चामिति न्यायेनाकाशाद्यभिमानिदेवताग्रहणार्थम्। तच्च विशेषणं वाय्वादिष्वपि

प्रकाश्याभिवदन्ति वयमेतद्बाणमवष्टभ्य विधारयामः ॥ २ ॥

तान् वरिष्ठः प्राण उवाच । मा मोहमापद्यथाऽहमेवैतत् पञ्चधात्मानं प्रविभज्यैतद्बाणमव-

करणलक्षणाश्च ते देवा आत्मनो माहात्म्यं प्रकाश्याभिवदन्ति स्पर्द्धमानाः श्रेष्ठतायै । कथं वदन्ति । वयमेतद्बाणं शरीरं कार्य्यकारणसङ्घातमवष्टभ्य प्रासादमिव स्तम्भादयोऽविशिथिलीकृत्य विधारयामो विस्पष्टं धारयामः । मयैवैकेनायं सङ्घातो ध्रियत इत्येकैकस्याभिप्रायः ॥ २ ॥ तानेवमभिमानवतो वरिष्ठः प्राणो मुख्य उवाचोक्तवान् । मा मैवं मोहमापद्यथ अविवेकतयाऽभिमानं मा कुरुत यस्मादहमेवैतद्बाणमवष्टभ्य विधारयामि पञ्चधाऽऽत्मानं प्रविभज्य प्राणादिवृत्तिभेदं स्वस्य कृत्वा विधार-

---

सर्वत्र सम्बध्यते । वग्गृहणं कर्म्मेन्द्रियोपलक्षणार्थम् ॥ चक्षुरादिग्रहणं ज्ञानेन्द्रियोपलक्षणार्थमिति मत्वाह । कर्म्मेन्द्रियेति ॥ कार्य्यलक्षणाः शरीराकारेण परिणता आकाशादयः । करणलक्षणानीन्द्रियाणि । माहात्म्यमिति आकाशादीनामवकाशदानादिरूपं शरीरधारणैकदेशात्मकं प्रकाश्यं स्वकार्य्यं प्रकाश्य सर्व्वलोकप्रकटं यथा तथा कृत्वाभिवदन्ति अभितः सर्व्वतः कृत्स्नं शरीरधारणं प्रत्येकं वयमेव कुर्म्मइति वदन्तीत्यर्थः । बाणमिति ॥ बातीति बवयोरभेदाद्वा । अतिकुत्सितं गन्धं वहतीति वा । विनाशं गच्छतीति वा । देशाद्देशान्तरं गच्छतीति वा बाणम् । बाणमिव बाणं कार्य्यकरणसंघातं शरीरमित्यर्थः ॥ २ ॥

कथमेतदिति । एतत्तु अहमेवैतदित्याद्युक्तम् । एवं यथाभूतं कार्य्यमित्यर्थः ॥ ३ ॥ उक्तःन्तवानिवेति ॥ अत्यन्तोक्तान्त्यभावादिवशब्दः ।

ष्टभ्य विधारयामीति ॥ ३ ॥ तेऽश्रद्दधाना बभूवुः सोऽभिमानादूर्ध्वमुत्क्रामत इव तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रामन्ते तस्मिंश्च प्रतिष्ठमाने सर्व एव प्रातिष्ठन्ते । तद्यथा मक्षिका मधुकरराजानमुत्क्रामन्तं सर्वा एवोत्क्रामन्ते तस्मिंश्च प्रतिष्ठमाने सर्वा एव प्रातिष्ठन्त एवं वाङ्मनश्चक्षुः श्रोत्रञ्च ते प्रीताः प्राणं स्तुन्वन्ति ॥ ४ ॥

---

यामीति ॥ ३ ॥ इत्युक्तवति चास्मिंस्तेऽश्रद्दधाना अप्रत्ययवन्तो बभूवुः कथमेतदेवमिति । स च प्राणः तेषामश्रद्दधानतामालक्ष्याभिमानादूर्ध्वमुत्क्रामत इवोत्क्रामति इवेदमुत्क्रान्तवानिव सरोषान्निरपेक्षस्तस्मिन्नुत्क्रामति यद्वृत्तं तद्दृष्टान्तेन प्रत्यक्षीकरोति । तस्मिन्नुत्क्रामति सति अथानन्तरमेवेतरे सर्व एव प्राणाश्चक्षुरादय उत्क्रामन्ते उत्क्रामन्ति उच्चक्रमुः । तस्मिंश्च प्राणे प्रतिष्ठमाने तूष्णीं भवत्यनुत्क्रामति सति सर्व एव प्रतिष्ठन्ते तूष्णीं व्यवस्थिता अभूवन् । तद्यथा लोके मक्षिका मधुकराः स्वराजानं मधुकरराजानमुत्क्रामन्तं प्रति सर्वा एवोत्क्रामन्ते तस्मिंश्च प्रतिष्ठमाने सर्वा एव प्रतिष्ठन्ते प्रतिष्ठन्ति । यथाऽयं दृष्टान्त एवं वाङ्मनश्चक्षुःश्रोत्रञ्चेत्यादयस्त उत्सृज्याश्रद्दधानतां बुद्ध्वा प्राणमाहात्म्यं प्रीताः प्राणं स्तुवन्ति ॥ ४ ॥

---

निरपेक्ष इति स्वयमेवेत्यर्थः । दृष्टान्तेनेति तत्र यथेति वक्ष्यमाणेनेत्यर्थः ॥ ४ ॥

एषोऽग्निस्तपत्येष सूर्य्य एष पर्जन्यो मघवानेष वायुरेष पृथिवी रयिर्देवः सदसच्चामृतञ्च यत्॥ ५॥ अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम्। ऋचो यजूंषि सामानि यज्ञः क्षत्त्रं ब्रह्म च॥ ६॥ प्रजापतिश्चरसि गर्भे त्वमेव प्रति-

---

कथमेष प्राणोऽग्निः संस्तपति ज्वलति। तथैष सूर्य्यः सन् प्रकाशते। तथैष पर्जन्यः सन् वर्षति। किञ्च मघवानिन्द्रः सन् प्रजाः पालयति जिघांसत्यसुररक्षांसि। एष वायुरावहप्रवाहादिभेदः। किञ्चैष पृथिवी रयिर्देवः सर्वस्य जगतः सन् मूर्त्तमसदमूर्त्तञ्चामृतञ्च यद्देवानां स्थितिकारणं किञ्च बहुना॥ ५॥ अरा इव रथनाभौ श्रद्धादिनामान्तं सर्वं शरीरं स्थितिकाले प्राणे प्रतिष्ठितम्। तथा ऋचो यजूंषि सामानीति त्रिविधा मन्त्रास्तत्साध्यश्च यज्ञः क्षत्त्रञ्च सर्व्वस्य पालयितृ ब्रह्म च यज्ञादिकर्म्मकर्त्तृत्वेऽधिकृतञ्चैवैष प्राणः सर्वम्॥ ६॥ किञ्च। यः प्रजापतिरपि स त्वमेव गर्भे

---

सूर्य्यः सन्निति तपतीत्यनुषङ्गः। सन्तापयतीत्यर्थः। आवहप्रवाहादीत्यावहादयः सप्त वायुगुणास्तथा भूतः सन्नेषान् ज्योतिश्चक्रादीनि वहतीति शेषः। एष देवः पृथिवी सन् सर्व्वस्य जगतो धारयिता। रयिश्चन्द्रः सन् सर्व्वं पुष्णातीत्यर्थः। श्रद्धादीति॥ प्राणाच्छ्रद्धां खं वायुर्ज्योतिराप इत्यादिना वक्ष्यमाणषोड़शकलात्मक इत्यर्थः॥ ५॥ ब्रह्म चेति ब्राह्मणजातिरित्यर्थः॥ चशब्दाद्धर्म्मश्च। यज्ञादीति॥ अधिकृतं सर्व्वमेवेत्यन्वयः॥ ६॥ किञ्चेति यः प्रजापतिर्विराट् सोऽपि

जायसे । तुभ्यं प्राण: प्रजास्त्विमा बलिं हरन्ति य: प्राणै: प्रतितिष्ठसि ॥ ७ ॥ देवानामसि वह्नितम: पितॄणां प्रथमा स्वधा । ऋषीणाञ्चरितं सत्यमथर्वाङ्गिरसामसि ॥ ८ ॥ इन्द्रस्त्वं

---

चरसि पितुर्मातुश्च प्रतिरूपः सन् प्रतिजायसे प्रजापतित्वादेव प्रागेव सिद्धं तव मातृपितृत्वं सर्वदेहदेह्याकृतिच्छन्न एक: प्राण: सर्वात्मासीत्यर्थ: । तुभ्यं त्वदर्थाय इमा मनुष्याद्या: प्रजास्तु हे प्राण चक्षुरादिद्वारैर्बलिं हरन्ति । यस्त्वं प्राणैश्चक्षुरादिभि: सह प्रतितिष्ठसि सर्वशरीरेष्वतस्तुभ्यं बलिं हरन्तीति युक्तम् । भोक्ता हि यस्त्वं तवैवान्यत्सर्वं भोज्यम् ॥ ७ ॥ किञ्च देवानामिन्द्रादीनामसि भवसि त्वं वह्नितम: हविषां प्रापयितृतम: पितॄणां नान्दीमुखे श्राद्धे या पितृभ्यो दीयते स्वधान्नं सा देवप्रदानमपेक्ष्य प्रथमा भवति । तस्या अपि पितृभ्य: प्रापयिता त्वमेवेत्यर्थ: । किञ्च ऋषीणां चक्षुरादीनां प्राणानाम-

---

त्वमेवेत्यन्वयः । पितृगर्भे रेतोरूपेण मातृगर्भे पुत्ररूपेण यच्चरसि तत्तयोरेव प्रतिरूपः सन् सदृशः सन् यः प्रजायते स त्वमेव प्रजापत इत्यन्वयः । प्रतिशब्दार्थं सदृशः प्रतिरूपः सन्निति ॥ ननु प्राणस्य पुत्ररूपत्वमेवोक्तं न तु पितृमातृरूपत्वं तत्कथमादृत आह । प्रजापतित्वादेवेति । तस्य सर्वात्मत्वादित्यर्थः ॥ निष्कृष्टार्थमाह । सर्वदेहेति । अस्यापि निष्कृष्टार्थमाह । भोक्ता हीति । अतस्तवैवेतरत्सर्वं भक्ष्याभक्ष्यादिरूपेण भोज्यम् ॥ ७ ॥ हविषां प्रापयितृतम इति ॥ वह्निशब्दो वहनाद्वह्निरिति यौगिक इत्यर्थः । प्रथमा भवतीति दर्शादिदेवकर्मण्यपि प्रथमं नान्दी-

प्राण तेजसा रुद्रोऽसि परिरक्षिता। त्वमन्तरिक्षे चरसि सूर्य्यस्त्वं ज्योतिषाम्पतिः ॥ ९ ॥

यदा त्वमभिवर्षस्यथेमाः प्राण ते प्रजाः। आनन्दरूपास्तिष्ठन्ति कामायान्नं भविष्यतीति ॥ १० ॥

---

ङ्गिरसामङ्गिरसभूतानामथर्वणां तेषामेव प्राणो वाऽथर्वा इति श्रुतेः। चरितं चेष्टितं सत्यमवितथं देहधारणाद्युपकारलक्षणं त्वमेवासि ॥ ८ ॥ किञ्चेन्द्रः परमेश्वरस्त्वं हे प्राण तेजसा वीर्य्येण। रुद्रोऽसि हरन् जगत्। स्थितौ च परि समन्ताद्रक्षिता पालयिता परिरक्षिता त्वमेको जगतः सौम्येन रूपेण। त्वमन्तरिक्षेऽजस्रं चरसि उदयास्तमयाभ्यां सूर्य्यस्त्वमेव च सर्वेषां ज्योतिषाम्पतिः ॥ ९ ॥ यदा पर्जन्यो भूत्वाभिवर्षसि त्वं अथ तदान्नं प्राप्येमाः प्रजाः प्राणते प्राणचेष्टां कुर्वन्तीत्यर्थः। अथवा प्राण ते तवेमाः प्रजाः स्वात्मभूतास्त्वदन्नसंवर्द्धितास्त्वदभिवर्षणादर्शनमात्रेण चानन्दरूपाः सुखं प्राप्ता इव सत्यस्तिष्ठन्ति। कामाय इच्छातोऽन्नं भविष्यतीत्येवमभिप्रायः ॥ १० ॥

---

सुखमाहस्यावश्यकर्त्तव्यत्वात्त्वा प्रथमेत्यर्थः। ऋच गताविति धातोर्गमनार्थत्वादभिधयस्य घ्राणजनकचक्षुराद्यर्थत्वमित्यर्थः। अङ्गिरसभूतानामिति॥ प्राणाभावेऽङ्गानां शोषदर्शनात्तेषामङ्गिरसत्वमित्यर्थः। मुख्यप्राणस्याथर्व्वत्वं श्रुत्याभिहितं यद्यपि तथापि चक्षुरादीनामपि तदंशत्वादथर्व्वशब्दार्थत्वमिति भावः। इहेन्द्रशब्देन परमेश्वरत्वमुच्यते मघवाभित्वनेन त्विन्द्र उक्त इति भेदमाह। इन्द्रः परमेश्वर इति॥ वीर्य्येण संहारसामर्थ्येनेत्यर्थः। सौम्येनेति विष्ण्वादिरूपेणेत्यर्थः॥ ८॥ ९॥ १०॥

व्रात्यस्त्वं प्राणैकऋषिरत्ता विश्वस्य सत्पतिः ।
वयमाद्यस्य दातारः पिता त्वं मातरिश्व नः ॥
॥ ११ ॥ या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे
या च चक्षुषि । या च मनसि सन्तता शिवां तां

---

किञ्च प्रथमजत्वादन्यस्य संस्कर्तुरभावादसंस्कृतो व्रात्यस्त्वं स्वभावत एव शुद्ध इत्यभिप्रायः । हे प्राण एकऋषिस्त्वमाथर्वणानां प्रसिद्ध एकर्षिनामाऽग्निः सन्नत्ता सर्वहविषाम् । त्वमेव विश्वस्य सर्वस्य सतो विद्यमानस्य पतिः सत्पतिः साधुर्वा पतिः सत्पतिः । वयं पुनराद्यस्य तवादनीयस्य हविषो दातारः । त्वं पिता मातरिश्व नोऽस्माकम् । अथवा मातरिश्वनो वायोस्त्वम् । अतश्च सर्वस्यैव जगतः पितृत्वं सिद्धम् ॥११॥ किं बहुना । या ते त्वदीया तनूर्वाचि प्रतिष्ठिता वक्तृत्वेन वदनचेष्टां कुर्वती । या श्रोत्रे या च चक्षुषि या

---

असंस्कृत इति ॥ संस्कारहीनो व्रात्य इति स्मृतेरित्यर्थः ॥ अनेन स्वतः शुद्धत्वं विवक्षितमित्याह । स्वभावत एवेति ॥ मातरिश्वेति मातरिश्व इत्यत्र नकारोपश्लेषश्छान्दस इत्यर्थः । वायोस्त्वमिति पितेत्यनुषङ्गः । अस्मिन्व्याख्याने वायुमात्रपितृत्वादस्मदादिसर्वपितृत्वमनुक्तं स्यादत आह । अतश्चेति ॥ अस्मदादिसर्वजनकत्वाद्वायोस्तज्जनकस्याकायात्मनः प्राणस्य सर्वजनकत्वं सिद्धमित्यर्थः ॥ वाचि प्रतिष्ठितेति ॥ वाच्यपानरूपा तनूः प्रतिष्ठिता । श्रोत्रे व्यानरूपा । चक्षुषि प्राणरूपा ॥ मनसि समानरूपा । स प्राणस्तच्चक्षुः स व्यानस्तच्छ्रोत्रं सोऽपानः सा वाक् स समानस्तन्मन इति श्रुतेरित्यर्थः । उत्क्रमणेनेति प्राणोत्क्रमणे ह्यपानाद्यात्मिका वागादिरूपा तनूः अशिवा कार्य्यायोग्या

कुरु मोत्क्रमीः ॥१२॥ प्राणस्येदं वशे सर्वं त्रिदिवे यत्प्रतिष्ठितम् । मातेव पुत्रान्रक्षस्व श्रीश्च प्रज्ञाञ्च विधेहि न इति ॥ १३ ॥ इति द्वितीयप्रश्नः ॥ २ ॥

अथ हैनं कौसल्यश्चाश्वलायनः पप्रच्छ । भग-

---

मनसि सङ्कल्पादिव्यापारेण सन्तता समनुगता तनूस्तां शिवां शान्तां कुरु मोत्क्रमीरुत्क्रमणेनाशिवां माकार्षीरित्यर्थः ॥ १२ ॥ किं बहुना । अस्मिँल्लोके प्राणस्यैव वशे सर्वमिदं यत्किञ्चिदुपभोगजातं त्रिदिवे तृतीयस्यां दिवि च यत्प्रतिष्ठितं देवाद्युपभोगलक्षणं तस्यापि प्राण एव ईशिता रक्षिता । अतो मातेव पुत्रानस्मान्रक्षस्व पालयस्व । त्वन्निमित्ता हि ब्राह्म्यः क्षात्रियाश्च श्रियस्तास्त्वं श्रीश्च प्रज्ञाञ्च त्वत्स्थितिनिमित्तां विधेहि नो विधत्स्वेत्यर्थः । इत्येवं सर्वात्मना यो वागादिभिः प्राणैः स्तुत्यागमितमहिमानः स प्रजापतिरेवेत्यवधृतम् ॥१३॥ इति द्वितीयप्रश्नभाष्यम् ॥ २ ॥

अथ हैनं कौसल्यश्चाश्वलायनः पप्रच्छ । प्राणैर्स्सेवं निर्द्धारिततत्त्व उपलब्धमहिमाऽपि संहतत्वात् स्यादस्य

---

स्यादित्यर्थः । ब्राह्म्य इत्यृगादिमन्त्ररूपा ब्राह्म्यः श्रियः ऋचः सामानि यजूंषि । सा हि श्रीरुक्तता सतामिति श्रुतेः । क्षात्र्यः प्रसिद्धा धनाद्यैश्वर्यरूपाः । अस्मिन्प्रश्ने निर्द्धारितं गुणं सङ्क्षिपति । इत्येवमिति । इदं वरिष्ठत्वादेरुपलक्षणम् ॥ ११ ॥ १२ ॥ १३ ॥ इति द्वितीयप्रश्नभाष्यटीका ॥ २ ॥

एवं प्रजापतित्वात्तृत्वादिगुणजातं निर्द्धार्य प्राणस्योत्पत्त्यादि निर्द्धारयन् तदुपासनां विधातुं प्रश्नान्तरमवतारयति । अथेति । वेदर्भिप्रश्नानन्तरमित्यर्थः । प्राणैरिति वैवागादिप्राणैराकाशादिभिश्च

वन् कुत एष प्राणो जायते कथमायात्यस्मि-ञ्छरीर आत्मानं वा प्रविभज्य कथं प्रातिष्ठते केनोत्क्रमते कथं बाह्यमभिधत्ते कथमध्यात्म-मिति ॥ १ ॥ तस्मै स होवाचातिप्रश्नान् पृच्छसि ब्रह्मिष्ठोऽसीति तस्मात्तेऽहं ब्रवीमि ॥ २ ॥

---

कार्य्यं त्वमतः पृच्छामि। भगवन् कुतः कस्मात्कारणादेष यथावधृतः प्राणो जायते। जातश्च कथं केन वृत्तिविशेषे-णायात्यस्मिञ्छरीरे। किन्निमित्तकमस्य शरीरग्रहणमि-त्यर्थः। प्रविश्य च शरीरे आत्मानं वा प्रविभज्य प्रविभागं कृत्वा कथं केन प्रकारेण प्रातिष्ठते प्रतितिष्ठति। केन वा वृत्तिविशेषेणास्माच्छरीरादुत्क्रमते उत्क्रामति। कथं बाह्य-मधिभूतमधिदैवं चाभिधत्ते धारयति। कथमध्यात्म-मिति धारयतीति शेषः॥ १ ॥ इत्येवं पृष्टस्तस्मै स होवा-चाचार्य्यः। प्राण एव तावद्दुर्विज्ञेयत्वाद्विषमप्रश्नार्हस्तस्यापि जन्मादि त्वं पृच्छस्यतोऽतिप्रश्नान् पृच्छसि। ब्रह्मिष्ठो-ऽसीत्यतिशयेन त्वं ब्रह्मविदतस्तुष्टोऽहं तस्मात्ते तुभ्यं प्रब्रवीमि यत्पृष्टं शृणु॥ २ ॥

---

प्राणस्य तत्त्वमुपलब्धं तैरित्यर्थः। प्राणस्य पूर्वोक्तमहिमत्वादिदेवो-त्पत्तिशङ्काभावात्कुत इति प्रश्नानुपपत्तिमाशङ्क्याह। अपि संवृतत्वा-दिति॥ अनेकात्मकत्वात्सावयवत्वादित्यर्थः। शरीरग्रहणमिति शरीरप्रवेश इत्यर्थः। प्रातिष्ठत इत्यङ्प्रश्ने पाद्दीर्घत्वम्॥ विषमेति विषमं दुर्घटं यथा प्रश्नार्हमित्यर्थः। अतिप्रश्नानिति त्वद्वदन्येषां प्रश्नानतिक्रान्ता-नन्यदीयप्रश्नागोचरान् सूक्ष्मप्रश्नान् प्रष्टव्यार्थानित्यर्थः। अतिशयेनेत्यपे-क्षयाऽतिशयितं मुख्यम्॥ ब्रह्मविदिति प्रोत्साहार्थं स्तौतीति भाव:॥१॥२॥

आत्मन एष प्राणो जायते। यथैषा पुरुषे छायैतस्मिन्नेतदाततं मनोकृतेनायात्यस्मिञ्छरीरे ॥ ३ ॥ यथा सम्राडेवाधिकृतान्विनियुङ्क्ते। एतान् ग्रामानेतान् ग्रामानधितिष्ठस्वेत्येवमेवैष प्राणः। इतरान् प्राणान् पृथक् पृथगेव सन्नि-

आत्मनः परस्मात्पुरुषादक्षरात्सत्यादेवैष उक्तः प्राणो जायते। कथमित्यत्र दृष्टान्तः। यथा लोके एषा पुरुषे शिरः पाण्यादिलक्षणे निमित्ते छाया नैमित्तिकी जायते तद्वदेतस्मिन् ब्रह्मण्येतत्प्राणाख्यं छायास्थानीयमनृतरूपं तत्त्वं सत्ये पुरुषे आततं समर्पितमित्येतत्। छायेव देहे मनोकृतेन मनःकृतेन मनःसङ्कल्पेच्छादिनिष्पन्नकर्मनिमित्तेनेत्येतद्वक्ष्यति हि पुण्येन पुण्यमित्यादि। तदेव सक्तः सह कर्मणेति च श्रुत्यन्तरात्। आयात्यागच्छत्यस्मिञ्छरीरे ॥३॥ यथा येन प्रकारेण लोके राजा सम्राडेव ग्रामादिष्वधिकृतान्विनियुङ्क्ते। कथम्। एतान् ग्रामानेतान् ग्रामानधितिष्ठस्वेति। एवमेव यथा दृष्टान्तः। एष मुख्यः प्राण इतरान्

दिव्यो ह्यमूर्त्तः पुरुष अक्षरात्परतः परः। एतस्माज्जायते प्राण इति मन्त्रो अत्र संवादयितुं तद्गतविशेषणमाह। परस्मादिति॥ अत्र दृष्टान्त इति तस्मात्तत्वार्थे दृष्टान्त उच्यते इत्यर्थः। छायेति प्रतिबिम्बादिरूपेत्यर्थः। एतस्मिन्निति प्रकृतजनके आत्मनि अध्यस्त इत्यर्थः। कथमायातीत्यस्योत्तरमाह। मनोकृतेनेति॥ वर्णव्यत्ययः। तदेव सक्त इत्यस्य कर्म्मणो मनो यस्मिन् फले निषक्तं संसक्तं आसक्तः सन् तदेव फलं कर्मणा सह एतीति श्रुतौ च शरीरपक्षपं कर्म्मणाध्यस्तमि-

धत्ते ॥ ४ ॥ पायूपस्थेऽपानं चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रातिष्ठते मध्ये तु समानः । एष ह्येतद्धुतमन्नं समं नयति तस्मादेताः सप्तार्चिषो भवन्ति ॥ ५ ॥

---

प्राणश्चक्षुरादीनात्मभेदांश्च पृथक् पृथगेव यथास्थानं सन्निधत्ते विनियुङ्क्ते ॥ ४ ॥ तत्र विभागः । पायूपस्थे पायुश्च उपस्थश्च पायूपस्थं तस्मिन् । अपानमात्मभेदं मूत्रपुरीषाद्यपनयनं कुर्वंस्तिष्ठति सन्निधत्ते । तथा चक्षुःश्रोत्रे चक्षुश्च श्रोत्रञ्च चक्षुःश्रोत्रं तस्मिंश्चक्षुःश्रोत्रे । मुखनासिकाभ्याञ्च मुखञ्च नासिका च मुखनासिके ताभ्यां मुखनासिकाभ्याञ्च निर्गच्छन् प्राणः स्वयं सम्राट्स्थानीयः प्रातिष्ठते प्रतितिष्ठति । मध्ये तु प्राणापानयोः स्थानयोर्नाभ्याम् । समानमशितं पीतञ्च समं नयतीति समानः । एष हि यस्माद्यदेतद्धुतं भुक्तं पीतञ्चात्माग्नौ प्रक्षिप्तमन्नं समं नयति तस्मादशित-

---

र्थः ॥ ३ ॥ आत्मानं वा प्रविभज्येत्यस्योत्तरं दृष्टान्तेनाह । यथेति ॥ इतरानिति इतरांश्चक्षुरादीन् यथास्थानं चक्षुरादिगोलकस्थाने सन्निधत्ते सन्निधापयति । आत्मभेदान् स्वस्य प्राणस्य वृत्तिभेदान् प्राणापानादीन् पाय्वादिषु नियुङ्क्ते इत्यत्र श्रुत्या नेत्रादीनां चक्षुरादिस्थानानां स्पष्टत्वात्तानि नोक्तानीति द्रष्टव्यम् । यः कुर्वंस्तिष्ठति तं सन्निधत्ते विनियुङ्क्ते इत्यर्थः । मध्येति प्राणापानयोर्मध्ये या नाभिस्तस्यां समानः प्रतितिष्ठतीत्यन्वयः । समानशब्दार्थमुक्त्वा श्रुत्यारूढं करोति । एष हीति ॥ आत्माग्नाविति आत्मनि शरीरेऽस्मिन्नग्नावित्यर्थः । एवं स्थितपदव्याख्यानस्य हविर्दं जाठराग्नेराहवनीयत्वं प्रक्षेपस्य

हृदि ह्येष आत्मा। अत्रैतदेकशतं नाडीनां तासां शतं शतमेकैकस्यां द्वासप्ततिर्द्वासप्ततिः प्रति-

---

पीतेन्धनादग्नेरौदर्य्याद्धृदयदेशादेताः सप्तसङ्ख्याका अर्चिषो दीप्तयो निर्गच्छन्त्यो भवन्ति शीर्षण्याः। प्राणद्वारा दर्शन-श्रवणादिलक्षणारूपादिविषयप्रकाश इत्यभिप्रायः॥ ५॥

हृदि ह्येष। पुण्डरीकाकारमांसपिण्डपरिच्छिन्ने हृद-याकाशे एष आत्मा आत्मसंयुक्तो लिङ्गात्मा जीवात्मेत्यर्थः। अत्रास्मिन् हृदये एतदेकशतमेकोत्तरशतं सङ्ख्यया प्रधान-नाडीनां भवतीति। तासां शतं शतमेकैकस्याः प्रधान-नाड्या भेदाः। पुनरपि द्वासप्ततिर्द्वासप्ततिर्द्वे द्वे सह-स्रेऽधिकसप्ततिश्च सहस्राणि। सहस्राणां द्वासप्ततिः प्रतिशाखानाडीसहस्राणि प्रति प्रतिनाडीशतसङ्ख्यया प्रधाननाडीनां सहस्राणि भवन्ति। आसु नाडीषु

---

होमत्वञ्चोक्त्वा शीर्षण्यसप्तद्वारान्निर्गतानां प्राणानामर्चिष्ट्वं वक्तुं तस्मा-द्देता इति वाक्यं व्याचष्टे। तस्मादिति॥ सप्तेति॥ अग्नेरौदार्य्याद्धेतोः प्राप्तपरिपाकादन्नरसादन्ननाडीद्वारा देहं प्राप्तं नाडीस्थानं हृदयं प्राप्तादन्नरसादिति शेषः॥ दर्शनद्वयं श्रवणद्वयं प्राणद्वयंमुखञ्चैकं रसना-मिति सप्तार्चिषः। जाठराग्निपाकजन्यान्नरसबलेन दर्शनादीनां प्रवृत्तेः। तेषु तदर्चिष्ट्वारोप इत्यर्थः॥ ४॥ ५॥

व्यानस्य नाडीरूपं स्थानं दर्शयितुं नाडीनामुत्पत्तिस्थानं वक्तु-माह। हृदीत्यादिना॥ हृदयस्य लिङ्गात्मस्थानत्वोक्तेः। प्रयोजनन्तु केचिद्योगिनो नाभिकन्दस्य नाड्युत्पत्तिस्थानत्वं वदन्ति। तन्निराकरणं तत्रैव लिङ्गात्मनः सञ्चरणार्थं नाड्यः। नाडीभिः प्रत्यवसृप्येत्यादि श्रुतेः॥ ततश्च लिङ्गात्मनो हृदयस्थानत्वे तत्सञ्चारमार्गभूतनाडीनामपि तदेवोत्प

शाखानाडीसहस्राणि भवन्त्यासु व्यानश्चरति ॥ ६ ॥
अथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति

---

व्यानो वायुश्चरति । व्यानो व्यापनात् । आदित्यादिव रश्मयो हृदयात्सर्वतोगामिनीभिर्नाडीभिः सर्वदेहं संव्याप्य व्यानो वर्त्तते । सन्धिस्कन्धमर्म्मदेशेषु विशेषेण प्राणापानवृत्त्योश्च मध्य उद्भूतवृत्तिर्वीर्य्यवत्कर्म्मकर्त्ता भवति ॥ ६ ॥ अथ या तु तत्रैकशतानां नाडीनां मध्ये ऊर्द्ध्वगा सुषुम्णा नाडी तयैकयोर्द्ध्वः सन्नुदानो वायुरापादतलमस्तकवृत्तिः सञ्चरन् पुण्येन कर्म्मणा शास्त्रविहितेन पुण्यं लोकं देवादिस्थानलक्षणं नयति प्रापयति । पापेन तद्विपरीतेन पापं नरकं तिर्य्यग्योन्यादिलक्षणम् । उभाभ्यां सम-

---

न्विस्थानं अथवा प्रदेशान्तरस्थाननाडीनां तन्मार्गत्वायोगाद्द्वा सप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्तीति श्रुतेरिति लिङ्गशरीरस्यात्मत्वमात्मोपाधित्वेन तद्योगादित्याह । आत्मसंयुक्त इति ॥ यथा लिङ्गात्मा हृदि वर्त्तते तत्सञ्चारमार्गभूतनाडीनामपि तत्रैव स्थानमित्याह । अत्रेति ॥ नाडीनां शरीरविधारकत्वेन प्रसिद्धत्वं वक्तुमेतदिति विशेषणम् । तस्य स्पष्टत्वादन्येन व्याख्यानम् । एकैकस्या नाड्याः शाखानाड्यः शतं शतं भवन्तीत्याह । तासामिति ॥ ततश्च शतोत्तरमयुतं शाखानाड्य इत्यर्थः । शाखानाडीनां च प्रत्येकं द्विसप्ततिसहस्राणि प्रतिशाखानाड्यः सन्तीत्याह । पुनरपीति ॥ सप्ततिरितिपदस्य सङ्ख्याप्रधानत्वे सहस्राणीत्यस्य तेन सामानाधिकरण्यायोगात् षष्ठ्यन्ततया व्याचष्टे । सहस्राणामिति ॥ प्रतिशाखेति ॥ प्रतिशाखाभ्यो निर्गतास्तच्छाखाः प्रतिशाखाः । द्वासप्ततिरित्यस्य च स्पष्टार्थमाह । प्रति प्रतीति ॥ प्रतिनाडीशतमित्यनन्तरमेकैकस्या इत्यनुषङ्गः । तथा च प्रति-

पापेन पापमुभाभ्यामेव मनुष्यलोकम् ॥ ७ ॥
आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं

प्रधानाभ्यां पुण्यपापाभ्यामेव मनुष्यलोकं नयतीत्यनुवर्त्तते ॥ ७ ॥ आदित्यो ह वै प्रसिद्धो ह्यधिदैवतं बाह्यः प्राणः स एष उदयत्युद्गच्छति । एष ह्येनमाध्यात्मिकं चक्षुषि भवं चाक्षुषं प्राणं प्रकाशेनानुगृह्णानो रूपोपलब्धौ चक्षुष आलोकं कुर्वन्नित्यर्थः । तथा पृथिव्यामभिमानिनी या देवता प्रसिद्धा सैषा पुरुषस्यापानवृत्तिमवष्टभ्याकृष्य वशीकृत्याध एवापकर्षणेनानुग्रहं कुर्वती वर्त्तत इत्यर्थः । अन्यथा हि शरीरं गुरुत्वात्पतेत्सावकाशे वोद्गच्छेत् ।

नाडीशतमेकैकस्या नाड्याः प्रतिशाखानाडीनां द्वासप्ततिसहस्राणि भवन्तीत्यर्थः । तथा मूलशाखाप्रतिशाखानाड्यो मिलित्वा द्वासप्तकोटयो द्वासप्ततिलक्षाणि षट्सहस्राणि शतद्वयमेका च भवतीति द्रष्टव्यम् ॥ एवं नाडीरुक्त्वा व्यानस्य तत्स्थानमाह । आस्विति ॥ सूक्ष्मासु नाडीषु विद्यमानस्य व्यानस्य कथं व्यापकत्वमित्याशङ्क्य नाडीनां सर्वदेह-व्याप्तेस्तत्स्थस्यापि व्यानस्य तद्द्वारा व्याप्तिरित्याह । आदित्यादिवेति ॥ यथाऽऽदित्याद्विनिर्गत्य रश्मयः सर्वतो गतास्तथा हृदयात्सर्वतो गामिन्या नाड्यस्ताभिरिति शेषः ॥ सामान्येन सर्वशरीरव्याप्तावपि विशेषस्थानमाह । सन्धीति ॥ शरीरेऽस्मिन्नुच्छ्वासनिश्वासयोः प्राणापानयोरभावे व्यानवत्तिरुद्भवतीत्यर्थः । वीर्यवदिति अथ यः प्राणापानयोः सन्धिः स व्यान इत्युक्ता यानि वीर्यवन्ति कर्माणि बलवता पुरुषेण साध्यानि धनुरायमनादीनि तान्यप्राणन्ननपानन् करोतीति श्रुत्यन्तरोक्तेरित्यर्थः ॥ ६ ॥ इदानीमुदानस्य स्थानं वदन् येनोत्क्रमत इत्यस्योत्तरमाह अथ त्विति ॥ उभाभ्यां समप्रधानाभ्यामिति ॥ अनेन पुण्याधिक्ये देवलोकं पापाधिक्ये नरकलोकं नयतीति पूर्वं व्याख्यातं

प्राणमनुगृह्णानः। पृथिव्यां या देवता सैषा पुरुषस्यापानमवष्टभ्यान्तरा यदाकाशः स समानो

---

यदेतदन्तरा मध्ये द्यावापृथिव्योर्य आकाशस्तत्स्थो वायुराकाश उच्यते। मञ्चस्थवत्। स समानः समानमनुगृह्णानो वर्त्तत इत्यर्थः। समानस्यान्तराऽऽकाशस्थत्वसामान्यात्। सामान्येन च यो बाह्यो वायुः स व्याप्तिसामान्याद्व्यानो व्यानमनुगृह्णानो वर्त्तत इत्यभिप्रायः॥ ८॥ यद्बाह्यं ह वै प्रसिद्धं सामान्यं तेजस्तच्छरीरे उदानं वायुमनुगृह्णाति स्वेन प्रकाशेनेत्यभिप्रायः। यस्मात्तेजोभावो बाह्यतेजोऽनुगृहीत उत्क्रान्तिकर्त्ता तस्माद्यदा लौकिकः

---

भवति ॥ ७॥ कथं बाह्यमभिधत्ते। कथमध्यात्ममित्यस्योत्तरमाह। आदित्य इति॥ या देवता प्रसिद्धेति अग्निदेवता पृथिव्येव यस्यायतनमग्निर्लोक इति श्रुतेरग्निसम्बन्धावगमादित्यर्थः। अवष्टभ्येत्यनन्तरमध्याहारेण वाक्यं पूरयति। अध एवापकर्षणेनेति हस्तस्थं काष्ठादेरूर्ध्वस्थेन निपातस्य परितो विद्यमानरज्जुभिरध एवापकर्षणेन पतनाभाववदध एवापकर्षणेन शरीरस्य पतनाभावः सिद्ध्यतीत्यर्थः। अनुग्रहमिति शरीरधारणलक्षणमित्यर्थः। अन्यथेति पृथिवीदेवताया विधारणाकरणे गुरुत्वादपानेनाध आकर्षणाच्च सावकाशे भूम्यादिपतनप्रतिबन्धकाभावस्थले पतेदित्यर्थः॥ अन्तरा यदाकाश इति वाक्यं व्याचष्टे। यदेतदिति॥ यदिति क्लीबत्वं छान्दसमित्याह। स आकाश इति॥ मञ्चस्थवदिति मञ्चाः क्रोशन्तीत्यत्र मञ्चशब्देन मञ्चस्था यथा उच्यन्ते तथाऽऽकाशशब्देन तत्स्थो वायुर्लक्ष्यत इत्यर्थः। समान इति॥ सामानाधिकरण्यमनुग्राह्यानुग्राहकयोरभेदोपचारादित्याह। समानमनुगृह्णान इति॥ एवमुत्तरत्रापि अनुग्रहहेतुमाह। समानस्येति॥ शरीरान्तराकाशस्थत्वं

वायुर्व्यानः ॥ ८ ॥ तेजो ह वै उदानस्तस्मादु-पशान्ततेजाः । पुनर्भवमिन्द्रियैर्मनसि सम्पद्य-मानैः ॥ ९ ॥ यच्चित्तस्तेनैष प्राणमायाति प्राण-

---

पुरुष उपशान्ततेजा भवति । उपशान्तं स्वाभाविकं तेजो यस्य सः । तदा तं क्षीणायुषं मुमूर्षुं विद्यात् । स पुनर्भवं शरीरान्तरं प्रतिपद्यते । कथम् । सहेन्द्रियैर्मनसि सम्पद्यमानैः प्रविशद्भिर्वागादिभिः ॥ ९ ॥ मरणकाले यच्चित्तो भवति तेनैव चित्तेन सङ्कल्पेनेन्द्रियैः सह प्राणं मुख्यप्राण-वृत्तिमायाति । मरणकाले क्षीणेन्द्रियवृत्तिः सन्मुख्यया

---

समानस्य द्यावापृथिव्यन्तराकाशस्थत्वं बाह्यवायोरिति अन्तराकाशस्थत्वं तयोस्तुल्यमित्यर्थः ॥ वायुर्व्यान इत्यत्र त्वन्तराकाशस्थत्वविशेषरहितो वायुसामान्येन सङ्गृहीत इति न पूर्वाभेद इत्याह । सामान्येनेति ॥ ८ ॥ तेजो ह वाव इति वाक्यं व्याचष्टे । यद्बाह्यमिति ॥ पूर्वमादित्यात्मकं विशेषतेज उक्तं अत्र तेजःसामान्यमुच्यत इति न पौनरुक्त्यमित्याह । सामान्यं तेज इति ॥ एवमादित्यादिना रूपेण मुख्यप्राणस्य प्राणापान समानोदानव्यानानुग्राहकत्वोक्त्याऽध्यात्मं प्राणादिवृत्त्यनुग्राहकत्वमुक्तम् । आदित्याग्न्याकाशसामान्यवायुतेजोरूपी सन् बाह्यमधिदैवमादित्यात्मकं धारयतीत्युक्तम् । तद्रूपेणावस्थानमेव तद्धारणं प्राणापानाद्यनुग्रहेण चक्षुराद्यनुग्रहोक्तेस्तद्द्वारा तद्बाह्याधिभूतविधारकत्वमुक्तम् ॥ स प्राणस्त-च्चक्षुः सोऽपानः सा वाक् स व्यानस्तच्छ्रोत्रं स समानस्तन्मनः स उदानः स वायुरिति श्रुत्यन्तरे चक्षुरादीनां प्राणाद्यात्मत्वोक्तेश्चक्षुराद्यनुग्राहक-त्वोक्त्या चक्षुरादिरूपाध्यात्मविधारकत्वमप्युक्तमिति कथं बाह्यमभिधत्ते । कथमाध्यात्ममिति । अस्योत्तरमुक्तमिति द्रष्टव्यम् ॥ तेजस उदा-नवायुवदनुग्राहकत्वं व्यतिरेकप्रदर्शनेन साधयति । यस्मादिति ॥

स्तेजसा युक्तः। सहात्मना यथा सङ्कल्पितं लोकं नयति॥ १०॥

---

प्राणवृत्त्यैवावतिष्ठत इत्यर्थः। तदा हि वदन्ति ज्ञातय उच्छ्वसिति जीवतीति। स च प्राणस्तेजसोदानवृत्त्या युक्तः सन् सहात्मना स्वामिना भोक्त्रा स एवमुदानवृत्त्यैव युक्तः प्राणस्तं भोक्तारं पुण्यपापकर्म्मवशाद्यथासङ्कल्पितं यथाऽभिप्रेतलोकं नयति प्रापयति॥ १०॥

---

यस्मात्तेजःस्वभाव उत्क्रान्तिकृदप्युदानवायुर्वाह्यतेजोऽनुगृहीतः सन्नेव शरीरे वर्त्तते तस्माज्जीवजीवनहेतुकर्म्मोपरमे वाह्यतेजोऽनुग्रहाभावेनोपशान्ततेजा मुमूर्षुर्भवतीत्यन्वयः॥ स्वाभाविकमिति जाठराग्निकृतं हस्तादिना स्वशरीरस्पर्शे समुष्णत्वेनोपलभ्यमानं तेज इत्यर्थः॥ भवमुत्पद्यत इति भवः शरीरमित्यर्थः। शरीरान्तरप्रतिपत्तिरात्मनोऽक्रियस्य न सम्भवतीति शङ्कते। कथमिति॥ इन्द्रियोपाधिवशादित्याह। सहेति॥ मनसि सम्पद्यमानैरिन्द्रियैः सह शरीरान्तरं प्रतिपद्यत इति पूर्व्वेणान्वयः। उक्तं शरीरान्तरप्राप्तिमेवोत्क्रान्तिप्रदर्शनेन स्पष्टीकर्त्तुं यच्चित्त इत्यादि वाक्यं तदपेक्षिताध्याहारं कुर्वन् व्याचष्टे। मरणेति॥ यच्चित्त इति यद्देवतिर्य्यगादिशरीरं सम्यगिति चित्ते यस्य स यच्चित्त इत्यर्थः। प्राणं प्रत्यागमनं लोकव्यवहारेण प्रपद्यति। तदेति। तेजसा तेजोऽनुग्रहीतयोदानवृत्त्येत्यर्थः। एवम्भूतो भोक्तोदानसंयुक्तः प्राणः कं नयतीत्यपेक्षायां तमेव भोक्तारं नयतीति वदन् वाक्यार्थमाह। स एवमिति॥ एवकारस्य तमेवेत्यन्वयः यथा सङ्कल्पितमिति कर्म्मज्ञानादिसाधनानुष्ठानदशायां सङ्कल्पितं मरणकाले वासनारूपेण पुनरभिव्यक्तं लोकं देवादिशरीरमित्यर्थः॥ ९॥ १०॥

य एवंविद्वान् प्राणं वेद। न हास्य प्रजा हीयतेऽमृतो भवति तदेष श्लोकः ॥ ११ ॥ उत्पत्तिमायतिं स्थानं विभुत्वञ्चैव पञ्चधा। अध्यात्मञ्चैव प्राणस्य विज्ञायामृतमश्नुते विज्ञायामृतमश्नुत इति ॥ १२ ॥ इति तृतीयप्रश्नः ॥ ३ ॥

---

यः कश्चिदेवंविद्वान् यथोक्तविशेषणैर्विशिष्टमुत्पत्त्यादिभिः प्राणं वेद जानाति तस्येदं फलमैहिकमामुष्मिकञ्चोच्यते। न हास्य नैवास्य विदुषः प्रजाः पुत्रपौत्रादिलक्षणा हीयते हीयन्ते छिद्यन्ते। पतिते च शरीरे प्राणसायुज्यतया ऽमृतो ऽमरणधर्म्मा भवति तदेतस्मिन्नर्थे सङ्क्षेपाभिधायक एष श्लोको मन्त्रो भवति ॥ ११ ॥ उत्पत्तिपरमात्मनः प्राणस्यायतिमागमनं मनोकृतेन मनःकृतेन नास्मिञ्छरीरे

---

एवं प्राणस्वरूपं निर्द्धार्य्य तदुपासनं विधत्ते। यः कश्चिदिति ॥ उत्पत्त्यादिभिर्यथोक्तविशेषणैर्विशिष्ट आत्मनः प्राणो जायते मनः कृताभ्यां धर्म्माधर्म्माभ्यां शरीरं व्रजति। आत्मानञ्च पञ्चधा विभज्य पायूपस्थयोरपानं स्वस्वरूपम्। प्राणं चक्षुःश्रोत्रयोः। नाभौ समानम्। नाडीसमूहे व्यानम्। उदानञ्च सुषुम्नायां स्थापयति। उदानेनोत्क्रामन्ति बाह्यैः प्राणापानसमानव्यानोदानानुग्राहकैरादित्यपृथिवीदेवताकाशवायुतेजोरूपैरधिदैवमाधिकमादित्यादिकतानुग्राहकैरध्यात्मं चक्षुर्वाक्श्रोत्रमनस्त्वरूपचक्षुरादिग्राह्यमधिभूतञ्च धारयति। स एवोदानस्तथा भोक्ता च युक्तो भोक्तारं लोकान्तरं नयति स एव च वरिष्टः प्रजापतिरस्ताऽरे इत्येवं प्राणं वेद इत्यर्थः ॥ ऐहिकफलमुक्त्वाऽऽमुष्मिकफलमाह। पतित इति ॥ अमृतत्वं नात्र मुख्यं किन्तु प्राणसायुज्यमेवेत्याह। प्राणेति। इदन्तु

अथ हैनं सौर्य्यायणी गार्ग्यः पप्रच्छ । भगव-

स्थानं स्थितिञ्च पायूपस्थादिस्थानेषु विभुत्वं च स्वाम्यमेव सम्राडिव प्राणवृत्तिभेदानां पञ्चधा स्थापनम् । बाह्यमादित्यादिरूपेणाध्यात्मञ्चैव चक्षुराद्याकारेणावस्थानं विज्ञायैवं प्राणममृतमश्नुत इति । विज्ञायामृतमश्नुत इति द्विर्वचनं प्रश्नार्थपरिसमाप्त्यर्थम् ॥१२॥ इति तृतीयप्रश्नभाष्यम् ॥३॥

अथ हैनं सौर्य्यायणी गार्ग्यः पप्रच्छ प्रश्नत्रयेणापरविद्यागोचरं सर्व्वं परिसमाप्य संसारं व्याकृतविषयं साध्यसाधनलक्षणमनित्यम् । अथेदानीमसाधनसाध्यमप्राणममनोगोचरमतीन्द्रियमविषयं शिवं शान्तमविकृतमक्षरं

---

कामिनः निष्कामस्य तु चित्तैकाग्र्य तच्छुद्धिद्वारा तस्यैवामृतत्वं भवतीति द्रष्टव्यम् । आयतिमिति आगतिमित्यर्थः । सुगमं चान्यत् ॥ ११ ॥ १२ ॥ प्रश्नभाष्यविवरणे तृतीयः समाप्तः ॥ ३ ॥

एवं कर्म्मविद्यामतिश्रयणेन विरक्तस्य प्राणविद्यया चित्तैकाग्र्यं तच्छुद्धिमतोऽत एव साधनचतुष्टयवतो मुख्याधिकारिणः परविद्योत्पत्त्यर्थं प्रश्नत्रयमारभ्यते । अथ हैनमिति ॥ पूर्व्वं विद्ययैवामृतत्वोक्तेरुत्तरप्रश्नारम्भो व्यर्थ इत्यत आह । प्रश्नत्रयेणेति ॥ संसारमित्यतो न तच्छुद्धममृतत्वमित्यर्थः ॥ तत्र संसारत्वे व्याकृतत्वं हेतुमाह । व्याकृतविषयमिति ॥ व्याकृतात्मकं तदन्तर्गतमित्यर्थः । साध्यसाधनलक्षणमिति साध्यसाधनरूपत्वेन लक्ष्यतेऽभिव्यज्यते उत्पद्यत इति तथा । यद्वाऽपरब्रह्मणः प्राणस्य साध्यसाधनोभयात्मकत्वाद्वा तथा तस्मादनित्यमित्यतोऽपि संसारत्वमित्यर्थः ॥ असाध्यसाध्यं तु न तथेत्याह । असाध्येत्यादिना ॥ अतीन्द्रियमविषयमिति इन्द्रियविषयत्वमतिक्रान्तमित्यव्याकृतमकार्य्यमित्यर्थः ॥ तत्र हेतुः । अप्राणमिति । प्राणगोचरत्वेन तदात्मकर्म्मेन्द्रियागोचरत्वं मनो-

न्नेतस्मिन् पुरुषे कानि स्वपन्ति कान्यस्मिन् जा-

---

सत्यं परविद्यागम्यं पुरुषाख्यं सबाह्याभ्यान्तरमजं वक्तव्य-
मित्युत्तरं प्रश्नत्रयमारभ्यते। तत्र सुदीप्तादिवाग्नेर्यस्मा-
त्परादक्षरात्सर्वे भावा विस्फुलिङ्गा इव जायन्ते तत्रैवापि
यन्तीत्युक्तम्। द्वितीये मुण्डके के ते सर्व्वभावा अक्षराद्वि-
भज्यन्ते। कथं वा विभक्ताः सन्तस्तत्रैवापि यन्ति। किंलक्षणं
वा तदक्षरमिति। एतद्विवक्षयाऽधुना प्रश्नानुद्भावयति।
भगवन्नेतस्मिन् पुरुषे शिरःपाण्यादिमति कानि करणानि
स्वपन्ति स्वापं कुर्व्वन्ति स्वव्यापारादुपरमन्ते। कानि

---

ऽगोचरत्वेन ज्ञानेन्द्रियागोचरत्वमुक्तम्। सुखरूपतामाह। शिवमिति॥
निवृत्तानर्थत्वमाह। शान्तमिति। तत्र भावविकाररहितत्वं हेतुमाह।
अविकृतमिति। अनेनोत्पत्तिपरिणामवृद्धयो निषिद्धाः। अक्षरमित्य-
पक्षयविनाशौ निषिद्धौ। उत्पत्तिनिषेधेन तदनन्तरभाव्यस्तित्वं निषि-
द्धम्। अत्र सर्व्वत्र हेतुः। सत्यमिति। कालत्रयेऽप्येकरूपमित्यर्थः॥
तत्र अथ परा यया तदक्षरमधिगम्यत इत्यादि वाक्यं मानमाह।
परविद्यागम्यमिति। दिव्यो ह्यमूर्त्तः पुरुष इति मन्त्रमप्याह। पुरुषाख्य-
मिति॥ कथं पुरुषशब्दोदितं पूर्णत्वं बाह्याभ्यन्तरवस्तुभेदादत
आह। सबाह्येति॥ स एव बाह्याभ्यन्तरात्मकस्तद्व्यतिरेकेण तदुभयं
नास्तीत्यर्थः। प्रश्नत्रयमिति॥ यद्यपि पञ्चमः प्रश्नोऽपरविद्याविषय एव
प्रणवोपासनविषयत्वात्तथापि तस्य क्रममुक्तिफलत्वेन निर्विशेषात्मनैव
सविशेषब्रह्मप्राप्तिद्वारा पर्य्यवसानात्सोऽपि परविषय एवेति भावः।
एवं सामान्येन प्रश्नत्रयस्यापि सम्बन्धमुक्त्वा चतुर्थप्रश्नस्य प्रातिस्विक-
सम्बन्धमाह। तत्रेति॥ यस्मादित्यस्य किं वा तदक्षरमिति तच्छब्दे-
नान्वयः। उक्तमिति यथा प्रदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ति

ग्रति कतर एष देवः स्वप्नान् पश्यति कस्यैतत्

चास्मिन् जाग्रति जागरणमनिद्रावस्थाव्यापारं कुर्व्वन्ति। स्वव्यापारान् कुर्व्वन्तीत्यर्थः। कतरः कार्य्यकरणलक्षणानां य एष देवः स्वप्नान् पश्यति। स्वप्नो नाम जाग्रद्दर्शनान्निवृत्तस्य जाग्रद्वदन्तःशरीरे यद्दर्शनम्। तत्किं कार्य्यलक्षणेन देवेन निर्व्वर्त्त्यते किं वा करणलक्षणेन केनचिदित्यभिप्रायः। उपरते च जाग्रत्स्वप्नव्यापारे यत्प्रसन्नं निरायासलक्षणमनाबाधं सुखं कस्यैतद्भवति। तस्मिन् काले जाग्रत्स्वप्नव्यापारादुपरताः सन्तः कस्मिन्नु सर्व्वे सम्यगेकीभूताः सम्प्रतिष्ठिताः। मधुनि-

---

रूपाः तथाऽक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्तीति मन्त्रेणेत्यर्थः॥ एतद्विवक्षयेति॥ मन्त्रोक्तार्थविस्तरानुवादित्वादस्य प्रश्नस्येति भावः। अक्षरस्वरूपस्यैवविवक्षितत्वात्तद्विशेषणानि सपत्नीकत्वादिप्रश्नः जागरितादिना धर्म्मविशेषनिर्द्धारणार्थः अन्यथा तेषामात्मधर्म्मत्वशङ्कायां तन्निर्विशेषत्वनिर्व्वाहित्वैः। भावानां स्वरूपविभागादिविवक्षा तु ताः पुनरुदयतः प्रचरन्तीति इदन्तवाक्यस्यैको भावः ततो विभागेन निर्गमनमित्यक्षरे एकीभूतानां पृथिव्यादिकार्य्यकारणानामक्षराद्विभागप्रतीतेस्तावन्मात्रे च भाष्ये उक्तेति द्रष्टव्यम्॥ तत्राद्यप्रश्नेन जागरितस्य धर्म्मी पृष्टः। स्वप्ने यस्य व्यापारोपरमे जागरितं नास्ति स तस्य धर्म्मी इति निश्चेतुं शक्यत्वात्। द्वितीयेनावस्थात्रयेऽपि शरीररक्षकं कस्य धर्म्म इति पृष्टम्। जाग्रतोऽनुपरतव्यापारस्य प्राणस्य देहरक्षकत्वोपपत्तेः। तृतीयेन स्वप्नस्य धर्म्मी पृष्टः। चतुर्थेन सुषुप्तिधर्म्मी सुखमहमस्वाप्समिति सुप्तोत्थितस्य परामर्शे उक्तस्य सुषुप्तिसम्बन्धावगमात्। पञ्चमप्रश्नेनावस्थात्रयनिर्मुक्तमवस्थात्रयपर्य्यवसान

सुखं भवति कस्मिन्नु सर्वे संप्रतिष्ठिता भवन्तीति ॥ १ ॥

---

रसवत्समुद्रं प्रविष्टनद्यादिवच्च विवेकानर्हाः प्रतिष्ठिता भवन्ति सङ्गताः सम्प्रतिष्ठा भवन्तीत्यर्थः । ननु व्यस्तदात्रादिकरणवत्स्वव्यापारादुपरतानि पृथक् पृथगेव स्वात्मन्यवतिष्ठन्त इत्येतद्युक्तं कुतः प्राप्तिः सुषुप्तपुरुषाणां करणानां कस्मिंश्चिदेकीभावगमनाशङ्कायाः । स्पष्टः युक्तैवमाशङ्का । यतः संहतानि करणानि स्वाम्यर्थानि परतन्त्राणि च जाग्रद्विषये तस्मात्स्वापेऽपि संहतानां पार-

---

भूमिरूपं शरीरमक्षरं स्पृष्टमिति विवेकः । कार्य्येति कार्यं शरीरं प्राणो वा । करणानि मनआदीनि ॥ पदार्थानुक्त्वा वाक्यार्थं पिण्डीकृत्याह । तत्किमिति ॥ तत्पदं पूर्व्वापरयोः सम्बध्यते । प्रसन्नमिति विषयसम्पर्कात्तुच्छरहितम् । निरायासेन विशेषाभावमात्रेण । लक्ष्यतेऽभिव्यज्यते । निर्वातस्थापितदीपाशोकवदनाबाधं विनाशरहितं स्वात्मस्वरूपमित्यर्थः । एतदिति सुषुप्ते प्रकाशमानं सुखमहमस्वाप्समिति परामर्शमूलभूतमित्यर्थः ॥ तस्मिन् काल इति यद्यपि पञ्चमेन प्रश्नेन तुरीयं पृच्छ्यते न सुषुप्तिस्तथापि संसारदशायाम् । सर्व्वोपाधिरहिततुरीयावस्थाभावे कुत एव तस्य सदर्शनीयत्वात्तत्सुषुप्तवज्ज्ञाने सत्यपि इतरोपाधिराहित्येन तत्रैव सर्व्वोपाधिविवेककरणेन तुरीयप्रदर्शनस्य सुकरत्वात्तस्मिन् काले तुरीयप्रदर्शनार्थं सर्व्वसम्प्रतिष्ठितोक्तिः । सम्यगेकीभूता इति तदात्मभावप्राप्त्या विलयं गता इत्यर्थः । मधुनिरसवदिति यथा नानापुष्परसा मधुन्येकीभवन्ति तद्वदित्यर्थः । विवेकाभावमात्रेण दृष्टान्तावुक्तौ ॥ तत्र सर्व्वात्मना लयाभावादित्याह । विवेकानर्हा इति । पूर्वं विवेकानर्हाः सन्तः पश्चात्प्रतिष्ठिता इत्यर्थः । न चानेनापि

तन्त्रेणैव कस्मिंश्चित्संप्रतिर्न्याय्येति। तस्मादाशङ्कानुरूप एव प्रश्नोऽयम्। अत्र तु कार्य्यकारणसङ्घातो यस्मिंश्च प्रलीनः सुषुप्तप्रलयकालयोस्तद्विशेषं बुभुत्सोः स कोऽनु स्यादिति कस्मिन्नु सर्व्वे सम्प्रतिष्ठिता भवन्तीति ॥ १ ॥

---

प्रश्नेनाविद्यावासनाभिरविविक्तः सौषुप्त एव पृष्ट इति मन्तव्यम्। परे आत्मन्यक्षरे प्रतिष्ठन्त इति वक्ष्यमाणत्वात्सुषुप्ते चाज्ञान एव सम्प्रति-ष्ठानादेव हि कूटेत्याद्यज्ञानप्रतिबिम्बितस्य भोक्तुरपि प्रतिष्ठाया अभि-धास्यमानत्वादन्यायमित्यज्ञानाभावोक्तेश्च तुरीयमेव पृष्टमिति भावः। ननु कार्य्यकारणव्यतिरिक्ते सम्प्रतिष्ठानाधिकरणे सामान्येन कस्मिंश्चि-दवगते कस्मिन्नु सम्प्रतिष्ठिता इति विशेषप्रश्नो घटते। न च तस्या-वगतिरस्ति। न च सम्प्रतिष्ठानस्य साधिकरणत्वेन सामान्येना-धिकरणावगतिरस्तीति वाच्यम्। तन्तुपादानानामेवाचेतनानां तदधिकरणत्वेन तदतिरिक्तस्य चेतनस्यासिद्धिरिति शङ्कते। नन्विति॥ दान्तं नाम वस्त्रादिवयनार्थः यन्त्रविशेषः। स्वात्मनीति स्वोपादान इत्यर्थः। सुषुप्तपुरुषाणां करणानामिति सुषुप्तपुरुषाणां यानि करणानि तेषामित्यर्थः। एष हि कूटेत्यादिना पुरुषाणामप्येकीभावस्य वक्ष्यमा-णत्वाद्वा पुरुषाणामित्युक्तं अस्मिन् पक्षे करणानाञ्चेति चकारो द्रष्टव्यः। प्रष्टुः शङ्कायाः कुतः प्राप्तिरित्यन्वयः॥ संहतानां परार्थेन व्याप्तत्वात्संहतत्वेन हेतुना परस्मिंश्चेतने सामान्येनावगते प्रष्टुर्विशेषप्रश्नो युक्त इत्याह। युक्तैव त्विति॥ स्वाम्यर्थानि सङ्घाताभि-मान्यर्थानीत्यर्थः। आशङ्कानुरूप इति मनसि विद्यमानाशङ्कानुरूपो वाचिकः प्रश्न इत्यर्थः। अत्र सम्प्रतिष्ठानविशिष्ट आत्मा न पृष्टः किन्तु तदुपलक्षितः केवल आत्मा पृष्ट इति वाक्यतात्पर्य्यमाह। अत्र त्विति॥ भवतीत्यनन्तरं पृष्टमिति शेषः। यत्त्वया पृष्टं तच्छृण्वित्यन्वयः। तस्यैवार्कस्य ता मरीचय इत्यर्थः ॥ १ ॥

तस्मै स होवाच। यथा गार्ग्य मरीचयोऽर्कस्यास्तं गच्छतः सर्व्वा एतस्मिंस्तेजोमण्डल एकीभवन्ति। ताः पुनः पुनरुदयतः प्रचरन्त्येवं ह वै तत्सर्वं परे देवे मनस्येकीभवति। तेन

---

तस्मै स होवाचाचार्य्यः। शृणु हे गार्ग्य यत्त्वया पृष्टम्। यथा मरीचयो रश्मयोऽर्कस्यादित्यस्यास्तमदर्शनं गच्छतः सर्व्वा अशेषत एतस्मिंस्तेजोमण्डले तेजोराशिरूपे एकीभवन्ति विवेकानर्हत्वमविशेषतां गच्छन्ति ता मरीचयस्तस्यैवाऽर्कस्य पुनः पुनरुदयत उद्गच्छतः प्रचरन्ति विकीर्य्यन्ते। यथाऽयं दृष्टान्तः। एवं ह वै तत्सर्व्वं विषयेन्द्रियादिजातं परे प्रकृष्टे देवे द्योतनवति मनसि चक्षुरादिदेवानां मनस्तन्त्रत्वात् परो देवो मनस्तस्मिन् स्वप्नकाले एकीभवति मण्डले मरीचिवदविशेषतां गच्छति। जिजागरिषोश्च रश्मिवन्मण्डलान्मनस एव प्रचरन्ति स्वव्यापाराय प्रतिष्ठन्ते। यस्मात्स्वप्नकाले श्रोत्रादीनि शब्दाद्युपलब्धिकरणानि मनस्येकीभूतानीव करणव्यापारादुपरतानि तेन तस्मात्तर्हि तस्मिन् स्वापकाले एष देव-

---

स्वप्नेऽपि चक्षुरादिव्यापारोपलब्धेरेकीभावोऽसिद्ध इत्याशङ्क्य वासनामयेन्द्रियव्यापारे.पलब्धावपि बाह्यशब्दादिश्रवणादिव्यापाराभावेन तं साधयितुं तेनेति वाक्यं व्याख्याति। यस्मादिति। श्रोत्रादीनामेकीभावो नाम स्वस्वव्यापारं विहाय मनस्तन्त्रतयाऽवस्थानमात्रं न तु मुख्यमेकत्वं तेषां मनःप्रकृतिकत्वाभावेनाप्रकृतौ तदनुपपत्तेरित्यभिप्रेत्य इवकारः प्रयुक्तः॥ नेयायत इति इणो गत्यर्थस्य लट् तस्य रूप-

तत्रैष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नादत्ते नानन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते ॥ २॥ प्राणाग्नय एवैतस्मिन् पुरे जाग्रति । गार्हपत्यो

---

इत्यादिलक्षणः पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नादत्ते नानन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते लौकिकाः ॥ २ ॥ सुप्तवत्सु श्रोत्रादिषु करणेष्वेतस्मिन् पुरे नवद्वारे देहे प्राणाग्नयः प्राणादिपञ्चवायवोऽग्नय इवाग्नयो जाग्रति । अग्निसामान्यं ह्याह । गार्हपत्यो ह वा एषोऽपानः । कथमित्याह । यस्माद्गार्हपत्यादग्नेरग्निहोत्रकाले इतराग्निहोत्रकाले इतरोऽग्निराहवनीयः प्रणीयते प्रणयनात्प्रणीयत यस्मादिति प्रणयनो गार्हपत्योऽग्निर्यथा तथा सुप्तस्यापानवृत्तेः

---

मेतत् न गच्छतीत्यर्थः ॥ २ ॥ कानि स्वपन्तीत्यस्यार्थविषयाणि बाह्यकरणानि स्वपन्त्युपरमन्तेऽतस्तेषामेव जागरणधर्म्म इत्युत्तरग्रन्थः कानि जाग्रतीत्यस्योत्तरमाह । सुप्तवत्स्विति ॥ प्राणानामग्नित्वं प्राचमित्याह । अग्नय इवेति ॥ अपानस्य गार्हपत्यत्वे यद्गार्हपत्यात्प्रणीयते प्रणयनादितीदं वाक्यं व्यवहितमपि हेतुत्वेन योजयति । यस्मादिति ॥ प्रणयनादितिपदं गार्हपत्यविशेषणमित्याह । प्रणयनो गार्हपत्य इति । तत्प्रकृतमाहवनीयः प्राण इति वाक्यमाहस्याभिध्यानपर्वं व्याचष्टे । तथेति ॥ गार्हपत्यत्वेनोक्तेऽपानेऽन्तर्गच्छति सति बहिर्गच्छन् प्राण आहवनीय इत्यर्थः ॥ परित्यक्तं व्यानोऽन्वाहार्यपचन इति वाक्यमिदानीं व्याचष्टे । मानस्विति ॥ छान्दोग्ये गायत्रीविद्यायां

ह वा एषोऽपानो व्यानोऽन्वाहार्य्यपचनो यद्गा-र्हपत्यात्प्रणीयते प्रणयनादाहवनीयः प्राणः ॥३॥

यदुच्छ्वासनिश्वासावेतावाहुती समं नयतीति

---

प्रणीयत इव प्राणो मुखनासिकाभ्यां सञ्चरत्याहवनीय-स्थानीयः प्राणः। व्यानस्तु हृदयाद्दक्षिणसुषिरद्वारेण निर्ग-माद्दक्षिणदिक्सम्बन्धादन्वाहार्य्यपचनो दक्षिणाग्निः॥ ३ ॥

अत्र च होताग्निहोत्रस्य यद्यस्मादुच्छ्वासनिश्वासा-वग्निहोत्राहुती इव नित्यं द्वित्वसामान्यादेव तु एता-वाहुती समं साम्येन शरीरस्थितिभावाय नयति यो वायुरग्निस्थानीयोऽपि होता चाहुत्योर्नेतृत्वात्। कोऽसौ स समानः। अतश्च विदुषः स्वापोऽप्यग्निहोत्रहवनमेव। तस्मा-

---

तस्य वा एतस्य हृदयस्य पञ्च देवसुषिरा इत्युपक्रम्याथ योऽस्य दक्षिणः सुषिरः स व्यानस्तच्छ्रोत्रमित्यनेन व्यानस्य दक्षिणसुषिरतो निर्गमन-मुक्तमित्यन्वाहार्यपचनसादृश्यं दक्षिणदिक्सम्बन्धित्वं व्यानस्येति व्यानो-ऽन्वाहार्यपचन इत्यर्थः॥ ३ ॥

अत्र चेति ॥ अग्निहोत्रस्य होता होमस्य कर्त्ता ऋत्विगुच्यते उत्तरवाक्येनेति शेषः। अत्रोच्छ्वासनिश्वासयोराहुतित्वस्य पूर्व-मसिद्धत्वेन विद्वद्विशेषणायोगात् स समान इति तच्छब्दानन्वयाच्च वाक्यत्रयं तथाऽन्यथैव योजयति। यद्यस्मादिति॥ उच्छ्वासनि-श्वासावित्यनन्तरमाहुतीति पदं भाष्येऽध्याहृत्यैतावुच्छ्वासनिश्वासौ आहुती। आहवनीयाधिकरणाग्निहोत्राहुतीवद्द्वित्वसाम्यादेकोऽन्वयः। अनन्तरं भाष्ये तच्छब्दस्यार्थे श्रुतिगत इतिशब्दस्यादित्यर्थे। यस्मा-देतावाहुती यस्मादेतौ समं नयति शरीरस्थितिभावाय साम्येन नयति प्रवर्त्तयति यो वायुर्यथाऽग्निहोत्रे होमकर्त्ता आहुतिद्वयमाहव-नीयं प्रति समं नयति प्रापयति तद्वत् तस्मादाहुत्योर्नेतृत्वात्

स समानः। मनो ह वाव यजमान इष्टफलमेवो-

---

द्विहाभ्याकर्मेत्येवं मन्तव्य इत्यभिप्रायः। सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपत इति हि वाजसनेयके। अत हि जाग्रत्सु प्राणाग्निषूपहृत्य बाह्यकरणानि विषयांश्चाग्निहोत्रफलमिव स्वर्गं ब्रह्म जिगमिषुर्मनो ह वाव यजमानो जाग्रति यजमानवत्कार्य्यकरणेषु प्राधान्येन संव्यवहारात्स्वर्गमिव ब्रह्म प्रतिप्रस्थितत्वाद्यजमानो मनः कल्प्यते। इष्टफलं यागफलमेवोदानो वायुः। उदाननिमित्तत्वादिष्टफलप्राप्तेः। कथं स उदानो मनआख्यं यजमानं स्वप्नवृत्तिरूपादपि प्रच्याव्याहरहः सुषुप्तिकाले स्वर्गमिव ब्रह्माक्षरं गमयति। अतो यागफलस्थानीय उदानः॥ ४॥

---

वायुर्होतेति प्रश्नद्वयोत्तरद्वयाध्याहारेण द्वितीयोऽन्वयः। कोऽसौ वायुरिति तद्विषयप्रश्ने स होता वायुः स समान इति तृतीयान्वय इति विभागः॥ ननु प्राणाग्नय इत्यत्र सर्वेषां प्राणानामग्नित्वोक्तेः कथमिह समानस्य होतृत्वमुच्यत इत्याशङ्क्याह। अग्निस्थानीयोऽपीति। अग्नित्वेनोक्तोऽपीति भावः। होता चेति चकारोऽवधारणे होतैवेत्यर्थः। आहुतिनेतृत्वाद्धोतृत्वे स्थितेऽग्नित्वोक्तिः। शालिक्यावेनाग्न्यनग्निसद्भावे बाधाभिकोऽर्थः। अवस्थात्रयवर्त्तिनात्मनाऽवनित्यप्राणानामग्निहोत्राऽवयवसम्पादनस्य गोपासनं प्रयोजनम्। निर्विशेषात्मप्रकरणत्वात्तद्विध्यदर्शनाच्च किन्त्विन्द्रियाण्युपरमन्ते प्राणा जाग्रतीति॥ एवं त्वंपदार्थशोधनरूपस्य ध्यानस्य स्तुतिरेवेत्याह। अथवेति॥ सर्वदेति वाजसनेयके हि वाङ्मितः प्राणचितश्चक्षुश्चित इत्यादिना सर्वप्राणव्यापारेषु प्रत्येकमग्निचितत्वदृष्टिर्विधायैवं दृष्टिमतः सर्वाणि भूतान्यस्य स्वापकालेऽपि चयनं कुर्वन्तीति यद्दृष्टिस्तुता तद्वदिहापीत्यर्थः॥ अत हीति॥ अत्र मनो

दानः स एनं यजमानमहरहर्ब्रह्म गमयति ॥४॥

एवं विदुषः श्रोत्राद्युपरमकालादारभ्य यावत्सुप्तोत्थितो भवति तावत्सर्व्वयागफलानुभवेनाविदुषामिवानर्थायेति विद्वत्ता स्तूयते । न हि विदुष एव श्रोत्रादीनि स्वपन्ते प्राणाग्नयो वा जाग्रति । जाग्रत्स्वप्नयोर्मनः स्वातन्त्र्यमनुभवदहरहः सुषुप्तं वा प्रतिपद्यते । समानं हि सर्व्वप्राणिनां पर्य्यायेण जाग्रत्स्वप्नसुषुप्तिगमनं अतो विद्वत्तास्तुतिरेवेयमुपपद्यते । यत्पृष्टं कतर एष देवः स्वप्नान् पश्य-

यजमानः कल्पित इति व्यवहितान्वयः । तत्कल्पनायां हेतुद्वयमाह । यजमानवदिति ॥ हेतुद्वयं साधयति । जाग्रत्स्विति ॥ अत्र स्वप्नकाले विषयान् करणानि चोपसंहृत्य मनो जागर्त्ति । प्राधान्येन स्वव्यापारं कुर्व्वन्वर्त्तते । अग्निहोत्रफलं स्वर्गं जिगमिषुर्यजमान इव सुषुप्तिकाले स्वर्गरूपब्रह्म जिगमिषु च मन इत्यन्वयः । भाष्ये यजमान इत्यनन्तरमिवशब्दो द्रष्टव्यः । इवार्थशब्देन तत्प्रसिद्धमित्युक्तम् । इष्टेति उदाननिमित्तकमरणानन्तरं यागादिफलप्राप्तेः । तस्य तन्निमित्तत्वात्कारणे कार्य्योपचारादुदान इष्टफलत्वेन कल्प्यत इत्यर्थः । न केवलं मरणद्वारा यागफलप्रापकत्वमुदानस्य किन्त्वेतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेः सर्वयागफलानामपि ब्रह्मात्मकत्वाद्ब्रह्मप्रापकत्वादपि ॥ अहरहरिष्टफलप्रापकत्वमुदानस्येति प्रश्नपूर्व्वकमाह । कथमिति ॥ स्वर्गमिवेति स्वर्गमेवेत्यर्थः । सर्व्वयागफलात्मकस्वरूपमेव ब्रह्माक्षरं गमयतीत्यर्थः । यद्यप्यहरहर्ब्रह्मप्राप्तिर्न यागसाध्या यागरहितानामपि तत्प्राप्तेः तथापि ब्रह्मण एव सर्वयागफलत्वेन तत्प्रापकस्योदानस्येष्टफलप्रापकत्वमस्तीति भावः । न चोदानस्य कथं तत्प्रापकत्वमिति वाच्यम् । तस्य सुषुम्नानाडीचारित्वेन समस्तनाडीः प्रवेशयंस्तं स्वतं ब्रह्म प्रापयतीत्युपपत्तेः ॥ ४ ॥ ननु गार्हपत्यो वा एषो ऽपान इति श्रुतिमारभ्य मनो ह वाव यजमान इति श्रुत्यन्तेन ग्रन्थेन विद्वान् कर्म्मी न भवतीति

अत्रैष देवः स्वप्ने महिमानमनुभवति। यद्दृष्टं

तीति तदाह। अस्तोपरतेषु श्रोत्रादिषु देहरक्षार्थे जाग्रत्सु प्राणादिवायुषु प्राक्सुषुप्तिप्रतिपत्तेः एतस्मिन्नन्तराले एष देवोऽर्करश्मिवत्स्वात्मनि संहृतश्रोत्रादिकरणः स्वप्ने महिमानं विभूतिं विषयविषयित्वलक्षणमनेकात्मभावगमनमनुभवति प्रतिपद्यते। ननु महिमानुभवने करणं मनोऽनुभवितुस्तत्कथं स्वातन्त्र्येणानुभवतीत्युच्यते स्वतन्त्रोऽपि क्षेत्रज्ञः। नैष दोषः। क्षेत्रज्ञस्य स्वातन्त्र्यस्य मनउपाधिकृतत्वान्न हि क्षेत्रज्ञः परमार्थतः स्वतः स्वपिति जागर्त्ति वा। मन उपाधिकृतमेव तस्य जागरणं स्वप्नश्चेत्युक्तं वाजसनेयके सधीः स्वप्नो भूत्वा ध्यायतीवेत्यादि। तस्मान्मनसो विभूत्यनुभवे स्वातन्त्र्यवचनं न्याय्यमेव। मनउपाधिसहितत्वे स्वप्नकाले क्षेत्रज्ञस्य स्वयं ज्योतिष्ट्वं बाधत इति केचित्। तत्र श्रुत्यर्थापरिज्ञानकृता भ्रान्ति-

---

सूयत इत्युक्तमस्तु। एवं तत्राग्निहोत्रादिकर्म्मप्रतीतेरदानस्य वामफलस्यानीयत्वोक्तेस्तु न तत्फलत्वं तत्र कर्म्माप्रतीतेरत आह। एवं विदुष इति। विहृत्तेति श्रोत्रादीनि स्वप्ने उपरमन्ते प्राणा एव जाग्रतीत्येवंरूपा विद्येत्यर्थः। अस्याश्च विद्याया जागरणं श्रोत्रादिवाह्येन्द्रियधर्म्मः। शरीररक्षणं प्राणधर्म्मो नात्मधर्म्म इत्येव त्वंपदार्थविवेकरूपत्वात् स्तोतव्यत्वोपपत्तिः। अत एव प्राणजागरणस्याविद्वत्साधारणत्वात्कथं विद्वत्तास्तुतिरित्यपि शङ्का निरस्ता तस्यैवम्भूतविवेकाभावादिति। ननु विद्याप्रकरणत्वादस्य विदुषः श्रोत्राद्युपरमादिकं सर्वं भवतीति विधीयतां किं स्तुत्येत्याशङ्क्य विद्वदविद्वत्साधारण्येन स्वयमेव भवतो न विधेय-

दृष्टमनुपश्यति श्रुतं श्रुतमेवार्थमनुशृणोति देश-

स्तेषाम्। यस्मात् स्वयंज्योतिष्ट्वादिव्यवहारोऽध्यारोपात्ता: सर्व्वोऽविद्याविषय एव मनआद्युपाधिजनित:। यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येन्मात्रं संसर्गस्तस्य भवति। यत्र त्वस्य सर्व्वमात्मैवाभूत्तत्केन कं पश्येदित्यादिश्रुतिभ्य:। अतो मन्दब्रह्मविदामेवेयमाशङ्का न त्वेकात्मविदाम्। नन्वेवं सत्यत्रायं पुरुष: स्वयंज्योतिरिति विशेषणमनर्थकमतोच्यते। अल्पमिदमुच्यते य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेत इति। अन्तर्हृदयपरिच्छेदे सुतरां ज्योतिष्ट्वं बाध्येत सत्य-मेवमयं दोषो यद्यपि स्यात्स्वप्ने केवलतया स्वयंज्योति-

त्वमित्याह। न हीति॥ विद्वत्तास्तुतिरेवेति॥ श्रोत्रादिकं परे देवे मनस्येकीभवति प्राणाग्नयो जाग्रतीत्यत्र पदार्थविवेकरूपं ज्ञानं विवक्षितं तज्ज्ञानं गार्हपत्यो वा एषो ऽपान इत्यादिना स्तूयते उक्तप्रकारेणेत्यर्थ:॥ तृतीयप्रश्नोत्तरत्वेन कतर एष इत्यादि सर्व: पश्यतीत्यन्तं व्याचष्टे। यदिति॥ कतर इति॥ अत्रेति श्रौतं पदं गृहीत्वा व्याचष्टे। उपरतेष्वित्यादिना अन्तराले इत्यन्तेन॥ अनेकेति विषयिविषयाद्यनेकभावगमनमित्यर्थ:॥ इदञ्च महत्त्वव्याख्यानं स्वप्नद्रष्टुर्जीवस्य स्वातन्त्र्यवक्तव्ये देवशब्दितमनसस्तदुक्ति:॥ स्वप्नो मनोधर्म्मो नात्मधर्म्मो। आत्मनि तु तदारोपमात्रं लोकस्येति स्वापनार्थेति शङ्कापरिहाराभ्यामाह। नन्विति॥ मनउपाधिकृतमिति बाह्येन्द्रियप्रयुक्तं मनउपाधिकृतं जागरणं केवलमनउपाधि कृत: स्वप्न इत्यर्थ:॥ स्वप्नस्य धीशब्दवाच्यमन:-परिणामत्वात्। स्वप्नो भूत्वेति श्रुतौ सामानाधिकरण्यनिर्द्देश इति द्रष्टव्यम्। नन्वियं श्रुतिर्विभूत्वमनुभवेन स्वातन्त्र्यं वक्तुं न शक्नोति श्रुत्यन्तरविरोधापत्ते:। अतोऽत्र देवशब्देन चेतन्य एवोच्यते। तस्यैव

दिगन्तरैश्च प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति

ष्ट्वे नाड्यन्तावदपनीतं भारस्येति चेन्न। तत्रापि पुरीतति-नाडीषु शेत इति श्रुतेः पुरीततिनाडीसम्बन्धास्तत्रापि पुरुषस्य. स्वयंज्योतिष्ट्वे नाडीभारापनयाभिप्रायो यथैव कार्यं तत्रैवायं पुरुषः स्वयंज्योतिरिति। अन्यशाखात्वादनपेक्षा सा श्रुतिरिति चेन्न। अर्थैकत्वस्येष्टत्वादेको ह्यात्मा सर्ववेदान्तानामर्थो विजिज्ञापयिषितो बुभुत्सितश्च। तस्माद्युक्ता स्वप्ने आत्मनः स्वयंज्योतिष्ट्वोपपत्तिर्वक्तुम्। श्रुतेर्यथार्थतत्त्वप्रकाशकत्वात्। एवं तर्हि शृणु श्रुत्यर्थं हित्वा

---

स्वतः स्वातन्त्र्यमिति शङ्कते। मन इति। स्वयं ज्योतिष्ट्वमिति स्वयंज्योतिष्ट्वबोधकश्रुतिरित्यर्थः। अन्यथा द्वितीयसत्त्वेऽपि दीपादीनामिव भास्वतस्तस्य बाधाभावादित्यत्र किं मनसः सत्त्वे ज्योतिरन्तरस्य मनसो विद्यमानत्वादात्मनः स्वयं ज्योतिष्ट्वबोधनं न शक्यमिति श्रुतेः कार्यस्य बोधनस्य बाधोऽभिप्रेतः उत तद्बोधनरूपकार्यसिद्ध्यर्थं मनसोऽभावोऽपि विवक्षितः श्रुतौ ततश्च तत्सत्त्वे श्रुत्यर्थबाध इति वा। नाद्यः। मनसि सत्यपि एवं तर्हीति वक्ष्यमाणरीत्या मनसो दृश्यत्वेन ज्योतिष्ट्वायोगेनात्मन एव स्वयं ज्योतिष्ट्वस्य बोधयितुं शक्यत्वादित्याह। तत्रेति। न द्वितीयः। तदानीं मनसोऽभावस्तु श्रुत्यर्थ एव न भवतीत्याह। श्रुत्यर्थेति॥ आत्मनो ज्योतिष्ट्वाबोधनात्मकव्यवहारस्य प्रकाश्यादिसापेक्षत्वात्तस्मिन् सत्येवैतद्बोधसाधने मनआदौ च सत्येव तद्बोधयितुं शक्यते। नान्यथेति॥ मनआद्यभावो न श्रुतौ विवक्षितः तथा सति तद्बोधनाशक्तेरित्याह। यस्मादिति॥ तत्र मानमाह। यत्र वेति॥ द्वितीयाभावे व्यवहारो नास्तीत्यत्रापि मानमाह। नात्रेति॥ वक्ष्यमाणवाक्यसन्दर्भः असंसर्ग इतिच्छेदः। दृश्यासंसर्गे सुषुप्तौ विशेषविज्ञानाभावोक्त्या द्वितीयाभावे व्यवहारो नास्तीत्यर्थः॥ अतो न द्वितीयः कल्पः सम्भवतीत्याह। अत

दृष्टञ्चादृष्टञ्च श्रुतञ्चाश्रुतञ्चानुभूतञ्चाननुभूत-ञ्च सर्व्वं पश्यति सर्व्वः पश्यति ॥ ५ ॥

---

सर्व्वमभिमानं न त्वभिमानेन वर्षशतेनापि स्तुत्यर्थौ ज्ञातुं शक्यते सर्व्वैः पण्डितम्मन्यैः। यथा हृदयाकाशे पुरीतति नाडीषु च स्वपतस्तत्सम्बन्धाभावात् ततो विविच्य दर्शयितुं शक्यत इति। आत्मनः स्वयं ज्योतिष्ट्वं न बाध्यते। एवं मनस्त्वविद्याकामकर्म्मनिमित्तोद्भूतवासनावति कर्म्मनिमित्ता वासनाऽविद्ययाऽन्यद्वस्त्वन्तरमिव पश्यतः सर्व्वकार्य्यकर-

---

इति॥ ननु यदि स्वयंज्योतिष्ट्वबोधनार्थं मनआद्यभावो नापेक्षितः जागरितेऽपि तर्हि तद्बोधनसम्भवादत्रेति स्वप्नवाचिविशेषणमनर्थकमिति शङ्कते। नन्विति॥ किं विशेषणबलान्मनसोऽभावः सिषाधयिषितः उत विशेषणस्य गतिमात्रं पृच्छ्यते। नाद्यः। मनसोऽभावाङ्गीकारेऽप्यन्तर्हृदयाकाशस्य तत्कृतपरिच्छेदस्य च श्रुतिसिद्धत्वेन तन्मतेऽपि तत्र स्वयंज्योतिष्ट्वबोधनासम्भवात्॥ विशेषणानर्थक्यं तुल्यमित्याह। अतोच्यत इति। परिच्छेदोऽधिकोऽत्रोच्यत इति। तैरयं प्रयोगः। स्वयं ज्योतिरिति तद्बोधनमित्यर्थः॥ यथाश्रुते वास्तवस्य तस्य बाधस्यानापन्नत्वादिति। यद्यपि स्वप्नेऽन्तर्हृदयाकाशस्यात्मन्यकृत्स्नं ज्योतिष्ट्वं बोधयितुं न शक्यमिति दोषस्तुल्यस्तथापि स्वप्ने मनसोऽभावेन तद्बोधनप्रतिबन्धकस्याभावाद्दूरविप्रकर्षेण स्वयंज्योतिष्ट्वं स्वप्ने बोधयितुं शक्यमिति तद्विशेषणमर्थवदिति शङ्कते। अन्यमिति॥ स्वादित्य मन्तरं तथापीति शेषः। केवलतयेति मनसोऽभावेनेत्यर्थः। भास्येति प्रतिबन्धकस्येत्यर्थः। शेषबोधनं तु सुषुप्ते भविष्यतीत्यभिप्रायः। एवं तर्हि सुषुप्ते सर्वस्याप्यभावमाश्रित्य सम्यग्बोधनं विवक्षणीयं न च तत्सम्भवति। तत्रापि बहुप्रतिबन्धकस्य विद्य-

णेभ्यः प्रविविक्तस्य द्रष्टुर्वासनाभ्यो दृश्यरूपाभ्योऽन्यत्वेन स्वयंज्योतिष्ट्वं सुदर्पितेनापि तार्किकेण न वारयितुं शक्यते । तस्मात्साधूक्तं मनसि प्रलीनेषु करणेष्वप्रलीने च मनसि मनोमयः स्वप्नान् पश्यतीति । कथं मन्त्रिमानमनुभवतीत्युच्यते । यन्मित्रं पुत्रादि वा पूर्वं दृष्टं तद्वासनावासितः पुत्रमित्रादिवासनासमुद्भूतं पुत्रमित्रमिव चाविद्यया

---

मानत्वादित्याह । न तत्रापीति । सुषुप्ते ऽपीत्यर्थः । तत्रापीति स्वप्नेऽपीत्यर्थः । सुषुप्ते चेत्सर्वभारापनयः स्यात्तदा स्वप्नेऽर्द्धभारापनयाभिप्रायो वर्णयितुं शक्यते न च तदस्ति । अतोऽत्रेतिविशेषणं तदप्यनर्थककथनावसरे क्वैव श्रुतिगतविशेषणस्य गतिर्न वक्तव्या ॥ प्रकृतानुपयोगादिति सिद्धान्तैकदेशी कश्चिन्मन्दः शङ्कते । अन्येति ॥ सर्ववेदान्तास्त्वन्यायेनाथर्वश्रुतिविरोधेनैकवाक्यतया श्रुत्यर्थस्य वर्णनीयत्वात्तदविरोधोऽपि वक्तव्य इति पूर्ववाद्याह । नार्थैकत्वस्येति ॥ तर्हि का एव श्रुतिरर्थाभावाच्छक्यतामत आह । श्रुतेर्यथार्थेति ॥ स्वाध्यायोऽध्येतव्य इत्यध्ययनविधेरर्थावबोधफलत्वात्तस्य साम्प्रदायिकमिति व्याख्यातारमाम्नायस्यानर्थक्यायोगादित्यर्थः ॥ एवमेकदेशिनि दूषिते सिद्धान्त्युत्तरमाह । एवं तर्हीति ॥ तद्बुद्ध्यादावेव मुख्यश्रुत्यर्थ उच्यतां किं पूर्वोक्तरीत्या पक्षान्तराशङ्का तन्निराकरणाभ्यामित्याशङ्क्य पाण्डित्याभिमानवतो यथावदर्थबोधेऽनधिकारात्तस्य तदभिमानावतारणिकार्थं तया तर्कपक्षानामापद्य निराकृता इति वक्तुं सर्वमभिमानं निरस्येत्याद्युक्तम् । स्वयं ज्योतिष्ट्वश्रुतेरनतिशङ्क्यत्वाद्भ्रान्तृस्वप्नादौ हृदयाकाशादिसत्त्वेऽपि तत्सम्बन्धप्रतीत्यभावाद्विद्यमानस्याप्यविद्यमान तुल्यत्वेनात्मनः केवलत्वात्प्रकाशदर्शनाच्च स्वयंज्योतिष्ट्वमिति बोधनीयं मनसोऽभावादिनाप्येवं मनसि सत्यपि तस्य वासनामयगजतुरगादिविषयतया परिणामादृश्यत्वाच्च द्रष्टुः । ततो भेदेन विवेकतः श्रुत्या स्वप्रकाशत्वं बोध्यत इत्याह । यन्मित्रादिना ॥ मनसीति

पश्यतीव मन्यते तथा श्रुतमर्थं तद्वासनयानुशृणोतीव देशदिगन्तरैश्च देशान्तरैर्दिगन्तरैश्च प्रत्यनुभूतं पुनः पुनस्तत्प्रत्यनुभवतो वा ऽविद्यया तथा दृष्टञ्चास्मिन् जन्मन्यदृष्टञ्च जन्मान्तरदृष्टमित्यर्थः। अत्यन्तादृष्टे वासनानुपपत्तेः। एवं श्रुतञ्चाश्रुतञ्चानुभूतञ्चास्मिन् जन्मनि केवलेन मनसाऽननुभूतञ्च मनसैव जन्मान्तरेऽनुभूतमि-

---

त्यपीति शेषः। ननु मनश्चेदविद्यादिनिमित्तवशाद्गजतुरगादिरूपेणाभिव्यक्तवासनावत्तर्हि जाग्रतीव तस्याप्यन्यथैव प्रतीतिः स्यादित्यत आह। कर्म्मनिमित्तेति॥ तथा प्रतीतिं विना स्वप्ने भोगासिद्धेः स्वप्नभोगप्रदकर्म्मनिमित्तवशाज्जाग्रति गजादीनामिदन्तयाऽनुभवेन तद्वासनानामपि तथैवानुभवार्हत्वेन तद्वासनारूपाविद्यावशाच्च वासनाश्रयस्य मनस इदन्तयैव वस्त्वन्तरवत्प्रतीतिरित्यर्थः। इदञ्च विशेषणं मनसो विषयत्वेन विषयित्वासम्भवाद्विषयिण आत्मन एव स्वप्रकाशरूपत्वमिति वक्तुं जाग्रत्यादित्यादिकार्य्यं ज्योतिषां चक्षुरादिकरणज्योतिषाञ्च सत्त्वेन तत्संकीर्णत्वेनात्मनः स्वयंज्योतिष्ट्वं दुर्बोधम्। स्वप्ने तु तदभावात्सुबोधमिति वक्तुं सर्व्वकार्य्येभ्य आदि विशेषणम्। स्वप्ने आदित्यादिकार्य्यकरणज्योतिषां भासमानत्वेऽपि तेषां वासनामात्रत्वाद्दृश्यत्वाच्च विषयप्रकाशनासामर्थ्यमिति वक्तुं वासनात्म्य इति विशेषणम्। एतैश्च विशेषणैः स्वप्न एव एवम्भूतस्वयंज्योतिष्ट्वस्य बोधयितुं शक्यत्वादत्रायमसम्भवादत्रायमितिश्रुतौ स्वप्नविशेषणप्रयोजनमर्थवदि-त्युक्तमिति द्रष्टव्यम्। स्वयंज्योतिष्ट्वमिति सिद्धमिति शेषः। अतः कालश्रुतौ स्वप्ने मनसोऽभावविवक्षाकारणाभावेन तद्विरोधाभावादत्र देवशब्देन परदेवे मनस्येकीभवतीत्युक्तम्॥ मन एवोच्यत इत्युक्तमुपसंहरति। तस्मादिति॥ नन्विन्द्रियाणामुपरतत्वाद्विषयसम्बन्धाभावात् कथं मनसो महिमानुभव इति गृह्यते। कथमिति॥ पूर्व्वं ज्ञातस्यैव स्वप्ने ज्ञानात्तस्य वासनामात्रत्वमतो नेन्द्रियापेक्षेत्याह। उच्यत इति॥ दिति

स यदा तेजसाऽभिभूतो भवति। अत्रैष देवः स्वप्नान्न पश्यत्यथ तदैतस्मिञ्छरीरे एतत्सुखं

---

त्यर्थः। सच्च परमार्थोदकादि। असच्च मरीच्युदकादि। किं बहुना उक्तं सर्वं पश्यति सर्वः पश्यति सर्वमनोवासनोपाधिः सन् एवं सर्वकरणात्मा मनोदेवः स्वप्नान् पश्यति॥ ५॥

स यदा मनोरूपो देवो यस्मिन् काले सौरेण पित्ताख्येन तेजसा नाडीशये सर्वतोऽभिभूतो भवति तिरस्कृतवासनाद्वारो भवति तदा सह करणैर्मनसो रश्मयो हृद्युपसंहृता भवन्ति। तदा मनो दावाग्नि-

---

मित्रं पुत्रं वा पूर्वं दृष्टवान् तदेव दृष्टं पुत्रमित्यादिविषयवासनावासहभूतं मित्रं पुत्रं वाऽविद्यया पश्यतीति। दृष्टवानित्यादिपदाध्याहारेण वाक्यं योज्यम्। अन्यथा पुत्रमिति द्वितीयाया यच्छब्दस्य चानन्वयः स्यादिति। चक्षुरभावे तद्दर्शनायोगात्कथमुच्यत इत्युक्तम्। तथेति॥ अत्रापि योऽर्थः श्रुतस्तमेव श्रुतमर्थमित्यध्याहारेणैव श्रुतिर्योज्या। देशो नदीतीरादिः। दिक्प्राच्यादिरिति भेदः। प्रत्यनुभूतं प्रतिवारमनुभूतं पुनः पुनरनेकदिनेष्वनेकशोऽनुभवतीत्यर्थः॥ अन्यान्तरदृष्टमिति व्याख्याने हेतुमाह। अत्यन्तेति॥ अननुभूतस्येत्यस्य प्रत्ययस्य प्रत्यनुभूतमित्यनेन पुनरुक्तिमाशङ्क्याह। केवलेनेति॥ पूर्वमिन्द्रियद्वारकानुभव उक्त इदानीं पुनरुक्त इत्यर्थः॥ सर्वदर्शने हेतुमाह। सर्व इति॥ ५॥

यत्रैतत्सुखं भवतीत्यस्योत्तरं तदपेक्षितं वदन्नाह। स यदेति। पित्ताख्येति इदमुपलक्षणं पित्तमेव प्रकृत्या पेत्यपि द्रष्टव्यम्। तन्मनः प्राणमेवोपगच्छत इति श्रुत्यन्तरेण प्राणवद्दिते प्रकृति तस्य तदभिधानात्तिरस्कृतेति वासनाभिव्यक्तौ द्वारं स्वप्नभोगप्रदं कर्म

भवति ॥ ६ ॥ स यथा सोम्य वयांसि वासो वृक्षं सम्प्रतिष्ठन्ते । एवं ह वै तत्सर्वं पर आत्मनि सम्प्रतिष्ठते ॥ ७ ॥ पृथिवी च पृथिवीमात्रा चापश्चापोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा च चक्षुश्च द्रष्टव्यञ्च

---

यदविशेषविज्ञानरूपेण कृत्स्नं शरीरं व्याप्यावतिष्ठते तदा सुषुप्तो भवति । अत्रैतस्मिन् काले एष मन आख्यो देवः स्वप्नान्न पश्यति दर्शनद्वारस्य निरुद्धत्वात्तेजसा । अथ तदैतस्मिञ्छरीरे एतत्सुखं भवति यद्विज्ञानं निराबाधमविशेषेण शरीरव्यापकं प्रसन्नं भवतीत्यर्थः ॥ ६ ॥ एतस्मिन् कालेऽविद्याकामकर्मनिबन्धनानि कार्यकरणानि शान्तानि भवन्ति । तेषु शान्तेष्वात्मस्वरूपमुपाधिभिरन्यथा विभाव्यमानमद्वयमेकं शिवं शान्तं भवतीत्येतामेवावस्थां पृथिव्याद्यविद्याकृतमात्रानुप्रवेशेन दर्शयितुं दृष्टान्तमाह । स दृष्टान्तो यथा येन प्रकारेण सौम्य प्रियदर्शन वयांसि पक्षिणो वासार्थं वृक्षं सम्प्रतिष्ठन्ते गच्छन्ति एवं यथा

---

यत्तत्तिरस्कृतं तन्नोपरतं भवति तेजःशब्दितं प्रत्यक्चैतन्यमन्धा-दित्यरश्मय इति वासनेत्यर्थः । अविशेषविज्ञानेति सामान्यचैतन्यरूपेणेत्यर्थः । चेतनाशब्दितसामान्यशक्तिरूपेण वाऽरेण सुषुप्तस्तत्र इत्याह । तदेति ॥ नन्वेतत्सुखं भवतीत्ययुक्तं जन्यसुखस्य तदानीमसम्भवात् स्वरूपसुखस्य पूर्वमपि समत्वेन तदा भवतीत्यनुपपत्तेरित्याशङ्क्य स्वरूपसुखमेव विशेषविज्ञानरूपविक्षेपाभावे निर्वातस्थदीपप्रभावत्सम्यक्प्रकाशते तदपेक्षमेव तद्वचनमित्याह । यद्विज्ञान-

श्रोत्रञ्च श्रोतव्यञ्च घ्राणञ्च घ्रातव्यञ्च रसश्च रसयितव्यञ्च त्वक् च स्पर्शयितव्यञ्च वाक् च वक्तव्यञ्च हस्तौ चादातव्यञ्चोपस्थश्चानन्दयितव्यञ्च पायुश्च विसर्जयितव्यञ्च पादौ च गन्तव्यञ्च मनश्च मन्तव्यञ्च बुद्धिश्च बोद्धव्यञ्चाहङ्कारश्चाहङ्कर्त्तव्यञ्च

---

दृष्टान्तो ह वै तद्वक्ष्यमाणं सर्व्वं परे आत्मन्यक्षरे सम्प्रतिष्ठते ॥ ७ ॥ किन्तत्सर्व्वम्। पृथिवी च पृथिवीमात्रा च। आपश्च आपोमात्रा च। तेजश्च तेजोमात्रा च। वायुश्च वायुमात्रा च। आकाशश्चाकाशमात्रा च। स्थूलानि सूक्ष्माणि च भूतानीत्यर्थः। यथा चक्षुरिन्द्रियं द्रष्टव्यञ्च। श्रोत्रञ्च श्रोतव्यञ्च। घ्राणञ्च घ्रातव्यञ्च। रसश्च रसयितव्यञ्च। त्वक् च स्पर्शयितव्यञ्च। वाक् च वक्तव्यञ्च। हस्तौ चादातव्यञ्च। उपस्थश्चानन्दयितव्यञ्च। पायुश्च विसर्जयितव्यञ्च। पादौ च गन्तव्यञ्च। बुद्धीन्द्रियाणि कर्म्मेन्द्रियाणि तदर्थाश्चोक्ताः। मनश्च पूर्व्वोक्तम्। मन्तव्यञ्च तद्विषयः। बुद्धिश्च

---

जिति विज्ञानरूपं स्वरूपमुच्यमानमित्यर्थः ॥ ६ ॥ अनेनानन्दमयकोशवर्ज्जितमनभिव्यक्तं मनआदिवासनावज्ज्ञानं सुषुप्तिधर्म्मोत्युक्तम्। पञ्चमप्रश्नस्योत्तरं तुरीयस्वरूपं विवेक्तुं कथाहितविद्यालैबोध्यत इत्याह। एतस्मिन्निति॥ पूर्व्वमन्यथा विभाव्यमानमित्यर्थः। मात्रानुप्रवेशेनेति मात्राणां विवेकतोऽक्षरेऽनुप्रवेशेनेत्यर्थः ॥ ७ ॥ आपोमात्रा इत्यत्र विभक्तिलोपश्छान्दसः। स्थूलानि चेति पञ्चीकृतानि चेत्यर्थः। ततश्च पञ्चीकरणमेतच्छ्रुतिसिद्धमित्युक्तमन्यथा आकाशमात्रयोः पृथगुक्तानुपपत्तेरिति ॥ यद्यपि मनआदयो मनआदिपदार्थविषया अपि

चित्तञ्च चेतयितव्यञ्च तेजश्च विद्योतयितव्यञ्च प्राणश्च विधारयितव्यञ्च ॥ ८ ॥

एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुषः। स परे

---

निश्चयात्मिका। बोद्धव्यञ्च तद्विषयः। अहङ्कारश्चाभिमानलक्षणमन्तःकरणमहङ्कर्त्तव्यञ्च तद्विषयः। चित्तञ्च चेतनावदन्तःकरणम्। चेतयितव्यञ्च तद्विषयः। तेजश्च त्वगिन्द्रियव्यतिरेकेण प्रकाशविशिष्टा या त्वक्तया च निर्भास्यो विषयो विद्योतयितव्यम्। प्राणश्च सूत्रं यदाचक्षते तेन विधारयितव्यं सङ्ग्रथनीयं सर्व्वं कार्य्यकारणजातं परार्थेन संहतं नामरूपात्मकमेतावदेव ॥ ८ ॥

अतःपरं यदात्मरूपं जगत्कार्त्स्न्यं सूर्य्यकादिवज्जलादि(?)कर्त्तृत्वेनेहानुप्रविष्टम्। एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुषो विज्ञानं

---

द्रष्टव्यादिविषया एव न पृथक् तथापि मन्तव्यादिरूपेण पृथगिति पृथङ्निर्द्दिष्टा इति द्रष्टव्यम्।, प्रकाशविशिष्टा या त्वगिति त्वगाश्रयं चर्म्म तत्प्रकाशनिर्भास्यञ्च तद्द्वेवेत्यर्थः। पृथिवी चेत्यादिना विधारयितव्यस्त्वेतस्मान्नात्मव्यतिरिक्तं तदुपाधिभूतं सर्व्वमुक्तमित्याह सर्व्वं हीति॥८॥

एष हि द्रष्टेत्यादिनोपहितस्वरूपमुच्यत इत्याह। अतःपरमिति॥ द्रष्टृत्वमुपाधिकृतमपि द्रष्टृत्वादिकमुपाधिव्यतिरिक्तेऽनुपहिते आत्मन्यारोपितं स्फटिके लौहित्यवदतोऽनुपाधिभिन्नोऽप्यात्मा द्रष्टेत्यादिनोक्तः। विज्ञानात्मेत्यत्र द्रष्टेत्यादाविव कर्त्तृवाचकत्वेनाभावादिज्ञानं यस्य तद्वत्

अत्रैष देवः स्वप्ने महिमानमनुभवति । यद्दृष्टं

---

तीति तदाह । यत्रोपरतेषु श्रोत्रादिषु देहरक्षार्थं जाग्रत्सु प्राणादिवायुषु प्राक्सुषुप्तिप्रतिपत्तेः एतस्मिन्नन्तराले एष देवोऽर्करश्मिवत्स्वात्मनि संहृतश्रोत्रादिकरणः स्वप्ने महिमानं विभूतिं विषयविषयिलक्षणमनेकात्मभावगमनमनुभवति प्रतिपद्यते । ननु महिमानुभवने करणं मनोऽनुभवितुस्तत्कथं स्वातन्त्र्येणानुभवतीत्युच्यते स्वतन्त्रोऽपि क्षेत्रज्ञः। नैष दोषः। क्षेत्रज्ञस्य स्वातन्त्र्यस्य मनउपाधिकृतत्वान्न हि क्षेत्रज्ञः परमार्थतः स्वतः स्वपिति जागर्त्ति वा। मन उपाधिकृतमेव तस्य जागरणं स्वप्नश्चेत्युक्तं वाजसनेयके सधीः स्वप्नो भूत्वा ध्यायतीवेत्यादि। तस्मान्मनसो विभूत्यनुभवे स्वातन्त्र्यवचनं न्याय्यमेव। मनउपाधिसहितत्वे स्वप्नकाले क्षेत्रज्ञस्य स्वयं ज्योतिष्ट्वं बाधत इति केचित्। तत्र श्रुत्यर्थापरिज्ञानकृता भ्रान्ति-

---

सूयत इत्युक्तमस्तु। एवं तत्राग्निहोत्रादिकर्म्मप्रतीतेरदानस्य यागफलस्याग्नीयत्वोक्तेस्तु न तत्फलत्वं तत्र कर्म्माप्रतीतेरत आह। एवं विदुष इति॥ विद्वस्तेति श्रोत्रादीनि स्वप्ने उपरमन्ते प्राणा एव जाग्रतीत्येवंरूपा विद्येत्यर्थः। अस्याश्च विद्याया जागरणं श्रोत्रादिवाह्येन्द्रियधर्म्मः। शरीररक्षणं प्राणधर्म्मो नात्मधर्म्म इत्येव त्वंपदार्थविवेकरूपत्वात् स्तोतव्यत्वोपपत्तिः। अत एव प्राणजागरणस्याविद्वत्साधारणत्वात्कथं विद्वत्स्तुतिरित्यपि शङ्का निरस्ता तस्यैवम्भूतविवेकाभावादिति॥ ननु विद्याप्रकरणत्वादस्य विदुषः श्रोत्राद्युपरमादिकं सर्वं भवतीति विधीयतां किं स्तुत्येत्या। यद्य विद्वदविद्वत्साधारण्येन स्वयमेव भवतो न विधेय-

दृष्टमनुपश्यति श्रुतं श्रुतमेवार्थमनुशृणोति देश-

---

न्तेषाम्। यस्मात् स्वयंज्योतिष्ट्वादिव्यवहारोऽप्यामोक्षान्तः सर्व्वोऽविद्याविषय एव मनआद्युपाधिजनितः। यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येन्मात्रं संसर्गस्तस्य भवति। यत्र त्वस्य सर्व्वमात्मैवाभूत्तत्केन कं पश्येदित्यादिश्रुतिभ्यः। अतो मन्दब्रह्मविदामेवेयमाशङ्का न त्वेकात्मविदाम्। नन्वेवं सत्यत्रायं पुरुषः स्वयंज्योतिरिति विशेषणमनर्थकमत्रोच्यते। अल्पमिदमुच्यते य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेत इति। अन्तर्हृदयपरिच्छेदे सुतरां ज्योतिष्ट्वं बाध्येत सत्य-मेवमयं दोषो यद्यपि स्यात्स्वप्ने केवलतया स्वयंज्योति-

---

ष्ट्वमित्याह। न हीति॥ विद्वत्तास्तुतिरेवेति॥ श्रोत्रादिकं परे देवे मनस्येकीभवति प्राणाग्नयो जाग्रतीत्यत्र पदार्थविवेकरूपं ज्ञानं विवक्षितं तज्ज्ञानं गार्हपत्यो वा एषोऽपान इत्यादिना स्तूयते उक्तप्रकारेणेत्यर्थः॥ तृतीयप्रश्नोत्तरत्वेन कतर एष इत्यादि सर्वः पश्यतीत्यन्तं व्याचष्टे। यदिति॥ कतर इति॥ अत्रेति श्रौतं पदं गृहीत्वा व्याचष्टे। उपरतेष्वित्यादिना अन्तराले इत्यन्तेन॥ अनेकेति विषयिविषयाद्यनेकभावगमनमित्यर्थः॥ इदञ्च महत्त्वव्याख्यानं स्वप्नद्रष्टुर्जीवस्य स्वातन्त्र्यशङ्काव्ये देवशब्दितमनसस्तदुक्तिः॥ स्वप्नो मनोधर्मो नात्मधर्मः। आत्मनि तु तदारोपमात्रं लोकस्येति स्वापनार्थेति शङ्कापरिहाराभ्यामाह। नन्विति॥ मनउपाधिकृतमिति बाह्येन्द्रियप्रयुक्तं मनउपाधिकृतं जागरणं केवलमनउपाधि कृतः स्वप्न इत्यर्थः॥ स्वप्नस्य धीशब्दवाच्यमनःपरिणामत्वात्। स्वप्नो भूत्वेति श्रुतौ सामानाधिकरण्यनिर्देश इति द्रष्टव्यम्। नन्वियं श्रुतिर्विभूत्वानुभवेन स्वातन्त्र्यं वक्तुं न शक्नोति श्रुत्यन्तरविरोधापत्तेः। अतोऽत्र देवशब्देन चेतन एवोच्यते। तस्यैव

दिगन्तरेषु प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति

---

ष्ट्वेनार्थस्तावदपनीतं भारस्येति चेन्न। तत्रापि पुरीतति-नाडीषु शेते इति श्रुतेः पुरीततिनाडीसम्बन्धात्तत्रापि पुरुषस्य स्वयंज्योतिष्ट्वेनार्थभारापनयाभिप्रायो यद्येव कथं तर्ह्यत्रायं पुरुषः स्वयंज्योतिरिति। अन्यशाखात्वा-दनपेक्षा सा श्रुतिरिति चेन्न। अर्थैकत्वस्येष्टत्वादेको ह्यात्मा सर्ववेदान्तानामर्थो विजिज्ञापयिषितो बुभुत्सितश्च। तस्मा-द्युक्ता स्वप्ने आत्मनः स्वयंज्योतिष्ट्वोपपत्तिर्वक्तुम्। श्रुते-र्यथार्थतत्त्वप्रकाशकत्वात्। एवं तर्हि शृणु श्रुत्यर्थं हित्वा

---

स्वतः स्वातन्त्र्यमिति यद्भुते। मन इति॥ स्वयं ज्योतिरिति स्वयं-ज्योतिष्ट्वबोधकश्रुतिरित्यर्थः। अन्यथा द्वितीयसत्त्वेऽपि दीपादीनामिव वास्तवस्य तस्य बाधाभावादित्यत्र किं मनसः सत्त्वे ज्योतिरन्तरस्य मनसो विद्यमानत्वादात्मनः स्वयं ज्योतिष्ट्वबोधनं न शक्यमिति श्रुतेः कार्यस्य बोधनस्य बाधोऽभिप्रेतः उत तद्बोधनरूपकार्यसिद्ध्यर्थं मनसो-ऽभावोऽपि विवक्षितः श्रुतौ ततश्च तत्सत्त्वे श्रुत्यर्थबाध इति वा। नाद्यः। मनसि सत्यपि एवं तर्हीति वक्ष्यमाणरीत्या मनसो दृश्यत्वेन ज्योति-ष्ट्वायोगेनात्मन एव स्वयं ज्योतिष्ट्वस्य बोधयितुं शक्यत्वादित्याह। तत्रेति। न द्वितीयः। तदानीं मनसोऽभावस्तु श्रुत्यर्थ एव न भवतीत्याह। श्रुत्यर्थेति॥ आत्मनो ज्योतिष्ट्वबोधनात्मकव्यवहारस्य प्रकाश्यादिसापे-क्षत्वात्तस्मिन् सत्येवैतद्बोधसाधने मनआदौ च सत्येव तद्बोधयितुं शक्यते। नान्यथेति॥ मनआद्यभावो न श्रुतौ विवक्षितः तथा सति तद्बोधनाशक्ते-रित्याह। वक्ष्यादिति॥ तत्र मानमाह। यत्र वेति॥ द्वितीयाभावे व्यव-हारो नास्तीत्यत्रापि मानमाह। नान्येति॥ दृश्यमात्रासद्भावैः असंसर्ग इतिच्छेदः। दृश्यासंसर्गे सुषुप्तौ विशेषविज्ञानाभावोक्त्या द्वितीयाभावे व्यवहारो नास्तीत्यर्थः॥ अतो न द्वितीयः कल्पः सम्भवतीत्याह। अत

दृष्टञ्चादृष्टञ्च श्रुतञ्चाश्रुतञ्चानुभूतञ्चाननुभूत-
ञ्च सर्व्वं पश्यति सर्व्वः पश्यति ॥ ५ ॥

---

सर्व्वमभिमानं न त्वभिमानेन वर्णयतेनापि श्रुत्यर्थो ज्ञातुं शक्यते सर्व्वैः पण्डितम्मन्यैः। यथा हृदयाकाशे पुरीतति नाडीषु च स्वपतस्तत्सम्बन्धाभावात् ततो विविच्य दर्शयितुं शक्यत इति। आत्मनः स्वयं ज्योतिष्ट्वं न बाध्यते। एवं मनस्यविद्याकामकर्म्मनिमित्तोद्भूतवासनावति कर्म्मनिमित्ता वासनाऽविद्ययाऽन्यद्वस्त्वन्तरमिव पश्यतः सर्व्वकार्य्यकर-

---

इति॥ ननु यदि स्वयंज्योतिष्ट्वबोधनार्थं मनआद्यभावो नापेक्षितः जागरितेऽपि तर्हि तद्बोधनसम्भवात्तत्रेति स्वप्नवाचिविशेषणमनर्थकमिति शङ्कते। नन्विति॥ किं विशेषणबलान्मनसोऽभावः सिषाधयिषितः उत विशेषणस्य गतिमात्रं पृच्छ्यते। नाद्यः। मनसोऽभावाङ्गीकारेऽप्यन्तर्हृदयाकाशस्य तत्कृतपरिच्छेदस्य च श्रुतिसिद्धत्वेन तन्मतेऽपि तत्र स्वयंज्योतिष्ट्वबोधनासम्भवात्॥ विशेषणानर्थक्यं तुल्यमित्याह। अन्तोच्यत इति। परिच्छेदोऽधिकोऽत्रोच्यत इति। तेरयं प्रयोगः। स्वयं ज्योतिष्ट्वमिति तद्बोधनमित्यर्थः॥ यथाश्रुते वास्तवस्य तस्य बाधस्यानाशङ्क्यत्वादिति। यद्यपि स्वप्नेऽन्तर्हृदयाकाशस्त्वात्सम्यक्स्वयं ज्योतिष्ट्वं बोधयितुं न शक्यमिति दोषस्तुल्यस्तथापि स्वप्ने मनसोऽभावेन तद्बोधनप्रतिबन्धकस्याभावाद्दूरविप्रकर्षेण स्वयंज्योतिष्ट्वं स्वप्ने बोधयितुं शक्यमिति तद्विशेषणमर्थवदिति शङ्कते। सत्यमिति॥ स्यादित्यनन्तरं तथापीति शेषः। केवलतयेति मनसोऽभावेनेत्यर्थः। भारस्येति प्रतिबन्धकस्येत्यर्थः। शेषबोधनं तु सुषुप्ते भविष्यतीत्यभिप्रायः। एवं तर्हि सुषुप्ते सर्वस्याप्यभावमाश्रित्य सम्यग्बोधनं विवक्षणीयं न च तत्सम्भवति। तत्रापि बहुप्रतिबन्धकस्य विद्य-

योऽयं प्रविविक्तस्य द्रष्टुर्वासनाभ्यो दृश्यरूपाभ्योऽन्यत्वेन स्वयंज्योतिष्ट्वं सुदर्पितेनापि तार्किकेण न वारयितुं शक्यते। तस्मात्साधूक्तं मनसि प्रलीनेषु करणेष्वप्रलीने च मनसि मनोमयः स्वप्नान् पश्यतीति। कथं महिमानमनुभवतीत्युच्यते। यन्मित्रं पुत्रादि वा पूर्वं दृष्टं तद्वासनावासितः पुत्रमित्रादिवासनासमुद्भूतं पुत्रमित्रमिव चाविद्यया

---

मानत्वादित्याह। न तत्रापीति। सुषुप्ते ऽपीत्यर्थः। तत्रापीति स्वप्नेऽपीत्यर्थः। सुषुप्ते चेत्सर्वभारापनयः स्यात्तदा स्वप्नेऽर्धभारापनयाभिप्रायो वर्णयितुं शक्यते न च तदस्ति। अतोऽत्रेतिविशेषणं तदप्यनर्थकमनवसरे कैव श्रुतिगतविशेषणस्य गतिर्न वक्तव्या। प्रकृतानुपयोगादिति सिद्धान्तैकदेशी कश्चिन्मन्दः शङ्कते। अन्येति॥ सर्ववेदान्तास्ववञ्चावेनाथर्वश्रुतिविरोधेनैकवाक्यतया श्रुत्यर्थस्य वर्णनीयत्वात्तदविरोधोऽपि वक्तव्य इति पूर्ववाद्याह। मार्थैकत्वस्येति॥ तर्हि का एव श्रुतिरर्थाभावात्स्वच्छतामत आह। श्रुतेर्यथार्थेति॥ स्वाध्यायोऽध्येतव्य इत्यध्ययनविधेरर्थावबोधफलत्वात्तस्य साम्प्रदायिकमिति व्याख्याप्रकरमाणस्यानर्थक्यायोगादित्यर्थः॥ एवमेकदेशिनि दूषिते सिद्धान्त्युत्तरमाह। एवं तर्हीति॥ तद्ध्यादावेव सुखस्य श्रुत्यर्थ उच्यतां किं पूर्वोक्तरीत्या पक्षान्तराशङ्का तन्निराकरणाभ्यामित्याशङ्क्य पाण्डित्याभिमानवतो यथावदर्थबोधेऽनधिकारात्तस्य तदभिमानावतारणिकोर्षया तदंशमानापक्षा निराकृता इति तस्य गर्वमभिमानं निरसितुमाद्युक्तम्। स्वयं ज्योतिष्ट्वश्रुतेरन्यतिशङ्कत्वाद्धातृस्वप्नादौ हृदयाकाशादिसत्त्वेऽपि तत्सम्बन्धाप्रतीत्यभावाद्विद्यमानस्याप्यविद्यमानतुल्यत्वेनात्मनः केवलत्वात्प्रकाशदर्शनाच्च स्वयंज्योतिष्टमिति बोधनीयं मनसोऽभावादिनाप्येवं मनसि सत्यपि तस्य वासनामयगजतुरगादिविषयतया परिणामाद्दृश्यत्वाच्च द्रष्टुः। ततो भेदेन विवेकतः श्रुत्या स्वप्रकाशत्वं बोध्यत इत्याह। यथेत्यादिना॥ मनसीति

पश्यतीव मन्यते तथा श्रुतमर्थं तद्वासनयानुशृणोतीव देशदिगन्तरैश्च देशान्तरैर्दिगन्तरैश्च प्रत्यनुभूतं पुनः पुनस्तत्प्रत्यनुभवतो वा ऽविद्यया तथा दृष्टञ्चादृष्टञ्च अस्मिन् जन्मन्यदृष्टञ्च जन्मान्तरदृष्टमित्यर्थः। अत्यन्ताहृष्टे वासनानुपपत्तेः। एवं श्रुतञ्चाश्रुतञ्चानुभूतञ्चाननुभूतञ्च अस्मिन् जन्मनि केवलेन मनसाऽननुभूतञ्च मनसैव जन्मान्तरेऽनुभूतमि-

---

त्यपीति शेषः। ननु मनश्चेदविद्यादिनिमित्तवशाज्जन्मान्तरगादिरूपेणाभिव्यक्तवासनावत्तर्हि जाग्रतीव तस्याऽन्यथैव प्रतीतिः स्यादित्याशङ्क्याऽत आह। कर्म्मनिमित्तेति॥ तथा प्रतीतिं विना स्वप्ने भोगासिद्धेः स्वप्नभोगप्रदकर्म्मनिमित्तवशाज्जाग्रति गजादीनामिदन्तयाऽनुभवेन तद्वासनानामपि तथैवानुभवार्हत्वेन तद्वासनारूपाविद्यावशाच्च वासनाश्रयस्य मनस इदन्तयैव वस्त्वन्तरवत्प्रतीतिरित्यर्थः। इदञ्च विशेषणं मनसो विषयत्वेन विषयित्वासम्भवाद्विषयिण आत्मन एव स्वप्रकाशरूपत्वमिति वक्तुं जाग्रत्स्वादिकार्य्यं ज्योतिषां चक्षुरादिकरणज्योतिषाञ्च सत्त्वेन तत्संकीर्णत्वेनात्मनः स्वयंज्योतिष्ट्वं दुर्बोधम्। स्वप्ने तु तदभावात्सुबोधमिति वक्तुं सर्व्वकार्य्येत्यादिविशेषणम्। स्वप्ने आदित्यादिकार्य्यकरणज्योतिषां भासमानत्वेऽपि तेषां वासनामात्रत्वाद्दृश्यत्वाच्च विषयप्रकाशनासामर्थ्यमिति वक्तुं वासनाश्च इति विशेषणम्। एतैश्च विशेषणैः स्वप्न एव एवम्भूतस्वयंज्योतिष्ट्वस्य बोधयितुं शक्यत्वादत्रायं पुरुषः स्वयंज्योतिरिति श्रुतौ स्वप्नविशेषणस्य स्वार्थवदिप्युक्तमिति द्रष्टव्यम्। स्वयंज्योतिष्ट्वमिति सिद्धमिति शेषः। अतः काणश्रुतौ स्वप्ने मनसोऽभावविवक्षाकारणाभावेन तद्विरोधाभावादत्र देवशब्देन परदेवे मनस्येकीभवतीत्युक्तम्॥ मन एवोच्यत इत्युक्तमुपसंहरति। तस्मादिति॥ नन्विन्द्रियाणामुपरतत्वाद्विषयसम्बन्धाभावात् कथं मनसो महिमानुभव इति शङ्कते। कथमिति॥ पूर्व्वं ज्ञातस्यैव स्वप्ने ज्ञानात्तस्य वासनामात्रत्वमतो नेन्द्रियापेक्षेत्याह। उच्यत इति॥ दिति

स यदा तेजसाऽभिभूतो भवति । अत्रैष देवः स्वप्नान्न पश्यत्यथ तदैतस्मिञ्छरीरे एतत्सुखं

---

त्यर्थः । सच्च परमार्थोदकादि । असच्च मरीच्युदकादि । किं बहुना उक्तं सर्वं पश्यति सर्वः पश्यति सर्वमनोवासनोपाधिः सन् एवं सर्वकरणात्मा मनोदेवः स्वप्नान् पश्यति ॥ ५ ॥

स यदा मनोरूपो देवो यस्मिन् काले सौरेण पित्ताख्येन तेजसा नाडीशये सर्वतोऽभिभूतो भवति तिरस्कृतवासनाद्वारो भवति तदा सह करणैर्मनसो रश्मयो हृद्युपसंहृता भवन्ति । तदा मनोदामनो दावाग्नि-

---

यस्मिन्मित्रं पुत्रं वा पूर्वं दृष्टवान् तदेव दृष्टं पुत्रमित्रादिविषयवासनासमुद्भूतं मित्रं पुत्रं वाऽविद्यया पश्यतीति । दृष्टवानित्यादिपदाध्याहारेण वाक्यं योज्यम् । अन्यथा पुत्रमिति द्वितीयाया यच्छब्दस्य चानन्वयः स्यादिति । चक्षुरभावे तद्दर्शनायोगान्मनसेत्युक्तम् । तथेति ॥ अत्रापि योऽर्थः श्रुतस्तमेव श्रुतमर्थमित्यध्याहारेणैव श्रुतिर्योज्या । देशो नदीतीरादिः । दिक्प्राच्यादिरिति भेदः । प्रत्यनुभूतं प्रतिवारमनुभूतं पुनः पुनरनेकदिनेष्वनेकसमयेष्वनुभवतीत्यर्थः ॥ जन्मान्तरदृष्टमिति व्याख्याने हेतुमाह । अत्यन्तेति ॥ अननुभूतस्यास्य प्रत्ययस्य प्रत्यनुभूतमित्यनेन पुनरुक्तिमाशङ्क्याह । केवलेनेति ॥ पूर्वमिन्द्रियद्वारकानुभवशून्य इत्यसौ पुनरुक्त इत्यर्थः ॥ सर्वदर्शने हेतुमाह । सर्व इति ॥ ५ ॥

कदैतत्सुखं भवतीत्यस्योत्तरं तदपेक्षितं वदन्नाह । स यदेति । पित्ताख्येति इदमुपलक्षणं पित्तरूपेण ग्रहणा चेत्यपि द्रष्टव्यम् । तन्मनः प्राणमेवोपपद्यत इति श्रुत्यन्तरेण प्राणबद्धिते प्राज्ञे च तस्य सर्वाभिधानात्तिरस्कृतेति वासनाभिव्यक्तौ द्वारं सत्प्रभोगप्रदं कर्म

भवति ॥ ६ ॥ स यथा सोम्य वयांसि वासो वृक्षं सम्प्रतिष्ठन्ते । एवं ह वै तत्सर्व्वं पर आत्मनि सम्प्रतिष्ठते ॥ ७ ॥ पृथिवी च पृथिवीमात्रा चाप-श्चापोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायु-मात्रा चाकाशश्चाकाशमात्रा च चक्षुश्च द्रष्टव्यञ्च

---

यदविशेषविज्ञानरूपेण कृत्स्नं शरीरं व्याप्यावतिष्ठते तदा सुषुप्तो भवति । अत्रैतस्मिन् काले एष मन आख्यो देवः स्वप्नान्पश्यति दर्शनद्वारस्य निरुद्धत्वात्तेजसा। अथ तदैत-स्मिञ्छरीरे एतत्सुखं भवति यद्विज्ञानं निराबाधमविशे-षेण शरीरव्यापकं प्रसन्नं भवतीत्यर्थः ॥ ६ ॥ एतस्मिन् कालेऽविद्याकामकर्म्मनिबन्धनानि कार्य्यकरणानि शा-न्तानि भवन्ति। तेषु शान्तेष्वात्मस्वरूपमुपाधिभिरन्यथा विभाव्यमानमद्वयमेकं शिवं शान्तं भवतीत्येतामेवावस्थां पृथिव्याद्यविद्याकृतमात्रानुप्रवेशेन दर्शयितुं दृष्टान्तमाह। स दृष्टान्तो यथा येन प्रकारेण सौम्य प्रियदर्शन वयांसि पक्षिणो वासार्थं वृक्षं सम्प्रतिष्ठन्ते गच्छन्ति एवं यथा

---

यत्तत्तिरस्कृतं तन्नोपरतं भवति तेजःशब्दितं ब्रह्मचैतन्यसम्बन्धा-दित्यरश्मय इति वासनेत्यर्थः। अविशेषविज्ञानेति सामान्यचैतन्यरूपेणेत्यर्थः। चेतनाशब्दितसामान्यशक्तिरूपेण वाऽनेन सुषुप्त-सत्त्व इत्याह। तदेति॥ नन्वेतत्सुखं भवतीत्ययुक्तं जन्यसुखस्य तदानीमसम्भवात् स्वरूपसुखस्य पूर्वमपि समत्वेन तदा भवतीत्यनुपप-त्तेरित्याशङ्क्य स्वरूपसुखमेव विशेषविज्ञानरूपविक्षेपाभावे निर्वा-तस्थदीपप्रभावत् सम्यक्प्रकाशते तदपेक्षमेव तद्वचनमित्याह। यद्विज्ञान-

श्रोत्रञ्च श्रोतव्यञ्च घ्राणञ्च घ्रातव्यञ्च रसश्च रस-
यितव्यञ्च त्वक् च स्पर्शयितव्यञ्च वाक् च वक्त-
व्यञ्च हस्तौ चादातव्यञ्चोपस्थश्चानन्दयितव्यञ्च
पायुश्च विसर्जयितव्यञ्च पादौ च गन्तव्यञ्च मनश्च
मन्तव्यञ्च बुद्धिश्च बोद्धव्यञ्चाहङ्कारश्चाहङ्कर्त्तव्यञ्च

---

दृष्टान्तो ह वै तद्वक्ष्यमाणं सर्व्वं परे आत्मन्यक्षरे सम्प्रति-
ष्ठते ॥ ७ ॥ किन्तत्सर्व्वम् । पृथिवी च पृथिवीमात्रा च ।
आपश्च आपोमात्रा च । तेजश्च तेजोमात्रा च । वायुश्च
वायुमात्रा च । आकाशश्चाकाशमात्रा च । स्थूलानि
सूक्ष्माणि च भूतानीत्यर्थः । यथा चक्षुरिन्द्रियं द्रष्टव्यञ्च ।
श्रोत्रञ्च श्रोतव्यञ्च । घ्राणञ्च घ्रातव्यञ्च । रसश्च रसयित-
व्यञ्च । त्वक् च स्पर्शयितव्यञ्च । वाक् च वक्तव्यञ्च । हस्तौ चादा-
तव्यञ्च । उपस्थश्चानन्दयितव्यञ्च । पायुश्च विसर्जयितव्यञ्च ।
पादौ च गन्तव्यञ्च । बुद्धीन्द्रियाणि कर्म्मेन्द्रियाणि तदर्था-
श्चोक्ताः । मनश्च पूर्व्वोक्तम् । मन्तव्यञ्च तद्विषयः । बुद्धिश्च

---

मिति विज्ञानरूपं स्वरूपचक्षुरित्यर्थः ॥ ६ ॥ अनेनानन्दमयकोशवर्द्धितम-
नभिव्यक्तं मनआदिवासनावज्ज्ञानं सुषुप्तिधर्म्मीत्युक्तम् ॥ पञ्चमप्रश्न-
स्योत्तरं तुरीयस्वरूपं विवेकसौकर्य्याद्विविस्पष्टार्थं वोच्यत इत्याह ।
एतद्विद्विति ॥ पूर्व्वमन्यथा विभाव्यमानमित्यर्थः । मात्रानुप्रवेशेनेति
मात्रायां विवेकतोऽक्षरेऽनुप्रवेशेनेत्यर्थः ॥ ७ ॥ आपोमात्रा इत्यत्र
विभक्त्यलोपश्छान्दसः । स्थूलानि चेति पञ्चीकृतानि चेत्यर्थः । ततश्च
पञ्चीकरणमेतच्छ्रुतिसिद्धमित्युक्तमन्यथा आकाशमात्रयोः पृथगुक्त-
त्वानुपपत्तेरिति ॥ यद्यपि मन्तव्यादयो मनआदिवत्तद्दृश्यविषया अपि

चित्तञ्च चेतयितव्यञ्च तेजश्च विद्योतयितव्यञ्च प्राणश्च विधारयितव्यञ्च ॥ ८ ॥

एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुषः । स परे

---

निश्चयात्मिका । बोद्धव्यञ्च तद्विषयः । अहङ्कारश्चाभिमानलक्षणमन्तःकरणमहङ्कर्त्तव्यञ्च तद्विषयः । चित्तञ्च चेतनावदन्तःकरणम् । चेतयितव्यञ्च तद्विषयः । तेजश्च त्वगिन्द्रियव्यतिरेकेण प्रकाशविशिष्टा या त्वक्तयाच निर्भास्यो विषयो विद्योतयितव्यम् । प्राणश्च सूत्रं यदाचक्षते तेन विधारयितव्यं सङ्ग्रथनीयं सर्व्वं कार्य्यकारणजातं परार्थेन संहतं नामरूपात्मकमेतावदेव ॥ ८ ॥

अतःपरं यदात्मरूपं जलसूर्य्यकादिवद्भोक्तृत्वकर्तृत्वेनेहानुप्रविष्टम् । एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुषो विज्ञानं

---

द्रष्टव्यादिविषया एव न पृथक् तथापि मन्तव्यादिरूपेण पृथगिति पृथङ्निर्दिष्टा इति द्रष्टव्यम् । प्रकाशविशिष्टा या त्वगिति त्वगात्मकं चर्म्म तत्प्रकाशनिर्भास्यस्तु तद्वेद्येत्यर्थः । पृथिवी चेत्यादिना विधारयितव्यञ्चेत्यन्तेनात्मव्यतिरिक्तं तदुपाधिभूतं सर्व्वमुक्तमित्याह सर्व्वं हीति ॥ ८ ॥

एष हि द्रष्टेत्यादिनोपहितस्वरूपमुच्यत इत्याह । अतःपरमिति ॥ द्रष्टेत्युपाधिकृतमपि द्रष्टृत्वादिकमुपाधिव्यतिरिक्तेऽनुपहिते आत्मन्यारोपितं स्फटिके लौहित्यवदतोऽत्युपाधिभिन्नोऽप्यात्मा द्रष्टेत्यादिनोक्तः । विज्ञानात्मेत्यत्र द्रष्टेत्यादाविव कर्तृवाचकत्वस्याभावाद्विज्ञानं वस्तु तद्वत

ऽक्षरे आत्मनि सम्प्रतिष्ठते ॥ ९ ॥ परमेवाक्षरं प्रतिपद्यते स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सोम्य । स सर्वज्ञः सर्वो भवति तदेष श्लोकः ॥ १० ॥ विज्ञानात्मा सह

---

विज्ञायतेऽनेनेति करणभूतं बुद्ध्यादि इदन्तु विजानातीति विज्ञानं कर्तृकारकरूपं तदात्मा तत्स्वभावो विज्ञातृस्वभाव इत्यर्थः । पुरुषः कार्य्यकरणसङ्घातोक्तोपाधिपूर्णत्वात्पुरुषः । स च जलसूर्य्यकादिप्रतिबिम्बस्य सूर्य्यादिप्रवेशवज्जगदाधारशेषे परेऽक्षरे आत्मनि सम्प्रतिष्ठते ॥ ९ ॥ तदेकत्वविदः फलमाह । परमेवाक्षरं वक्ष्यमाणविशेषणं प्रतिपद्यत इत्येतदुच्यते । स यो ह वैतत्सर्व्वैषणाविनिर्म्मुक्तोऽच्छायं तमोवर्जितम् । अशरीरं नाम-

---

इत्यादाविव बुद्धेरभिधाने पौनरुक्त्यमाशङ्क्याह । विज्ञानमिति ॥ करणभूतमिति विज्ञानमत्र इत्यादावित्यर्थः ॥ एष हीति हिशब्दश्चशब्दार्थकः स च सम्प्रतिष्ठत इति क्रियानुकर्षणार्थ इति वदन् द्रष्टुरात्मनः पृथिव्यादिवत्स्वरूपेणाक्षरे लयो न सम्भवतीत्याशङ्क्योपाधिकृते उपहितरूपाभावमेवास्य लय इत्याह । स चेति ॥ ९ ॥ एवं आप्रश्नादीनामन्वयधर्म्मत्वोक्त्या शोधितत्वंपदार्थस्य तस्याक्षरैक्याभिधानपुरःसरं तज्ज्ञानस्य फलमुच्यत उत्तरवाक्येनेत्याह । तदेकत्वेति ॥ वक्ष्यमाणविशेषणमक्षरं प्रतिपद्यते इत्येवं रूपं फलमाहेत्यन्वयः । उत्तरवाक्यमिति शेषः । उक्तमर्थं मुमुक्षुप्ररोचनायाह । एतदुच्यत इति ॥ स इत्यस्यार्थमाह । सर्व्वेति ॥ आत्माधिकारिणो दुर्लभत्वं च यो ह वा इत्यनेनोक्तम् । स यः कश्चिदेवापूर्व्वं वदच्छायादिविशेषणमक्षरं वेदयत इत्येवं वाक्यं समापनीयम् ।

देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र। तदक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वमेवाविवेशेति ॥ ११ ॥ इति चतुर्थप्रश्नः समाप्तः ॥४॥

---

रूपसर्वोपाधिशरीरवर्जितम्। अलोहितं लोहितादिसर्वगुणवर्जितम्। यत एवमतः शुभ्रम्। सर्वविशेषणरहितत्वादक्षरम्। सत्यं पुरुषाख्यम्। अप्राणममनोगोचरम्। शिवं शान्तं सबाह्याभ्यन्तरमजं वेदयते विजानाति। यस्तु सर्वत्यागी सोम्य स सर्वज्ञो न तेनाविदितं किञ्चित्सम्भवति। पूर्वमविद्ययाऽसर्वज्ञ आसीत्पुनर्विद्ययाऽविद्यापनये सर्वो भवति तदा तस्मिन्नर्थे एष श्लोको मन्त्रो भवति ॥ १० ॥ उक्तार्थसंग्राहको विज्ञानात्मा सह देवैश्चाग्न्यादिभिः प्राणाश्चक्षुरादयो भूतानि पृथिव्यादीनि सम्प्रतिष्ठन्ति प्रविशन्ति। यत्र

---

यस्तु वेदयते स सर्वज्ञ इति वाक्यान्तरं कार्य्यमन्यथा यच्छब्दरूपानन्वयादाद्यवाक्येऽच्छायादिविशेषणमेव कारणसूक्ष्मस्थूलशरीरत्रयनिराकरणेनावस्थात्रयनिराकरणेनावस्थात्रयराहित्यमनूद्यते। लोहितादिगुणवर्जितमित्यनेन तद्गुणकस्थूलशरीरवर्जितमिति प्रतीतेः शुभ्रमित्यनेन तमेव तुरीयमनूद्य तस्याक्षरणमात्राधिकरणेनैक्यमुक्तमिति विवेकः। अक्षरमित्यनेनाक्षरं पुरुषं वेद सत्यं सबाह्याभ्यन्तरो ह्यजोऽप्राणो ह्यमनाः शुभ्र इति मन्त्रोक्तानि सर्वाणि विशेषणान्यात्मोपलक्षणान्यात्मोपलक्षणार्थं सङ्गृहीतानीत्याह। सत्यमित्यादिना ॥ यस्तु सर्वत्यागीत्यत्रापि वाक्ये वेदयत इत्यस्यानुषङ्गः। अत्र सर्वज्ञ इत्यनेन कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति प्रतिज्ञातं सर्वविज्ञानमुक्तम्। सर्वात्मत्वस्य ज्ञानजन्यत्वेऽनित्यत्वं स्यादत आह। पूर्वमिति ॥ एवं चारोपनिबन्धनिवारणाऽभूततद्भावो विवक्षित इत्याह।

अथ हैनं शैब्यः सत्यकामः पप्रच्छ। स यो ह

---

यस्मिन्नक्षरे तदक्षरं वेदयते यस्तु सोम्य प्रियदर्शन स सर्वज्ञः सर्वमेवाविवेश आविशतीत्यर्थः॥ ११॥ प्रश्नोपनिषद्भाष्ये चतुर्थप्रश्नः समाप्तः॥ ४॥

अथ हैनं शैब्यः सत्यकामः पप्रच्छ। अथेदानीं परापरब्रह्मप्राप्तिसाधनत्वेनोङ्कारस्योपासनविधित्सया प्रश्न आरभ्यते। स यः कश्चिद्ध वै भगवन्मनुष्येषु मनुष्याणां मध्ये तदद्भुतमिव प्रायणान्तं मरणान्तं यावज्जीवमित्येतदोङ्कारमभिध्यायीत आभिमुख्येन चिन्तयेत्। बाह्यविषयेभ्य उपसंहृतकरणः समाहितचित्तो भक्त्यावेशित-

---

सर्वो भवतीति॥ अग्न्यादिभिरिति। ततश्च चक्षुश्च द्रष्टव्यञ्चेत्यत्रापि चक्षुरादिभिर्देवा अप्युपचरिता इति व्याख्यातम्॥ १०॥ ११॥ इति चतुर्थप्रश्नोपनिषद्भाष्यटीका समाप्ता॥ ४॥

एवं चतुर्थप्रश्नोक्तोत्तमाधिकारिणः पदार्थशोधनपूर्वकवाक्यार्थज्ञानेनाक्षरप्राप्तिमुक्त्वाऽस्यानधिकारिणो मन्दवैराग्यवत ओमित्येवं ध्यायथ आत्मानं प्रणवो धनुरित्यादिमन्त्रसूचितब्रह्मलोकप्राप्तिद्वारा क्रमेणाक्षरप्राप्त्यर्थमोङ्कारोपासनं वक्तुं पञ्चमप्रश्नमवतारयति। अथ हैनमिति॥ इदानीमिति मार्गप्रश्ननिर्णयानन्तरमित्यर्थः। परेत्यपरब्रह्मलोकप्राप्तिक्रमेण परब्रह्मलोकप्राप्तिसाधनत्वेनेत्यर्थः। तदद्भुतमिवेति तदिति क्रियाविशेषणं तादृशमभिध्यानमिति तेन विशेषणेनाद्भुतत्वं दुष्करत्वं भातीत्यर्थः॥ अभिध्यानेन तत्पूर्वकालीने प्रत्याहारधारणे सूचिते इत्याह। बाह्येति॥ भक्त्याऽऽदरेणोपचारेणैवाऽऽवेशित आरोपितो ब्रह्मभावो यस्मिन्नोङ्कारे तस्मिन् समाहितचित्त इत्यन्वयः। अनेन धारणोक्ताध्यानशब्दार्थमाह। आत्मेति॥ सन्तानाविच्छेद इत्यविच्छि-

वै तन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत। कतमं वाव स तेन लोकं जयतीति ॥ १ ॥

तस्मै स होवाच। एतद्वै सत्यकाम परञ्चा-

---

ब्रह्मभावे ओँकारे आत्मप्रत्ययसन्तानाविच्छेदो भिन्नजातीयप्रत्ययान्तराखिलीकृतो निर्वातस्थदीपशिखासमोऽभिध्यानशब्दार्थः। सत्यब्रह्मचर्य्याहिंसाऽपरिग्रहत्यागसन्न्यासशौचसन्तोषामायावित्वाद्यनेकयमनियमानुगृहीतः स एवं यावज्जीवव्रतधारणः। कतमं वाव अनेके हि ज्ञानकर्म्मभिर्जेतव्या लोकास्तिष्ठन्ति तेषु तेनोङ्काराभिध्यानेन कतमं स लोकं जयतीति ॥ १ ॥

एवं पृष्टवते तस्मै स होवाच पिप्पलादः। एतद्वै सत्यकाम। एतद्ब्रह्म वै परञ्चापरञ्च ब्रह्म परं सत्यमक्षरं पुरुषाख्यमपरञ्च प्राणाख्यं प्रथमजं यत्तदोङ्कार एवोङ्कारा-

---

त्मसन्तान इत्यर्थः। प्रत्ययान्तरेण विजातीयप्रत्ययेनाखिलीकृतोऽनन्तरितश्चित्तस्यात्मविषयस्यैव सत एकदेशविक्षेपं वारयति। निर्वातेति॥ ध्यानेनैव यमादिसाधनजातमपि सूचितमित्याह। सत्येति॥ कतममिति डतमचोऽर्थं बहुषु निर्द्धारणं दर्शयति। अनेके हीति॥ ओँकाराभिध्यानत्वाद्धिरण्याद्युपासनवदपरप्राप्तिसाधनमेवोत परप्राप्तिसाधनमपीति प्रष्टुरभिप्रायः॥ १॥

तदभिप्रायज्ञः पिप्पलादोऽपरात्मकतया ध्यानस्यैदपरप्राप्तिमात्रसाधनं परात्मकत्वेन च क्रमेण परप्राप्तिसाधनमित्युत्तरमाह। एतद्वा इति॥ एतद्यच्छब्दयोर्नपुंसकयोरोङ्कारविशेषणत्वायोगाद्ब्रह्मविशेषणत्वमाह। एतद्ब्रह्मेति॥ किन्तद्ब्रह्मेत्यत आह। परञ्चेति॥

परञ्च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवायतने-

---

त्मकमोङ्कारप्रतीकत्वात् । परं हि ब्रह्म शब्दाद्युपलक्षणानर्हं सर्व्वधर्म्मविशेषवर्जितमतो न शक्यमतीन्द्रियगोचरत्वात्केवलेन मनसाऽवगाहितुमोङ्कारे तु विष्ण्वादिप्रतिमास्थानीये भक्त्यावेशितब्रह्मभावे ध्यायिनां तत्प्रसीदतीत्यवगम्यते शास्त्रप्रामाण्यात् । तथाऽपरञ्च ब्रह्म । तस्मात्परञ्चापरञ्च ब्रह्म यदोङ्कार इत्युपचर्य्यते । तस्मादेवं विद्वानेतेनैवात्म-

---

यदेतत्परञ्चापरं ब्रह्मास्ति तदुभयमोङ्कार इति वाक्यान्वय इत्यर्थः । न चैवं ब्रह्मोद्देशेनोङ्कारत्वविधाने ब्रह्मण्योङ्कारदृष्टिः प्रसज्येतेति वाच्यम् । ब्रह्मदृष्टिरुत्कर्षादिति न्यायेन लोकेषु सामोपासीतेत्यादाविव निकृष्टे ओङ्कारे एव ब्रह्मदृष्टिः सिध्यतीति भावः । तयोर्भेदात्कथमैक्यमित्यत उपचारादित्याह । ओँकारप्रतीकत्वादिति ॥ अनेन सामानाधिकरण्येनोङ्कारस्य प्रतीकत्वमुपदिश्यत इति भावः । ननु किं प्रतीकोपदेशेन साक्षादेव ब्रह्माभिधीयतामत आह । परं हीति ॥ शब्दादीति शब्दादिभिः साक्षाद्बोधनानर्हमित्यर्थः । आदिशब्देनानुमानादि गृह्यते ॥ प्रवृत्तिनिमित्तस्य धर्म्मस्य विशिष्टत्वाभावादिति तत्र हेतुमाह । सर्व्वेति न शक्यमित्यवगाहितुमित्यन्वयः । तर्हीन्द्रियैर्मनसा वा तद्बोधोऽस्त्वित्यत आह । अतीन्द्रियेति ॥ मनसेतीन्द्रियैर्वेत्यपि द्रष्टव्यं तर्हि तथाविधस्योङ्कारेऽप्यावेशासम्भवात्किञ्चिद्विशेषमारोप्यावेशो वक्तव्यः । अत एव सूर्य्यान्तर्गतत्वं विशेषं वक्ष्यति ॥ ओँकारतादात्म्ये च तत्कथं निर्विशेषलाभ अत आह । ओँकारे त्विति ॥ प्रसीदतीति तदुपासनेन चित्तस्य नैर्म्मल्ये सति निर्विशेषं स्वयमेव प्रकाशत इत्यर्थः । तत्र मानमाह । शास्त्रेति । अन्यथा परब्रह्मार्थिनस्तदुक्तिवैयर्थ्यादित्यर्थः तथाऽपरस्येति प्रसीदतीत्यन्वयः । तस्मादिति प्रतीकत्वादित्यर्थः । तस्मादेव विद्वानिति ब्रह्मत्वार्हत्व ब्रह्मत्वार्हमिति विद्वानित्यर्थः । एतेने-

नैकतरमन्वेति ॥ २ ॥ स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसम्पद्यते । तमृचो मनुष्यलोकमुपनयन्ते स तत्र

---

प्राप्तिसाधनेनैव ॐकाराभिध्यानेनैकतरं परमपरमन्वेति अनुगच्छति नेदिष्ठं ह्यालम्बनमोङ्कारो ब्रह्मणः ॥ २ ॥ स यद्यप्योङ्कारस्य सकलमात्राविभागज्ञो न भवति तथाप्योङ्काराभिध्यानप्रभावाद्विशिष्टामेव गतिं गच्छति किन्तर्हि यद्यप्येवमोङ्कारमेकमात्राविभागज्ञ एव केवलोऽभिध्यायीतैकमात्रं सदा ध्यायीत स तेनैव मात्रविशिष्ट ॐकाराभिध्यानेनैव संवेदितः सम्बोधितस्तूर्णं क्षिप्रमेव जगत्यां पृथिव्यामभिसम्पद्यते किं मनुष्यलोकमनेकानि

---

नेत्यनन्तरमायतनेनालम्बनेनेति पदद्वयं प्रमादतो गलितमिति द्रष्टव्यम् ॥ तस्य पदस्य पिण्डितार्थमाह । ॐकारेति ॥ न त्वेतच्छब्दार्थकथनमेतदिति द्रष्टव्यम् ॥ २ ॥ अभिध्यानस्यायतनत्वाभावादितरोपासनावदस्याप्युपासनत्वात्परप्रापकत्वं न सम्भवतीत्यत आह । नेदिष्ठमिति । मनआद्यपेक्षयेदं नेदिष्ठं समीपवर्त्यन्तरङ्गं श्रेष्ठमालम्बनमेतदालम्बनं श्रेष्ठमेतदालम्बनं परमित्यादिस्मृतेरित्यर्थः नेदिष्ठत्वमेव संस्तुवन्नुत्तरवाक्येन साधयति । स यदीति ॥ विकल्पस्यापि फलजनकत्वान्नेदिष्ठत्वमित्यर्थः । सकलेत्याकारादिमात्रात्रयात्मक ॐकारः स चोपासितव्य इति न जानाति किन्त्वाकारमात्रमुपासितव्यं जानातीत्यर्थः । तथाप्येकदेशज्ञानवैगुण्यतया दुर्गतिं न गच्छति किं तर्ह्योङ्काराभिध्यानप्रभावाद्विशिष्टामेव गतिं गच्छतीत्यन्वयः । तात्पर्यार्थमुक्त्वेदानीमक्षरार्थमाह । यद्यप्येवमिति ॥ यदिशब्दो यद्यपीत्यर्थे व्याख्यातः । एवञ्च स तेनैवेत्यत्र प्रागपि इतिपदं द्रष्टव्यम् । एकमात्रात्मकमोङ्कारमित्यर्थः । एक-

तपसा ब्रह्मचर्य्येण श्रद्धया सम्पन्नो महिमानमनुभवति ॥ ३ ॥ अथ यदि द्विमात्रेण मनसि

---

जन्मानि जगत्यां तत्र तं साधकं जगत्यां मनुष्यलोकमेवोपनयन्ते उपनिगमयन्ति । ऋचो ऋग्वेदरूपा ओङ्कारस्य प्रथमा एका मात्राः । तदभिध्यानेन स मनुष्यजन्मनि द्विजाग्र्यः सन्तपसा ब्रह्मचर्य्येण श्रद्धया च सम्पन्नो महिमानं विभूतिमनुभवति न वीतश्रद्धो यथेष्टचेष्टो भवति योगभ्रष्टः कदाचिदपि न दुर्गतिं गच्छति ॥ ३ ॥ अथ पुनर्यदि द्विमात्राविभागज्ञो द्विमात्रेण विशिष्टमोङ्कारम-

---

मात्राविशिष्टेनात्रापि एकमात्रात्वविशिष्टेनार्थः । ॐकारेति तदवयवेनार्थः । एकमात्राप्रधानमप्रधानीभूतमात्राद्वयं कृत्स्नमोङ्कारमिति केचिद्व्याचक्षते । दीपिकायां वाचस्पतिनैवाकारमात्रमित्येव व्याख्यातम् । अभ्योधित इति तन्मात्राभिध्यानेन तन्मात्रासाक्षात्कारवानित्यर्थः ॥ पृथिव्यां किमभिसम्पद्यत इति कर्माकाङ्क्षे किमिति मनुष्यलोकमितिपदमिच्छाकर्माकाङ्क्षां पूरयति । मनुष्येति ॥ मनुष्यशरीरमित्यर्थः । पृथिव्यां मनुष्यलोकस्यैव नियमात्तदुक्तिवैयर्थ्यमत आह । जन्मानि हीति । पश्वादीनि हीत्यर्थः ॥ तर्हि तस्य नियमेन कथं मनुष्यत्वप्राप्तिरत आह । तत्र तमिति ऋग्वेदरूपा हीति पृथिव्यकारः स ऋग्वेद इति श्रुतेरकारस्य तद्रूपत्वमित्यभिध्यानाकाररूपा मात्रा ऋग्वेदरूपेत्यन्वयः । तेनेति येन ऋचो मनुष्यलोकमुपानयन्त इत्यर्थः । वीतश्रद्ध इति श्रद्धाविरहितः सन्नित्यर्थः । योगभ्रष्ट इति एकदेशध्यानविकल इत्यर्थः । अनेन न हि कल्याणकृत्कश्चिदिति गीतावाक्यसंवादः सूचितः । द्विमात्रेण विशिष्टमिति द्वितीयमात्रात्वेन विशिष्टमोङ्कारं कृत्स्नमोङ्कारमित्यर्थः । न तु मात्राद्वयमकारस्य पूर्वमेवोक्तत्वादव

सम्पद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते । स सोम-लोकं स सोमलोके विभूतिमनुभूय पुनरावर्त्तते ॥ ४ ॥

---

भिध्यायीत स्वप्नात्मके मनसि मननीये यजुर्मये सोमदैवत्ये सम्पद्यते एकाग्रतयात्मभावं गच्छति स एवं सम्पन्नो मृतोऽन्तरिक्षमन्तरिक्षाधारं द्वितीयरूपं द्वितीयामात्रारूपैरेव यजुर्भिरुन्नीयते सोमलोकं सौम्यं जन्म प्रापयन्ति तं यजूंषीत्यर्थः । स तत्र विभूतिमनुभूय सोमलोके मनुष्यलोकं प्रति पुनरावर्त्तते ॥ ४ ॥

---

एव द्वितीयमात्रारूपमिति वक्ष्यति । स्मृतौ तृतीया द्वितीयार्थे ॐकारमभिध्यायीतेत्युपक्रमादिति भावः । अत्र मात्राभिधानं तादात्म्याभिधानपर्य्यन्तमिति वक्तुं मनसि सम्पद्यत इति वाक्यं तत्र सात्मनः सम्पत्ते साधनत्वेन फलत्वेन वाऽन्वयात्मनः मन्त्रेण तत्परिणामस्य सादिकत्वद्वारेत समययजुराद्यात्मत्वेन मुक्तान्तरे मृतो-ऽन्तर एव सम्पत इत्याह । स्वप्नात्मक इति । ॐकारसम्पत्तिपर्य्यन्तमभि-ध्यानं यः करोतीति वाक्यार्थः इत्यर्थः । अत्र केचित्तपदीत्यादिर्वः पुनरित्यन्तं स्तुतिः । किम्भूतफलाय रे विश्वभिन्नविराडुपासकोऽहं रे तेजसाभिन्नहिरण्यगर्भोपासनया विवक्षितमित्याह । तस्मात्ते मनःप्र-धानेनात्मरूपपरिणामस्याभिमानी हिरण्यगर्भ उच्यत इति वक्तुं स्वप्ना-त्मक इत्यादिविशेषणानीति बोध्यम् । दीपिकायान्तु मात्राद्वयस्य भिहितस्योपासकं मनसि सम्भक्तिय मनसा एकाग्रतया चिन्तनविषयि च स्थ स्व तम् । २ ॥ ४ ॥

यः पुनरेतन्त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्य्ये सम्पन्नः।

---

यः पुनरेतमोङ्कारं त्रिमात्रेण त्रिमात्राविषयविज्ञानविशिष्टेनोमित्येतेनैवाक्षरेण प्रतीकेन परं सूर्य्यान्तर्गतं पुरुषमभिध्यायीत तेनाभिध्यानेन प्रतीकत्वेन त्वालम्बनत्वप्रकृतमोङ्कारस्य परस्यापरस्य ब्रह्मेति भेदाभेदश्रुतेरोङ्कारमिति च द्वितीयानेकशः श्रुता बाध्येत अन्यथा यद्यपि तृतीयाभिधानत्वेन करणत्वमुपपद्यते तथापि प्रकृतानुरोधात्त्रिमात्रं परं पुरुषमिति द्वितीयैव परिणेया। त्यजेदेकं कुलस्यार्थेति न्यायेन स तृतीयो मात्रारूपस्तेजसि सूर्य्ये सम्पन्नो भवति ध्यायमानो मृतोऽपि सूर्य्यात् सोमलोकादिवन्न पुनरावर्त्तते किन्तु सूर्य्यसम्पन्नमात्र

---

एवमोङ्कारं स्तुत्वा तदुपासनं परब्रह्मविषयं विधत्ते यः पुनरिति॥ विज्ञानविशिष्टेनेति विज्ञानविषयीकृतेनेत्यर्थः। मात्रात्रयात्मकज्ञानेनेति यावत् पूर्व्ववदत्रापि त्रिमात्रेणेत्यत्र तृतीयामात्रामकार उच्यत इति भ्रमं वारयितुमोमित्येतेनैवाक्षरेणेत्युक्तम्। पूर्व्वत्र तत्तन्मात्राप्रधान ओङ्कार एवोच्यत इति मते इहैवेदं विशेषणमनुपपन्नम्। पूर्व्वत्राप्योङ्कारस्यैवोक्तत्वादिति तन्मतमनुपपन्नमिव भातीति त्रिमात्रेणेति तृतीया। अन्यथादोङ्कारो न प्रतीकं तथा सति विषयत्वेन कर्म्मतया द्वितीया स्यात् किन्त्वभिध्यापकत्वेन करणत्वमेव तृतीयावशादिति भ्रमं वारयति। प्रतीकेति॥ तस्य कर्म्मत्वेऽपि कारकत्वेनाभिध्यानक्रियानिर्व्वर्त्तकत्वेन हेतुत्वात्तन्मात्रविवक्षया तृतीयोपपद्यत इत्यर्थः। एवं व्याख्याने हेतुमाह। प्रतीकत्वेनेति॥ अभेदेति प्रतीकत्वे अधिष्ठानारोप्यमानयोस्तादात्म्यारोपादभेदश्रवणमुपपद्यते।

यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं

---

एव। यथा पादोदरः सर्पस्त्वचा विनिर्मुच्यते जीर्णत्वग्विनिर्मुक्तः स पुनर्नवो भवति। एवं ह वै एष यथा दृष्टान्तः स पाप्मना सर्पत्वक्स्थानीयेनाशुद्धिरूपेण विनिर्मुक्तः सामभिस्तृतीयमात्रारूपैरूर्ध्वमुन्नीयते ब्रह्मलोकं हिरण्यगर्भस्य ब्रह्मणो लोकं सत्याख्यम्। स हिरण्यगर्भः सर्वेषां संसारिणां जीवानामात्मभूतः। स ह्यन्तरात्मा लिङ्गरूपेण सर्वभूतानां तस्मिँल्लिङ्गात्मनि संहताः सर्वे जीवाः। तस्मात्स

---

करणत्वे तु न तदुपपद्यत इत्यर्थः। योऽकय इत्योङ्कारमभिध्यायीत स यद्येकमात्रमभिध्यायीतेति द्विवारश्रुतेरित्यर्थः। अन्यथैकस्य वाक्यैकत्वेनान्वयः। अथ यदि द्विमात्रेण यः पुनरेतं त्रिमात्रेणेति च तृतीयार्पि द्विवारं श्रुता हेतुत्वापेक्षया करणत्वेन स्वरसः च कारकविभक्तित्वात्ततस्तस्या अपि बाधो न युक्त इति यद्यते। यद्यपीति॥ द्वितीयाद्वयस्यापि कर्मत्वे स्वारस्यादुपक्रमस्थत्वाच्च तस्यैव प्राबल्यमित्याह। तथापीति॥ प्रकृतेति प्रक्रमानुरोधादित्यर्थः। किञ्च द्वितीयाद्वयश्रुत्यभेदश्रुतिः। एतेनैवायतनेनैकतरमन्वेति। आयतनेनैवान्वेतीत्यात्मनवाच्यायतनश्रुतिद्वयस्येति बहुश्रुत्यनुरोधेन तृतीयाद्वयं त्वन्यमित्याह। त्वज्जेर्देकर्मिति॥ तृतीयमात्राह्रप इति यद्यपि मात्रात्रयध्यानान्मात्रात्रयरूपित्वमेव तस्य तथापि तृतीयमात्राया एवेहासाधारणत्वप्राधान्येन निर्देश इति बोध्यम्। तृतीयमात्राह्रप इति सप्तम्यन्तपाठे तद्रूपविशेषणं मकारस्यादित्यात्मकत्वादिति। हिरण्यगर्भस्य जीवघनत्वमनागतावेक्षण्यात्रेनोपपादयति। स हिरण्यगर्भ इति॥ लिङ्गरूपेणेति समष्टिलिङ्गरूपेणेत्यर्थः॥ तस्मिन्निति॥ समष्टिलिङ्गात्मनि हिरण्यगर्भे

स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुष-मीक्षते तदेते श्लोकौ भवतः ॥ ५ ॥

तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योन्यसक्ता अनविप्रयुक्ताः । क्रियासु बाह्याभ्यन्तरमध्यमासु

---

जीवघनः स विद्वांस्त्रिमात्रोङ्काराभिज्ञः । एतस्माज्जीव-घनाद्धिरण्यगर्भात्परात्परं परमात्माख्यं पुरुषमीक्षते । पुरिशयं सर्व्वशरीरानुप्रविष्टः पश्यति ध्यायमानः । तदेता-वस्मिन्यथोक्तार्थप्रकाशकौ मन्त्रौ भवतः ॥ ५ ॥

तिस्रस्त्रिसङ्ख्याका अकारउकारमकाराख्या ओँकारस्य मात्राः । मृत्युर्यासां विद्यते ता मृत्युमत्यः मृत्युगोचराद-नतिक्रान्ता मृत्युगोचरा एवेत्यर्थः । ता आत्मनो ध्यान-क्रियासु प्रयुक्ताः । किञ्चान्योन्यसक्ता इतरेतरसम्बद्धाः । अनविप्रयुक्ता विशेषेणैकैकविषय एव प्रयुक्ताः । तथा न विप्रयुक्ता अविप्रयुक्ता नाविप्रयुक्ता अनविप्रयुक्ताः किन्तर्हि

---

व्यष्टिविज्ञाभिमानिनः सर्व्वे जीवा गोत्वसामान्ये खण्डमुण्डादय इव संहता इत्यर्थः ॥ इदानीं वाक्यं योजयति । स विद्वानिति ॥ स विद्वानि-दानीं ध्यायमानः पश्चाद्ब्रह्मलोकं प्राप्तः । तत्र ब्रह्मलोके स्थावरजङ्गमेभ्यः पराज्जीवघनात्परं पुरुषं पश्यति ततो मुक्तो भवतीत्यन्वयः ॥ ५ ॥

यत्र यः पुनरेतमित्यादिनोक्तेऽर्थे आद्यं मन्त्रं योजयति । तिस्र इति ॥ मृत्युगोचरा इति प्रत्येकं ब्रह्मदृष्टिं विना तदुपासकानाम् । मृत्युर्नातिक्रमणीय इत्यर्थः ॥ ब्रह्मदृष्ट्या संश्लिष्टत्वेन च सम्यक्च प्रयुक्तास्वेतास्वयं दोष इत्याह । किञ्चेति ॥ आपदिति आपत्पुरुषो वैश्वा-

सम्यक् प्रयुक्तासु न कम्पते ज्ञः ॥ ६ ॥ ऋग्भिरेतं यजुर्भिरन्तरिक्षं स सामभिर्यत्तत्कवयो वेदयन्ते ।

---

विशेषेणैकस्मिन्ध्यानकालेऽतिसृष्टासु क्रियासु बाह्याभ्यन्तरमध्यमासु जाग्रत्स्वप्नसुषुप्तस्थानपुरुषाभिध्यानलक्षणासु योगक्रियासु सम्यक् प्रयुक्तासु सम्यग्ध्यानकाले प्रयोजितासु न कम्पते न चलते ज्ञः । यो योगी यथोक्तविभागज्ञ ओँकारस्येत्यर्थः । न तस्यैवंविदश्चलनमुपपद्यते । यस्माज्जाग्रत्स्वप्नसुषुप्तपुरुषाः सह स्थानैर्मात्रात्रयरूपेणोङ्कारात्मरूपेण दृष्टाः ॥ ६ ॥ स ह्येवं विद्वान् सर्वात्मभूत ओँकारमयः कुतो वा चलेत्कस्मिन् वा । सर्वार्थसङ्ग्रहार्थो द्वितीयो मन्त्रः । ऋग्भिरेतं लोकं मनुष्योपलक्षितम् । यजुर्भिरन्तरिक्षं सोमाधिष्ठितम् । सामभिर्यत्तद्ब्रह्मलोकमिति तृतीयं कवयो मेधाविनो विद्यावन्त एव नाविद्वांसो वेदयन्ते । तं त्रिविधलोकमोङ्कारेण साधनेनापरब्रह्मलक्षणमन्वेत्यनुगच्छति विद्वान् । तेनैवोङ्कारेण यत्तत्परं ब्रह्मा-

---

नराभिन्नो विश्वस्तत्स्थानं स्थूलं शरीरं जागरितञ्च । स्वप्नपुरुषस्तु हिरण्यगर्भाभिन्नस्तैजसस्तत्स्थानं लिङ्गशरीरं स्वप्नश्च । सुषुप्ताभीश्वरात्मा प्राज्ञस्तत्स्थानमव्याकृतं सुषुप्तिश्च । तेषामकारादिमात्रात्रयेण यदभिध्यानं तत्तद्रूपतायास्तु योगक्रियासु प्रयुक्तास्वन्योऽन्यसक्ता अनतिप्रयुक्तास्तिस्रो मात्रा प्रयुक्ताश्चेन्न कम्पत इत्यन्वयः । अनेन सर्वात्मके परब्रह्मणीश्वरे ओँकाराभेदेन ध्यानमुक्तम् । यथोक्तेति । तिस्रो मात्रा इति लोकोक्त-विभाग इत्यर्थः । कुतो वेति चलनं विक्षेपः स्वस्य सर्वात्मत्वेन स्वव्यतिरिक्ताभावाच्चलनं न सम्भवतीति कुतो हेतोः कस्मिन् वा विषये चले-

तमोङ्कारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परञ्चेति ॥ ७ ॥ इति पञ्चमप्रश्नः समाप्तः ॥ ८ ॥

अथ हैनं सुकेशा भारद्वाजः पप्रच्छ। भगवन् हिरण्यनाभः कौसल्यो राजपुत्रो मामुपेत्यैतं

---

परं सत्यं पुरुषाख्यं शान्तं विमुक्तं जाग्रत्स्वप्नसुषुप्त्यादिविशेषसर्व्वप्रपञ्चविवर्जितमत एवाऽजरं जरावर्जितममृतं मृत्युवर्जितमेव। यस्माज्जराविक्रियादिरहितमतोऽभयम्। यस्मादेवाभयं तस्मात्परं निरतिशयम्। तदप्योङ्कारेणायतनेन गमनसाधनेनान्वेतीत्यर्थः। इति शब्दो वाक्यपरिसमाप्त्यर्थः ॥ ७ ॥ इति प्रश्नोपनिषद्भाष्ये पञ्चमप्रश्नः समाप्तः ॥५॥

अथ हैनं सुकेशा भारद्वाजः पप्रच्छ इमस्तं जगत्कार्य्यकारणलक्षणं सह विज्ञानात्मना परस्मिन्नक्षरे सुषुप्तिकाले सम्प्रतिष्ठित इत्युक्तम्। सामर्थ्यात्प्रलयेऽपि तस्मिन्नेवाक्षरे

---

दित्यर्थः। अपर ब्रह्मप्राप्त्यर्थं य ओङ्कारः प्रयुक्तस्तेनैव न पृथक्प्रयुक्तः परमपि प्रैति ब्रह्मलोके। उत्पन्ननिर्विशेषब्रह्म साक्षात्कारेणैतस्योङ्कारस्य क्रममुक्तिफलत्वादित्याह। तेनैवेति॥ येनापरमन्वेति तेनैव परमप्यन्वेतीत्येवकारार्थः। तदप्योङ्कारेणैवायतनविशेषणार्थं पुनरोङ्कारग्रहणमिति न पुनरुक्तिरिति बोध्यम्॥ ६ ॥ ७ ॥ इति प्रश्नोपनिषद्भाष्यटीकायां पञ्चमप्रश्नः पूर्णः ॥ ५ ॥

गताः कलाः पञ्चदशप्रतिष्ठाः कर्म्माणि विज्ञानमयश्चेति मन्त्रे कर्म्मभिः सह षोडशकलानां परस्मिन् लयमुक्त्वा यथा नद्यः स्यन्दमाना इति मन्त्रे च दृष्टान्तोक्तिद्वारा परप्राप्तिरुक्ता तत्र-

प्रश्नमपृच्छत। षोड़शकलं भारद्वाज पुरुषं वेत्थ तमहं कुमारमब्रुवं नाहमिमं वेद यद्यहमिम-मवेदिषं कथं ते नावक्ष्यमिति समूलो वा एष

---

सम्प्रतिष्ठते जगत् तत एवोत्पद्यत इति सिद्धं भवति। न ह्यकारणे कार्य्यस्य सम्प्रतिष्ठानमुपपद्यते। उक्तञ्चात्मन एष प्राणो जायत इति। जगतश्च यन्मूलं तत्परिज्ञानात्परं श्रेय इति सर्व्वोपनिषदां निश्चितोऽर्थः। अनन्तरञ्चोक्तं स सर्वज्ञः सर्व्वो भवतीति। वक्तव्यञ्च क्व तर्हि तदक्षरं सत्यं पुरुषाख्यं विज्ञेयमिति। तदर्थोऽयं प्रश्न आरभ्यते। वृत्तान्वाख्या-नञ्च विज्ञानस्य दुर्लभत्वख्यापनेन तल्लब्ध्यर्थं मुमुक्षूणां यत्न-विशेषोत्पादनार्थम्। हे भगवन् हिरण्यनाभो नामतः कोस-लायां भवः कौसल्यो राजपुत्रो जातितः क्षत्रियो मामुपे-त्योपगम्यैतमुच्यमानं प्रश्नमपृच्छत। षोड़शकलं षोड़शस-ङ्ख्याकाः कला अवयवा इवात्मन्यविद्याध्यारोपितरूपा

---

न्ययोर्विस्तराभिधानार्थं षष्ठं प्रश्नमारभते। अथ हैनमिति॥ तस्य पूर्व्वेण सङ्गतिमुक्त्वाऽर्थानुवादपूर्व्वकमाह। समस्तमित्यादिना॥ अपरस्य कार-णत्वसिद्धार्थं प्रलयेऽपि तस्मिन्नेव लयमाह। सामर्थ्यादिति॥ लयाधारत्वेन कारणत्वमाह। तत इति॥ तदुक्तेः प्रयोजनमाह। जगत इति॥ यद्यप्य-द्वितीयात्मज्ञानान्मुक्तिर्न कारणज्ञानात् तथापि तस्य कारणत्वे तद्व्यतिरे-केण कार्य्याभावात्तदद्वितीयत्वज्ञानं सिध्यतीति तादृशात्मज्ञानात्परं श्रेय इति। आत्मा वा इदमेक एव। स एतमेव पुरुषं ब्रह्म ततमपश्यत्। प्रज्ञानं ब्रह्म। स एतेन प्रज्ञानेनात्मना अस्मात् समभवत्। सदेवैक-मेवाद्वितीयमित्युपक्रम्याचार्य्यवान् पुरुषो वेद अथ सम्पत्स्ये तमेवैकं

परिशुष्यति योऽनृतमभिवदति तस्मान्नार्हाम्यनृतं वक्तुं स तूष्णीं रथमारुह्य प्रवव्राज । तं त्वा पृच्छामि क्वासौ पुरुष इति ॥ १ ॥ तस्मै स हो-

---

यस्मिन् पुरुषे सोऽयं षोडशकलस्तं षोडशकलं हे भारद्वाज पुरुषं वेत्थ । तमहं राजपुत्रं कुमारं पृष्टवन्तमब्रुवमुक्तवानस्मि नाहमिमं वेद यं त्वं पृच्छसीति । एवमुक्तवत्यपि मय्यज्ञानमसम्भावयन्तं तमज्ञाने कारणमवादिषम् । यदि कथञ्चिदहमिमं त्वया पृष्टं पुरुषमवेदिषं विदितवानस्मि कथमत्यन्तशिष्यगुणवतेऽर्थिने ते तुभ्यं नावक्ष्यं नोक्तवानस्मि न ब्रूयामित्यर्थः । भूयोऽप्यप्रत्ययमिवालक्ष्य प्रत्याययितुमब्रुवम् । समूलः सह मूलेन वै एषोऽन्यथा सन्तमात्मानमन्यथा कुर्वन्ननृतमयथाभूतार्थमभिवदति यः स परिशुष्यति शोषमुपैतीहलोकपरलोकाभ्यां विच्छिद्यते विनश्यति । यत एवं जाने तस्मान्नार्हाम्यहमनृतं वक्तुं मूढवत् । स राजपुत्र एवं प्रत्यायितस्तूष्णीं व्रीडितो रथमारुह्य प्रवव्राज

---

जगाम । अज्ञातस्यैव हेतुः अहं ज्ञास्यामीति । तस्मात्सर्वमभवदित्यादिषु निश्चितमित्यर्थः । इहापि तादृगात्मज्ञानादेव सर्वात्मभावः श्रेय उक्त इत्याह । अनन्तरमिति ॥ इत्थमनूद्य वर्त्तिष्यमाणमाह । वक्तव्यमिति ॥ तदर्थोऽयमिति तस्य शरीरान्तस्थस्योक्तिद्वारा तस्य प्रत्यगात्मत्वज्ञानार्थमित्यर्थः । प्रश्नमिति प्रष्टव्यमित्यर्थः । अज्ञाने कारणमिति अज्ञानसम्भावनायां कारणमित्यर्थः । अप्रत्ययमिति अविश्वासमित्यर्थः । अन्यथा सन्तमिति ज्ञानिनं सन्तमन्यथा कुर्वन्नज्ञानिनं कुर्वन्ना-

वाच। इहैवान्तःशरीरे सोम्य स पुरुषो यस्मि-न्नेताः षोड़शकलाः प्रभवन्तीति ॥ २ ॥

स ईक्षाञ्चक्रे। कस्मिन्नहमुत्क्रान्त उत्क्रान्तो

---

प्रगतवान् यथा गतमेव। यतो न्यायत उपसन्नाय योग्याय जानता विद्या वक्तव्यैव अनृतञ्च न वक्तव्यं सर्व्वास्वप्यवस्थास्वित्येतत्सिद्धं भवति। तं पुरुषं त्वा त्वां पृच्छामि मम हृदि विज्ञेयत्वेन शल्य इव मे हृदि स्थितं क्वासौ वर्त्तते विज्ञेयःपुरुष इति ॥ १ ॥ तस्मै स होवाच। इहैवान्तःशरीरे हृदयपुण्डरीकाकाशमध्ये हे सोम्य स पुरुषो न देशान्तरे विज्ञेयो यस्मिन्नेता उच्यमानाः षोड़शकलाः प्राणाद्याः प्रभवन्त्युत्पद्यन्त इति षोड़शकलाभिरुपाधिरूपाभिः सकल इव निष्कलः पुरुषो लक्ष्यते विद्ययेति ॥ २ ॥

तदुपाधिकलाध्यारोपापनयनेन विद्यया स पुरुषः केवलो दर्शयितव्य इति कलानां तत्प्रभवत्वमुच्यते। प्राणा-

---

रोपवर्जितत्वर्थः। कथं ते नावक्ष्यमित्यनेन सूचितमर्थमाह यत इति ॥ समूलो वा इत्यनेन सूचितमाह। अनृतञ्चेति ॥ स्वरूपेण शल्यत्वाभावादाह। विज्ञेयत्वेनेति ॥ यावज्जिज्ञासितं न ज्ञायते तावत्तद्धृदि शल्यवद्भासत इति शल्यमिवेत्युक्तम्। पुरुषस्य षोडशकलत्वं न साक्षात्सावयवत्वेन किन्तु कलाजनकत्वेन तदुपाधिमत्त्वादिति वक्तुं यस्मिन्नेता इति वाक्यमिति तत्तात्पर्य्यमाह। षोडशकलाभिरिति ॥ १ ॥ २ ॥

ननु केवल आत्मा प्रदर्श्यतां किं वक्ष्यमाणकलोक्त्येत्यत आह। तदुपाधीति ॥ तथैव स प्रदर्शनीय इत्यत्र हेतुमाह। अत्यन्तेति ॥ अविद्याविषया इति अविद्याधीना इत्यर्थः। कालत्रयेऽपि तासामेतन्न-

भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति ॥ ३ ॥

---

दीनामत्यन्तनिर्व्विशेषे स्वहृदये शुद्धे तत्त्वे न शक्योऽध्यारोपमन्तरेण प्रतिपाद्यप्रतिपादनादिव्यवहारः कर्त्तुमिति कलानां प्रभवस्थित्यप्यया आरोप्यन्ते अविद्याविषयाश्चैतन्याव्यतिरेकेणैव हि कला जायमानास्तिष्ठन्त्यः प्रलीयमानाश्च सर्व्वदा लक्ष्यन्ते । अत एव भ्रान्ताः केचिदग्निसंयोगाद्घृतमिव घटाद्याकारेण चैतन्यमेव प्रतिक्षणं जायते नश्यतीति तन्निरोधे शून्यमिव सर्व्वमिति । अपरे घटादिविषयं चैतन्यं चेतयितुर्नित्यस्यात्मनोऽनित्यं जायते विनश्यतीति । अपरे चैतन्यमभूतधर्म्म इति । लोकायतिकाः अनपायोपजनधर्म्मकचैतन्यमात्मैव नामरूपाद्युपाधि-

---

रूपाधिधर्मान्व्यतिरेकाद्रज्जुसर्पवन्मृषात्वमित्यविद्याविषयत्वं साधयति ॥ चैतन्येति ॥ चैतन्याव्यतिरेकेण लक्ष्यमाणत्वं हेतुं विज्ञानवादिभ्रान्त्या दृढीकरोति । अत एवेति ॥ घृतं यथाऽग्निसंयोगाद्द्रवावस्थां प्रतिपद्यते एवंमहिमाकारमाशयविज्ञानमेव वासनावशाद्विषयाकारेण जायत इति वदतां तेषां भ्रमो विषयस्य चैतन्याव्यतिरेकि प्रत्ययं गमयति अन्यथा तथा भ्रमानुपपत्तेरित्यर्थः । विषयाणां चैतन्याव्यतिरेकेण प्रतीतिनियमादेव विषयविज्ञानरूपेण चैतन्याभावे सुषुप्त्यादौ शून्यभ्रमो जातः केषाञ्चिदिति तदीयभ्रान्त्यापि चैतन्याव्यतिरिक्तप्रतीतिं दृढीकरोति । तन्निरोध इति ॥ चैतन्यस्यानित्यस्य कलारोपाधिष्ठानत्वं न सम्भवति । कलाकार्य्यत्वादिति नैयायिकपक्षोक्तिव्याजेन शङ्कते । घटादीति ॥ भूतधर्म्म इति देहाकारेण संहतभूतधर्म्म इत्यर्थः । चैतन्यस्या-

धर्म्माः प्रत्यवभासते । सत्यं ज्ञानमनन्तं ब्रह्म । प्रज्ञानमानन्दं ब्रह्म । विज्ञानघन एवेत्यादिश्रुतिभ्यः । स्वरूपाव्यभिचारिषु पदार्थेषु चैतन्यस्याव्यभिचारात् यथा यथा यो यः पदार्थो विज्ञायते तथा तथा ज्ञायमानत्वादेव तस्य तस्य चैतन्यस्याव्यभिचारित्वं वस्तु च भवति किञ्चिन्न ज्ञायत इति चानुपपन्नम् । रूपञ्च दृश्यते न चास्ति चक्षुरितिवत् । व्यभिचरति तु ज्ञानं ज्ञेयं न व्यभिचरति कदाचिदपि । ज्ञेयाभावेऽपि ज्ञेयान्तरेऽभावाज्ज्ञानस्य । न हि ज्ञानेऽसति ज्ञेयं नाम भवति । कस्यचित्सुषुप्तेऽदर्शनाज्ज्ञानस्यापि सुषुप्तेऽभावाज्ज्ञेयवज्ज्ञानं स्वरूपस्य व्यभिचार इति चेन्न । ज्ञेयावभासकस्य ज्ञानस्यालोकवज्ज्ञेयाभिव्यञ्जकत्वात् स्वव्यङ्ग्याभावे आलो-

---

रोपाधिष्ठानत्वसिद्ध्यर्थं नित्यत्वमेकत्वञ्च वदन् तन्निराकरोति । अनपायेति ॥ प्रत्यवभासत इति ॥ नानात्वेन कार्य्यत्वेन चेति शेषः । सत्यं ज्ञानमिति ॥ तथा च श्रुतिविरोधान्ते पक्षा हेया इत्यर्थः । किन्तु ज्ञानकाले विषयाणां सद्भावनियमाभावाद्विषयकाले च ज्ञानस्य सद्भावनियमाभावात्तयोर्भेद इति विज्ञानवादिपक्षं निराकुर्व्वन्नव्यभिचारादेव ज्ञानस्य नित्यत्वं साधयन्नैयायिकादिपक्षमपि निराकरोति । स्वरूपेति ॥ घटज्ञानकाले पटाभावसम्भवाद्विषयाणां ज्ञानव्यभिचारित्वं ज्ञानस्य तु विषयकालेऽवश्यम्भावनियमादव्यभिचारित्वमित्यर्थः । पटकाले घटज्ञानमपि नास्तीति घटज्ञानस्यापि पटविषयव्यभिचारित्वं तुल्यमित्याशङ्क्य स्वरूपेणेत्युक्तम् । ज्ञानस्य विषयविशिष्टत्वरूपेणैव व्यभिचारः । विषयस्य तु स्वरूपेणैवेति विशेष इत्यर्थः । ज्ञानस्याव्यभिचारित्वमुपपादयति । यथा यथेति ॥ ननु तत्तद्विनष्टादेर्मेरुगुहान्तर्वर्त्तिनश्चाज्ञायमानत्वाज्ज्ञानस्यापि ज्ञेयाव्यभिचारोऽसिद्ध इत्याशङ्क्य तस्याज्ञाने तत्सद्भावासिद्धेस्तथाभूतपदार्थोऽसिद्ध इत्याह । वस्तु चेति ॥ अनुपपत्तिमेव दृष्टान्तेन स्फुटीकरोति । रूपञ्चेति ॥ ज्ञेयस्य ज्ञानव्यभिचारित्वं

ज्ञाभावानुपपत्तिवत् सुषुप्ते विज्ञानाभावानुपपत्तेः। न ह्यन्धकारे चक्षुषो रूपानुपलब्धौ चक्षुषोऽभावः शक्यः कल्पयितुमवैनाशिकेन। वैनाशिको ज्ञेयाभावे ज्ञानाभावं कल्पयत्येवेति चेत् येन तदभावं कल्पयेत्तस्याभावः केन कल्प्यत इति वक्तव्यम्। वैनाशिकेन तदभावस्यापि ज्ञेयत्वाज्ज्ञानाभावे तदनुपपत्तेः। ज्ञानस्य ज्ञेयाव्यतिरिक्तत्वाज्ज्ञेयाभावे ज्ञानाभाव इति चेत्। न। अभावस्यापि ज्ञेयत्वाभ्युपगमादभावोऽपि ज्ञेयोऽभ्युपगम्यते। वैनाशिकैर्नित्यश्च तदव्यतिरिक्तश्चेज्ज्ञानं नित्यं कल्पितं स्यात्तदभावस्य च ज्ञानात्मकत्वादभावत्वं वाङ्मात्रमेव न परमार्थतोऽभावत्वमनित्यत्वं च ज्ञानस्य। न च नित्यस्य ज्ञानस्याभावनाममात्राध्यारोपे

---

ज्ञानकाले सत्त्वनियमाभावरूपं सत्त्वमित्याह। व्यभिचरति त्विति॥ घटज्ञानकाले कदाचिद्घटाभावादित्यर्थः। घटकाले घटज्ञानस्यापि व्यभिचारस्तुल्य इत्याशङ्क्य विशिष्टरूपेण व्यभिचारेऽपि स्वरूपेणाव्यभिचारं पूर्ववत्सूचयन्नाह। न व्यभिचरतीति॥ ज्ञानभिन्नस्येत्याद्यनुषङ्गः। पूर्ववाक्ये द्वितीयान्तं इह तु प्रथमान्तमिति विशेषः। भावादिति स्वरूपेणेत्यर्थः। ज्ञानस्य स्वरूपेण सतामेव ज्ञेयान्तरस्य ज्ञेयत्वादेव साधयति। न हीति॥ स्वरूपेणाप्यभावं शङ्कते सुषुप्त इति॥ किमत्रार्थे ज्ञेयाभावेन ज्ञानाभावः साध्यते उत ज्ञानस्य दर्शनाद्वा आद्येऽपि ज्ञेयस्य अज्ञत्वात्तदभावाज्ज्ञानाभाव इति॥ उभयोरैक्याभाव इतराभाव इति। नाद्यो व्यभिचारादित्याह। न ह्येवेति॥ अज्ञानेनैककत्वस्य अज्ञानाभावेऽभाव उच्यते आलोकस्य प्रकाशकचक्षुरादेर्वामिति। ज्ञानात्मैव त्ववादिनं प्रति दृष्टान्तान्तरमाह। न हीति॥ वैनाशिकमते विज्ञानव्यतिरिक्तालोकाद्यभावात्तत्र व्यभिचार इति शङ्कते। वैनाशिक इति॥ कल्पयत्येवेत्युक्तव्यभिचारस्याभावेन व्यभिचाराभावादित्यर्थः॥

किञ्चिन्मित्रम् । ज्ञेयाभावो ज्ञेयोऽपि सन् ज्ञानव्यतिरिक्त इति चेन्न । तर्हि ज्ञेयाभावे ज्ञानाभावः । ज्ञेयं ज्ञानव्यतिरिक्तं न तु ज्ञानं ज्ञेयव्यतिरिक्तमिति चेन्न । शब्दमात्रत्वाद्विशेषानुपपत्तेः । ज्ञेयज्ञानयोरेकत्वस्येदभ्युपगम्यते ज्ञेयं ज्ञानव्यतिरिक्तं न ज्ञेयव्यतिरिक्तं ज्ञानं ज्ञेयव्यतिरिक्तं नेति तु शब्दमात्रमेव तद्वह्निरग्निव्यतिरिक्तोऽग्निर्न वह्निव्यतिरिक्त इति यद्वदभ्युपगम्य ज्ञेयव्यतिरेके तु ज्ञानस्य ज्ञेयाभावे ज्ञानाभावानुपपत्तिः सिद्धा । ज्ञेयाभावेऽदर्शनादभावो ज्ञानस्येति चेन्न । सुषुप्तेरित्यभ्युपगमात् । वैनाशिकैरभ्युपगम्यते हि सुषुप्तेऽपि विज्ञानास्तित्वं तत्रापि ज्ञेयत्वमभ्युपगम्यते।

---

एवमपि ज्ञानाभावकल्पकस्य ज्ञेयाभावस्य ज्ञानमङ्गीक्रियते न वा । आद्ये न ज्ञानाभावसिद्धिस्तस्यैवाभावज्ञानस्य सत्त्वादित्याह । ज्ञेयेति ॥ येन ज्ञेयाभावज्ञानेन तदभावं कल्पयेत्तस्य ज्ञानस्याभावः येन कल्प्यते न केनापि कल्पयितुं शक्य इत्यर्थः । न द्वितीय इत्याह । तदभावस्यापीति ॥ ज्ञेयाभावस्याप्यज्ञानस्य ज्ञानाभावकल्पकत्वासम्भवादवश्यं ज्ञेयत्वात्तज्ज्ञानाभावे तदनुपपत्तेः कल्पनानुपपत्तेर्ज्ञानानङ्गीकारपक्षो न युक्त इत्यर्थः ॥ आद्यकोटौ द्वितीयकल्पं शङ्कते । ज्ञेयेति ॥ वैनाशिकमतेऽप्यभावस्य ज्ञेयत्वाभ्युपगमाद् विरोधं त्वयादत्तस्य ज्ञानं क्षणिकं च तदिति प्रतिसङ्ख्यानिरोधाद्याकाशरूपस्याव्यतिरिक्तस्यैव क्षणिकत्वेन निरोधरूच्छिन्नस्याभावस्य नित्यत्वाङ्गीकारेण तदभिन्नस्य ज्ञानस्यापि सुषुप्ते सत्त्वं नित्यत्वं च प्राप्तमित्याह । नाभावस्येति ॥ ज्ञानस्याभावाभिन्नत्वेनाभावत्वमेव स्यान्न तु भावत्वेन सत्त्वं नित्यत्वं च स्यादित्याह । तदभावस्येति ॥ अनित्यत्वस्य ज्ञानस्येति वाङ्मात्रमेव स्यादित्यनुषङ्गः । वाङ्मात्रे चाप्यभावस्याभावत्वेन ज्ञानाभिन्नत्वेन चावस्तुविज्ञानविशिष्टत्वाद्वस्तु नाममात्रे च तेन वास्तवनित्यत्वादिविरोधाभावादाकाशं चरि-

ज्ञानस्य स्वेनैवेति चेन्न। भेदस्य सिद्धत्वात्। सिद्धं ह्यभावविज्ञेयविषयस्य ज्ञानस्याभावज्ञेयव्यतिरेकाज्ज्ञेयज्ञानयोरन्यत्वम्। न हि तत्सिद्धं कृतमिवोज्जीवयितुं पुनरन्यथा कर्त्तुं शक्यते वैनाशिकशतैरपि ज्ञानस्य ज्ञेयत्वमेवेति। तदप्यन्येन तदप्यन्येनेति त्वत्पक्षेऽतिप्रसङ्ग इति चेन्न। तद्विभागोपपत्तेः। सर्व्वस्य यदा हि सर्व्वं ज्ञेयं कस्यचित्तदा तद्व्यतिरिक्तं ज्ञानं ज्ञानमेवेति द्वितीयो विभाग एवाभ्युपगम्यतेऽवैनाशिकैः। न तृतीयस्तद्विषय इत्यनवस्थानुपपत्तिः ज्ञानस्य

---

रित्यर्थः। न चेति॥ अभावज्ञानेऽन्यज्ञानेत्यपि द्रष्टव्यम्। एतद्दोषपरिहारार्थं ज्ञेयस्यापि यतोऽभावस्य ज्ञानाभेदो नाङ्गीक्रियत इति वक्ष्यते। अथेति॥ तर्हि ज्ञेयाभिन्नत्वेन हेतुना सुषुप्ते ज्ञानाभावो न सिध्यति घटाद्यभावसिद्धावपि अभावज्ञानाभावासिद्धेस्तस्याभिन्नत्वाभावादित्यर्थः। न तर्हीति॥ यदाऽभावस्य ज्ञेयस्य ज्ञानाद्भेदे भावस्यापि तथात्वं स्यादिति ज्ञेयहेत्वभावात्तथा च न ज्ञेयाभावाज्ज्ञानाभावसिद्धिरित्यर्थः। न तर्हीति॥ ननु ज्ञेयस्य ज्ञानव्यतिरिक्तत्वमङ्गीक्रियते तथा चाभावस्य ज्ञानव्यतिरिक्तत्वादभावत्वादिकं सिध्यति। ज्ञानस्य न ज्ञेयव्यतिरिक्तत्वम्। तथा च ज्ञेयाभावे ज्ञानाभावसिद्धिरितिनिरस्तमिति वक्ष्यते। ज्ञेयमिति॥ ज्ञानज्ञेययोरतिरेके ज्ञेयस्यापि तद्व्यतिरेकावश्यम्भावादन्ययोरुभयोरत्यन्तभेद एव स्यात्। भेदाभेदयोर्विरोधादनुपपत्तेरिति दूषयति। न यद्भ्रान्तत्वादिति। इदमुपलक्षणम्। ज्ञानस्याभावाव्यतिरेकेण नित्यत्वादिकस्य स्याद्वेनेत्यपि द्रष्टव्यम्। यद्येतद्दोषपरिहाराय तस्यापि भेद एवाङ्गीक्रियते तर्हि न सुषुप्तौ ज्ञानाभावसिद्धिरित्युपसंहरति। ज्ञेयव्यतिरेके त्विति॥ सुषुप्ते ज्ञानस्यादर्शनादेवाभाव इत्याद्ये द्वितीयं वक्ष्यते। ज्ञेयाभाव इति॥ भावविज्ञानसन्ततेर्नित्यत्वाङ्गीकारेण त्वया तदापि तदभावो वक्तुं न शक्यत इत्यर्थः। न सुषुप्त इति॥ अस्तित्वमिति तथा च ज्ञानस्यादर्शनसिद्धं सुषुप्तेऽपि तदङ्गीकारादित्यर्थः। ननु ज्ञेयाभावेन

स्वेनैवाविज्ञेयत्वे सर्वज्ञत्वहानिरिति चेत् सोऽपि दोषस्तस्यै-
वास्तु किन्तन्निवर्हणेनास्माकमनवस्थादोषश्च ज्ञानस्य ज्ञेय-
त्वाभ्युपगमादवश्यश्चैव वैनाशिकानां ज्ञानं ज्ञेयम्। स्वात्मना
चाविज्ञेयत्वेनानवस्थाऽनिर्व्वार्य्या। समान एवायं दोष इति
चेन्न। ज्ञानस्यैकत्वोपपत्तेः। सर्व्वदेशकालपुरुषाद्यवस्थमेक-
मेव ज्ञानं नामरूपाद्यनेकोपाधिभेदात् सवित्रादिजलादि-
प्रतिबिम्बवदनेकधावभासत इति। नाऽसौ दोषः। तथा
चेहेदमुच्यते। ननु श्रुतेरिहैवान्तःशरीरे परिच्छिन्नः

---

त्वनिरूपितस्य ज्ञानस्यादर्शनमित्युच्यते यथा सुषुप्ते च तस्यैव स्वज्ञेय-
त्वात् ज्ञानदर्शनमप्युपपद्यते चणिकमते। त्वन्मते तु स्वज्ञेयत्वानङ्गी-
कारात् सुषुप्ते चान्यस्याभावान्निरूपकाभावान्न ज्ञानदर्शनास्तित्व-
मुपपद्यत इति शङ्कते। तत्रापीति॥ अभावरूपत्वे ज्ञानज्ञेययोर्भेदस्य
साधितत्वात्तद्दृष्टान्तेन सर्व्वत्र ज्ञानज्ञेययोर्भेदसाधनान्न स्वज्ञेयत्वं
ज्ञानस्येत्याह। न भेदस्येति॥ अभावरूपो ज्ञेयो विषयो यस्य तस्य
ज्ञानस्याभावरूपो यो ज्ञेयस्तद्व्यतिरेकादित्यर्थः॥ अभावरूपत्वे भेदेऽपि न
सर्व्वत्रेत्याशङ्क्य न्यायस्य तुल्यत्वान्न तदन्यथाकर्त्तुं शक्यमित्याह। न
हीति॥ ज्ञानस्य स्वव्यतिरिक्तज्ञेयत्वनियमपक्षेऽनवस्थां वैनाशिकः
शङ्कते। ज्ञानस्येति॥ ज्ञेयस्य स्वव्यतिरिक्तज्ञेयत्वनियमाङ्गीकारा-
दस्मन्मते च ज्ञानस्य ज्ञेयत्वानङ्गीकारान्न दोष इत्याह। न तदिति॥
सर्व्वस्य वस्तुजातस्य विभागोऽसङ्करः ज्ञानं ज्ञानमेव न ज्ञेयं ज्ञेयमपि
ज्ञेयमेव न कदाचिदपि ज्ञानमित्येवंरूपस्तस्योपपत्तेरित्यर्थः। अथवा
द्विभागोपपत्तेरिति छेदः। ज्ञानज्ञेयरूपभागद्वयमेव राशिद्वयमेवाङ्गी-
क्रियते न तृतीयो ज्ञानविषयकज्ञानरूपो भावराशिरङ्गीक्रियत इत्यर्थः॥
तामेवाह। यदा हीति॥ यस्मिन् पक्षे ज्ञेयं सर्व्वं व्यतिरिक्तस्य कस्यचिज्ज्ञा-
नस्य ज्ञेयमित्यङ्गीक्रियत इति ज्ञेयपदावृत्त्या व्यतिरिक्तस्येतिपदाध्या-

कुण्डबदरवत्पुरुष इति। न। प्राणादिकलाकारणत्वात्।
न हि शरीरमात्रपरिच्छिन्नस्य प्राणस्य श्रद्धादीनां कलानां
कारणत्वं प्रतिपत्तुं शक्नुयात्। कलाकार्य्यत्वाच्च शरीरस्य।
न हि पुरुषकार्य्याणां कलानां कार्य्यं सच्छरीरे कारणका-
रणं स्वस्य पुरुषं कुण्डबदरमिवाभ्यन्तरः कुर्य्यात् वीजव-
क्षवदिति चेत्। यथा वीजकार्य्यं वृक्षस्तत्कार्य्यञ्च फलं
स्वकारणकारणं वीजमभ्यन्तरीकरोत्याम्रादि तद्वत्पुरुषम-
भ्यन्तरीकुर्य्यात् शरीरं स्वकारणकारणमपीति चेन्न। अन्य-

---

हारेण च यदाहेति वाक्यं योज्यमवैनाशिकैरिति शेषः। तद्विषय इति
ज्ञानविषयकज्ञानात्मक इत्यर्थः। तर्हि तत्पक्षे ज्ञानात्मकस्य ब्रह्मणः
सर्व्वज्ञत्वं न स्यात् स्वेन स्वस्याज्ञानादिति शङ्कते। ज्ञानस्येति। ज्ञातृ
योग्यस्य सर्व्वस्याज्ञाने हि सर्व्वज्ञत्वहानिः अन्यथा शशविषाणादेरज्ञा-
नात्सर्व्वज्ञत्वं कस्यापि मते न स्यादतो नास्मन्मते तस्य दोषस्य प्राप्तिः
किन्तु वैनाशिकस्यैव तेन ज्ञानस्याप्यज्ञेयत्वाङ्गीकारात्स्वेन स्वस्य
ज्ञेयत्वस्य सिद्धं हीति पूर्व्वपक्षे दूषितत्वादज्ञेयत्वस्य चानङ्गीका-
रात्सर्व्वज्ञत्वयोगादित्याह। सोऽपीति॥ तर्हि तव मते कथं सर्व्वज्ञत्व-
निर्वाह इत्याशङ्क्यास्मन्मते तस्य मायिकत्वेन तदनिर्व्वाहेऽपि न दोष
इत्याह। किन्त्विति॥ वस्तुतस्तु सर्व्वस्य व्यवहारहेतुज्ञानवत्त्वं सर्व्व-
ज्ञत्वं तत्तु ज्ञानस्यापि स्वप्रकाशत्वेन स्वव्यवहारहेतुत्वादस्ति ज्ञातृ
योग्यत्वं सर्व्वज्ञानाद्वा तदस्तीति भावः। पूर्व्वोक्तानवस्थादोषोऽपि तस्यै-
वेत्याह। अनवस्थेति॥ ननु तेन स्वेनैव ज्ञेयत्वाङ्गीकारान्नानवस्थेत्यत
आह॥ स्वात्मना चेति॥ सिद्धं हीत्यत्र स्वज्ञेयत्वासम्भवस्योक्तत्वात् परि-
शेषादज्ञेयत्वे तस्य तस्याप्येवमित्यनवस्थाऽनिवार्य्येत्यर्थः। ज्ञान-
स्याज्ञेयत्वे तद्व्यवहारासिद्धिः ज्ञानान्तरज्ञेयत्वे चानवस्था तथापि
स्यादिति शङ्कते। समान एवेति॥ स्वप्रकाशत्वेन स्वस्वव्यवहारवि-
शेषज्ञानभेदस्यैवास्माभिरनङ्गीकारादनवस्थायाः प्रसक्तिरेव नास्तीति
परिहरति। न ज्ञानस्येति॥ एकत्वपक्षे भेदप्रतीतिमुपपादयति।

त्वात् सावयवत्वाच्च। दृष्टान्ते कारणबीजाद् वृक्षफलसंसृ-
ष्टान्यन्यान्येव बीजानि दार्ष्टान्तिके तु स्वकारणकारण-
भूतः स एव पुरुषः शरीरेऽभ्यन्तरीकृतः श्रूयते। बीजवृ-
क्षादीनां सावयवत्वाच्च स्यादाधाराधेयत्वं निरवयवश्च
पुरुषः सावयवाश्च कलाः शरीरस्य एतेनाकाशस्यापि शरी-
राधारत्वमनुपपन्नं किमुताकाशकारणस्य पुरुषस्य तस्माद-
समानो दृष्टान्तः। किन्दृष्टान्तेन वचनात् स्यादिति चेन्न।
वचनस्याकारकत्वात्। न हि वचनं वस्तुनोऽन्यथाकरणे

---

नामरूपेति॥ एवं चैतन्यस्यैकत्वेन नित्यत्वाज्जगद्विरूपत्वेन तस्य
सत्यत्वाच्चाधिष्ठानत्वोपपत्तेः। तस्मिन्नुक्तानामध्यारोप आत्मप्रति
पत्त्यर्थमिष्टोच्यत इत्याह। तथा चेहेति॥ चैतन्यस्य नित्यत्वेनाधिष्ठानत्वे
सतीह श्रुताविदं कलानामध्यारोपणमुच्यत इत्यर्थः। ननु चैतन्यस्य
न नित्यत्वं परिच्छेदश्रुतेः परिच्छिन्नस्य च घटादिवदनित्यत्वादिति
शङ्कते। तेन चेति॥ शरीरान्तरस्थत्वं प्रत्यक्त्वविवक्षयोच्यते न परिच्छेद-
विवक्षया तथा सत्युत्तरवाक्यविरोधादित्याह। नेति॥ अयोग्य-
त्वादपि सोऽर्थो न विवक्षित इत्याह। कथेति॥ स्वोत्पत्तेः पूर्वं
स्वस्याभावात्तत्कालीनपुरुषं परिच्छेत्तुं न शक्नोतीत्यर्थः। बीजकार्यस्य
वृक्षस्य कार्यं फलं स्वकारणवृक्षकारणबीजमभ्यन्तरी करोतीति दृष्ट-
मिति नायोग्यमिति शङ्कते। बीजवदिति॥ तद्विवृणोति। यथेति॥
दृष्टान्ते बीजव्यक्तिभेदादविरोधे योऽहि पुरुषव्यक्त्यैक्यात्कारणाभ्यन्त-
रीभावयोर्विरोध इत्याह। नेति॥ ननु कारणीभूतबीजस्यैव वृक्ष-
फलतदन्तर्गतबीजरूपेण परिणामात्तयोः कारणकार्यबीजयोरैक्य-
भावश्च एवमपि तस्य सावयवत्वाद् वृक्षफलाकारेण परिणतावयवेभ्यो
भिन्नावयवानामेव तदन्तर्गतबीजरूपेण परिणामात्तयोर्भेदेनाधाराधेय-
भावः स्यात् इह तु निरवयवत्वान्न तथात्वमित्याह। सावयवत्वाच्चेति॥
आद्यं हेतुं विवृणोति। दृष्टान्त इति॥ श्रूयत इति यच्छब्देनाः

व्याप्रियते किन्तर्हि यथाभूतार्थावद्योतने। तस्मादन्तः शरीर इत्येतद्वचनं यथास्यान्तर्व्यामितिवच्च द्रष्टव्यम्। उपलब्धिनिमित्तत्वाच्च। दर्शनश्रवणमननविज्ञानादिलिङ्गैरन्तः शरीरे परिच्छिन्न इव ह्युपलभ्यते चात उच्यते अन्तः शरीरे सोम्य स पुरुष इति। न पुनराकाशकारणः सन् कुण्डबदरवच्छरीरपरिच्छिन्न इति मनसापीच्छति वक्तुं मूढोऽपि किमुत प्रमाणभूता श्रुतिः। यस्मिन्नेताः षोडशकलाः प्रभवन्ती-

---

षोडशकला इति यच्छब्दोक्तस्यैव पुरुषस्यान्तःशरीरे सोम्य स पुरुष इति तच्छब्देनाभिधानादित्यर्थः॥ द्वितीयं हेतुं विवृणोति। बीजेति॥ निरवयवस्येति तथाचैकदेशेन कलादिरूपेण परिणाम एकदेशेन तत्रावस्थानं बीजवत् सम्भवतीत्यर्थः। किञ्च कलानां सावयवत्वेन परिच्छेदात्पुरुषस्य तद्विपरीतत्वादपरिच्छिन्नस्य न परिच्छिन्नाधारत्वं सम्भवतीत्याह। सावयवाश्चेति॥ यद्वा सावयवत्वेन कार्यतया च्छमात्वान्निरवयवतया परमार्थसत्पुरुषाधारत्वं नोपपद्यत इत्याह। सावयवाश्चेति॥ नन्वाकाशकार्यशरीरे आकाशस्यापरिच्छिन्नस्याप्यन्तरीभावो दृष्ट इत्याशङ्क्य तत्रापि शरीराकारेणावस्थानमेव छिद्रादिविशिष्टस्यैव शरीरत्वान्न तु तदन्तस्थत्वमित्याह। एतेनेति॥ श्रुतवचनमपि-वचनप्रामाण्यादङ्गीकार्यमिति शङ्कते। किं दृष्टान्तेनेति॥ वचनस्यापि वस्तुनोऽन्यथाकरणे सामर्थ्याभावाद्वस्तुस्वरूपाविरोधेनैव बोधकत्वादन्यथाविचारवैयर्थ्याद्विरुद्धार्थो न बोधार्ह इत्याह। वचनस्येति॥ तर्ह्यन्तःशरीर इति श्रुतेः कथमुपपत्तिरित्याशङ्क्य पुरुषस्य शरीरोपादानत्वेन तदनुस्यूतस्य तदन्तर्गतत्वप्रतीतेस्तदभिप्रायेयं श्रुतिरिति सदृष्टान्तमाह। तस्मादिति॥ अस्तु त्वण्डकारणस्य व्योम्नो यथा तदनुस्यूतत्वेन तदन्तर्गतत्वप्रतीतिस्तद्वदित्यर्थः। यद्वा लोकभ्रमसम्बद्धं परिच्छिन्नत्वमनूद्यते श्रुत्येत्याह। उपलब्धीति॥ तत्राभिव्यक्तेर्वा तदन्तर्गतत्वाव्यपदेश इत्याह। उपलभ्यते चेति॥ ननु यस्मिन्नेताः षोडशकलाः प्रभव-

**स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योति-**

---

त्युक्तं पुरुषविशेषणार्थं कलानां प्रभवः स चान्योऽर्थोऽपि श्रुतः केन क्रमेण स्यादित्यत इदमुच्यते । चेतनपूर्व्विका च सृष्टिरित्येवमर्थं च पुरुषः षोडशकलः पृष्टो यो भारद्वाजेन स ईक्षाञ्चक्रे ईक्षणं दर्शनं चक्रे कृतवानित्यर्थः । सृष्टिफल-क्रमादिविषयं कथमित्युच्यते कस्मिन् कर्त्तृविशेषे देहादु-त्क्रान्त उत्क्रान्तो भविष्याम्यहमेव वा कस्मिन्वा शरीरे प्रतिष्ठितेऽहं प्रतिष्ठास्यामि प्रतिष्ठितः स्यामित्यर्थः ॥ ३ ॥

नन्वात्माऽकर्त्ता प्रधानं कर्त्तृ अतः पुरुषार्थं प्रयोजन-मुररीकृत्य प्रधानं प्रवर्त्तते महदाद्याकारेण तत्रेदम-नुपपन्नं पुरुषस्य स्वातन्त्र्येणेक्षापूर्व्वकं कर्त्तृत्ववचनं सत्त्वादि-

---

श्नोक्तेनाध्यारोपस्योक्तत्वात् स ईक्षामित्यादिना पुनःसृष्टिवचन-मधिकमित्यत आह । यश्चेति ॥ अत इति क्रमप्रतिपत्त्यर्थं स ईक्षामि-त्याद्युच्यत इत्यर्थः । तत्प्रतिपत्तिश्च लोकोत्पत्तिप्रतिपत्तिसौकर्य्यार्थं विपर्य्ययेण तु क्रमत उपपद्यते चेति न्यायेन कार्य्यस्य स्वकारणक्रमेणाप-वादसौकर्य्यार्थं चेत्यर्थः ॥ ईक्षणोक्तेः प्रयोजनमाह । चेतनेति ॥ सृष्टीति ॥ सृष्टिः प्राणादेः सृष्टिस्तस्या उत्क्रान्त्यादि फलं क्रमः प्राणाच्छ्रद्धामित्या-द्युक्तानन्तर्य्यम् । आदिशब्देन लोकेषु नाम चेत्याधाराधेयविशेषो गृह्यते । नन्वीक्षणोक्त्या न चेतनपूर्व्वकत्वसिद्धिः ॥ ३ ॥

न्यायेन चेतनस्याकर्त्तृत्वेनाहेतुत्वेऽचेतनस्य प्रधानादेर्न्निष्क्रियावस्थे न हेतुत्वे सति ईक्षणस्यान्यथा नेयत्वादिति शाङ्ख्याः शङ्कन्ते । नन्वात्मेति ॥ अकर्त्तेत्यस्य तत्रेदमित्यनेनान्वयः । आत्माऽकर्त्ता । तत्र तथा सतीदं कर्त्तृत्ववचनमनुपपन्नमित्यर्थः । किञ्च तस्य कर्त्तृत्वाङ्गीकारेऽपि कर्त्तुः कुलालादेरिव सहकारिसाधनान्तराभावादात्मनो दुःखाद्यनर्थहेतुप्राणा-

रापः पृथिवीन्द्रियम्। मनोऽन्नमन्नाद्वीर्य्यं तपो मन्त्राः कर्म्मलोका लोकेषु च नाम च ॥ ४ ॥

---

गुणसाम्ये प्रधाने प्रमाणोपपन्ने चेटिकर्त्तरि सति ईश्वरेच्छानुवर्त्तिषु वा परमाणुषु सत्स्वात्मनोऽप्येकत्वेन कर्तृत्वे साधनाभावादात्मन आत्मन्यनर्थकर्तृत्वानुपपत्तेश्च। न हि चेतनावान् बुद्धिपूर्व्वकारी आत्मनोऽनर्थं कुर्य्यात्। तस्मात्पुरुषार्थेन प्रयोजनेनेक्षापूर्व्वकमिव नियतक्रमेण प्रवर्त्तमानेऽचेतने प्रधाने चेतनवदुपचारोऽयं स ईक्षाञ्चक्रे इत्यादिः। यथा राज्ञः सर्व्वार्थकारिणि भृत्ये राजेति तद्वत्। नात्मनो भोक्तृत्ववत्कर्तृत्वोपपत्तेः। यथा साङ्ख्यस्य चिन्मात्रस्यापरिणामिनोऽप्यात्मनो भोक्तृत्वं तद्वद्देवादिनामौषधादिपूर्व्वकं

---

दिसंसारकर्तृत्वानुपपत्तेश्चानुपपन्नं कर्तृत्ववचनमित्याह। आत्मनोऽपीति॥ कर्तृत्वेऽपीत्यपिशब्दान्वयः॥ तर्हि किं कर्तृ अत आह। प्रधानमिति॥ कल्पितेति। क्रियाशक्तिवदतः प्रवर्त्तत इत्यन्वयः॥ ननु प्रधानस्याचेतनस्य प्रयोजनाभावात् प्रवृत्त्यनुपपत्तिरित्यत आह। पुरुषार्थमिति॥ पुरुषस्य चेतनस्य भोगापवर्गरूपमर्थं प्रयोजनमुद्दिश्य प्रवर्त्तते तत्रापितदर्थमचेतनसाध्येन देहगतक्षीरस्य वत्सादिस्तनार्थमिवाचेतनस्य प्रवृत्तिदर्शनादित्यर्थः। ननु प्रधानस्याप्येकत्वेन बहुकार्य्यभावात्कारणत्वानुपपन्नमतश्चेतनस्यैव कथंचित्कर्तृत्वं वाच्यमित्यत आह। सत्त्वादीति॥ सत्त्वादिगुणत्रयस्य साम्यावस्था प्रधानमिति साङ्ख्यमतम्। तत्र सत्त्वादिगुणैरनेकात्मके प्रधाने कारणे सति पुरुषस्य कर्तृत्ववचनमकृतेरभावादनुपपन्नमित्यन्वयः। यदि चेतनानधिष्ठितस्याचेतनस्य प्रवृत्तिर्न दृष्टेति मन्यसे तर्हि परमाणुकारणवादोऽस्तु तत्रेश्वरस्याधिष्ठातृः सत्त्वादित्याह।

जगत्कर्तृत्वमुपपन्नं श्रुतिप्रामाण्यात्। तत्त्वान्तरपरिणा-
मादात्मनोऽनित्यत्वाशुद्धत्वानेकत्वनिमित्ताच्चिन्मात्रस्वरूपवि-
क्रियातः पुरुषस्यात्मन्येव भोक्तृत्वे चिन्मात्रस्वरूपवि-
क्रिया न दोषाय। भवतां पुनर्वेदवादिनां सृष्टि-
कर्तृत्वे तत्त्वान्तरपरिणाम एवेत्यात्मनोऽनित्यत्वादिसर्व-
दोषप्रसङ्ग इति चेन्न। एकस्याप्यात्मनोऽविद्याविषयनाम-
रूपोपाध्यनुपाधिकृतविशेषाभ्युपगमादविद्याकृत नामरूपो-
पाधिकृतो हि विशेषोऽभ्युपगम्यते आत्मनो बन्धमोक्षा-
दिशास्त्रकृतसंव्यवहाराय परमार्थतोऽनुपाधिकृतस्य तत्त्व-
मेकमेवाद्वितीयमुपादेयं सर्वतार्किकबुद्ध्यनवगाह्यमभयं
शिवमिष्यते न तत्र कर्तृत्वं भोक्तृत्वं वा क्रियाकारकफलञ्च

---

ईश्वरेच्छेति॥ अत्रापि पत्नित्यस्यानुपपन्नमिति पूर्वेणान्वयः। तर्हीश्वर-
स्याधस्य का गतिरत आह। तस्मादिति॥ पुरुषार्थेनेति पुरुषस्य
भोगापवर्गार्थेनेत्यर्थः। दृश्ये ईक्षितरि विद्यमाने न नियतक्रमेण
प्रवर्त्तमानत्वेन गुणेन योगादेक्षतेति गौणः प्रयोगः। आत्मवके
पैङ्ग्यगुणयोगेनाग्निशब्दप्रयोगवदित्यर्थः। नन्वेवमपीक्षितरि प्रधाने
पुरुषशब्दः कथमत आह। यथा राज्ञ इति॥ तद्वदिति पुरुषस्य भोगाप-
वर्गकारिण्यपि प्रधाने पुरुषशब्द औपचारिक इत्यर्थः। सतोऽकर्तुरपि
आत्मनो मायोपाधिककर्तृत्वं सम्भवतीति हृदि निधाय प्रथमं मावां
ततः प्रतिबन्धी परिहरति। नेति॥ बुद्धिकर्त्तौ भोक्ता पुरुष इति
वदद्भिः साङ्ख्यैरात्मनो भोक्तृत्वमुक्तमित्यर्थः। श्रुतिप्रामाण्यादिति
श्रुत्युक्तजगत्कर्तृत्वमविकारिणोऽपि कथञ्चिन्निर्वाह्यमित्यर्थः॥ साङ्ख्यः
प्रतिबन्धी परिहारं प्रकृते। तत्त्वान्तरेति॥ भोगो नाम सुखदुःखानुभवः॥
स च पुरुषस्य स्वरूपभूत इति न तत्त्वान्तरापत्तिलक्षणपरिणाम
इत्यर्थः। परिणामो हि पूर्वरूपपरित्यागेन रूपान्तरापत्तिः। सा च
सजातीयरूपान्तरापत्तौ विजातीयरूपान्तरापत्तौ वाऽनित्यत्वादि-

स्यादद्वैतत्वात्सर्वभावानाम्। सांख्यास्त्वविद्याध्यारोपितमेव पुरुषे कर्तृत्वं क्रियाकारकं फलञ्चेति कल्पयित्वाऽऽगमबाह्यत्वात्संत्रस्तास्सन्तः परमार्थत एव भोक्तृत्वं पुरुषस्येच्छन्ति तत्त्वान्तरञ्च प्रधानं पुरुषात् परमार्थवस्तुभूतमेव कल्पयन्तोऽन्यतार्किककृतबुद्धिविषयाः सन्तो विहन्यन्ते। तथेतरे तार्किकाः सांख्यैरित्येवं परस्परविरुद्धार्थकल्पनात आमिषार्थिन इव प्राणिनोऽन्योन्यं विरुध्यमाना अर्थदर्शित्वात् परमार्थतत्त्वाद्दूरमेवापकृष्यन्तेऽतस्तन्मतमनादृत्य वेदान्तार्थतत्त्वमेकत्वदर्शनं प्रत्यादरवन्तो मुमुक्षवः स्युरिति तार्किकमते दोषदर्शनं किञ्चिदुच्यतेऽस्माभिर्न तु तार्किकतात्पर्येण। तथैतदत्रोक्तम्। विवदत्सु

---

समावच्छेदेनेति भोक्त्रविवेकोपाधिकं भोक्तृत्वमङ्गीकर्त्तव्यम्॥ तेन तदात्मककर्तृत्वेऽपि तुल्यमित्यभिप्रेत्य दुःखपरिहारमाह। नेति॥ एकस्य वस्तुनोऽवस्थावस्याकर्तुरात्मकस्यापीत्यर्थः। उपाधिकृतकर्तृत्वसम्भवादविद्याद्युपप्लवस्य सम्भवाद्वाऽन्याऽसाक्षिकजीवानामनात्मकानां सम्भवात्तत्पुरुषार्थवत्त्वं तथाविधस्याप्युपपद्यत इति इति नाचेतनस्य चेतनाधिष्ठितस्य वस्तुक्तमिति भावः। नामरूपेत्यनभिव्यक्तनामरूपेत्यर्थः॥ बन्धमोक्षादीत्यादिशब्देन तत्साधनमुच्यते। मोक्षस्यापि बन्धप्रतियोगित्वेन सोपाधिकत्वमुक्तम्॥ परमार्थस्य स्वस्यैकगम्यत्वमाह। सर्वेति॥ एवम्भूतस्यात्मनो न वाढृत्वमित्याह। न तत्रेति॥ कल्पयित्वेति कल्पयितुं प्रवृत्ता इत्यर्थः। पुरुषस्य निर्विशेषत्वेन तस्मिन्वस्तुतः कर्तृत्वाद्ययोगात्तदारोपितमेवेति कल्पयितुं प्रवृत्ता अपि सर्वविरोधं निराचिकीर्षमाणा ऐकरस्यत्वाभावात्तत्त्वादिविरोधापत्त्या आरोपितत्वाङ्गीकाराच्च त्रस्यन्तः सर्वं परमार्थत एवेच्छन्ति। तत्राप्यचेतनस्य भोक्तृत्वायोगात्तन्मात्रमात्मनोऽङ्गीकुर्वन्ति। कर्तृत्वादिकन्तु प्रधानस्याङ्गीकुर्वन्तीत्यर्थः॥ तर्हि तस्य को दोष

शेऽवनिक्षिप्य विरोधोद्भवकारणम्। तैः संरक्षितसद्बुद्धिः सुखं निर्व्वाति वेदवित्। किञ्च भोक्तृत्वकर्त्तृत्वयोर्विक्रिय-योर्विशेषानुपपत्तिः। का नामासौ कर्त्तृत्वाज्जात्यन्तरभूता भोक्तृत्वविशिष्टा विक्रिया यतो भोक्तैव पुरुषः कल्प्यते न कर्त्ता। प्रधानन्तु कर्त्तैव न भोक्त्रीति। ननूक्तं पुरुष-श्चिन्मात्र एव स्वात्मस्थो विक्रियते भुञ्जानोऽनतत्त्वान्तर परिणामेन। प्रधानन्तु तत्त्वान्तरपरिणामेन विक्रियतेऽतो ऽनेकमशुद्धमचेतनञ्चेत्यादिधर्म्मवत्तद्विपरीतः पुरुषः। ना ऽसौ विशेषो वाङ्मात्रत्वात्प्राग्भोगोत्पत्तेः। केवलचिन्मात्रस्य पुरुषस्य भोक्तृत्वं नामविशेषो भोगोत्पत्तिकाले चेज्जायते निवृत्ते च भोगे पुनस्तद्विशेषादपेतश्चिन्मात्र एव भवतीति

---

इत्याशङ्क्य भोक्तृत्वाङ्गीकारे तथैव तस्यैव कर्त्तृत्वमपि स्यादित्यन्यैः शिक्षिताः सन्तः समताभ्यवन्त इत्याह॥ अन्येति कताया: शिक्षि-ताया बुद्धेर्विषया अधीनाः शिक्षितबुद्धय इत्यर्थः। तर्हि साङ्ख्यशिष्य-कस्य तार्किकस्य मतं ग्राह्यमत आह॥ तथेति॥ तस्यापि साङ्ख्येन शिक्षितत्वान्न तदपि ग्राह्यमित्यर्थः। तर्हि तस्य तार्किकस्य मतं ग्राह्यमित्याशङ्क्य न कस्यापीत्याह। इत्थेवमिति॥ तर्हि त्वया तार्कि-कमतं किमर्थं दूष्यते। परस्परमेव तैर्दूषितत्वात्तव तद्वदेव द्वेषादि-मत्त्वप्रसङ्गादित्याह। अत इति॥ विरोधोद्भवकारणमिति पारमार्थि-कतया भेददर्शनमित्यर्थः। संरक्षितेति भेददर्शनस्य परस्परोक्तदोष-ग्रस्तत्वादद्वैतमेव निर्दुष्टमिति निश्चितबुद्धिः सन्निर्वाति सर्व्वविकल्पेभ्य उपशान्तो भवतीत्यर्थः। दोषप्रदर्शनं हि किञ्चित्क्रियत इति यदुक्तं तदेव प्रपञ्चयन् कर्त्तृत्वादेरारोपितत्वमेव परेणापि वक्तव्यमित्याह। किञ्चेत्यादिना॥ तत्रादौ भोक्तृत्वकर्त्तृत्वयोर्विशेषस्य वक्तुमशक्यत्वात्तयो रव्यवस्थानं सम्भवतीत्याह। भोक्तृत्वेति॥ आशयमविद्वान् शङ्कावसरोक्तं विशेषं शङ्कते। नन्विति॥ स्वात्मस्थो विक्रियत इति

चेन्महदाद्याकारेण च परिणम्य प्रधानं ततोऽपेत्य पुनः प्रधानं स्वरूपेणावतिष्ठत इति । अस्यां कल्पनायां न कश्चिद्विशेष इति वाङ्मात्रेण प्रधानपुरुषयोर्विशिष्टविक्रिया कल्प्यते । अथ भोगकालेऽपि चिन्मात्र एव प्राग्वत्पुरुष इति चेन्न । तर्हि परमार्थतो भोगः पुरुषस्य भोगकाले चिन्मात्रस्य विक्रिया परमार्थैव तेन भोगः पुरुषस्येति चेन्न । प्रधानस्यापि भोगकालेऽविक्रियत्वाद्भोक्तृत्वप्रसङ्गः । चिन्मात्रस्यैव विक्रियाभोक्तृत्वमिति चेदौष्ण्याद्यसाधारणधर्मवतामग्न्यादीनामभोक्तृत्वे हेत्वनुपपत्तिः । प्रधानपुरुषयोर्द्वयो-

---

चिद्रूपेण विक्रियत इत्यर्थः । तत्त्वान्तरेत्यनेकत्वाणुत्वादियुक्तत्वविलक्षणमहदादिरूपेणेत्यर्थः । पुरुषस्य चिद्रूपेणैव परिणामान्न रूपान्तरापत्तिः अणुत्वादिकं वा । प्रधानस्य त्वाकारान्तरेण परिणामात्पूर्वरूपत्यागादणुत्वादिकं स्यादित्यर्थः । किञ्चिद्रूपेण परिणाम आगन्तुको वा न वा । आद्ये आगन्तुकविशेषवत्त्वेनानित्यत्वाद्यापत्त्या प्रधानाद्विशेषः । भोगानन्तरं पुनः स्वरूपावस्थानादनित्यत्वादिदोषश्च प्रधानस्यापि प्रसङ्गे यथात्वाङ्गीकारान्न तयोर्विशेषः स्यादिति दूषयति । नाषाविति ॥ सङ्ग्रहवाक्यं विवृणोति । प्रागिति ॥ अस्यां कल्पनायामिति चिद्रूपेण विक्रियाकल्पनायामपि विचार्यमाणेऽर्थतो न कश्चिदपि विशेषो लभ्यत इति तयोर्विशिष्टविक्रियेति वाङ्मात्रेणैव कल्प्यत उच्यत इत्यर्थः ॥ द्वितीयं शङ्कते । अथेति ॥ चिन्मात्र एवेति न त्वागन्तुकरूपान्तरमित्यर्थः । तर्हि कर्मजन्यः कादाचित्को भोगो न सिध्येदित्याह । न तर्हीति ॥ एतद्दोषपरिहारायागन्तुकं परिणाममङ्गीकृत्य भोगकाले विक्रियामात्रं भोगः स च पुरुषस्यैव न प्रधानस्येति भोगस्वरूपविशेषमात्रेण शङ्कते । भोगकाल इति ॥ तत्रापि किं भोगकाले न विक्रियामात्रं भोगः उत तत्कालीनचिन्मात्रगतविक्रियावत्त्वं भोग इति विकल्प्याद्ये

युगपद्भोक्तृत्वमिति चेन्न। प्रधानस्य पारमार्थ्यानुपपत्तेः। न हि भोक्त्रोर्द्वयोरितरेतरगुणप्रधानभाव उपपद्यते प्रकाशयोरिवेतरेतरप्रकाशने। भोगधर्म्मवति सत्त्वाङ्गिनि चेतसि पुरुषस्य चैतन्यप्रतिबिम्बादयोऽविक्रियस्य पुरुषस्य भोक्तृत्वमिति चेन्न। पुरुषस्य कस्यापनयनार्थं मोक्षसाधनं शास्त्रं प्रणीयतेऽविद्याध्यारोपितानर्थापनयनाय शास्त्रप्रणयनमिति चेत् परमार्थतः पुरुषो भोक्तैव न कर्त्ता प्रधानं कर्त्तैव न भोक्तृ परमार्थसद्वस्त्वन्तरं पुरुषाच्चेतीयं कल्पना ऽऽगमवाह्या व्यर्था निर्हेतुका च इति नादर्त्तव्या मुमुक्षुभिः। एकत्वेऽपि शास्त्रप्रणयनाद्यानर्थक्यमिति चेन्न। भावात्। स हि शास्त्रप्रणेत्रादिषु तत्फलार्थिषु च शास्त्रस्य

---

भोगकाले प्रधानस्यापि सुखाद्याकारेण विक्रियावत्त्वाद्भोगः स्यादित्याह। नेति॥ द्वितीयं शङ्कते। चिन्मात्रस्यैवेति॥ चिन्मात्रस्यैव विक्रियेत्येवकारेण धर्म्यन्तरगतविक्रियानपेक्षा चैतन्यविक्रिया भोग इत्युच्यते वा चैतन्यमात्रगता तदसाधारणा विक्रिया भोग इति वा। नाद्यः। सुखादिरूपप्रधानविक्रियां विना भोगासिद्धेः। न द्वितीयः। चैतन्यासाधारणविक्रियाभोग इत्यत्र हेत्वभावात् स्वासाधारणविक्रियाभोग इति वक्तव्यम्। तथा चातिप्रसङ्गः। सर्व्वस्यापि स्वासाधारणविक्रियावत्त्वात्। भोगकालीनासाधारणविक्रियावत्त्वं तु प्रधानस्याप्यस्ति॥ तत्कालीनसुखादिविक्रियावत्त्वादि दूषयति। चोद्येऽति॥ ननु भोगकालीना साधारणविक्रियैव भोगः। न चान्यादेस्तत्काले नियमेन विक्रियास्ति। न च प्रधानस्यापि प्रसङ्गः इष्टापत्तिरिति शङ्कते। प्रधानेति॥ भोक्ता हि शेषी भोग्यं शेषः। उभयोरपि भोक्तृत्वे शेषशेषिभावो न स्यादित्याह। नेति॥ नह भोगः सत्त्वगुणप्रधानचेतोरूपेण परिणतप्रकृतेरेव धर्म्मस्तस्या विक्रियोपपत्तेः न पुरुषस्य तस्या-

प्रणयनमनर्थकं सार्थकञ्चेति कल्पना स्यात्। न ह्यात्मैकत्वे शास्त्रप्रणेत्रादयस्ततोऽभिन्नाः सन्ति तदभावे एवंविकल्पनैवानुपपन्ना। अभ्युपगते चात्मैकत्वे प्रमाणार्थश्चाभ्युपगतो भवता यदात्मैकत्वमभ्युपगच्छता। तदभ्युपगमे च कल्पनानुपपत्तिमाह शास्त्रम्। यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदित्यादिशास्त्रप्रणयनाद्युपपत्तिश्चाह। अन्यत्र परमार्थवस्तुस्वरूपादविद्याविषये यत्र हि द्वैतमिव भवतीत्यादि। विस्तरतो वाजसनेयके। अविभक्ते विद्याऽविद्ये परापरे इत्याद्यावेव शास्त्रस्यातो न तार्किकवादभटप्रवेशः। वेदान्त-

---

विक्रियावत्त्वात्। न च तस्य भोगाभावप्रसङ्गस्तस्य तथाविधचित्तप्रतिबिम्बितत्वमात्रेण भोक्तृत्वव्यपदेश इति शङ्कते। भोगधर्मवतीति॥ सत्त्वाङ्गिनीति सत्त्वगुणोऽङ्गी प्रधानं यस्य तस्मिन् चेतसीत्यर्थः। तर्हि चित्तगतभोगेन चैतन्ये विशेषो जायते वा न वेति विकल्प्य न द्वितीय इत्याह। नेति॥ किं चास्मिन् पक्षे सर्वशास्त्रप्रणयनं च व्यर्थं स्यादित्याह। भोगरूपश्चेदिति॥ आद्ये स विशेषः सत्यो वाऽसत्यो वेति विकल्प्य सत्यविशेषवत्त्वे पुरुषस्य विकारित्वं स्यादिति मत्वा सन्निधानाद्यारोपितविशेषवत्त्वमस्त्वित्याद्यं शङ्कते। अविद्येति॥ अनर्थेति भोगरूपेत्यर्थः। तर्हि भोक्तृत्वविशेषवत्कर्तृत्वादिविशेषस्य प्रधानादेरारोपत्वमङ्गीकर्तुं युक्तं नात्रैवमसमञ्जसमुक्तरीत्या बन्धमोक्षव्यवहारविध्युपपत्तेः। तथा कल्पनायां प्रयोजनाभावात् प्रमाणात् प्रत्युत सर्वश्रुतिविरोधापत्तेश्चेत्याह। परमार्थत इति॥ पुरुषाद्व्यन्तरं च प्रधानमित्यन्वयः॥ उक्तदोषजातं च बुद्धस्य मतं मोक्षकामिना नादर्तव्यमिति ज्ञापनार्थमुक्तं न तु द्वेषपक्षपातादित्याशयेनाह। इति नादर्तव्यमिति॥ आत्मैकत्वपक्षेऽपि निरसनीयबन्धाभावाच्छास्त्रप्रणयनानर्थक्यमिति शङ्कते। एकत्वेऽपीति॥ किमात्मैकत्वनिश्चयवन्तं प्रति

राजप्रमाणवाक्यगुणो ह्यात्मैकत्वविषय इति । एतेना-
विद्याकृतनामरूपाद्युपाधिकृतानेकशक्तिसाधनकृतभेदवत्त्वा-
द्ब्रह्मणः सृष्ट्यादिकर्तृत्वे साधनाद्यभावो दोषः प्रत्युक्तो
वेदितव्यः परैरुक्त आत्मानर्थकर्तृत्वादिदोषश्च । यस्तु
दृष्टान्तो राज्ञः सर्वार्थकारिणि कर्त्तर्युपचाराद्राजा
करोतीति सोऽत्रानुपपन्नः । स ईक्षाञ्चक्र इति श्रुतेर्मुख्यार्थ-
बाधनात्प्रमाणभूतायाः । तत्र हि गौणी कल्पना शब्दस्य
यत्र मुख्यार्थो न सम्भवति । इह त्वचेतनस्य मुक्तबद्धपुरु-
षविशेषापेक्षया कर्तृकर्मदेशकालनिमित्तापेक्षया च बन्ध-

---

शास्त्रानर्थक्यमुच्यते तद्विपरीतं प्रति नेति विकल्पाद्यं प्रति प्रणयनाभा-
वादानर्थक्यदोषाभावमाह । नाभावादिति ॥ दोषापादनाभावादित्यर्थः ।
पक्षद्वयं विवृणोति । न ह्यात्मैकत्व इति ॥ निश्चित इति शेषः ।
तदभावे शास्त्रप्रणेत्राद्यभावे इयं कल्पनैवार्थवदनर्थकस्येति विकल्पनै
वानुपपन्नेत्यर्थः । नैवानुपपन्नेति पाठे तु तदभाव इत्यनेनैकत्वनिश्चया-
भावोऽभिधीयते* । तदानीं निरसनीयबन्धादिसत्त्वादियं कल्पना बन्ध-
निरस्यर्थं शास्त्रप्रणयनकल्पना नानुपपन्नेति योज्यम् । किन्त्वात्मैकत्व-
निश्चये जाते तन्निश्चयजनकत्वेन शास्त्रार्थवत्त्वस्य स्वानुभवसिद्धत्वात्तेनेयं
शङ्का कर्तुमपि न शक्येत्याह । अभ्युपगत इति ॥ प्रमाणार्थ इति प्रमा-
णस्य शास्त्रस्यार्थः प्रयोजनमित्यर्थः । एकत्वनिश्चयवन्तं प्रति शास्त्रानर्थ-
क्यकल्पनाभावः श्रुत्याप्युक्त इत्याह । तदभ्युपगमे चेति ॥ तत्राभ्युप-
गमो निश्चयः । एकत्वनिश्चयाभावदशायान्तु निरसनीयारोपितबन्धस-
त्त्वाच्छास्त्रानर्थक्यं तदपि श्रुत्योक्तमित्याह । शास्त्रप्रणयनेति ॥ अनेन
द्वितीयकल्पो निरस्तः । श्रुतिगतं यत्र पदं व्याचष्टे । अन्यत्रेति ॥
अथर्वणोऽपि मन्त्रोपनिषदि द्वे विद्ये वेदितव्ये इत्युपक्रम्यापरविद्या

---

* भावोविधीयत इति पाठान्तरम् ।

मोक्षादिफलार्थी नियता पुरुषं प्रति प्रवृत्तिर्नोपपद्यते । यथोक्तसर्वज्ञेश्वरकर्तृत्वपक्षे तूपपन्ना ईश्वरेणैव सर्व्वाधिकारी प्राणः पुरुषेण सृज्यते । कथं स पुरुष उक्तप्रकारेणेक्षित्वा सर्वप्राणं हिरण्यगर्भाख्यं सर्वप्राणिकरणाधारमन्तरात्मानमसृजत सृष्टवान् । अतः प्राणात् श्रद्धां सर्वप्राणिनां शुभकर्म्मप्रवृत्तिहेतुभूताम् । ततःकर्म्मफलोपभोगसाधनाधिष्ठानानि कारणभूतानि महाभूतान्यसृजत । खं शब्दगुणं वायुं स्वेन स्पर्शेन कारणगुणेन च विशिष्टं द्विगुणम् । तथा ज्योतिः स्वेन रूपेण पूर्व्वा-

---

ऋग्वेदादिरूपा परात्मदृष्ट्यादिशुभकप्रत्ययजनितधर्म्मं इतरस्तु विषयेषूक्ता विद्याविद्ययोर्विषयभेदः भाष्यकारादावेव सूचित इत्याह । अत्र चेति ॥ अद्वैतवादे सर्व्वशङ्कानां श्रुतिप्रामाण्येनैव निरासात् । तार्किकोक्तचिन्तयशङ्कान्तरस्यापि नात्र प्रवेश इत्युपसंहरति । अत इति ॥ राजप्रमाणेति प्रमाणराजेत्यर्थः । राजदन्तादित्वात्परनिपातः । वेदान्तप्रमाणमेव राजेव राजा तद्बलदृढन्यायावाप्तैर्गुप्त आत्मैकत्वमेव विषय एव देश इव देशो रक्षणीयत्वात्र तार्किकभटैर्बौधैर्न प्रवेश इत्यन्वयः ॥ पूर्व्वोक्तदोषं निराकरोति । यतेनेति ॥ उपाधिकृता अनेकाः शक्तयः साधनानि च तत्कृतस्य भेदस्यानेकत्वस्य सत्त्वादित्यर्थः । आत्मेति आत्मनो योऽनर्थः संसारस्तत्कर्तृत्वमित्यर्थः । आदिशब्देनाप्तकामत्वेन प्रयोजनापेक्षा उपपत्तिः सङ्गृहीता । कल्पनायाः सव्यतिरिक्तस्य जीवस्य ऋतत्वाच्चारोपितात्मनः । तदीयकर्म्मफलदानार्थमाप्तकामस्यापि सृष्ट्यादिप्रवृत्तिः सम्भवति । संव्यवहारस्यापि सम्मतव्यवहारा स्वप्न इव सर्व्वमप्युपपद्यत इति सूत्रभाष्यादावेव परिहृत इत्यर्थः । सांख्येन स्वपक्षे पुरुषशब्दस्येश्वरस्य चोपपत्तिरुक्ता तामनूद्य निराकरोति । यस्त्विति ॥ शयमानः प्रसार इत्यादावपपारो हट इत्याशङ्क्याह ।

भ्याञ्च विशिष्टं त्रिगुणं शब्दस्पर्शाभ्याम्। तथाऽपो रसेन गुणेनासाधारणेन पूर्वगुणानुप्रवेशेन चतुर्गुणाः। तथा गन्धेन पूर्वगुणानुप्रवेशेन पञ्चगुणा पृथिवी। तथा तैरेव भूतैरारब्धमिन्द्रियं द्विप्रकारं बुद्ध्यर्थं कर्म्मार्थञ्च दशसङ्ख्यम्। तस्य चेश्वरमन्तस्थं संशयसङ्कल्पादिलक्षणं मनः। एवं प्राणिनां कार्य्यं कारणञ्च कृत्वा तत्स्थित्यर्थं व्रीहियवादिलक्षणमन्नम्। ततश्चान्नादद्यमानाद्वीर्य्यं सामर्थ्यं बलं सर्व्वकर्म्मप्रवृत्तिसाधनम्। तद्वीर्य्यवताञ्च प्राणिनां तयोर्विशुद्धिसाधनं सङ्कीर्य्य-

---

तत्र हि गौणीति॥ प्रधानपक्षे न केवलमीक्षणश्रुत्यनुपपत्तिः वस्तुतस्तु तस्य कर्तृत्वमपि न सम्भवतीत्याह। इह त्विति॥ मुक्तान् वर्जयित्वा महान् प्रत्येव प्रवृत्तिः कालकर्माद्यपेक्षया बन्धमोक्षादिव्यवस्थितभोगापवर्गार्था व्यवस्थिता प्रवृत्तिर्नोपपद्यत इत्यर्थः॥ अनेन पुरुषार्थं प्रयोजनमुररीकृत्य प्रधानं प्रवर्त्तत इति यदुक्तं मतान्तरे तन्निरस्तम्॥ ईश्वरकारणवादे तु न कोऽपि दोष इत्याह। यथोक्तेति॥ एवं परपक्षं निराकृत्य श्रुतिव्याख्यानं कुर्व्वन् स प्राणमसृजतेत्यस्य तात्पर्य्यमाह। ईश्वरेणैवेति। राज्ञे नेत्यर्थः॥ उत्तरार्धं प्रश्नपूर्व्वकमाह। कथमिति॥ हिरण्यगर्भाख्यमिति हिरण्यगर्भ इत्याख्या येनोपाधिनाऽऽत्मनो भवति तं मुख्यमिदं सर्व्वप्राणं समष्टिप्राणमित्यर्थः। यथाश्रुते कश्चिद्धृत्वांश्च इत्यादिनाऽऽत्मन उक्तान्यत्वाद्युपाधिकृटेः प्रस्तुतत्वाद्धिरण्यगर्भस्य जीवस्य तथात्वादुपक्रमविरोधापत्तेः। हिरण्यगर्भाख्यमित्युक्तिस्त्वात्मनो हिरण्यगर्भादिसंसारिभावोऽप्यं तदुपाधिक इति सूचयितुमिति बोध्यम्॥ तस्य समष्टित्वमाह। सर्व्वेति॥ अन्तरात्मानमिति सर्व्वस्थूलशरीरान्तरत्वादात्मबुद्धिगोचरत्वाच्चान्तरात्मा स इत्यर्थः। तत इत्यानन्तर्य्यार्थेयं पञ्चमी। एवमुत्तरत्रापि। न च भूतकार्य्यत्वात्प्राणस्य कथं ततः पूर्व्वकालीनत्वमिति वाच्यम्। सत्यम्। सूक्ष्मभूतकरणानन्तरं प्राणमसृजतेति कल्पनीयत्वात्। न चैतदनन्तरं भूतसृष्ट्युक्तिविरो

प्राणानां मन्त्रास्तपोविशुद्धान्तर्बहिःकरणेभ्यः। कर्मसाधनमेता ऋग्यजुःसामाथर्वाङ्गिरसः। ततः कर्माग्निहोत्रादिलक्षणम्। ततो लोकाः कर्मणां फलम्। तेषु च सृष्टानां प्राणिनां नाम च देवदत्तो यज्ञदत्त इत्यादि। एवमेताः कलाः प्राणिनामविद्यादिदोषबीजापेक्षया सृष्टास्तैमिरिकदृष्टिसृष्टा इव द्विचन्द्रमशकमक्षिकाद्याः स्वप्नदृक्सृष्टा इव च

---

श्रद्धा। तस्याः पञ्चीकृतस्थूलभूतविषयत्वोपपत्तेः। अत एव भोगसाधनाधिष्ठानानीत्युक्तम्। सूक्ष्माणां तथात्वायोगात्। न चैवमपि स्थूलभूतकार्यान्तरिन्द्रियमनःप्रभृत्युक्तिविरोधः। भूतारब्धदेहाधिष्ठितानामेव तेषां कार्यक्षमत्वेन तेषां तदनन्तरत्वोक्तिरिति भावः। भोगसाधनाधिष्ठानत्वमिति भावः॥ भूतानां तत्कारणत्वादित्याह। कारणभूतानीति॥ तेषां भूतानां कारणतया शब्दगुणमित्यादिनाऽधाधारणगुणा उक्ताः। पूर्वपूर्वगुणानुवृत्तिस्तु पूर्वपूर्वस्योत्तरोत्तरोपादानत्वसूचनार्थं स्थौल्यतारतम्यविवक्षया चेति बोध्यम्। वायुमिति श्रुतौ वायुरित्यादि प्रथमाद्वितीयार्थः। प्राणमसृजतेति द्वितीययोपक्रमात्। तैरेवेत्यपञ्चीकृतावस्थायामित्यर्थः। तथा चेन्द्रियमिति नियामकमित्यर्थः। सङ्कीर्णप्राणानामित्यविशुद्धसत्त्वतया पापाचरणेन तैः पापैः सङ्कीर्णप्राणानां सङ्करपरिहाराय चित्तशुद्धिसाधनं तपोऽसृजतेत्यर्थः। फलमिति लोक्यते भुज्यत इति लोकः फलमित्यर्थः। नाम चेति संज्ञयाऽऽदिनाम्नोक्तव्यवहाराय सृष्टमित्यर्थः। मन्त्रोपरचितत्वोक्त्या कलानां सत्यत्वमुक्तं कर्तव्यम्। आरोपे युक्तिरजनादौ सद्रूपव्यवहाराभावादित्याशङ्क्याह्वयवस्थानेनमहंनादिना प्रपञ्चेन सृष्टस्य द्विचन्द्रमशकमक्षिकादेरोपत्वदर्शनात्। अथ रथानुपयोगात् प्रथः सृजत इति सद्रूपेणोक्तसत्यपदार्थस्य च भ्रमत्वदर्शनान्नैवमित्याह। एवमेता इति॥ अविद्याकामकर्मादिदोषरूपं बीजं तदपेक्षया तत्साधनोक्तमे-

स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते। एवमेवास्य परिद्रष्टुरिमाः

---

सर्व्वपदार्थाः पुनस्तस्मिन्नेव पुरुषे प्रलीयन्ते हित्वा नाम-रूपादिविभागम् ॥ ४ ॥

कथं स दृष्टान्तः। यथा लोके इमा नद्यः स्यन्दमानाः स्रवन्त्यः समुद्रायणाः समुद्रमयनं गतिरात्मभावो यासां ताः समुद्रायणाः समुद्रं प्राप्योपगम्यास्तं नामरूपतिरस्कारं गच्छन्ति। तासाञ्चास्तं गतानां भिद्येते विनश्येते नामरूपे गङ्गायमुनेत्यादिलक्षणे। तदभेदे समुद्र इत्येवं प्रोच्यते। तद्वस्तूदकलक्षणमेवं यथाऽयं

---

त्यर्थः। तैमिरिकग्रहो नेत्रेऽङ्गुल्यवष्टम्भाद्युपलक्षणार्थः ॥ ४ ॥

एवमात्मप्रतिपत्त्यर्थमध्यारोपमुक्त्वा तदपवादमवतारयति। पुनस्तस्मिन्नेवेति। मायादिव्यवच्छेदेन गन्तव्यभ्रमं वारयति। आत्मभाव इति। असत्त्वेन नाशो नाभिधीयते भेदकोपाधिना नामरूपयोर्नाशोऽपि स्वरूपस्य समुद्रात्मना विद्यमानत्वादित्याह। नामरूपेति। तिरस्कारमिति पूर्व्वरूपतिरस्कारमित्यर्थः। तद्वस्त्विति नामरूपनाशानन्तरं परिशिष्टमुदकलक्षणं वस्तु समुद्र इत्येवोच्यत इत्यन्वयः। पुरुषस्येति कर्म्मणि षष्ठी। पुरुषं स्वात्मरूपं परितः सर्व्वं स्वरूपेण पश्यत इत्यर्थः। द्रष्टुरित्युक्ते आगन्तुकस्य कर्त्ता प्रतीयत इत्यत आह। दर्शनस्य कर्त्तुः स्वरूपभूतस्येति स्वरूपत्वे दर्शनस्य तस्य कर्त्तृत्वानुपपत्तेस्तृचो कर्त्तरि णिच्प्रत्ययविरोध इत्याशङ्क्याह। सर्व्वतःसम्प्रकाशक इत्यत्र यथा कर्त्त्रर्थकस्य प्रत्ययस्योपचरितत्वं तद्वदिहापीत्याह। यथार्क इति। नदीनामिवेति इवशब्दस्तथाशब्दार्थे। यथा नदीनां समुद्रोऽयनं तथा

षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति तदेष श्लोकः ॥ ५ ॥
अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः।

---

दृष्टान्तः। उक्तलक्षणस्य प्रकृतस्य पुरुषस्य परिद्रष्टुः परि-समन्ताद्द्रष्टुर्दर्शनस्य कर्त्तुः स्वरूपभूतस्य। यथार्कः स्वात्म-प्रकाशस्य कर्त्ता तद्वदिमाः षोडशकलाः प्राणाद्या उक्ताः कलाः पुरुषायणा नदीनामिव समुद्रः पुरुषोऽयनमात्म-भावगमनं यासां कलानां ताः पुरुषायणाः पुरुषं प्राप्य पुरुषात्मभावमुपगम्य यथैवास्तं गच्छन्ति। भिद्येते तासां नामरूपे कलानां प्राणाद्याख्यारूपञ्च। यथा स्वभेदे च नामरूपयोर्यदनष्टं तत्त्वं पुरुष इत्येवं प्रोच्यते ब्रह्मविद्भिः। य एवंविद्वान् गुरुणा प्रदर्शितकलः प्रलयमार्गः स एष विद्यया प्रविलापितास्वविद्याकामकर्म्मजनितासु प्राणादि-

---

पुरुषोऽयनमित्यन्वयः ॥ अस्तमदर्शनस्वरूपमाह। भिद्येते इति॥ नामरूपभेद एवास्तगमनमित्यर्थः। यथैवास्तमिति यस्य यत्स्वरूपं प्राणाद्यात्मकं तदपि भिद्यत इत्यन्वयः। पुरुष इत्येवं प्रोच्यत इत्यस्यार्थमाह। स्वभेदे चेति॥ यदनष्टमिति कलानां हि रूपमारोप्याधिष्ठानाभेदात्मकं सत्तास्फूर्त्तिप्रियरूपं तत्रारोप्यस्य नामरूपात्मकस्य भेदेऽधिष्ठानात्मकरूपपुरुषात्मनोच्यत इत्यर्थः। यथा समुद्रस्वरूपभूतं जलं मेघैराकृष्याभिवृष्टं गङ्गादिनामरूपोपाधिना समुद्राद्भिन्नमिव व्यवच्छिद्यमानं तदुपाधिविगमे समुद्रस्वरूपमेव प्रतिपद्यते। एवमविद्याकृतनामरूपोपाधिवशादात्मनो भिन्नमिव स्थितं सर्व्वं जगद्विद्ययाऽविद्याकृतनामरूप-

तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा इति ॥ ६ ॥

तान् होवाचैतावदेवाहमेतत्परं ब्रह्म वेद ।

---

कलास्वकलोऽविद्याकृतकलानिमित्तो हि मृत्युस्तदपगमेऽकलत्वादेवामृतो भवति तदेतस्मिन्नर्थे एष श्लोकः ॥ ५ ॥

अरा रथचक्रपरिवारा इव रथनाभौ रथचक्रस्य नाभौ यथा प्रवेशितास्तदाश्रया भवन्ति यथा तथेत्यर्थः । कलाः प्राणाद्या यस्मिन् पुरुषे प्रतिष्ठिता उत्पत्तिस्थितिलयकालेषु तं पुरुषं कलानामात्मभूतं वेद्यं वेदनीयं पूर्णत्वात्पुरुषं पुरिशयनाद्वा वेद जानीयात् । यथा हे शिष्या वो युष्मान्मृत्युर्मा परिव्यथाः मा परिव्यथयतु । व्यथामापन्ना दुःखिन एव यूयं स्थ अतस्तन्माभूद्युष्माकमित्यभिप्रायः ॥ ६ ॥

तानेवमनुशिष्य शिष्यान् तान्होवाच पिप्पलादः किलै-

---

विगमे ब्रह्ममात्रतयाऽवशिष्यत इत्यर्थः । एवं प्राणादिकलोपाधिक आत्मन उत्पत्त्यादिमद्विद्यतमरणादिव्यवहार इत्युक्तेः । प्रयोजनं प्राणादिनिमित्तावुत्पत्त्यादिसर्व्वसंसारधर्म्मरहितात्मस्वरूपावस्थानं रूपं दर्शयितुं स एष इति वाक्यं व्याचष्टे । स एवं विद्वानित्यादिना । परिवाराइति नाभेः परितो नाभौ नेम्याञ्च प्रोतास्तिर्य्यक्काष्ठविशेषा इत्यर्थः । यथा प्रवेशिता इति यथावत्सम्यक्प्रवेशिता इत्यर्थः । नातोऽर्थव्यतिरेकप्रदर्शनेन स्पष्टयति । न चेदिति ॥ ५ ॥ ६ ॥

शिष्याणां कृतार्थतावुद्धिजननार्थं तानित्यादिवाक्यं व्याचष्टे ।

नातः परमस्तीति ॥ ७ ॥ ते तमर्चयन्तस्त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति । नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ८ ॥ इति षष्ठप्रश्नः समाप्तः ॥ ६ ॥ इति प्रश्नोपनिषत् समाप्ता ॥ ॐ तत् सत् ॥ हरिः ॐ ॥

---

तावदेव वेद्यं परं ब्रह्म वेद विजानाम्यहमेतत् नातोऽस्मात्परमस्ति प्रकृष्टतरं वेदितव्यमित्येवमुक्तवान् शिष्यानामविदितशेष्यास्तित्वाशङ्कानिवृत्तये कृतार्थबुद्धिजननार्थञ्च । ततस्ते शिष्या गुरुणाऽनुशिष्टास्तं गुरुं कृतार्थाः सन्तो विद्यानिष्क्रयमपश्यन्तः किं कृतवन्त इत्युच्यते । अर्चयन्तः पादयोः पुष्पाञ्जलिप्रकिरणेन प्रणिपातेन च शिरसा किमूचुरित्याह । त्वं हि नोऽस्माकं पिता ब्रह्मशरीरस्य विद्यया जनयितृत्वान्नित्यस्याजरामरस्याभयस्य । यस्त्वमेवास्माकमविद्याया विपरीतज्ञानाज्जन्मजरामरणरोगदुःखादिग्राहादविद्यामहोदधेर्विद्याप्लवेन परमपुन-

---

तानेवमिति ॥ प्रकिरणेनेति प्रक्षेपेणेत्यर्थः । अतः पितृत्वं तवेति ॥ जनकश्चोपनेता च यश्च विद्यां प्रयच्छति । अन्नदाता भयत्राता पञ्चैते पितरः स्मृता इति स्मृतेरित्यर्थः ॥ नोऽस्माकमिति हेतूक्तेस्तात्पर्यं वदन् पितृत्वोक्तिमात्रेण विद्यानिष्क्रयार्थं किं दत्तमित्यपेक्षायां स्वशरीरमेव परिचारकतया दासभावेन गुरवे दत्तमित्याह । इतरस्मादिति ॥ पितृत्वादेव किं पूज्यतरत्वे परिचार्यत्वम् । स्वामित्वं किमु वक्तव्यमित्यर्थः ।

राद्विनित्वयं मोक्षाख्यं महोदधेरिव पारं तारयस्यस्मान् प्रति। अतः पितृत्वं तवास्मान् प्रत्युपपन्नं इतरस्मात्। इतरोऽपि हि पिता शरीरमात्रं जनयति तथापि सत्वपूज्यतमो लोके किमु वक्तव्यमात्यन्तिकाभयदातुरित्यभिप्रायः। नमः परमऋषिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो नमः परमऋषिभ्य इति। द्विर्वचनमादरार्थम्॥७॥८॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीमच्छङ्करभगवतः कृतावाथर्वणप्रश्नोपनिषद्भाष्यं समाप्तम्॥ ॐ तत्सत्॥

---

अत एव वाजसनेयके मातापि च द्वाभ्यामिति श्रुतमिति भावः॥७॥८॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दज्ञानविरचिता आथर्वणिकप्रश्नोपनिषद्भाष्यटीका समाप्ता॥ हरिः ॐ॥

---

## अथर्ववेदीयमुण्डकोपनिषद्भाष्यम् ॥

ॐ ब्रह्मणे नमः ॥ ॐ ब्रह्मा देवानामित्याद्याथर्व्वणोपनिषत् । अस्याश्च विद्यासम्प्रदायकर्तृत्वपारम्पर्य्यलक्षणसम्बन्धमादावेवाह स्वयमेव स्तुत्यर्थम् । एवं हि महद्भिः परमपुरुषार्थसाधनत्वेन गुरुणाऽऽयासेन लब्धा विद्येति श्रोतृबुद्धिप्ररोचनाय विद्यां महीकरोति । स्तुत्या प्ररोचितायां हि विद्यायां सादराः प्रवर्त्तेयुरिति । प्रयोजनेन

---

॥ अथर्व्ववेदीयमुण्डकोपनिषद्भाष्यटीका ॥

ॐ ब्रह्मणे नमः ॥ यदक्षरं परं ब्रह्म विद्यागम्यमितीरितं । यस्मिन् ज्ञाते भवेज्ज्ञातं सर्वं तत्स्याम संश्रयम् ॥ १ ॥

मन्त्रोपनिषद्भिरौपनिषदाद्या आथर्व्वणवेदस्य बह्व्य उपनिषदः सन्ति । तासां शारीरकेऽनुपयोगित्वेनाव्याचिख्यासितत्वादहङ्ग्रहत्वादिगुणकधर्म्मैरित्याद्यधिकरणोपयोगितया मुण्डकस्य व्याचिख्यासितस्य प्रतीकमादत्ते । ब्रह्मा देवानामित्याद्याथर्व्वणोपनिषदिति ॥ व्याचिख्यासितेति शेषः । नन्वियमुपनिषन्मन्त्ररूपा मन्त्राणाञ्चेषे त्वेत्यादीनां कर्म्मसम्बन्धेनैव प्रयोजनवत्त्वम् । एतेषाञ्च मन्त्राणां विनियोजकप्रमाणानुपलम्भेन तत्सम्बन्धासम्भवान्निष्प्रयोजनत्वाद्व्याचिख्यासितत्वं न सम्भवतीति शङ्कमानस्योत्तरम् । सत्यं कर्म्मसम्बन्धाभावेऽपि ब्रह्मविद्याप्रकाशनसामर्थ्याद्विद्यया सम्बन्धो भविष्यति ॥ ननु विद्यायाः पुरुषकर्तृत्वात्तत्प्रकाशकत्वेऽस्या उपनिषदोऽपि पौरुषेयत्वप्रसङ्गात् पाणिनिसूत्रवद्दोषजत्वशङ्कयाऽप्रामाण्यशङ्काद्व्याचिख्यासितत्वं नोपपद्यत इत्याह । अस्याश्चेति ॥ विद्यायाः सम्प्रदायप्रवर्त्तका एव पुरुषा न तु स्वेच्छया निर्म्मातारः सम्प्रदायकर्तृत्वमपि नाधुनातनं येनानाश्वासः स्यात् किन्त्वनादिपारम्पर्य्यागतम् । ततोऽनादिप्रसिद्धब्रह्मविद्याप्रकाशनसमर्थोपनिषदः पुरुषसम्बन्धः सम्प्रदायकर्तृत्वपारम्पर्य्यलक्षण एव तमादावेवाहेत्यर्थः । विद्यासम्प्रदायकर्तृत्वमेव पुरुषाणाम् । यथा विद्यायाः

तु विद्यायाः साधनसाध्यलक्षणसम्बन्धमुत्तरत्र वक्ष्यति भिद्यते हृदयग्रन्थिरित्यादिना । अत्र चापरशब्दवाच्याया ऋग्वेदादिलक्षणायां विधिप्रतिषेधमात्रपरायां विद्यायां संसारकारणाविद्यादिदोषनिवर्त्तकत्वं नास्तीति स्वयमेवोक्ता परापरेतिविद्याभेदकरणपूर्व्वकमविद्यायामन्तरे वर्त्तमाना इत्यादिना । तथा परप्राप्तिसाधनं सर्वसाधन-

---

पुरुषसम्बन्धस्तथैवोपनिषदोऽपि । यदि पुरुषसम्बन्धो विवक्षितः पौरुषेयत्वपरिहाराय तर्हि तथाभूतसम्बन्धाभिधायकेनान्येन भवितव्यं स्वयमेव स्वसम्बन्धाभिधायकत्वे आत्माश्रयप्रसङ्गादित्याशङ्क्याह स्वयमेव स्तुत्यर्थमिति ॥ विद्यास्तुतौ तात्पर्य्यान्न कश्चिद्दोष इत्यर्थः ॥ स्तुतिर्वा किमर्थेत्यत आह मोक्षेति ॥ प्रवर्त्तेरन्निति पाठो युक्तः । इतश्चातो-रात्मनेपदत्वाद्विद्याया यत्प्रयोजनं तदेवास्या उपनिषदोऽपि प्रयोजनं भविष्यतीत्यभिप्रेत्य विद्यायाः प्रयोजनसम्बन्धमाह । प्रयोजनेन त्विति ॥ संसारकारणनिरसनं ह्यविद्याफलस्य तत्तु परविद्यैव तन्निवृत्तेः सम्य-गात्तदर्थं ब्रह्मविद्याप्रकाशकोपनिषद्व्याख्यातव्येत्याशङ्क्याह । अत्र चेति ॥ संसारकारणमविद्यादिदोषस्तन्निवर्त्तकत्वमपरविद्यायाः कर्म्मात्मिकाया न सम्भवत्यविरोधात् । न हि यत्नतोऽपि प्राणायामं कुर्व्वतः शुक्तिदर्शनं विना तदविद्यानिवृत्तिर्दृश्यते । ततोऽपरविद्यायाः संसारकारणावि-द्यानिवर्त्तकत्वं नास्तीति स्वयमेवोक्ता ब्रह्मविद्यामाहेति सम्बन्धः । किञ्च परमपुरुषार्थसाधनत्वेन ब्रह्मविद्यायाः परविद्यात्वं निकृष्टसंसा-रफलत्वेन च कर्म्मविद्याया अपरविद्यात्वम् । ततः समाख्यावशाद-परविद्याया मोक्षसाधनत्वाभावोऽवगम्यत इत्यभिप्रेत्याह । पराप-रेति ॥ यच्चाहुः कर्म्मजडाः केवलब्रह्मविद्यायाः कर्त्तृसंस्कारत्वेन कर्म्माङ्गत्वात्स्वातन्त्र्येण पुरुषार्थसाधनत्वं नास्तीति तदनन्तरमुक्तैव निराकृतमित्याह । तथा परप्राप्तिसाधनमिति ॥ ब्रह्मविद्यायाः कर्म्माङ्गत्वे कर्म्मणो निन्दा न स्यात् न ह्यङ्गविधानाय प्रधानं विनिन्द्यते । अत्र तु सर्व्वसाध्यसाधननिन्दया तद्विषयवैराग्याभि-

साध्यविषयवैराग्यपूर्व्वकं गुरुप्रसादलभ्यां ब्रह्मविद्यामाह परीक्ष्य लोकानित्यादिना। प्रयोजनञ्चास्य ब्रवीति ब्रह्मविद्ब्रह्मैव भवतीति। परामृतात्परिमुच्यन्ति सर्वे इति च। ज्ञानमात्रे यद्यपि सर्व्वाश्रमिणामधिकारस्तथापि सन्न्यासनिष्ठैव ब्रह्मविद्या मोक्षसाधनं न कर्म्मसहितेति भैक्ष्यचर्य्यां चरन्तः सन्न्यासयोगादिति च प्रदर्शयति। विद्याकर्म्म-

---

धानपूर्व्वकं परप्राप्तिसाधनं ब्रह्मविद्यामाह। विषयवैराग्यपूर्व्वकमिति। अतो ब्रह्मविद्यायाः स्वप्रधानत्वात्तत्प्रकाशकोपनिषदां न कर्म्मप्रकाशकत्वमित्यर्थः॥ यद्युपनिषदां स्वतन्त्रब्रह्मविद्याप्रकाशकत्वं स्यात्तर्हि तदध्येतॄणां सर्व्वेषामेव किमिति ब्रह्मविद्या न स्यादित्याशङ्क्याह। गुरुप्रसादलभ्यामिति। गुर्व्वनुग्रहादिसंस्काराभावात्सर्व्वेषां यद्यपि न भविष्यति तथापि विशिष्टाधिकारिणां भविष्यतीति भावः॥ ननु स्वतन्त्रा चेद्ब्रह्मविद्या तर्हि प्रयोजनसाधनं न स्यात्। सुखदुःखप्राप्तिपरिहारयोः प्रवृत्तिसाध्यतावगमात्तत्राह प्रयोजनञ्चेति॥ स्वरूपमात्रे च विवृतस्वरूपलाभे सुखप्राप्तिसिद्धेः रज्जुतत्त्वज्ञानमात्रात्सर्पजन्यभयकम्पादिदुःखनिवृत्तिसिद्धेश्च न प्रवृत्तिनिवृत्तिसाध्यत्वं प्रयोजनस्यैकान्तिकं अतो विमर्शं श्रुतिः प्रयोजनसम्बन्धं विद्याया ब्रवीतीति। तथा तत्प्रकाशकोपनिषदो व्याख्येयत्वं सम्भवतीत्यर्थः। ब्रह्मास्त्रैकदेशिनः स्वाध्यायाध्ययनविधेरर्थावबोधफलस्य त्रैवर्णिकाधिकारत्वादधीतोपनिषज्जन्ये ब्रह्मज्ञानेऽप्येव सर्व्वेषामधिकारः। ततः सर्व्वाश्रमकर्म्मसमुच्चितैव ब्रह्मविद्या मोक्षसाधनमिति तत्राह। ज्ञानमात्र इति॥ सर्व्वकर्म्मत्यागात्मकसन्न्यासनिष्ठैव परब्रह्मविद्या मोक्षसाधनमिति भेदो दर्शयति। तादृशसन्न्यासिनां च कर्म्मसाधनस्याभावान्न कर्म्मसम्भवः। आश्रमधर्म्मोऽपि शमदमाद्युपबृंहितविद्यासम्बन्धमेव। तेषां शौचाचमनादिरपि तत्त्वतो नाश्रमधर्म्मो लोकसङ्ग्रहार्थत्वात्। ज्ञानाभ्यासेनैवाऽपावनत्वनिवृत्तेः। न हि ज्ञानेन सदृशं पवित्रमिह विद्यते इति स्मरणात्। त्रिषवणस्नानभिक्षादेरपि सन्न्यासिविषय-

विरोधाच्च । न हि ब्रह्मात्मैकत्वदर्शनेन सह कर्म्म स्वप्नेऽपि सम्पादयितुं शक्यम् । विद्यायाः कालविशेषाभावादनियतनिमित्तत्वात्कालकर्म्मसङ्कोचानुपपत्तिः । यत्तु गृहस्थेषु ब्रह्मविद्यासम्प्रदायकर्तृत्वादिलिङ्गं न तत् स्थितं न्यायं बाधितुमुत्सहते । न हि विधिशतेनापि तमःप्रकाशयोरेकत्र सम्भवः शक्यते कर्त्तुं किमुत लिङ्गैः केवलैरिति एवमुक्तसम्बन्धप्रयोजनाया उपनिषदोऽल्पग्रन्थविवरणमारभ्यते । य इमां ब्रह्मविद्यामुपयन्त्यात्मभावेन श्रद्धाभक्तिपुरःसराः सन्तस्तेषां गर्भजन्मजरारोगाद्यनर्थपूगं निशातयति परं वा ब्रह्म गमयत्यविद्यादिसंसारकारणञ्चात्यन्तमवसादयति विनाशयतीत्युपनिषत् । उपनिपूर्व्वस्य सदेरेवमर्थस्मरणात् ।

---

त्वात् । अतः कर्म्मनिष्ठस्यैव साहित्यशासनस्य न कर्म्मण इत्यर्थः । इतश्च न कर्म्मसमुच्चिता विद्या मोक्षसाधनमित्याह । विद्याकर्म्मविरोधाच्चेति ॥ अकर्त्तृ ब्रह्मैवास्मि करोमि चेति स्फुटो व्याघात इत्यर्थः । यदा ब्रह्मात्मैकत्वं विस्मरति तदोत्पन्नविद्योऽपि किं करिष्यति ततः समुच्चयः सम्भाव्य इति न वाच्यमित्याह । विद्याया इति ॥ ननु गृहस्थानामङ्गिरःप्रभृतीनां विद्यासम्प्रदायप्रवर्त्तकत्वदर्शनाद्गृहस्थाश्रमकर्म्मभिः समुच्चयो लिङ्गादवगम्यत इत्याशङ्क्याह । यत्त्विति ॥ लिङ्गस्य न्यायोपबृंहितस्यैव गमकत्वाङ्गीकारात्समुच्चये च न्यायाभावात्प्रत्युत विरोधदर्शनाच्च लिङ्गेन समुच्चयसिद्धिः । सम्प्रदायप्रवर्त्तकानाञ्च गार्हस्थ्यस्याभासमात्रत्वात्तु सन्न्यासेन सुकर्म्मं उबाधात् । यस्य मे चास्ति सर्व्वंन यस्य मे नास्ति किञ्चन । मिथिलायां प्रदीप्तायां न मे किञ्च न दह्यत इत्युद्गारदर्शनात्कर्म्माभासेन न समुच्चयः स्वातत्व च विधिर्न दृश्यत इति भावः ॥ साधितं व्याख्येयत्वमुपसंहरति । एवमिति ॥

अथर्ववेदीयमुण्डकोपनिषदारम्भः ॥

॥ॐ॥ ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्त्ता भुवनस्य गोप्ता । स ब्रह्मविद्यां सर्वविद्या-

ब्रह्मा परिवृढो महान् धर्म्मज्ञानवैराग्यैश्वर्य्यैः सर्व्वा-न्यानतिशयेनेति । देवानां द्योतनवतामिन्द्रादीनां प्रथमो गुणैः प्रधानः सन् प्रथमोऽग्रे वा सम्बभूवाभिव्यक्तः सम्यक्स्वातन्त्र्येणेत्यभिप्रायः । न तथा यथा धर्म्माधर्म्मवशात् संसारिणोऽन्ये जायन्ते । योऽसावतीन्द्रियोऽग्राह्य इत्या-दिश्रुतेः । विश्वस्य सर्व्वस्य जगतः कर्त्तोत्पादयिता । भुवनस्योत्पन्नस्य गोप्ता पालयितेति विशेषणं ब्रह्मणो विद्यास्तुतये । स एवं प्रख्यातमहत्त्वो ब्रह्मविद्यां ब्रह्मणः परमात्मनो विद्यां ब्रह्मविद्यां येनाक्षरं पुरुषं वेद सत्य-मिति विशेषणात् । परमात्मविषया हि सा । ब्रह्मणा वा ऽग्रजेनोक्तेति ब्रह्मविद्या । तां सर्वविद्याप्रतिष्ठां सर्व्वविद्या-भिव्यक्तिहेतुत्वात्सर्व्वविद्याश्रयामित्यर्थः । सर्वविद्यावेद्यं वा

अन्ये कथमुपनिषच्छब्दप्रयोग इति मुण्डकाख्यमुपनिषच्छब्दवाच्यवि-द्यार्थत्वात्ग्रन्थस्य इति दर्शयितुं विद्याया उपनिषच्छब्दार्थत्वमाह । य इमामिति ॥ आत्मभावेनेति प्रेमास्पदतयेत्यर्थः । अनर्थपूगं क्लेशसमूहं निशातयति शिथिलीकरोति अपरिपक्वज्ञानादिस्तैर्ब्रह्मभिर्भोगसमवा-दित्यर्थः । ज्ञानमप्रतिघं यस्य वैराग्यञ्च जगत्पतेः । ऐश्वर्य्यञ्चैव धर्म्मश्च सह सिद्धं चतुष्टयमिति धर्म्मज्ञानवैराग्यैश्वर्य्यैः सर्व्वानन्यान-

प्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ॥ १ ॥ अथर्वणे यां प्रवदेत ब्रह्माथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम् । स भारद्वाजाय सत्यवाहाय प्राह भारद्वाजोऽङ्गिरसे परावराम् ॥ २ ॥

---

वस्त्वनयैव विज्ञायत इति । येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति श्रुतेः । सर्वविद्याप्रतिष्ठामिति च स्तौति । विद्यामथर्वाय ज्येष्ठपुत्राय प्राह । ज्येष्ठश्चासौ पुत्रश्चानेकेषु ब्रह्मणः सृष्टिप्रकारेष्वन्यतमस्य सृष्टिप्रकारस्य प्रमुखे पूर्वमथर्वा सृष्ट इति ज्येष्ठस्तस्मै ज्येष्ठपुत्राय प्राह ॥ १ ॥ यामेतामथर्वणे प्रवदेत प्रावदत् ब्रह्मविद्यां ब्रह्मा तामेव ब्रह्मणः प्राप्तामथर्वा पुरा पूर्वमुवाचोक्तवानङ्गिरे अङ्गिर्नाम्ने ब्रह्मविद्याम् । स चाङ्गीर्भारद्वाजाय भारद्वाजगोत्राय सत्यवाहाय सत्यवाहनाम्ने प्राह प्रोक्तवान् । भारद्वाजोऽङ्गिरसे स्वशिष्याय पुत्राय वा परावरां परस्मात्परस्मादवरेण प्राप्तेति परावरा परावरसर्व-

---

तिक्रम्य वर्त्तत इति परिवृढत्वं विवृणिमर्थः । योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः । सर्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ । स्वयमुद्भूतः युक्तयोचितसंयोगमन्तरेणाविर्भूत इति स्मृतेः स्वातन्त्र्यं गम्यत इत्यर्थः ॥ वाक्योत्थबुद्धिवृत्त्यभिव्यक्तं ब्रह्मैव ब्रह्मविद्या । तच्च ब्रह्म सर्वाभिव्यञ्जकम् । ततः सर्वविद्याव्यञ्जकतयाऽऽश्रीयत इति सर्वविद्याश्रया अथर्वविद्याश्रया । अथर्वा सर्वविद्यानां प्रतिष्ठा

शौनको ह वै महाशालोऽङ्गिरसं विधिवदुप-
सन्नः पप्रच्छ। कस्मिन्नु भगवो विज्ञाते सर्वमिदं

---

विद्याविषयव्याप्तेर्वा तां परावरामङ्गिरसे प्राहेत्यनुषङ्गः
॥ २॥

शौनकः शुनकस्यापत्यं महाशालो महागृहस्थोऽङ्गिरसं भारद्वाजशिष्यमाचार्य्यं विधिवद्यथाशास्त्रमित्येतत्। उपसन्न उपगतः सन् पप्रच्छ। शौनकाङ्गिरसयोः सम्बन्धादर्वाग्विधिवद्विशेषणाभावादुपसदनविधेः पूर्व्वेषामनियम इति गम्यते। मध्यदीपकन्यायार्थं वा विशेषणम्। अस्मदादिष्वप्युपसदनविधेरिष्टत्वात्किमित्याह। कस्मिन्नु भगवो विज्ञाते नु इति वितर्के भगवो हे भगवन् सर्वं यदिदं विज्ञेयम्। विज्ञातं विशेषेण ज्ञातमवगतं भवतीत्येकस्मिन् ज्ञाते सर्वविद्भवतीति शिष्टप्रवादं श्रुतवान् शौनकः तद्विशेषं विज्ञातुकामः सन् कस्मिन्निति वितर्कयन् पप्रच्छ। अथवा लोकसामान्यदृष्ट्या ज्ञात्वैव पप्रच्छ। सन्ति लोके सुवर्णादिसकलभेदाः सुवर्णत्वाद्येकत्वविज्ञानेन विज्ञायमाना लौकिकैः। तथा किमन्वस्ति सर्वस्य जगद्भेदस्यैककारणम्।

---

परिसमाप्तिर्भवति अप्राप्तव्यायां ज्ञातव्याभावाद्ब्रह्मविद्याप्रतिष्ठेत्याह। सर्व्वविद्यावेद्यं वेति॥ १॥ २॥

प्रश्नबीजमाह। कस्मिन्निति॥ उपादानात्कार्य्यस्य पृथक्सत्त्वाभावादुपादाने ज्ञाते तत्कार्य्यं ततः पृथङ्नास्तीति ज्ञातं भव-

विज्ञातं भवतीति ॥ ३ ॥ तस्मै स होवाच । द्वे विद्ये वेदितव्य इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च ॥ ४ ॥

---

यदेकस्मिन् विज्ञाते सर्वं विज्ञातं भवतीति । नन्वविदिते हि कस्मिन्निति प्रश्नोऽनुपपन्नः । किमस्ति तदिति तदा प्रश्नो युक्तः । सिद्धे ह्यस्तित्वे कस्मिन्निति स्यात् । यथा कस्मिन्निधेयमिति । नाल्पाक्षरबाहुल्यादायासभीरुत्वात्प्रश्नः सम्भवत्येव । किन्त्वस्ति तद्यस्मिन्नेकस्मिन् विज्ञाते सर्व-वित् स्यादिति ॥ ३ ॥ तस्मै शौनकायाङ्गिरा आह किलो-वाच । किमित्युच्यते । द्वे विद्ये वेदितव्य इति । एवं ह स्म किल यद्ब्रह्मविदो वेदार्थाभिज्ञाः परमार्थदर्शिनो वद-न्ति । के ते इत्याह । परा च परमात्मविद्या । अपरा च धर्म्माधर्म्मसाधनतत्फलविषया । ननु कस्मिन् विदिते सर्वविद्भवतीति शौनकेन पृष्टं तस्मिन् वक्तव्येऽपृष्टमाह अङ्गिरा द्वे विद्ये इत्यादिना । एष दोषः क्रमापेक्षत्वात्प्र-तिवचनस्य । अपरा हि विद्याऽविद्या सा निराकर्त्तव्या । तद्विषये हि विदिते न किञ्चित्तत्त्वतो विदितं स्यादिति निराकृत्य हि पूर्व्वपक्षं पश्चात्सिद्धान्तो वक्तव्यो भवतीति न्यायात् ॥ ४ ॥

---

तोऽपि सामान्यव्याप्तिस्तद्ज्ञाता यमस्केत्याह । अथवेति ॥ प्रश्नाक्षरा-ल्पत्वमाश्रित्य समाधत्ते । नन्वविदिते हीत्यादिना ॥ किमस्ति तदिति प्रयोगेऽक्षरबाहुल्येनायासः स्यात्तद्भीरुतया कस्मिन्नित्यक्षरसामञ्जस्य लाघवात्प्रश्न इत्यर्थः ॥ ३ ॥ ४ ॥

तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिष-

---

तत्र का अपरेत्युच्यते। ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इत्येते चत्वारो वेदाः। शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमित्यङ्गानि षडेषाऽपरा विद्या। अथेदानीमियं परा विद्योच्यते यया तदक्षरमक्षरम- धिगम्यते प्राप्यते। अधिपूर्वस्य गमेः प्रायशः प्राप्त्यर्थत्वात्। न च परप्राप्तेरवगमार्थस्य भेदोऽस्ति। अविद्याया अपाय एव हि परप्राप्तिर्नार्थान्तरम्। ननु ऋग्वेदादिबाह्या तर्हि सा कथं परा विद्या स्यान्मोक्षसाधनञ्च। या वेदबाह्याः स्मृतय इति हि स्मरन्ति। कुदृष्टित्वान्निष्फलत्वादनादेया स्यात्। उपनिषदाञ्च ऋग्वेदादिबाह्यत्वं स्यात्। ऋग्वेदादित्वे तु पृथक्करणमनर्थकम्। अथ परेति न वेद्यविषयविज्ञानस्य विवक्षितत्वात् उपनिषत्। वेद्याक्षरविषयं हि विज्ञानमिह परा विद्येति प्राधान्येन विवक्षितं नोपनिषच्छब्दराशिः। वेदशब्देन तु सर्वत्र

---

यस्य स्वरूपम्। अनुक्तं वक्ष्यमः यस्य इत्यर्थः। अविद्याया अपगम एव परप्राप्तिरुपपद्यते। अविद्यापगमस्य ब्रह्मावगतिरेवेति व्याख्यातमस्माभिः। प्राप्तोऽर्थस्तत्प्राप्तिर्वा अविद्यानिवृत्तिरित्येतद्व्याख्यानावसरेऽधिगमशब्दोऽत्र प्राप्तिपर्याय एवेत्याह। न च परप्राप्तेरिति। षडङ्गानां वेदानामपरविद्यात्वेनोपन्यासात्ततः पृथक्करणाद्वेदबाह्यत्वात् ब्रह्मविद्यायाः परत्वं न सम्भवतीत्याक्षिपति। नन्विति। या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः। सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः

मिति । अथ परा यया तदक्षरमधिगम्यते ॥ ५ ॥

यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तद-

---

शब्दराशिर्विवक्षितः । शब्दराश्यधिगमेऽपि यत्नान्तरमन्तरेण गुर्व्वधिगमनादिलक्षणं वैराग्यञ्च नाक्षराधिगमः सम्भवतीति पृथक्करणं ब्रह्मविद्यायाः परा विद्येति कथनञ्चेति ॥ ५ ॥

यथा विधिविषये कर्त्राद्यनेककारकोपसंहारद्वारेण वाक्यार्थज्ञानकालादन्यत्रानुष्ठेयोऽर्थोऽस्त्यग्निहोत्रादिलक्षणः न तथेह परविद्याविषये वाक्यार्थज्ञानसमकाल एव तु पर्य्यवसितो भवति । केवलशब्दप्रकाशितार्थज्ञानमात्रनिष्ठाव्यतिरिक्ताभावात्। तस्मादिह परां विद्यां सविशेषणेनाक्षरेण विशिनष्टि यत्तदद्रेश्यमित्यादिना । वक्ष्यमाणं बुद्धौ संहृत्य सिद्धवत्परामृश्यते । यत्तदिति। अद्रेश्यमदृश्यं सर्व्वेषां बुद्धीन्द्रियाणामगम्यमित्येतत्। दृशेर्बहिःप्रवृत्तस्य पञ्चेन्द्रियद्वारत्वात्। अग्राह्यं कर्म्मेन्द्रियाविषयमित्येतत्। अगोत्रं गोत्रमन्वयो मूलमित्यनर्थान्तरम् । अगोत्रमनन्वयमित्यर्थः । न हि तस्य

---

श्रुता इति श्रुतेः । कुडङ्कित्यादत्तुपादेया स्यादित्यर्थः । विद्याया वेदवाह्यत्वे तदर्थानामुपनिषदामप्युक्तवेदादिवाह्यत्वं प्रसज्येतेत्यर्थः । वेदवाह्यत्वेन पृथक्करणं न सम्भवति । किन्तु वैदिकस्यापि ज्ञानस्य वस्तुविषयस्य शब्दराश्यतिरेकाभिप्रायेणेत्याह । न वेद्यविषयेति ॥ वैराग्यञ्चेत्यत्र यत्नान्तरमिति भेयो द्रष्टव्यः ॥ ५ ॥

कर्म्मज्ञानादिलक्षणत्वाभिप्रायेण च पृथक्करणमित्याह । यथा

पाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं

मूलमस्ति येनान्वितं स्यात्। वर्ण्यन्त इति वर्णा द्रव्यधर्म्माः स्थूलत्वादयः शुक्लत्वादयो वा। अविद्यमाना वर्णा यस्य तदवर्णमक्षरम्। अचक्षुःश्रोत्रं चक्षुश्च श्रोत्रञ्च नामरूपविषये करणे सर्व्वजन्तूनां तेऽविद्यमाने यस्य तदचक्षुःश्रोत्रम्। यः सर्वज्ञः सर्वविदित्यादि चेतनावत्त्वविशेषणात्प्राप्तं संसारिणामिव चक्षुःश्रोत्रादिभिः करणैरर्थसाधकत्वं तदिहाचक्षुःश्रोत्रमिति वार्य्यते। पश्यत्यचक्षुः स शृणो- त्यकर्ण इत्यादिदर्शनात्। किञ्च तदपाणिपादं कर्म्मे- न्द्रियरहितमित्येतत्। यत एवमग्राह्यमग्राहकञ्च अतो नित्यमविनाशि। विभुं विविधं ब्रह्मादिस्थावरान्तप्राणिभेदै- र्भवतीति विभुम्। सर्व्वगतं व्यापकमाकाशवत्सुसूक्ष्मं शब्दादि स्थूलत्वकारणरहितत्वात्। शब्दादयो ह्याकाशवाय्वादीना- मुत्तरोत्तरं स्थूलत्वकारणानि तदभावात्सुसूक्ष्मम्। किञ्च तदव्ययमुक्तधर्म्मत्वादेव न व्येतीत्यव्ययम्। न ह्यनङ्गस्य स्वाङ्गा- पचयलक्षणो व्ययः सम्भवति शरीरस्येव। नापि कोषापचय- लक्षणो व्ययः सम्भवति राज्ञ इव। नापि गुणद्वारको व्ययः सम्भवत्यगुणत्वात्सर्व्वात्मकत्वाच्च। यदेवंलक्षणं भूतयोनिं

---

विधिविषय इति॥ अप्राप्तप्रतिषेधप्रसङ्गाच्च प्रधानपरत्वमपि सङ्गमनीय- मिति मत्वाह। यः सर्व्वज्ञ इति॥ अगुणत्वादिति उपसर्जनरहितत्वादि- त्यर्थः। सर्व्वात्मकत्वाच्चेति द्वैतस्यातिरिक्तस्याभावाच्चेत्यर्थः। ब्रह्म न कारणं सहायशून्यत्वात् कुलालमात्रवदित्यस्यानैकान्तिकत्वमूर्णनाभिदृष्टान्तेन।

यद्भूतयोनिं परिपश्यन्ति धीराः ॥ ६ ॥ यथोर्ण-
नाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः
सम्भवन्ति। यथा सतः पुरुषात् केशलोमानि
तथाऽक्षरात् सम्भवतीह विश्वम् ॥ ७ ॥

---

भूतानां कारणं पृथिवीव स्थावरजङ्गमानां परि सर्वत आत्मभूतं सर्वस्याक्षरं पश्यन्ति धीराः धीमन्तो विवेकिनः । ईदृशमक्षरं यया विद्ययाऽधिगम्यते सा परा विद्येति समुदायार्थः ॥६॥ भूतयोन्यक्षरमित्युक्तम् । तत्कथं भूतयो-नित्वमित्युच्यते प्रसिद्धदृष्टान्तैः । यथा लोके प्रसिद्ध ऊर्ण-नाभिर्लूताकीटः किञ्चित्कारणान्तरमनपेक्ष्य स्वयमेव सृजते स्वशरीराव्यतिरिक्तान् तन्तून् बहिः प्रसारयति पुनस्तानेव गृह्णते च गृह्णाति स्वात्मभावमेवापादयति । यथा च पृथिव्यामोषधयो व्रीह्यादिस्थावरान्ताः स्वात्मा-व्यतिरिक्ता एव प्रभवन्ति । यथा सतो विद्यमानाज्जीवतः पुरुषात् केशलोमानि केशाश्च लोमानि च सम्भवन्ति विल-क्षणानि । यथैते दृष्टान्तास्तथा विलक्षणं सलक्षणञ्च निमि-त्तान्तरानपेक्षाद्यथोक्तलक्षणादक्षरात्सम्भवति समुत्पद्यत इह संसारमण्डले विश्वं समस्तं जगत् । अनेकदृष्टान्तोपादा-

---

ब्रह्म जगतो नोपादानं तदभिन्नत्वात्स्वरूपस्येवेत्यनुमानान्तरस्यानै-कान्तिकत्वमाह । यथा च पृथिव्यामिति ॥ जगन्न ब्रह्मोपादानं तद्विलक्षणत्वात् । यद्यद्विलक्षणं तत्तदुपादानकं न भवति । यथा घटो न तन्तूपादानक इति ॥ अस्य व्यभिचारमाह । यथा च सत इति ॥

तपसा चीयते ब्रह्म ततोऽन्नमभिजायते । अन्नात् प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् ॥ ८ ॥

---

न्तु सुखार्थप्रबोधनार्थम् । यद्ब्रह्मण उत्पद्यमानं विश्वं तदनेन क्रमेणोत्पद्यते न युगपद्बदरमुष्टिप्रक्षेपवदिति ॥ ७ ॥

क्रमनियमविवक्षार्थोऽयं मन्त्र आरभ्यते । तपसा ज्ञानेनोत्पत्तिविधिज्ञतया भूतयोन्यक्षरं ब्रह्म चीयते उपचीयते उत्पादयिष्यदिदं जगदङ्कुरमिव बीजमुच्छूनतां गच्छति पुत्रमिव पिता हर्षेण । एवं सर्वज्ञतया सृष्टिस्थितिसंहारशक्तिविज्ञानवत्तयोपचितात्ततो ब्रह्मणोऽन्नमद्यते भुज्यत इत्यन्नमव्याकृतं साधारणं संसारिणां चिकीर्षितावस्थारूपेणाभिजायते उत्पद्यते । ततश्चाव्याकृताच्चिकीर्षितावस्थातोऽन्नात्प्राणो हिरण्यगर्भो ब्रह्मणो ज्ञानक्रियाशक्त्यधिष्ठितजगत्साधारणोऽविद्याकामकर्मभूतसमुदायबीजाङ्कुरो जगदात्माभिजायत इत्यनुषङ्गः । तस्माच्च प्राणा-

---

यत्किञ्चिदपि दृष्टान्तेऽनुमानानामनैकान्तिकत्वं योजयितुं शक्यमिति बहूनां ग्रहणमाह । अनेकदृष्टान्तेति ॥ ६ ॥ ७ ॥

ईश्वरत्वोपाधिभूतं मायातत्त्वं महाभूतादिरूपेण सर्वजीवैरुपभुज्यत इति साधारणोऽपि कथं जायतेऽनादिसिद्धत्वादित्याशङ्क्याह । चिकीर्षितेति । कर्मापूर्वसमवायिभूतमन्नमव्याकृतमिति केचित् । न तत्र प्रतिजीवं भिन्नत्वादीश्वरत्वोपाधित्वासम्भवात् । सामान्यरूपेण सम्भवेऽपि पृथिव्यादिसामान्यानां बहुत्वात् । प्रकृतावेकत्वश्रुतिव्याकोपापाताच्चाद्यमङ्गः । मायारूपेणैकत्वसम्भवेऽपि न कर्मापूर्वसमवायित्वम् । तस्याकारकत्वात् ज्ञानादीनामेव कारकत्वाभिधानात् । कारकावयवेनैव

यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः। तस्मा-देतद्ब्रह्म नाम रूपमन्नञ्च जायते ॥ ९ ॥ इति प्रथममुण्डके प्रथमः खण्डः ॥ १ ॥

---

मनो मनआख्यं सङ्कल्पविकल्पसंशयनिर्णयाद्यात्मकमभि-जायते। ततोऽपि सङ्कल्पाद्यात्मकत्वान्मनसः सत्यं सत्या-ख्यमाकाशादिभूतपञ्चकमभिजायते। तस्मात्सत्याख्याद्भूतप-ञ्चकादण्डं क्रमेण सप्तलोका भूरादयः। तेषु मनुष्यादिप्रा-णिवर्णाश्रमक्रमेण कर्माणि। कर्मसु च निमित्तभूतेष्वमृतं कर्मजं फलम्। यावत्कर्माणि कल्पकोटिशतैरपि न विन-श्यन्ति तावत्फलं न विनश्यतीत्यमृतम् ॥ ८ ॥ उक्तमे-वार्थमुपसंजिहीर्षुर्मन्त्रो वक्ष्यमाणार्थमाह। य उक्तलक्षणो ऽक्षराख्यः सर्वज्ञः सामान्येन सर्वं जानातीति सर्वज्ञः। विशेषेण सर्वं वेत्तीति सर्ववित्। यस्य ज्ञानमयं ज्ञान-विकारमेव सार्वज्ञलक्षणं तपो नायासलक्षणं तस्माद्यथोक्ता-

---

क्रियाशक्त्याश्रयाभ्युपगमात्। किञ्च न कार्यस्य स्वकारणप्रकृतित्वं दृष्टमिति भूतसूक्ष्मस्य पञ्चीकृतभूतपञ्चकप्रकृतित्वं न स्यात्। तस्मान्महाभूतव-र्गादिदंस्तारासदं गुणत्रयसाम्यं मायातत्त्वमव्याकृतादिशब्दवाच्यमिहा-भ्युपगन्तव्यम्। पूर्वस्मिन् कल्पे हिरण्यगर्भप्राप्तिनिमित्तं प्रकृष्टं ज्ञानं कर्म च येनानुष्ठितं तदनुग्रहाय मायोपाधिकं ब्रह्म हिरण्यगर्भावस्था-कारेण विवर्त्तते। स च जीवस्तदवस्थाभिमानी हिरण्यगर्भ उच्यत इत्यभिप्रेत्याह। प्रज्ञया इति। ज्ञानशक्तिभिः क्रियाशक्तिभिश्चाधिष्ठितं विशिष्टं समष्टिरूपं तस्य धारणः समष्टिरूपः सूत्रसञ्ज्ञक इत्यर्थः॥ समष्टिरूपं विवक्षितम्। व्यष्टिरूपस्य लोकरूपिणस्तत्कोशत्वादप्यनाप-

तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्य-

---

स्मात्सर्वज्ञादेतदुक्तं कार्यलक्षणं ब्रह्म हिरण्यगर्भाख्यं जायते। किञ्च नामासौ देवदत्तो यज्ञदत्त इत्यादिलक्षणम्। रूपमिदं शुक्लं नीलमित्यादि। अन्नञ्च व्रीहियवादिलक्षणं जायते पूर्वमन्त्रोक्तक्रमेणेत्यविरोधो द्रष्टव्यः॥ ९॥ इति मुण्डके प्रथमखण्डभाष्यम्॥ १॥

साङ्गा वेदा अपरा विद्योक्ता ऋग्वेदो यजुर्वेद इत्यादिना यत्तदद्रेश्यमित्यादिना नामरूपमन्नञ्च जायत इत्यन्तेन ग्रन्थेनोक्तलक्षणमक्षरं यया विद्ययाऽधिगम्यते इति परा विद्या सविशेषेणोक्ता। अतः परमनयोर्विद्ययोर्विषयौ विवेक्तव्यौ संसारमोक्षावित्युत्तरो ग्रन्थ आरभ्यते। तत्रा-

---

त्वाविद्याविवरणप्रकरणस्यारम्भार्थश्च: परविद्याप्रस्तावोपसंहार इत्यर्थः। सामान्येनेति समष्टिरूपेण मायाख्येनोपाधिनेत्यर्थः। विशेषेणेति व्यष्टिरूपेणाविद्याख्येनोपाधिनाऽनन्तजीवभावमापन्नः स एव सर्वोपाधिकस्तत्संसृष्टश्च यतोऽधिदैवमध्यात्मञ्च तत्त्वाभेदः सूचितः॥ स्रष्टृत्वं प्रजापतीनां तपसा प्रसिद्धम्। स्रष्टृत्वे तपोऽनुष्ठानं वक्तव्यम्। ततः संसारित्वं प्रसज्येत इत्याशङ्क्याह। यस्य ज्ञानमयमिति। सत्त्वप्रधानमायाज्ञानाख्यो विकारस्तदुपाधिकं ज्ञानविकारं जानानं सर्वपदार्थाभिज्ञत्वलक्षणं तपो न तु क्लेशरूपं प्रजापतीनामित्यर्थः॥ ॥ ८॥ ९॥ इति प्रथममुण्डके प्रथमखण्डभाष्यटीका॥ १॥

अनादिरुपादानरूपेणानन्तो ब्रह्मज्ञानात्प्रागत्यन्तानपायश्चात्म- स्वेकं शरीरैरभिज्ञातव्यो दुःखरूपत्वादिधर्मेण। यदाहुरेकजीववादिनः एकस्यैवात्मन एकयैवाविद्यया बद्धं संसरति। तदैव कदाचिन्मुच्यते नाऽन्यदादीनां बन्धमोक्षौ स्त इति तदपास्तं भवति। श्रुतिर्वह्निस्फुलिङ्ग-

पश्यंस्तानि त्रेतायां बहुधा सन्ततानि। तान्या-

परविद्याविषयः कर्त्रादिसाधनक्रियाफलभेदरूपः संसारो ऽनादिरनन्तो दुःखस्वरूपत्वाद्धातव्यः प्रत्येकं शरीरिभिः। सामस्त्येन नदीस्रोतोवदवच्छेदरूपसम्बन्धस्तदुपशमलक्षणो मोक्षः परविद्याविषयोऽनाद्यनन्तोऽजरोऽमरोऽमृतोऽभयः शुद्धः प्रसन्नः स्वात्मप्रतिष्ठालक्षणः परमानन्दोऽद्वय इति। पूर्वं तावदपरविद्याया विषयप्रदर्शनार्थमारम्भः। तद्दर्शने हि तन्निर्वेदोपपत्तेः। तथा च वक्ष्यति। परीक्ष्य लोकान् कर्म्मचितानित्यादिना। न ह्यप्रदर्शितं परीक्ष्योपपद्यत इति तत्प्रदर्शयन्नाह तदेतत्सत्यमवितथम्। किन्तन्मन्त्रेष्वृग्वेदाद्याख्येषु कर्म्माण्यग्निहोत्रादीनि मन्त्रैरेव प्रकाशितानि कवयो मेधाविनो वसिष्ठादयो यान्यपश्यन् दृष्टवन्तः। यत्तदेतत्सत्यमेकान्तपुरुषार्थसाधनत्वात् तानि च वेदविहितान्यृषिदृष्टानि कर्म्माणि त्रेतायां त्रयीसंयोगलक्षणायां हौत्राध्वर्य्यवोद्गात्रप्रकारायामधिकरणभूतायां बहुधा बहुप्रकारां सन्ततानि प्रवृत्तानि कर्म्मिभिः क्रियमाणानि

स्यात्। सुषुप्तेऽपि क्रियाकारकफलभेदस्य प्रकाशं भवति॥ बुद्धिपूर्व्वकप्रकाशस्य ततो विशेषमाह। सामस्त्येनेति॥ स्वोपाध्यविद्याकार्य्यस्याविद्याप्रकाशेनात्यन्तिकप्रकाशं विद्याफलमित्यर्थः। अमरोऽपक्षयरहितः। अमृतो नाशरहित इत्यर्थः। अपरविद्यायाः परविद्यायाश्च विषयौ प्रदर्श्य पूर्व्वमपरविद्याया विषयप्रदर्शने श्रुतेरभिप्रायमाह। पूर्व्वं तावदिति॥ यदीष्टसाधनतयाऽनिष्टसाधनतया वा वेदेन बोध्यते कर्म्म तस्यास्ति प्रतिबन्धे तत्साधनत्वाव्यभिचारः। सत्यत्वं न स्वरूपाबाधत्वं

चरथ नियतं सत्यकामा एष वः पन्थाः सुकृतस्य लोके ॥ १ ॥ यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने । तदाज्यभागावन्तरेणाहुतीः प्रतिपाद-

त्रेतायां वा युगे प्रायशः प्रवृत्तानि अतो यूयं तान्याचरथ निर्वर्त्तयथ नियतं नित्यं सत्यकामा यथाभूतकर्म्मफलकामाः सन्तः । एष वो युष्माकं यथा पन्था मार्गः सुकृतस्य स्वयं निर्वर्त्तितस्य कर्म्मणो लोके फले निमित्तं लोक्यते दृश्यते भुज्यत इति कर्म्मफलं लोक उच्यते । तदर्थं तत्प्राप्तये एष मार्ग इत्यर्थः । यानि यान्यग्निहोत्रादीनि त्रय्यां विहितानि कर्म्माणि तान्येष पन्थाऽवश्यफलप्राप्तिसाधनमित्यर्थः ॥ १ ॥ तत्राग्निहोत्रमेव तावत्प्रथमं प्रदर्श्यते प्रदर्शनार्थमुच्यते । सर्वकर्म्मणां प्राथम्यात् । कथम् । यदैवं धनैरभ्याहितैः सम्यगिद्धे समिद्धे हव्यवाहने लेलायते चलति अर्चिस्तदा तस्मिन् काले लेलायमाने चलत्यर्चिष्याज्यभागावाज्यभागयोरन्तरेण मध्ये आवाप-

प्लवा ह्येते इत्यादिना निन्दितत्वात्स्वरूपबाध्यत्वेऽपि चार्थक्रियासामर्थ्यं सत्यकामिन्यामिव घटत इत्यभिप्रेत्याह । तदेतत्सत्यमिति ॥ ऋग्वेदविहितः पदार्थो हौत्रम् । यजुर्वेदविहित आध्वर्यवम् । सामवेदविहित औद्गात्रम् । तद्रूपायां त्रेतायामित्यर्थः ॥ १ ॥ सत्यकामा मोक्षकामा इति पक्षद्वयाभिप्रायेण व्याख्यानमयुक्तम् । एष वः पन्थाः सुकृतस्य लोक इति स्वर्गफलसाधनत्वविषयत्वेनविरोधादित्याहवनीयस्य दक्षिणोत्तरपार्श्वयोराज्यभागाविज्येते अग्नये स्वाहा सोमाय स्वाहेति दर्शपूर्णमासे । तयोर्मध्येऽन्ये यागा अनुष्ठीयन्ते । तन्मध्यमावापस्थानम्-

येच्छ्रद्धया हुतम् ॥ २ ॥ यस्याग्निहोत्रमदर्शमपौर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितञ्च । अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान् हिनस्ति ॥ ३ ॥ काली कराली च

---

स्थाने आहुतीः प्रतिपादयेत् प्रक्षिपेद्देवतामुद्दिश्य। अनेकाहः प्रयोगापेक्षयाऽऽहुतीरिति बहुवचनम्। एष सम्यगाहुतिप्रक्षेपादिलक्षणकर्म मार्गो लोकप्राप्तये पन्थाः। श्रद्धया हुतं तस्य च सम्यक्करणं दुष्करम् । विपत्तयस्त्वनेका भवन्ति ॥ २ ॥ कथम्। यस्याग्निहोत्रिणोऽग्निहोत्रमदर्शं दर्शाख्येन कर्म्मणा वर्जितम्। अग्निहोत्रिणोऽवश्यकर्त्तव्यत्वाद्दर्शस्य। अग्निहोत्रसम्बन्ध्यग्निहोत्रविशेषणमिव भवति । तदक्रियमाणमित्येतत् । तथाऽपौर्णमासमित्यादिष्वप्यग्निहोत्रविशेषणत्वं द्रष्टव्यम् । अग्निहोत्राङ्गत्वस्याविशिष्टत्वादपौर्णमासं पौर्णमासकर्म्मवर्जितम् । अचातुर्मास्यञ्चातुर्म्मास्यकर्म्मवर्जितम्। अनाग्रयणं शरदादिकर्त्तव्यं यत्र न क्रियते यस्य। तथाऽतिथिवर्जितञ्चातिथिपूजनञ्चाहन्यहन्यक्रियमाणं यस्य स्वयं सम्यगग्निहोत्रकालेऽहुतम्। अदर्शादिवदवैश्वदेवकर्म्मवर्जि-

---

ज्यते। अग्निहोत्राहुत्योर्द्वित्वं प्रसिद्धम्। सूर्याय स्वाहा प्रजापतये स्वाहेति प्रातः। अग्नये स्वाहा प्रजापतये स्वाहेति सायम्। तत्र कथमग्निहोत्रे प्रक्षेप्याहुतीरिति बहुवचनं तत्राह। अनेकाह इति। अनेकेष्वहःसु प्रयोगानुष्ठानानि तदपेक्षयेत्यर्थः। दर्शपूर्णमासयोरग्निहोत्राङ्गत्वे प्रमाणाभावात्कथं तदकरणमग्निहोत्रस्य विपत्तिरित्याशङ्क्य वाक्यमेव-

मनोजवा च सुलोहिता या च सुधूम्रवर्णा। स्फुलिङ्गिनी विश्वरूपी च देवी लेलायमाना इति सप्त जिह्वा॥ ४॥ एतेषु यश्चरते भ्राजमानेषु यथाकालं चाहुतयो ह्याददायन्। तन्न-

तं हूयमानमप्यविधिना हुतं न यथा हुतमित्येतत्। एवं दुःसम्पादितमग्निहोत्राद्युपलक्षितं कर्म किं करोतीत्युच्यते आसप्तमान् सप्तमसहितांस्तस्य कर्तुर्लोकान् हिनस्तीवायासमात्रफलत्वात्। सम्यक्क्रियमाणेषु हि कर्मसु कर्मपरिणामरूपेण भूरादयः सत्यान्ताः सप्त लोकाः फलं प्राप्यते। ते लोका एवम्भूतेनाग्निहोत्रादिकर्मणा अप्राप्यत्वाद्धिंसन्त इवायासमात्रन्त्वव्यभिचारीत्यतो हिनस्तीत्युच्यते। पिण्डदानाद्यनुग्रहेण वा सम्बध्यमानाः पितृपितामहप्रपितामहाः पुत्रपौत्रप्रपौत्राः स्वात्मोपकाराः सप्तलोका उक्तप्रकारेणाग्निहोत्रादिना न भवन्तीति हिंस्यन्त इत्युच्यते ॥ २॥ काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा। स्फुलिङ्गिनी विश्वरूपी च देवी लेलायमाना इत्यग्नेः जिह्वाः॥ अग्नेर्हविराहुतिग्रसनार्था एताः सप्त जिह्वा॥ ४॥ एतेष्वग्निजिह्वाभेदेषु योऽग्निहोत्री चरत्य-

चोदनावशादग्निहोत्रिणोऽवश्यकर्तव्यत्वात्तदकरणे भवेद्विपत्ति-रित्यभिप्रेत्य विशेषणम्। दर्शादिषु नूतनान्नेन कर्त्तव्यमाग्रयणं कर्म। अदत्त वैश्वदेवमिति विशेषणम्। वैश्वदेवस्याग्निहोत्रानामकृते ऽप्यवश्यकर्तव्यत्वादित्यर्थः पिण्डोदकदानेन पित्रादीनां तथा-

यन्त्येताः सूर्य्यस्य रश्मयो यत्र देवानां पतिरेको- ऽधिवासः ॥ ५॥ एह्येहीति तमाहुतयः सुवर्चसः सूर्य्यस्य रश्मिभिर्यजमानं वहन्ति । प्रियां वाच- मभिवदन्त्योऽर्च्चयन्त्य एष वः पुण्यः सुकृतो ब्रह्म- लोकः ॥ ६ ॥ प्लवा ह्येते अदृढा यज्ञरूपा अष्टा- दशोक्तमवरं येषु कर्म्म । एतच्छ्रेयो येऽभिनन्दन्ति

ग्निहोत्रादि भ्राजमानेषु दीप्यमानेषु । यथाकालञ्च यस्य कर्म्मणो यः कालस्तत्कालं यथाकालं यजमानमाददाय- आददाना आहुतयो यजमानेन निर्वर्त्तिता अन्तं नयन्ति प्रापयन्त्येता आहुतयो ये इमा अनेन निवर्त्तिताः सूर्य्यस्य रश्मयो भूत्वा रश्मिद्वारैरित्यर्थः । यत्र यस्मिन् स्वर्गे देवानां पतिरिन्द्र एकः सर्व्वानुपर्य्यधिवसतीत्यधिवासः ॥ ५ ॥ कथं सूर्य्यस्य रश्मिभिर्यजमानं वहन्तीत्युच्यते एह्येही- त्याह्वयन्त्यः । सुवर्चसो दीप्तिमत्यः । किञ्च प्रियामिष्टां वाचंस्तुत्यादिलक्षणामभिवदन्त्य उच्चारयन्त्यः पूजयन्त्यश्चैष वो युष्माकं पुण्यः सुकृतो यथा ब्रह्मलोकः फलरूपः एवं प्रियां वाचमभिवदन्त्यो वहन्तीत्यर्थः । ब्रह्मलोकः स्वर्गः- प्रकरणात् ॥ ६ ॥ एतच्च ज्ञानरहितं कर्म्मैतावत्फलमवि-

चाप्युपकरोति । यजमानपुत्रादीनाञ्च त्रयाणां ग्रासादिदानेन । ततो मध्यवर्त्तिना यजमानेन सम्बध्यमानः पूर्व्वे त्रय उत्तरे च त्रयो सप्तम इत्याह । पिण्डदानादीति आहुतयो यजमानं वहन्तीति

मूढा जरामृत्युं ते पुनरेवापि यन्ति ॥ ७ ॥
अविद्यायामन्तरे वर्त्तमानाः स्वयं धीराः पण्डि-
तम्मन्यमानाः । जङ्घन्यमानाः परियन्ति मूढा
अन्धेनैव नीयमाना यथान्धाः ॥ ८ ॥

---

द्यानकामकर्म्म कार्य्यमतोऽसारं दुःखमूलमिति निन्द्यते । प्रवा विनाशिन इत्यर्थः । हि यस्मादेते अदृढा अस्थिरा यज्ञरूपा यज्ञस्य रूपाणि यज्ञरूपा यज्ञनिर्वर्त्तका अष्टा-दशाष्टादशसङ्ख्याकाः । षोडशर्त्विजः पत्नी यजमानश्चेत्य-ष्टादश एतदाश्रया उक्तं कथितं शास्त्रेण । येष्वष्टादशस्व-वरं केवलं ज्ञानवर्जितं कर्म्म । अतस्तेषामवरकर्म्माश्रया-णामष्टादशानामदृढतया प्रवत्वात्प्लवते सह फलेन तत्साध्यं कर्म्म । कुण्डविनाशादिवत्क्षीरदध्यादीनां तत्स्वामनाशः । यत एवमेतत्कर्म्म श्रेय इति येऽभिनन्दन्त्यभिहृष्यन्त्यविवे-किनो मूढाः अतस्ते जरां मृत्युञ्च जरामृत्युं किञ्चित्कालं स्वर्गे स्थित्वा पुनरेवापि यन्ति भूयोऽपि गच्छन्ति ॥ ७ ॥ किञ्चाविद्यायामन्तरे मध्ये वर्त्तमाना अविवेकप्रायाः स्वयं वयमेव धीरा धीमन्तः पण्डिता विदितवेदितव्याश्चेति मन्यमाना आत्मानं सम्भावयन्तस्ते च जङ्घन्यमाना जरा-रोगाद्यनेकानर्थव्रातैर्हन्यमाना भृशं पीड्यमानाः परियन्ति विभ्रमन्ति मूढाः । दर्शनवर्जितत्वादन्धेनैवाचक्षुष्केणैव

---

अधिकः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ इष्यते निन्द्यते यदाश्रयतया यज्ञास्ते

अविद्यायां बहुधा वर्त्तमाना वयं कृतार्था इत्य भिमन्यन्ति बालाः। यत्कर्म्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते ॥ ९ ॥ इष्टापूर्त्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते

---

नीयमानाः प्रहृश्यमानमार्गा यथा लोकेऽन्धा अक्षिरहिता गर्त्तकण्टकादौ पतन्ति तद्वत् ॥ ८ ॥

किञ्चाविद्यायां बहुधा बहुप्रकारं वर्त्तमानाः वयमेव कृतार्थाः कृतप्रयोजना इत्येवमभिमन्यन्त्यभिमानं कुर्व्वन्ति बाला अज्ञानिनः। यद्यस्मादेवं कर्म्मिणो न प्रवेदयन्ति रागात्कर्म्मफलरागाभिभवनिमित्तं तेन कारणेनातुरा दुःखार्त्ताः सन्तः क्षीणलोकाः क्षीणकर्म्मफलाः स्वर्गलोकाच्च्यवन्ते ॥ ९ ॥ इष्टापूर्त्तम्। इष्टं यागादि श्रौतं कर्म्म। पूर्त्तं वापीकूपतडागादिस्मार्त्तं मन्यमाना एतदेवातिशयेन पुरुषार्थसाधनं वरिष्ठं प्रधानमिति चिन्तयन्तोऽन्यदात्मज्ञानाख्यं श्रेयःसाधनं न वेदयन्ति न जानन्ति प्रमूढाः पुत्रपशुबन्ध्वादिषु प्रमत्ततया मूढास्ते च नाकस्य स्वर्गस्य पृष्ठे उपरिस्थाने सुकृते भोगायतनेऽनुभूत्वाऽनुभूय कर्म्मफलं पुनरिमं लोकं मानुषमस्माद्धीनतरं वा तिर्य्यङ्नरकादिलक्षणं यथाकर्म्मशेषं विशन्ति ॥ १० ॥ ये

---

यथाकृपाः॥ वयमेवेति तत्त्वदर्श्युपदेशानपेक्षतया स्वमनोरथेनैवेत्यर्थः॥ ६ ॥ ॥ ७ ॥ ८ ॥

कं सुखं न भवतीत्यकन्दुःखं तत्र विद्यते यस्मिन्नसौ नाकः

प्रमूढाः । नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरञ्चाविशन्ति ॥ १० ॥ तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्य्यां चरन्तः । सूर्य्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥ ११ ॥

---

पुनर्ज्ञानयुक्तास्तद्विपरीतवानप्रस्थाः संन्यासिनश्च तपःश्रद्धे हि तपः स्वाश्रमविहितं कर्म्म । श्रद्धा हिरण्यगर्भादिविषया विद्या ते तपःश्रद्धे उपवसन्ति सेवन्तेऽरण्ये वर्त्तमानाः सन्तः । शान्ता उपरतकरणग्रामाः । विद्वांसो गृहस्थाश्च ज्ञानप्रधाना इत्यर्थः । भैक्ष्यचर्य्यां चरन्तः परिग्रहाभावादुपवसन्त्यरण्य इति सम्बन्धः । सूर्य्यद्वारेण सूर्य्योपलक्षितेनोत्तरायणेन पथा ते विरजा विरजसः क्षीणपुण्यपापकर्म्माणः सन्त इत्यर्थः । प्रकर्षेण यान्ति यत्र यस्मिन् सत्यलोकादावमृतः स पुरुषः प्रथमजो हिरण्यगर्भो ह्यव्ययात्मा अव्ययस्वभावो यावत्संसारस्थायी । एतदन्तास्तु संसारगतयोऽपरविद्यागम्याः । नन्वेतं मोक्षमिच्छन्ति केचिन्न हैव सर्व्वे प्रविलीयन्ते कामास्ते सर्व्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाविशन्तीति । श्रुतिभ्यः प्रकरणाच्च । अपरविद्याप्रकरणे हि प्रवृत्ते न ह्यकस्मान्मोक्षप्रसङ्गोऽस्ति विरजस्त्वन्त्वापेक्षिकं समस्तमपरविद्याकार्य्यं

---

केवलकर्म्मिणां फलमुक्त्वा सगुणब्रह्मज्ञानसहिताश्रमकर्म्मिणां फलं

परीक्ष्य लोकान् कर्म्मचितान् ब्राह्मणो निर्वे-

---

साध्यसाधनलक्षणं क्रियाकारकफलभेदभिन्नं द्वैतम्। एता-
वद्धिरण्यगर्भप्राप्त्यवसानम्। तथाच स्थावराद्यां संसारगति-
मनुक्रामताम्। ब्रह्मा विश्वसृजो धर्म्मो महानव्यक्तमेव च।
उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिण इति ॥ ११ ॥

अथेदानीमस्मात्साध्यसाधनरूपात् सर्व्वस्मात्संसाराद्वि-
रक्तस्य विद्यायामधिकारप्रदर्शनार्थमिदमुच्यते। परीक्ष्य
यदेतदृग्वेदाद्यपरविद्याविषयं स्वाभाविक्यविद्याकामक-
र्म्मदोषवत्पुरुषानुष्ठेयमविद्यादिदोषवन्त एव पुरुषं प्रति
विहितत्वात्तदनुष्ठानकार्य्यभूताश्च लोका ये दक्षिणोत्तर
मार्गलक्षणाः फलभूता ये च विहिताकरणप्रतिषेधाति-
क्रमदोषसाध्या नरकतिर्य्यक्प्रेतलक्षणास्तानेतान् परीक्ष्य
प्रत्यक्षानुमानोपमानागमैः सर्व्वतो याथात्म्येनावधार्य्य
लोकान् संसारगतिभूतानव्यक्तादिस्थावरान्तान् व्याकृ-
ताव्याकृतलक्षणान् बीजाङ्कुरवदितरेतरोत्पत्तिनिमित्ता-
ननेकानर्थशतसहस्रसङ्कुलान् कदलीगर्भवदसारान्मायाम-
रीच्युदकगन्धर्व्वनगराकारस्वप्नजलबुद्बुदफेनसमान् प्रति-
क्षणप्रध्वंसान् पृष्ठतः कृत्वाऽविद्याकामदोषप्रवर्त्तितकर्म-

---

संसारगोचरमेव दर्शयति। ये पुनर्मानयुक्ता इत्यादिना ॥ ९ ॥ १० ॥ ११ ॥
अरण्ये स्त्रीजनासङ्कीर्णे देशे शुक्लामामिहैव सर्व्वकामप्रविलयं
सर्व्वात्मभावञ्च दर्शयन्ति श्रुतयः। ब्रह्मलोकप्राप्तिस्तु देशपरिच्छिन्नफलं
ततो न मोक्ष इत्याह। इहैवेति ॥ ब्रह्मा चतुर्म्मुखः। विश्वसृजः

दमायान्नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं

---

चितान् धर्माधर्मनिर्वर्त्त्यानित्येतद्ब्राह्मणस्यैव विशेषतोऽधिकारः। सर्वत्यागेन ब्रह्मविद्यायामिति ब्राह्मणग्रहणम्। परीक्ष्य लोकान् किं कुर्य्यादित्युच्यते। निर्वेदं निःपूर्व्वो विदिरत्र वैराग्यार्थे। वैराग्यमायात्कुर्य्यादित्येतत्। स वैराग्यप्रकारः प्रदर्श्यते। इह संसारे नास्ति कश्चिदप्यकृतः पदार्थः। सर्वे एव हि लोकाः कर्मचिताः कर्मचितत्वाच्चानित्याः। न नित्यं किञ्चिदस्तीत्यभिप्रायः। सर्वन्तु कर्म्मानित्यस्यैव साधनम्। यस्माच्चतुर्विधमेव हि सर्वं कर्म्म कार्य्यमुत्पाद्यमाप्यं संस्कार्य्यं विकार्य्यं वा नातःपरं कर्मणो विषयोऽस्ति। अहञ्च नित्येनामृतेनाभयेन कूटस्थेनाचलेन ध्रुवेणार्थी न तद्विपरीतेन। अतः किं कृतेन कर्मणाऽऽयासबाहुल्येनानर्थसाधनेनेत्येवं निर्विण्णोऽभयं शिवमकृतं नित्यं पदं यत्तद्विज्ञानार्थं विशेषेणाधिगमार्थं स निर्विण्णो ब्राह्मणो गुरुमेवाचार्य्यं शमदमदयासम्पन्नमभिगच्छेत्। शास्त्रज्ञोऽपि स्वातन्त्र्येण ब्रह्मज्ञानान्वेषणं न कुर्य्यादित्येतद्गुरुमेवेत्यवधारणफलम्। समित्पाणिः समिद्भारगृहीत-

---

प्रजापतयो मरीचिप्रभृतयः। धर्म्मो यमः। महान् सूत्रात्मा। अव्यक्तं त्रिगुणात्मिका प्रकृतिः। धाम्निकीं तत्त्वपरिणामक्रमसहितकर्म्मफलभूतामित्यर्थः। ऐहिककर्म्मफलस्य पुत्रादेर्लोकविषयं प्रत्यक्षं विमतमनित्यं कृतकत्वाद्घटवदित्यनुमानमागमश्चामुष्मिकविषयम्। तद्यथेह कर्म्म-

॥ १२ ॥ तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय। येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥१३॥ इति प्रथममुण्डके द्वितीयः खण्डः ॥ २ ॥ इति प्रथममुण्डकं समाप्तं ॥ १ ॥

---

ष्ठः श्रोत्रियमध्ययनश्रुतार्थसम्पन्नं ब्रह्मनिष्ठं हित्वा सर्वकर्माणि केवलेऽद्वये ब्रह्मणि निष्ठा यस्य सोऽयं ब्रह्मनिष्ठस्तपोनिष्ठ इति यद्वत्। न हि कर्मिणो ब्रह्मनिष्ठा सम्भवन्ति कर्मात्मज्ञानयोर्विरोधात्। स तं गुरुं विधिवदुपसन्नः प्रसाद्य पृच्छेदक्षरं पुरुषं सत्यम् ॥ १२ ॥ तस्मै स विद्वान् गुरुर्ब्रह्मविदुपसन्नायोपगताय। सम्यग्यथाशास्त्रमित्येतत्। प्रशान्तचित्तायोपरतदर्पादिदोषाय। शमान्विताय बाह्येन्द्रियोपरमेण च युक्ताय सर्वतो विरक्तायेत्येतत्। येन विज्ञानेन यया विद्यया च परयाऽक्षरमद्रेश्यादिविशेषणं तदेवाक्षरं पुरुषशब्दवाच्यं पूर्णत्वात्पुरिशयनाच्च सत्यं तदेव परमार्थस्वाभाव्यादक्षरञ्चाक्षरणादक्षतत्वादक्षयत्वाच्च वेद विजानाति तां ब्रह्मविद्यां तत्त्वतो यथावत्प्रोवाच प्रब्रूयादित्यर्थः। आचार्य्यस्याप्ययं नियमो यन्न्यायप्राप्तशिष्य-

---

जितो लोकः जीवत इत्याद्यागमात्तैरनित्यत्वेन सर्वात्मनावधार्येत्यर्थः। नैतादृशं ब्राह्मणस्यास्ति वित्तम्। यथैकता समता इति स्मृतेः। ब्राह्मणस्यैवाधिकार इत्यर्थः। कूटस्थेन परिणामरहितेनाचलेन स्पन्दरहितेन ध्रुवेण प्रचलरहितेनाक्षमर्थी। क्षमित्याचिरिति विनयोपपन्नम्। अक्षरणादित्यवयवान्यथाभावलक्षणपरिणामशून्यत्वात् अक्षतत्वादि-

तदेतत्सत्यं यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः। तथाक्षराद्विविधाः

---

निस्तारयामविद्यामहोदधेः ॥ १३ ॥ इति प्रथममुण्डके द्वितीयखण्डभाष्यम् ॥ इति प्रथममुण्डकभाष्यं पूर्णम् ॥ ॥

अपरविद्यायाः सर्वं कार्य्यमुक्तम्। स च संसारो यत्सारो यस्मान्मूलादक्षरात्सम्भवति यस्मिंश्च प्रलीयते तदक्षरं पुरुषाख्यं सत्यम्। यस्मिन् विज्ञाते सर्व्वमिदं विज्ञातं भवति तत्परस्या ब्रह्मविद्याया विषयः स वक्तव्य इत्युत्तरो ग्रन्थ आरभ्यते। यदपरविद्याविषयं कर्म्मफललक्षणं सत्यं तदापेक्षिकम्। इदन्तु परविद्याविषयं परमार्थतः सल्लक्षणत्वात्। तदेतत्सत्यंयथाभूतं विद्याविषयम्। अविद्याविषयत्वाच्चानृतमितरत्। अत्यन्तपरोक्षत्वात्। कथं नाम प्रत्यक्षव-

---

क्षयत्वाच्चाशरीरत्वाद्विकारशून्यत्वादित्यर्थः ॥ १२ ॥ १३ ॥ इति प्रथममुण्डके द्वितीयखण्डभाष्यटीका ॥ २ ॥ इति प्रथममुण्डकभाष्यटीका ॥ १ ॥

द्वे विद्ये वेदितव्ये इत्युपन्यस्तापरविद्यामाद्यमुण्डकेन प्रपञ्च्य परविद्यामिदानीं प्रपञ्चयितुं द्वितीयमुण्डकारम्भ इत्याह। अपरविद्याया इत्यादिना। कर्म्मफलेऽपि प्रागसत्यत्वमुक्तं तद्वदिदं सत्यत्वं न मन्तव्यमित्याह। यदपरविद्याविषयमिति। विषीयते विशेष्यते विद्याऽनेनेति व्युत्पत्त्या विषयशब्दस्य वस्तुपरत्वान्नपुंसकलिङ्गत्वं परमार्थतः सल्लक्षणत्वादत्यन्ताबाध्यत्वादित्यर्थः। अत्यन्तपरोक्षत्वादिति शास्त्रैकगम्यत्वादपूर्व्ववद्ब्रह्मणः प्रत्यक्षं न सम्भवति साक्षात्काराधीनस्तु मोक्षः ततः कथं नाम सत्यमक्षरं प्रत्यक्षवत्प्रतिपद्येरन्मुमुक्षव इत्यभिप्रेत्य जीवब्रह्मणोरेकत्वे दृष्टान्तमाह। यथा सुदीप्तादिति॥ एकत्वे सति प्रत्य-

सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ति ॥ १ ॥

---

दक्षरं प्रतिपद्येरन्निति दृष्टान्तमाह । यथा सुदीप्तात्सु-दीप्तादिद्धात् पावकादग्नेर्विस्फुलिङ्गा अग्न्यवयवाः सहस्र-शोऽनेकशः प्रभवन्ति निर्गच्छन्ति सरूपा अग्निसलक्षणा एवं तथोक्तलक्षणादक्षराद्विविधा नानादेहोपाधिभेद-मनुविधीयमानत्वाद्विविधा हे सोम्य भावा जीवा आका-शादिवद्घटादिपरिच्छिन्नाः सुषिरभेदात् घटाद्युपाधि-प्रभेदमनुभवन्ति । एवं नानानामरूपकृतदेहोपाधिप्रभे-दमनुप्रजायन्ते तत्र चैव तस्मिन्नेवाक्षरेऽपि यन्ति देहोपा-धिविलयमनुलीयन्ते घटादिविलयमन्विव सुषिरभेदाः । यथाऽऽकाशस्य सुषिरभेदोत्पत्तिप्रलयनिमित्तत्वं घटाद्यु-पाधिकृतमेव तद्वदक्षरस्यापि नामरूपकृतदेहोपाधिनिमि-

---

पूर्णस्यापरोक्षत्वाद्ब्रह्मणोऽपि प्रत्यक्त्वं भविष्यति चैकदेशप्रत्यक्षवदि-त्यर्थः । यथा विभक्तदेशावच्छिन्नत्वेन विस्फुलिङ्गेष्ववयवत्वादिव्यवहारः स्वतः पुनरग्न्यात्मत्वमेवोष्णप्रकाशत्वाविशेषात् तथा चिद्रूपत्वाविशेषा-ज्जीवानां स्वतो ब्रह्मत्वमेवेत्यर्थः ॥ १ ॥ अक्षरस्यापि जीवोत्पत्तिप्रलयनि-मित्तत्वमौपाधिकमुक्तमेकत्वविवक्षार्थम् । तत्त्वतः स्तुतिनिमित्तनैमित्ति-कभावोऽपि नास्तीत्याह । नामरूपबीजभूतादिति ॥ देहापेक्षया बाह्या-भ्यन्तरस्य प्रसिद्धं तेन सह तादात्म्येन तदधिष्ठानतया वा वर्त्तत इति सबाह्याभ्यन्तरः । अत एव सर्वात्मत्वात्तद्व्यतिरिक्तनिमित्ताभावा-दतोऽज इत्यर्थः । जायते अस्ति विपरिणमते वर्द्धते अपक्षीयते विन-श्यतीत्येवमादिभावविकाराणां निषेधे तात्पर्यमजपदस्याह । सर्व-भावविकाराणामिति ॥ जीवानां प्राणादिमत्त्वात्तदात्मत्वे ब्रह्मणोऽपि प्राणादिमत्त्वं प्राप्तं तन्निवर्त्तयति । अप्राणीत्यादिना ॥ श्रुतिसंशयाद्य-

**दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः।**

त्वमेव जीवोत्पत्तिप्रलयनिमित्तत्वम्॥१॥ नामरूपबीजभूतादव्याकृताख्यात् स्वविकारापेक्षया परादक्षरात्परं यत् सर्वोपाधिभेदवर्जितमक्षरस्यैव स्वरूपमाकाशस्येव सर्वमूर्त्तिवर्जितं नेति नेतीत्यादिविशेषणं विवक्षन्नाह। दिव्यो द्योतनवान् स्वयंज्योतिष्ट्वात्। दिवि वा स्वात्मनि भवोऽलौकिको वा। यस्मादमूर्त्तः सर्वमूर्त्तिवर्जितः पुरुषः पूर्णः पुरि शयो वा। दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरः सह बाह्याभ्यन्तरेण वर्त्तत इति। अजो न जायते कुतश्चित् स्वतोऽजस्य जन्मनिमित्तस्य चाभावात्। यथा जलबुद्बुदादेर्वाय्वादि। यथा नभःसुषिरभेदानां घटादि। सर्वभावविकाराणां जनिमूलत्वात्तत्प्रतिषेधेन सर्वे प्रतिषिद्धा भवन्ति। स बाह्याभ्यन्तरो ह्यजोऽतोऽजरोऽमृतोऽभ-

---

नेकग्रामेषु शक्तिविशेषोऽस्यास्तीति तथोक्तं नामरूपयोर्बीजं ब्रह्म तस्योपाधितया कल्पितं ग्रहस्य कारणत्वानुपपत्त्या गमितं स्वरूपमस्येति तथोक्तम्। तस्मादुपाधिरूपात्तद्विशिष्टरूपाच्च यतोऽक्षरात्पर इति सम्बन्धः॥ कथं मायातत्त्वस्याक्षरस्य परत्वमित्याकाङ्क्षायामाह। सर्व्वकार्य्येति॥ कार्य्यं ह्यपरं प्रसिद्धम्। तत्कारणत्वेन गम्यमानत्वान्मायातत्त्वं परम्। यौक्तिकबाधादनिर्व्वाच्यत्वेऽपि स्वरूपोच्छेदाभावादक्षरम्। तदुक्तं गीतायाम्। क्षरः सर्व्वाणि भूतानि कूटस्थोऽक्षर उच्यते। उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत इति॥२॥ यदेव चैतन्यं निरुपाधिकं शुद्धमविकल्पं ब्रह्म तत्त्वज्ञानाज्जीवानां कैवल्यं तदेव मायाप्रतिबिम्बितरूपेण कारणं भवतीत्याह। यस्मादेवेति॥ प्राणोत्पत्तेरूर्द्ध्वं तर्हि सप्राणत्वमात्मनो भविष्यतीति शङ्कानिरासार्थं श्रुत्यन्तरप्रसिद्धं प्राणस्य

## अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः॥२॥

यो भुवोऽभय इत्यर्थः। यद्यपि देहाद्युपाधिभेददृष्टीनामविद्यावशाद्देहभेदेषु स प्राणः समनाः सेन्द्रियः सविषय इव प्रत्यवभासते तलमलादिमदिवाकाशं तथापि तु स्वतः परमार्थदृष्टो नाम प्राणो विद्यमानः क्रियाशक्तिभेदवांश्चलनात्मको वायुर्यस्मिन्न विद्यते असावप्राणः। तथाऽमना अनेकज्ञानशक्तिभेदवत्सङ्कल्पाद्यात्मकं मनोऽप्यविद्यमानं यस्मिन् सोऽयममना अप्राणो ह्यमनाश्चेति। प्राणादिवायुभेदाः कर्मेन्द्रियाणि तद्विषयाश्च तथा बुद्धिमनसी बुद्धीन्द्रियाणि तद्विषयाश्च प्रतिषिद्धा वेदितव्याः। यथा श्रुत्यन्तरे ध्यायतीव लेलायतीवेति। यस्माच्चैवं प्रतिषिद्धोपाधिद्वयस्तस्माच्छुभ्रः शुद्धः। अतोऽक्षरान्नामरूपबीजोपाधिलक्षितस्वरूपात् सर्वकार्य्यकारणबीजत्वेनोपलक्ष्यमाणत्वात् परं तदुपाधिलक्षणमव्याकृताख्यमक्षरं सर्वविकारेभ्यस्तस्मात्परतोऽक्षरात्परो निरुपाधिकः पुरुष इत्यर्थः। यस्मिंस्तदाकाशाख्यमक्षरं संव्यवहारवि-

---

विशेषणमाह। अविद्याविषय इति॥ नामधेयमिति वाङ्मात्रो न वस्तुकृत इत्यर्थः॥ प्राणादीनां च उत्क्रमोपक्रमेण वाध्यते। गताः कलाः पञ्चदश प्रतिष्ठा इति॥ भूतेषु श्रवणेन प्राणानां भौतिकत्वावगमाद्भूतोत्पत्त्यनन्तरं प्राणोत्पत्तिर्द्रष्टव्येत्यभिप्रायमागच्छन् वायुः प्रवहः पुरतो गच्छन् प्रवह इत्यादिभेदः शब्दस्पर्शरूपरसगन्धा उत्तरोत्तर गुणा येषां तानि तथोक्तानि। यथा शुक्लतन्त्ववस्थापन्नादन्यविकारकाज्जायमानः पटः शुक्लगुणो जायते तथाकाशावस्थापन्नाद्ब्रह्मणो जायमानो वायुराकाशगुणेन शब्देनान्वितो जायते। तथैव वायुभावा-

**एतस्माज्जायते प्राणो मनः सर्व्वेन्द्रियाणि च।**

---

पयमोतश्च प्रोतश्च। कथं पुनरप्राणादिमत्त्वं तस्येत्युच्यते। यदि हि प्राणादयः प्रागुत्पत्तेः पुरुष इव स्वेनात्मना सन्ति तदा पुरुषस्य प्राणादिना विद्यमानेन प्राणादिमत्त्वं भवेन्न तु ते प्राणादयः प्रागुत्पत्तेः सन्ति अतोऽप्राणादिमान् परः पुरुषः ॥ २ ॥ यथाऽनुत्पन्ने पुत्रे अपुत्रो देवदत्तः कथं ते न सन्ति प्राणादय इत्युच्यते। यस्मादेव पुरुषान्नामरूपबीजोपाधिलक्षिताज्जायते उत्पद्यतेऽविद्याविषयविकारभूतो नामधेयोऽनृतात्मकः प्राणः। वाचारम्भणं विकारो नामधेयमिति श्रुत्यन्तरात्। न हि तेनाविद्याविषये गुणानृतेन प्राणेन सप्राणत्वं परस्य स्यादपुत्रस्य स्वप्नदृष्टेनेव पुत्रेण पुत्रत्वम्। एवं मनः सर्व्वाणि चेन्द्रियाणि विषयाश्चैतस्मादेव जायन्ते। तस्मात्सिद्धमस्य निरुपचरितमप्राणादिमत्त्वमित्यर्थः। यथा च प्रागुत्पत्तेः परमार्थतोऽसन्तस्तथा प्रलीनाश्चेति द्रष्टव्या यथा करणानि मनश्चेन्द्रियाणि तथा शरीरविषयकारणानि

---

पञ्चात्मकोऽग्निस्तद्गुणेनान्वितो जायत इति द्रष्टव्यम्। ननु सूक्ष्माणि भूतानि प्रथममुत्पद्यन्ते अनन्तरं तेषां त्रिवृतं त्रिवृतमेकैकं करोतीति। पञ्चीकरणोपलक्षणार्थं त्रिवृत्करणश्रुतेः पञ्चात्मकत्वमवगम्यते। तत्र एकैकस्य भूतस्य गुणवत्त्वं वर्णितमयुक्तम् कथमिह पञ्चीकरणमनादृत्य प्रथमवर्णेन चाऽऽकाशस्यैकगुणत्वं वायोर्हि द्विगुणत्वं तेजसस्त्रिगुणमित्याद्युच्यते। सत्यम्। भूतवर्णने तात्पर्याभावद्योतनाय प्रक्रियान्तरं न विरुध्यते। न ह्येतद्विवक्षितं

खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ ३ ॥

अग्निर्म्मूर्द्धा चक्षुषी चन्द्रसूर्य्यौ दिशः श्रोत्रे

---

भूतानि खमाकाशं वायुर्बाह्य आवहादिभेदः। ज्योतिरग्निः। आप उदकम्। पृथिवी धरित्री विश्वस्य सर्वस्य धारिणी। एतानि च शब्दस्पर्शरूपरसगन्धोत्तरोत्तरगुणानि पूर्व्व-पूर्व्वगुणसहितान्येतस्मादेव जायन्ते। सङ्क्षेपतः परविद्या-विषयमक्षरं निर्व्विशेषं पुरुषं सत्यं दिव्यो ह्यमूर्त्त इत्या-दिना मन्त्रेणोक्त्वा पुनस्तदेव सविशेषं विस्तरेण वक्तव्यमिति प्रवर्त्तते सङ्क्षेपविस्तरोक्तो हि पदार्थः सुखाधिगम्यो भवति सूत्रभाष्योक्तिवदिति ॥ ३ ॥

योऽपि प्रथमजात्प्राणाद्धिरण्यगर्भाज्जायतेऽण्डस्यान्तर्वि-राट्स तत्त्वान्तरितत्वेन लक्ष्यमाणोऽप्येतस्मादेव पुरुषा-ज्जायत एव तन्मयश्चेत्येतदर्थमाह। तञ्च विशिनष्टि। अग्निर्द्युलोकः। असौ वाव लोको गौतमाग्निरिति श्रुतेः। मूर्द्धा यस्योत्तमाङ्गं शिरः। चक्षुषी चन्द्रश्च सूर्य्यश्चेति। चन्द्र-सूर्य्यौ यस्येति सर्व्वत्रानुषङ्गः कर्त्तव्यः। अस्येत्यस्य पदस्य

---

किञ्चित्फलं श्रूयते। अत एव गुणगुणीभावोऽपि न वैशेषिकपक्षवदिह विवक्षितः। किन्तु राहोः शिर इति तद्व्यपदेशमात्रम्। विस्तरेण तत्तत्कार्यपर्यन्तं तेन तेनाकारेण ब्रह्मैव विवर्त्तित इति प्रपञ्च्यते। ततोऽतिरिक्तस्याणुमात्रस्याप्यभावात्तस्मिन् विज्ञाते सर्व्वमिदं विज्ञातं भवतीति प्रदर्शितमित्यर्थः॥ २ ॥

सर्व्वेषां भूतानामिति पञ्चमहाभूतानामन्तरात्मा स्थूलपञ्चभूतशरीरे

वाग्विवृताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्व्वभूतान्तरात्मा ॥ ४ ॥ तस्मादग्निः समिधो यस्य सूर्य्यः सोमात् पर्ज्जन्य ओषधयः पृथिव्याम्। पुमान् रेतः सिञ्चति योषितायां बह्वीः प्रजाः पुरुषात् सम्प्रसूताः ॥ ५ ॥

---

वक्ष्यमाणस्य यस्येति विपरिणामं कृत्वा दिशः श्रोत्रे यस्य। वाग्विवृता उद्घाटिताः प्रसिद्धा वेदाः। यस्य वायुः प्राणो यस्य हृदयमन्तःकरणं विश्वं समस्तं जगदस्य यस्येत्येतत्। सर्व्वं ह्यन्तःकरणविकारमेव जगन्मनस्येव सुषुप्ते प्रलयदर्शनात्। जागरितेऽपि तत एवाग्निविस्फुलिङ्गवद्विप्रतिष्ठानात्। यस्य च पद्भ्यां जाता पृथिवी। एष देवो विष्णुरनन्तः प्रथमशरीरी त्रैलोक्यदेहोपाधिः सर्व्वेषां भूतानामन्तरात्मा। स हि सर्व्वभूतेषु द्रष्टा श्रोता मन्ता विज्ञाता सर्व्वकरणात्मा पञ्चाग्निद्वारेण च याः संसरन्ति प्रजास्ता अपि तस्मादेव पुरुषात्प्रजायन्त इत्युच्यते ॥ ४ ॥ तस्मात् परस्मात् पुरुषात् प्रजावस्थानविशेषरूपोऽग्निः। स विशेष्यते। यस्य सूर्य्यः समिध एव समिधः। सूर्य्येण हि द्युलोकः समिध्यते। ततो हि द्युलोकादग्निनिष्पन्नात्सोमात् पर्ज्जन्यो द्वितीयोऽग्निः सम्भवति। तस्माच्च पर्ज्जन्यादोषधयः पृथिव्यां भवन्ति। ओषधिभ्यः पुरुषाग्नौ हुताभ्यः पुमानग्नौ

---

हि विराडित्यर्थः॥ पञ्चाग्निद्वारेणेति द्युपर्ज्जन्यपृथिवीपुरुषयोषित्सु

तस्मादृचः साम यजूंषि दीक्षा यज्ञाश्च सर्व्वे क्रतवो दक्षिणाश्च। संवत्सरश्च यजमानश्च लोकाः सोमो यत्र पवते यत्र सूर्य्यः ॥ ६ ॥ तस्माच्च देवा बहुधा सम्प्रसूताः साध्या मनुष्याः पशवो वयांसि।

---

रेतः सिञ्चति योषितायां योषिति योषाग्नौ स्त्रियामिति। एवङ्क्रमेण बह्वीर्बह्व्यः प्रजाः ब्राह्मणाद्याः पुरुषात्परस्मात्सम्प्रसूताः समुत्पन्नाः। किञ्च कर्म्मसाधनानि फलानि च तस्मादेवेत्याह ॥ ५ ॥

कथं तस्मात्पुरुषादृचो नियताक्षरपादावसानाः गायत्र्यादिच्छन्दोविशिष्टा मन्त्राः। साम पाञ्चभक्तिकं साप्तभक्तिकञ्च स्तोभादिगीतिविशिष्टम्। यजूंष्यनियताक्षरपादावसानानि वाक्यरूपाणि एवं त्रिविधा मन्त्राः। दीक्षा मौञ्ज्यादिलक्षणाकर्त्तृनियमविशेषाः। यज्ञाश्च सर्व्वे ऽग्निहोत्रादयः। क्रतवः सयूपाः। दक्षिणाश्चैकगवाद्यपरिमितसर्व्वस्वान्ताः। संवत्सरश्च कालकर्म्माङ्गे। यजमानश्च कर्त्ता। लोकास्तस्य कर्म्मफलभूतास्ते विशेष्यन्ते। सोमो यत्र येषु पवते पुनाति लोकान् यत्र येषु सूर्य्यस्तपति ते च दक्षिणायनोत्तरायणमार्गद्वयगम्या विद्वदविद्वत्कर्त्तृफलभूताः ॥ ६ ॥

---

पञ्चसन्निकृष्टेः स्वान्तरचोदितत्वात्तद्वारेणेत्यर्थः ॥ ४ ॥ ५ ॥

पाञ्चभक्तिकमिति हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधनाख्याः पञ्च भक्तयोऽवयवा यस्य तथोक्तम्। साप्तभक्तिकमिति हिङ्कारप्रस्तावाद्य द्वी-

प्राणापानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्म-चर्य्यं विधिश्च ॥ ७ ॥

सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषः समिधः सप्त होमाः । सप्त इमे लोका येषु चरन्ति प्राणा

तस्माच्च पुरुषात्कर्म्माङ्गभूता देवा बहुधा वस्वादिगणभेदेन सम्यक्प्रसूताः । साध्या देवविशेषाः । मनुष्याः कर्म्माधिकृताः । पशवो ग्राम्यारण्याः । वयांसि पक्षिणः । जीवनञ्च मनुष्यादीनाम् । प्राणापानौ व्रीहियवौ हविरर्थौ । तपश्च कर्म्माङ्ग-पुरुषसंस्कारलक्षणं स्वतन्त्रञ्च फलसाधनम् । श्रद्धा यत्पूर्वकः सर्व्वपुरुषार्थसाधनप्रयोगश्चित्तप्रसाद आस्तिक्यबुद्धिः । सत्य-मनृतवर्ज्जितं यथाभूतार्थवचनञ्चापीड़ाकरम् । ब्रह्मचर्य्यं मैथुनासमाचारः । विधिश्चेतिकर्त्तव्यता ॥ ७ ॥

किञ्च सप्तशीर्षण्याः प्राणास्तस्मादेव पुरुषात्प्रभवन्ति । तेषाञ्च सप्तार्च्चिषो दीप्तयः स्वस्वविषयावद्योतनानि । तथा सप्त समिधः सप्त विषयाः । विषयैर्हि समिध्यन्ते प्राणाः । सप्त होमास्तद्विषयविज्ञानानि । यदस्य विज्ञानं तज्जुहोतीति श्रुत्यन्तरात् । किञ्च सप्त इमे लोका इन्द्रियस्थानानि येषु चरन्ति प्राणाः । प्राणा इति विशेषणात्प्राणानां विशे-

यप्रतिहारोपद्रवनिधनाख्याः सप्त भक्तयो यस्य तथोक्तम् । स्तोभोऽर्थन्यूना वर्णाः । विश्वजित्सर्व्वमेधयोः सर्व्वस्वदक्षिणा अत एकाङ्कमारभ्य सर्व्वस्वान्ता दक्षिणा भवन्तीत्यर्थः ॥ ६ ॥ ७ ॥

तपश्च कर्म्माङ्गमिति यथो ब्राह्मणस्य व्रतं यवागुराजन्यस्यामिक्षा वैश्यस्येत्यादि श्रुतिविहितं कृच्छ्रचान्द्रायणादीत्यर्थः । आत्मयाजिनामिति

गुहाशया निहिताः सप्त सप्त ॥ ८ ॥ अतः समुद्रा गिरयश्च सर्व्वेऽस्मात् स्यन्दन्ते सिन्धवः सर्व्वरूपाः। अतश्च सर्व्वा ओषधयो रसश्च येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥ ९ ॥ पुरुष एवेदं विश्वं

---

सप्तमिदं प्राणापानादिनिष्टत्यर्थम्। गुहायां शरीरे हृदये वा स्वापकाले शेरत इति गुहाशयाः। निहिताः स्थापिता धात्रा सप्त सप्त प्रति प्राणिभेदम्। यानि च आत्मयाजिनां विदुषां कर्म्माणि तत्साधनानि कर्म्मफलानि चाविदुषाञ्च कर्म्माणि तत्साधनानि कर्मफलानि च सर्व्वञ्चैतत्परस्मादेव पुरुषात्सर्व्वज्ञात्प्रसूतमिति प्रकरणार्थः ॥ ८ ॥ अतः पुरुषात्समुद्राः सर्व्वे क्षाराद्याः। गिरयश्च हिमवदादयोऽस्मादेव पुरुषात् सर्व्वे। स्यन्दन्ते स्रवन्ति गङ्गाद्याः सिन्धवो नद्यः सर्व्वरूपाः बहुरूपाः। अस्मादेव पुरुषात्सर्व्वा ओषधयो व्रीहियवाद्याः। रसश्च मधुरादिः षड्विधो येन रसेन भूतैः पञ्चभि स्थूलैः परिवेष्टितस्तिष्ठते तिष्ठति ह्यन्तरात्मा लिङ्गं सूक्ष्मं शरीरम्। तद्ध्यन्तराले शरीरस्यात्मनश्चात्मा वर्त्तत इत्यन्तरात्मा ॥ ९ ॥ एवं पुरुषात्सर्व्वमिदं सम्प्रसूतम्। अतो वाचारम्भणं विकारो नामधेयमनृतं पुरुष इत्येव सत्यम्। अतः पुरुष एवेदं सर्वम्। न विश्वं नाम पुरुषादन्यत् किञ्चिदस्ति। अतो यदुक्तं तदेतदभिहितं कस्मिन्नु

---

सकलमिदमहञ्च परमात्मैवेति भावनापूर्वकं परमेश्वराराधनबुद्ध्या ये यजन्ति तेषामित्यर्थः। यत्पृष्टं कस्मिन्नु भगवो विज्ञाते सर्व्वमिदं विज्ञातं

कर्म्म तपो ब्रह्म परामृतम्। एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य॥ १० ॥
इति द्वितीयमुण्डके प्रथमः खण्डः ॥ १ ॥

आविः सन्निहितं गुहाचरन्नाम महत्पदम-

---

भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति। एतस्मिन् हि परस्मिन्नात्मनि सर्वकारणे पुरुष एवेदं विश्वं नामैतदस्तीति विज्ञातं भवतीति किं पुनरिदं विश्वमित्युच्यते। कर्माग्निहोत्रादिलक्षणम्। तपो ज्ञानं तत्कृतं फलमन्यदेव तावद्धीदं सर्वम्। तच्चब्रह्मणः कार्य्यं तस्माद्ब्रह्म परममृतमहमेवेति यो वेद निहितं स्थितं गुहायां हृदि सर्वप्राणिनां स एवं विज्ञानादविद्याग्रन्थिमिव दृढीभूतामविद्यावासनां विकिरति विक्षिपति नाशयतीह जीवन्नेव न मृतः सन् हे सोम्य प्रियदर्शन ॥ १० ॥ इति द्वितीयमुण्डके प्रथमखण्डभाष्यम् ॥ १ ॥

अरूपं सदक्षरं केन प्रकारेण विज्ञेयमित्युच्यते। आविः प्रकाशं सन्निहितं वागाद्युपाधिभिर्ज्वलति भ्राजतीति श्रुत्यन्तराच्छब्दादीनुपलभमानवदवभासते। दर्शन-

---

भवतीति तन्निरूपितम्। सर्व्वं परमात्मनो जायते। जातस्यावस्थानं सर्व्वं तस्मिन्विज्ञाते विज्ञातं भवतीत्यविद्याक्षयफलाभिधानेनोपसंहृतमिति ॥ ८ ॥ ९ ॥ १० ॥ इति प्रथमः खण्डः ॥ १ ॥

अधुना ब्रह्म सकृदुपदेशमात्रेणाद्वितीयं ब्रह्मास्मीति वाक्यार्थज्ञानमवगन्तुं न भवतीति तस्योपायानुष्ठानेन भवितव्यमित्यभिप्रेत्याह।

चैतत्समर्पितम्। एजत्प्राणन्निमिषच्च यदेतज्जानथ सदसद्वरेण्यं परं विज्ञानाद्यद्वरिष्ठं प्रजानाम् ॥१॥ यदर्चिमद्यदणुभ्योऽणु यस्मिन् लोका निहिता

---

श्रवणमननविज्ञानादुपाधिधर्मैराविर्भूतं सल्लक्ष्यते हृदि सर्वप्राणिनाम्। यदेतदाविर्भूतं ब्रह्म सन्निहितं सम्यक्स्थितं हृदि तद्गुहाचरं नाम गुहायाञ्चरतीति दर्शनश्रवणादिप्रकारैर्गुहाचरमिति प्रख्यातम्। महत्सर्वमहत्त्वात्पदं पद्यते सर्वेणेति सर्वपदार्थास्पदत्वात्। कथं तन्महत्पदमित्युच्यते। यतस्तस्मिन् ब्रह्मण्येतत्सर्वं समर्पितं प्रवेशितं रथनाभाविव। एजच्चलत्पक्ष्यादि। प्राणत्प्राणितीति प्राणापानादिमन्मनुष्यपश्वादि। निमिषच्चनिमिषादिक्रियावत् यच्चानिमिषच्च शब्दात्समस्तमेतदत्रैव ब्रह्मणि समर्पितम्। एतद्यदास्पदं सर्वं जानथ हे शिष्या अवगच्छथ तदात्मभूतं भवतां सदसत्स्वरूपम्। सदसतोर्मूर्त्तामूर्त्तयोःस्थूलसूक्ष्मयोस्तद्व्यतिरेकेणाभावात्। वरेण्यं वरणीयं तदेव हि सर्वस्य नित्यत्वात्प्रार्थनीयं परं व्यतिरिक्तं विज्ञानात्प्रजानामिति व्यवहितेन सम्बन्धो

---

स्वरूपं सदक्षरमिति॥ वाक्यार्थस्यैव पुनः पुनर्भावना मुमुक्षुसन्धानस्योपाय इत्याह। उच्यत इति॥ आविःशब्दो निपातः प्रकाशवाची। ब्रह्म भिन्नोपलब्ध्यात्मना प्रकाशमानमेव वर्त्तेति भावयेदित्यर्थः। अन्यैर-प्युक्तं यदस्ति यद्भाति तदात्मरूपं नान्यत्ततो भाति न चान्यदस्ति। स्वभावसंवित्प्रतिभाति केवलं ग्राह्यं ग्रहीतेति मृषैव कल्पनेति। सन्निहितमिति सर्व्वेषां प्रजानां हृदये स्थितवागाद्युपाधिभिः शब्दा-

लोकिनश्च। तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः। तदेतत्सत्यं तदमृतं तद्वेद्धव्यं सोम्य विद्धि॥२॥

---

यल्लौकिकविज्ञानागोचरमित्यर्थः। यद्वरिष्ठं वरतमं सर्वपदार्थेषु वरेषु तद्ध्येकं ब्रह्मातिशयेन वरं सर्वदोषरहितत्वात्॥१॥ किञ्च यदर्चिमद्दीप्तिमद्दीप्त्याऽऽदित्यादि दीप्यत इति दीप्तिमद्ब्रह्म। किञ्च यदणुभ्यः श्यामाकादिभ्योऽप्यणु सूक्ष्मम्। चशब्दात् स्थूलेभ्योऽतिशयेन स्थूलं पृथिव्यादिभ्यः। यस्मिंल्लोका भूरादयो निहिताः स्थिता ये च लोकिनो लोकनिवासिनो मनुष्यादयश्चैतन्याश्रया हि सर्वे प्रसिद्धास्तदेतत्सर्वाश्रयमक्षरं ब्रह्म स प्राणस्तदु वाङ्मनो वाक् च मनश्च सर्वाणि च करणानि अन्तश्चैतन्याः। अणो हि प्राणेन्द्रियादिसर्वसङ्घातः। प्राणस्य प्राणमिति श्रुत्यन्तरात्। यत्प्राणादीनामन्तश्चैतन्यमक्षरं तदेतत्सत्य-

---

दीनुपलभमानवद्ब्रह्मैव जीवभावमापन्नमवभासते। अतस्ततोऽपरोक्षं चेति सदा स्मरेदित्यर्थः। सर्व्वमिदं कार्यं परिच्छिन्नञ्च सासदकार्य्यत्वात्परिच्छिन्नत्वाच्च घटादिवत्ततः सर्व्वासदं यत्तदेव मायासदमात्मभूतमिति युक्त्यनुसन्धानमाह। सदसदिति॥१॥ घटादिवदादित्यादेरर्चिष्ट्वेऽपि यद्दीप्तिमत्त्वे वैचित्र्यं तदनुपपत्त्यापि तत्कारणं सम्भावनीयमित्याह। किञ्च यदर्चिमदिति॥ अर्चिमत्त्वादादित्यादिवदिन्द्रियग्राह्यत्वं प्राप्तं निषेधति। यदणुभ्य इति॥ परमाणुपरिमाणत्वं तर्हि स्यादिति नाशङ्कनीयमित्याह। चशब्दादिति॥ स्थूलत्वात्तर्हि अन्याधारं स्यादिति नाशङ्कनीयमित्याह। यस्मिँल्लोका इति प्राणादिप्रवृत्तिश्चेतनाधिष्ठानानिबन्धनात्वादप्रवृत्ति-

धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासा निशितं सन्धीयत। आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि॥ ३ ॥ प्रणवो

---

मवितथमतोऽमृतमविनाशि तद्वेद्धव्यं मनसा ताडयितव्यम्। तस्मिन्मनःसमाधानं कर्त्तव्यमित्यर्थः। यस्मादेवं हे सोम्य विद्धि अक्षरे चेतः समाधत्स्व ॥ २ ॥

कथं वेद्धव्यमित्युच्यते। धनुरिष्वासनं गृहीत्वौपनिषदमुपनिषत्सु भवं प्रसिद्धं महास्त्रं महच्च तदस्त्रञ्च धनुस्तस्मिन् शरम्। किं विशिष्टमित्याह। उपासा निशितं सन्तताभिध्यानेन तनूकृतं संस्कृतमित्येतत्। सन्धीयत सन्धानं कुर्य्यात्। सन्धाय चायम्याकृष्य सेन्द्रियमन्तःकरणं स्वविषयाद्विनिवर्त्त्य लक्ष्य एवावर्जितं कृत्वेत्यर्थः। न हि हस्तेनेव धनुष आयमनमिह सम्भवति। तद्भावगतेन तस्मिन् ब्रह्मण्यक्षरे लक्ष्ये भावना भावस्तद्गतेन च सालक्ष्यं तदेव यथोक्तलक्षणमक्षरं सोम्य विद्धि। यदुक्तं धनुरादि तदुच्यते। प्रणव ओङ्कारो धनुः। यथेष्वासनं लक्ष्ये शरस्य प्रवेशकारणं तथात्मशरस्याक्षरे लक्ष्ये प्रवेशकारणमोङ्कारः।

---

त्वाद्रूपादिमद्दृष्टिवच्छिद्रे च प्रमाणाभावादहं चैतन्यमात्मास्मीति विचारयेदित्याह। तदेतत्सर्वान्तरमिति॥ प्राणाद्यधिष्ठानत्वात्प्राणादिलक्षण आत्मा द्रष्टव्यः ॥ २ ॥

विचारासमर्थस्य प्रणवमवलम्ब्य ब्रह्मात्मैकत्वे चित्तसमाधानं क्रममुक्तिफलं दर्शयितुमुपक्रमते। कथं वेद्धव्यमित्यादिना॥ प्रणवो ब्रह्मेत्यभिध्यायत उपसंहृतकरणग्रामस्य प्रणवोपरक्तं यच्चैतन्यप्रतिबिम्बं

धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते। अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ ४ ॥

यस्मिन् द्यौः पृथिवी चान्तरीक्षमोतं मनः सह

---

प्रणवेन ह्यभ्यस्यमानेन संस्क्रियमाणस्तदालम्बनोऽप्रतिबन्धेनाक्षरे ऽवतिष्ठते। यथा धनुषास्त इषुर्लक्ष्ये। अतः प्रणवो धनुरिव धनुः। शरो ह्यात्मोपाधिलक्षणः पर एव जलसूर्यकादिवदिह प्रविष्टो देहे सर्वबौद्धप्रत्ययसाक्षितया स शर इव स्वात्मविषयोपलब्धिलक्षणाप्रमादवर्जितेन सर्वतो विरक्तेन जितेन्द्रियेणैकाग्रचित्तेन वेद्धव्यं ब्रह्म लक्ष्यम्। ततस्तद्वेधनादूर्द्धं शरवत्तन्मयो भवेत्। यथा शरस्य लक्ष्यैकात्मत्वं फलं भवति। तथा देहाद्यनात्मप्रत्ययतिरस्करणेनाक्षरैकात्मत्वं फलमापादयेदित्यर्थः ॥ ३ ॥ ४ ॥

अक्षरस्यैव दुर्लक्ष्यत्वात्पुनः पुनर्वचनं सुलक्षणार्थम्। यस्मिन्नक्षरपुरुषे द्यौः पृथिवी चान्तरिक्षञ्चोतं समर्पितं मनश्च सह प्राणैः करणैरन्यैः सर्वैस्तमेव सर्वाश्रयमेकमद्वितीयं जानथ जानीथ हे शिष्याः। आत्मानं प्रत्यक्स्वरूपं युष्माकं सर्वप्राणिनाञ्च ज्ञात्वा चान्या वाचोऽपरविद्यारूपां विमुञ्चथ विमुञ्चत परित्यजत। तत्प्रकाश्यञ्च

---

स्फुरति स आत्मेत्यनुसन्धानम् प्रणवे शर सन्धानम्। तस्य चित्प्रतिबिम्बसन्धानं लक्ष्यवेधः॥ उत्तरग्रन्थस्य पौनरुक्त्यं परिहरति। अक्षरस्यैव दुर्लक्ष्यत्वादिति ॥ ३ ॥ ४॥

तत्साधनं सर्वं कर्म्म परित्यज्यात्मैव ज्ञातव्य इत्येव हेतुमाह। अक्ष-

प्राणैश्च सर्वैः। तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः॥ ५॥ अरा इव रथनाभौ संहता यत्र नाड्यः स एषोऽन्तश्च-

सर्वं कर्म ससाधनम्। यथाऽमृतस्यैष सेतुरेतदात्मज्ञानम-मृतस्यामृतत्वस्य मोक्षप्राप्तये सेतुः संसारमहोदधेरुत्त-रणहेतुत्वात् तथा च श्रुत्यन्तरम्। तमेव विदित्वाति-मृत्युमेति नान्यः पन्था विद्यतेऽयनायेति॥ ५॥ किञ्च। अरा इव। यथा रथनाभौ समर्पिता अरा एवं संहताः सम्प्रविष्टा यत्र यस्मिन् हृदये सर्वतो देहव्यापिन्यो नाम तस्मिन् हृदये बुद्धिप्रत्ययसाक्षिभूतः स एष प्रकृत आत्मा तन्मनध्ये चरते चरति वर्त्तते। पश्यन् शृण्वन् मन्वानो विजानन् बहुधाऽनेकधा क्रोधहर्षादिप्रत्ययै-र्जायमान इव जायमानोऽन्तःकरणोपाध्यनुविधायित्वा-द्वदन्ति लौकिका हृष्टो जातः क्रुद्धो जात इति। तमा-त्मानमोमित्येवमोङ्कारालम्बनाः सन्तो यथोक्तकल्पनया ध्यायथ चिन्तयत। उक्तञ्च। वक्तव्यं शिष्येभ्य आचार्य्येण जानता। शिष्याश्च ब्रह्मविद्या विविदिषवो निवृत्तकर्माणो

तस्येति धनुषाऽऽयुधेन लक्ष्यत इति तल्लक्ष्य आत्मैकत्वसाक्षात्कार इत्यर्थः। कर्म्मसङ्कुलमसङ्कत्वा कर्म्मश्रद्धा विषयश्रद्धा च वाक्यार्थज्ञानस्यावगत्यन्तताया: प्रतिबन्धको विघ्नः स माभूदिति यंसनम्। न तु वाक्यार्थावगतौ निष्पन्नायां फलप्राप्तौ विघ्नशङ्काऽस्तीत्यभिप्रेत्याह। परस्तादिति॥ मदुपदेशादूर्द्ध्वमित्यर्थः। सर्व्वेश्वरत्वं मनोमयत्वादिगुणविशिष्टब्रह्मणो

इति बहुधा जायमानः ॐमित्येवं ध्यायथ आत्मानं स्वस्ति वः पाराय तमसः परस्तात् ॥ ६ ॥

यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि दिव्ये

---

मोक्षपथे प्रवृत्ताः। तेषां निर्विघ्नतया ब्रह्मप्राप्तिमाशास्त्याचार्य्यः। स्वस्ति निर्विघ्नमस्तु वो युष्माकं पराय परकूलाय। कस्य। अविद्यातमसः परस्तात्। कस्मात्। अविद्यातमसोऽविद्यारहितब्रह्मात्मस्वरूपगमनायेत्यर्थः। योऽसौ तमसः परस्तात् संसारमहोदधिं तीर्त्वा गन्तव्यः परविद्याविषय इति ॥ ६ ॥

स कस्मिन् वर्त्तत इत्याह। यः सर्वज्ञः सर्वविद्यो व्याख्यातस्तं पुनर्विशिनष्टि। यस्यैष प्रसिद्धो महिमा विभूतिः कोऽसौ महिमा। यस्येमे द्यावापृथिवी शासने विधृते तिष्ठतः। सूर्य्याचन्द्रमसौ यस्य शासनेऽलातचक्रवदजस्रं भ्रमतः। यस्य शासने सरितः सागराश्च स्वगोचरं नातिक्रामन्ति। तथा स्थावरं जङ्गमञ्च यस्य शासने नियतम्। तथा ऋतवोऽयनेऽब्दाश्च यस्य शासनं नातिक्रामन्ति। तथा कर्त्तारः कर्माणि फलञ्च यच्छासनात्स्वं स्वं कालं नातिवर्त्तते स एष महिमा। भुवि लोके यस्य स एष

---

हृदयपुण्डरीके ध्यानस्य ब्रह्मप्राप्तिफलम्। तद्ब्रह्मविदो विवृण्वत इति दर्शयितुमाह। योऽसौ तमसः परस्तादित्यादिना ॥ ५ ॥ ६ ॥

अस्य परमात्मध्यानस्येति ॥ जीवन्मुक्तिफलत्वादेतद्वाक्याद्योग्य-मस्य चोपासनस्येत्यर्थः। अविद्यावासनाप्रचयो भिद्यत इति कोऽर्थः। किं मुक्तौ विद्यमानानामविद्यादिभेदे ध्यानफलं किंवा तद्विहन्तो।

मृतं यद्विभाति ॥ ७ ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः। क्षीयन्ते चास्य कर्म्माणि तस्मिन्दृष्टे परावरे ॥ ८ ॥

---

मेव ह्यात्मनः स्थितिरन्ने तदात्मतत्त्वं विज्ञानेन विशिष्टेन शास्त्राचार्य्योपदेशजनितेन ज्ञानशमदमध्यानवैराग्योद्भूतेन परिपश्यन्ति सर्वतः पूर्णं पश्यन्ति उपलभन्ते धीरा विवेकिनः। आनन्दरूपं सर्व्वानर्थदुःखायासप्रहीणममृतं यद्विभाति विशेषेण स्वात्मन्येव भाति सर्वदा ॥ ७ ॥ अस्य परमात्मज्ञानफलमिदमभिधीयते। भिद्यते हृदयग्रन्थिरविद्या वासनामयः। बुद्ध्याश्रयास्तथा प्रोक्ताः कामा येऽस्य हृदि श्रिता इति श्रुत्यन्तरात्। हृदयाश्रयोऽसौ नात्माश्रयः। भिद्यते भेदं विनाशमायाति हृदयग्रन्थिः। छिद्यन्ते सर्वे ऽज्ञानविषयाः संशया लौकिकानामामरणात्तु गङ्गास्रोतोवत्प्रवृत्ता विच्छेदमायान्ति। अस्य विच्छिन्नसंशयस्य निवृत्ताविद्यस्य यानि विज्ञानोत्पत्तेः प्राक्तनानि जन्मान्तरे चाप्रवृत्तफलानि ज्ञानोत्पत्तिसहभावीनि च क्षीयन्ते

---

शोचति मुह्यमान इति अथवाहं हृद्गतमेवाविद्याद्यात्मन्यध्यस्त इति चेदध्यस्त इति कोऽर्थो निरूप्यते भ्रान्त्या दृश्यते वा। नाद्यः। आत्मधर्म्मस्यान्यत्र निक्षेपासम्भवात्। भ्रान्त्या च केन दृश्यते। न तावदात्मना तस्याविद्याश्रयत्वानङ्गीकारात्। न बुद्ध्या। बुद्धेरात्मविषयत्वासम्भवेन तद्गतदर्शनासम्भवात्। भ्रान्तेश्च स्वाश्रयगतेन तत्त्वानुभवेन निवर्त्त्यत्वप्रसिद्धेः बुद्धेरनुभवाश्रयत्वप्रसङ्गात्। तस्मान्नास्य भाष्यस्य सम्यगर्थं पश्याम इति चेदुच्यते। चित्तत्वानादिरनिर्वाच्या विद्या चैतन्यमवच्छिद्य

ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः। मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपम-

---

सर्वस्य एष महिमा। दिव्ये द्योतनवति सर्वबौद्धप्रत्ययकृतद्योतने ब्रह्मपुरे मनसि। ब्रह्मणोऽत्र चैतन्यस्वरूपेण नित्याभिव्यक्तत्वाद्ब्रह्मणः पुरं हृदयपुण्डरीकं तस्मिन् यद्व्योम तस्मिन् व्योम्न्याकाशे हृत्पुण्डरीकमध्यस्थे प्रतिष्ठित इवोपलभ्यते। न ह्याकाशवत्सर्वगतस्य गतिरागतिः प्रतिष्ठा वान्यथा सम्भवति। स ह्यात्मा तत्रस्थो मनोवृत्तिभिरेव विभाव्यत इति। मनोमयो मनउपाधित्वात्प्राणशरीरनेता। प्राणश्च शरीरञ्च प्राणशरीरं तस्यायं नेता स्थूलाच्छरीराच्छरीरान्तरं सूक्ष्मं प्रति प्रतिष्ठितोऽन्नेभुज्यमानान्नविपरिणामे प्रतिदिनमुपचीयमानेऽपचीयमाने च पिण्डरूपान्ने हृदयं बुद्धिं पुण्डरीकच्छिद्रे सन्निधाय समवस्थाप्य हृदयावस्थान-

---

नाद्यः। तस्युपादाने कार्यस्यात्यन्तोच्छेदासम्भवात्॥ न द्वितीयः। ज्ञानस्यात्मनैव बाधाविरोधप्रसिद्धेः। किञ्च। बुद्धिरप्यनादिः सादिर्वा। नाद्यः। एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चेति श्रुतिविरोधादात्मप्रवचने ब्रह्मज्ञानं विनैव बुद्धेर्मोक्षसम्भवात्तदानर्थक्यप्रसङ्गात्। सादित्वेन बुद्धेरुपादानं वाच्यमज्ञं चेत्तस्य विनाशेऽत्यन्तोच्छेदो न स्यात्। माया चैषा दृष्टमतस्मानेन मोक्षदर्शनमिति। लौकिकमायाविनतमायावा दृष्टमतस्मानेनोच्छेदादर्शनात्। किञ्च। बुद्धेरुच्छेदो न तस्याः फलम्। अनात्मत्वापरत्वाद्यात्मनः। तस्य बुद्धिसम्भवायेन तदुच्छेदस्यापरत्वात् किञ्चात्मनोऽविद्याद्यज्ञानमात्माभिधानं श्रुतिविरुद्धमतोऽविद्यावशादात्मवर्त्तमाना इति अवचाडुपसंहारे च अनीश्वरा

हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्।
तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः॥

---

कर्म्माणि। न त्वेतज्जन्मान्तरारम्भकाणि प्रवृत्तफलत्वात्तस्मिन् सर्व्वज्ञेऽसंसारिणि दृष्टे परावरे परञ्च कारणात्मना अवरञ्च कार्य्यात्मना तस्मिन् परावरे साक्षादहमस्मीति दृष्टेसंसरणोच्छेदान्मुच्यत इत्यर्थः॥ ८॥

उक्तस्यैवार्थस्य सङ्क्षेपाभिधायका उत्तरे मन्त्रास्त्रयोऽपि हिरण्मये ज्योतिर्म्मये बुद्धिविज्ञानप्रकाशे परे कोश इवाऽसेः। आत्मस्वरूपोपलब्धिस्थानत्वात्परं सर्व्वाभ्यन्तरत्वात्तस्मिन् विरजमविद्याद्यशेषदोषरजोमलवर्जितं ब्रह्म सर्व्वमहत्त्वात्सर्व्वात्मत्वाच्च निष्कलं निर्गताः कला यस्मात्तन्निष्कलं निरवयवमित्यर्थः। यस्माद्विरजं निष्कलञ्चातस्तच्छुभ्रं शुद्धज्योतिषां सर्व्वप्रकाशात्मनामग्न्यादीनामपि तज्ज्योतिरवभासम्। अग्न्यादीनामपि ज्योतिष्ट्वमन्तर्गतब्रह्मात्मचैतन्यज्योतिर्निमित्तमित्यर्थः। तद्धि परं ज्योतिर्यदन्यानवभास्यमात्मज्योतिस्तद्यदात्मविद आत्मानं शब्दादिविषयबुद्धिप्रत्ययसाक्षिणं ये विवेकिनो विदुर्विजानन्ति ते

---

स्वार्थच्छन्नचैतन्यस्य बुद्ध्यादितादात्म्यरूपेण विवर्त्तते। तस्याश्च ब्रह्मात्मतासाक्षात्कारनिवर्त्त्यरूपाङ्गीकारात्तन्निवृत्तौ तदुक्तं हृदयग्रन्थिभेदं स्तत्त्वोच्यते। भाष्यकारीयन्तु बुद्ध्यन्वेषणाभिधानमहङ्कारविशेषणत्वेना विद्यादेर्व्यावहारिकाभिप्रायत्वमात्मान्तरत्वाभिधानस्यात्मनो निर्विकारत्वाभिप्रायम्॥ ७॥ ८॥

बाधितानुवृत्तिश्च प्रकटार्थे प्रदर्शितेति जीवन्मुक्तिर्न विरुध्यते।

९ ॥ न तत्र सूर्य्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्व्वं तस्य भासा सर्व्वमिदं विभाति॥ १० ॥

---

त्मविदस्तद्विदुरात्मप्रत्ययानुसारिणः । यस्मात्परं ज्योतिस्तस्मात्त एव तद्विदुर्नेतरे बाह्यार्थप्रत्ययानुसारिणः ॥ ९ ॥ कथं तज्ज्योतिषां ज्योतिरित्युच्यते । न तत्र तस्मिन् स्वात्मभूते ब्रह्मणि सर्वावभासकोऽपि सूर्यो न भाति । तद्ब्रह्म न प्रकाशयतीत्यर्थः । स हि तस्यैव भासा सर्वमन्यदनात्मजातं प्रकाशयतीत्यर्थः । न तु तस्य स्वतः प्रकाशनसामर्थ्यम् । तथा न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निरस्मद्गोचरः । किं बहुना । यदिदं जगद्भाति तत्तमेव परमेश्वरं स्वतो भारूपत्वाद्भान्तं दीप्यमानमनुभात्यनुदीप्यते । यथा जलोल्मुकादि अग्निसंयोगादग्निं दहन्तमनुदहति न स्वतस्तद्वत्तस्यैव भासा दीप्त्या सर्वमिदं सूर्यादिमज्जगद्विभाति । यत एवं तदेव ब्रह्म भाति च विभाति च कार्य्यगतेन विविधेन भासा अतस्तस्य ब्रह्मणो भारूपत्वं स्वतोऽवगम्यते । न हि स्वतो विद्यमानं भासनमन्यस्य कर्त्तुं शक्नोति । घटादीनामन्यावभासकत्वादर्शनाद्भारूपाणाञ्चादित्यादीनां तद्दर्शनात् ॥ १० ॥ यत्तज्ज्योतिषां ज्योतिर्ब्रह्म तदेव सत्यं सर्वं तद्विकारं वाचा-

---

भातीति चिजन्माध्याहारेण व्याख्यातं तस्य भासा सर्वमिदं विभातीत्यस्य ब्रह्मणः स्वतो भारूपत्वे तात्पर्यं कथयति । यत एवमिति

ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण । अधश्चोर्द्ध्वञ्च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठं ॥ ११ ॥ इति द्वितीयमुण्डके द्वितीयः खण्डः ॥ २ ॥ इति द्वितीयमुण्डकं समाप्तम् ॥ २ ॥

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परि-

---

रम्भणं विकारो नामधेयमात्रमनृतमितरदित्येतमर्थं विस्तरेण हेतुतः प्रतिपादितं निगमनस्थानीयेन मन्त्रेण पुनरुपसंहरति । ब्रह्मैवोक्तलक्षणमिदं यत्पुरस्तादग्रे ब्रह्मैवाविद्यादृष्टीनां प्रत्यवभासमानं तथा पश्चाद्ब्रह्म तथा दक्षिणतश्च तथोत्तरेण तथैवाधस्तादूर्द्ध्वञ्च सर्वतोऽन्यदपि कार्य्याकारेण प्रसृतं प्रगतं नामरूपवदवभासमानम् । किं बहुना ब्रह्मैवेदं विश्वं समस्तमिदं जगद्वरिष्ठं वरतमम् । अब्रह्मप्रत्ययः सर्व्वोऽविद्यामात्रो रज्ज्वामिव सर्पप्रत्ययः । ब्रह्मैवैकं परमार्थसत्यमिति वेदानुशासनम् ॥ ११ ॥ इति द्वितीयमुण्डकभाष्यम् ॥ २ ॥

परा विद्योक्ता यया तदक्षरं पुरुषाख्यं सत्यमधिगम्यते ।

---

तदेव ब्रह्म भाति चेति ॥ उपसंहारमन्त्रस्य तात्पर्य्यमाह । तज्ज्योतिषां ज्योतिरिति ॥ न ब्रह्मणा विविधं क्रियत इति तद्विकारं सर्व्वं जगत्सर्व्वं ब्रह्मैवेति बाधायां सामानाधिकरण्यं योऽयं स्थाणुः पुमानसाविति वदन्वयव्यतिरेकाभावपरिहारेण तावन्मात्रत्वं बोध्यते ॥ ९ ॥ १० ॥ ११ ॥ इति द्वितीयमुण्डकभाष्यटीका ॥ २ ॥

प्राधान्येनेत्यपूर्व्वत्वेन तात्पर्य्यविषयतयेत्यर्थः । द्वा सुपर्णेत्यादौ द्विवचनस्याकारश्छान्दसः । जीवस्याप्तत्वेन नियम्यत्वेन योग्यत्वादी-

षस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न-

---

यदधिगमे हृदयग्रन्थ्यादेः संसारकारणस्यात्यन्तिकवि-
नाशः स्यात्। दर्शनोपायश्च योगो धनुराद्युपादानकल्प-
नयोक्तः। अथेदानीं तत्सहकारीणि सत्यादिसाधनानि
वक्तव्यानीति तदर्थमुत्तरारम्भः। प्राधान्येन तत्त्वनिर्धार-
णञ्च प्रकारान्तरेण क्रियते। अत्यन्तदुरवगाह्यत्वात् कृतमपि
तत्र सूत्रभूतो मन्त्रः परमार्थवस्त्ववधारणार्थमुपन्यस्यते।
द्वा द्वौ सुपर्णा सुपर्णौ शोभनपतनौ सुपर्णौ पक्षिसामा-
न्याद्वा सुपर्णौ सयुजा सयुजौ सहैव सर्वदा युक्तौ सखाया
सखायौ समानाख्यातौ समानाभिव्यक्तिकारणौ एवम्भूतौ
सन्तौ समानमविशेषमुपलब्ध्यधिष्ठानतया एकं वृक्षं वृक्ष-
मिवोच्छेदनसामान्यात् शरीरं वृक्षं परिषस्वजाते परिष्व-
क्तवन्तौ। सुपर्णाविवैकं वृक्षं फलोपभोगार्थम्। अयं हि वृक्ष
ऊर्द्ध्वमूलोऽवाक्शाखोऽश्वत्थोऽव्यक्तमूलप्रभवः क्षेत्रसंज्ञकः
सर्वप्राणिकर्मफलाश्रयस्तं परिष्वक्तवन्तौ सुपर्णाविवावि
द्याकामकर्मवासनाश्रयलिङ्गोपाध्यात्मेश्वरौ। तयोः परि-
ष्वक्तयोरन्य एकः क्षेत्रज्ञो लिङ्गोपाधिवृक्षमाश्रितः पिप्पलं

---

ईश्वरस्य सर्वज्ञत्वेन नियामकत्वशक्तियोगाच्छोभनं पतनमुचितम्।
नियम्यनियामकभावगमनं वयोस्तौ शोभनपतनौ। पक्षिसामान्याद्वेति
वृक्षाश्रयत्वादिसामान्यादित्यर्थः। ऊर्द्ध्वमुत्कृष्टं ब्रह्म मूलमधिष्ठानम-
स्येत्यूर्द्ध्वमूलोऽर्वाञ्चः प्राणादयः शाखा इवास्येत्यवाक्शाखः। श्वः-
स्थानं नियन्तुमस्य न शक्यमित्यश्वत्थः। अव्यक्तमव्याकृतं मूलमुपा-
दानमस्येति तस्मात्प्रभवतीति तथोक्तो यावद्ज्ञानभावीत्यर्थः। अविद्याका-

न्योऽभिचाकशीति ॥ १ ॥ समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा

---

कर्मनिष्पन्नं सुखदुःखलक्षणं फलं स्वाद्वनेकविचित्रवेदनास्वादुरूपं स्वाद्वत्ति भक्षयत्युपभुङ्क्तेऽविवेकतः । अनश्नन्नन्य इतर ईश्वरो नित्यशुद्धबुद्धमुक्तस्वभावः सर्वज्ञः सत्त्वोपाधिरीश्वरो नाश्नाति । प्रेरयिता ह्यसावुभयोर्भोज्यभोक्त्रोर्नित्यसाक्षित्वसत्तामात्रेण । स त्वनश्नन्नन्योऽभिचाकशीति पश्यत्येव केवलम् । दर्शनमात्रेण हि तस्य प्रेरयितृत्वं राजवत् ॥ १ ॥ तत्रैवं सति समाने वृक्षे यथोक्ते शरीरे पुरुषो भोक्ता जीवोऽविद्याकामकर्मफलरागादिगुरुभाराक्रान्तोऽलाबुरिव सामुद्रे जले निमग्नो निश्चयेन देहात्मभावमापन्नोऽयमेवाहममुष्य पुत्रोऽस्य नप्ता कृशः स्थूलो गुणवान्निर्गुणः सुखी दुःखीत्येवं प्रत्ययो नास्त्यन्योऽस्मादिति जायते म्रियते संयुज्यते वियुज्यते च सम्बन्धिबान्धवैः । अतोऽनीशया न कस्यचित्समर्थोऽहं पुत्रो मम विनष्टो मृता मे भार्या किं मे जीवितेनेत्येवं दीनभावोऽनीशा तया शोचति सन्तप्यते मुह्यमानोऽनेकैरनर्थप्रकारै-

---

सकर्मवासनानामाश्रयो लिङ्गमुपाधिर्यस्यात्मनः स जीवस्तयोक्तः स चेश्वरश्च ताविमावर्थः । सत्त्वो मायाख्यमुपाधिरस्येति सत्त्वोपाधिः । शाना-ब्रकस्यामलसत्त्वरायेरिति श्रुतम् । आवरणं विक्षेपश्च द्वयमविद्यायाः कार्यम् । तत्रेश्वरभावाप्रतिपत्तिरनीशावरणं शोचतीति विक्षेपस्तदुःख-क्लेशरनिर्व्याप्यमशामं मोहः । तेन विशिष्टोऽनेकैरनर्थप्रकारैरहं करो-

पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥ २ ॥ यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं

---

रविवेकितया चिन्तामापद्यमानः स एवं प्रेततिर्यङ्मनुष्यादियोनिष्वाजवं जवीभावमापन्नः कदाचिदनेकजन्मसु शुद्धधर्मसञ्चितनिमित्तेन केनचित्परमकारुणिकेन दर्शितयोगमार्गो ऽहिंसासत्यब्रह्मचर्य्यसर्वत्यागशमदमादिसम्पन्नः समाहितात्मा सन् जुष्टं सेवितमनेकैर्योगिमार्गैः कर्मिभिश्च यदा यस्मिन् काले पश्यति ध्यायमानोऽन्यं वृक्षोपाधिलक्षणाद्विलक्षणमीशमसंसारिणमशनायापिपासाशोकमोहजराद्यतीतमीशं सर्वस्य जगतोऽयमहमस्म्यात्मा सर्वस्य समः सर्वभूतस्थो नेतरोऽविद्याजनितोपाधिपरिच्छिन्नो मायात्मेति विभूतिं महिमानञ्च जगद्रूपस्यैव मम परमेश्वरस्येति यदैवं द्रष्टा तदा वीतशोको भवति सर्वस्माच्छोकसागराद्विप्रमुच्यते कृतकृत्यो भवतीत्यर्थः ॥ २ ॥ अन्योऽपि मन्त्र इममेवार्थमाह सविस्तरम् । यदा यस्मिन् काले पश्यः पश्यतीति विद्वान् साधक इत्यर्थः पश्यते पश्यति पूर्ववद्रुक्मवर्णं स्वयं ज्योतिःस्वभावं रुक्म-

---

र्भोक्त्रादिभिर्विवेकतया तदात्मतापन्नतयेत्यर्थः । आजवमनवरतं जीवभावं निकृष्टभावं यद्वा जवभावं कर्म्मवायुप्रेरिततया जवीभावं सम्प्राप्तः पूर्ववदितभेदेनेत्यर्थः । आत्मनि रतिर्यस्यासावात्मरतिस्तत्पुरुषः स्वेव क्रियावांस्तस्यात्मरतिः । क्रियावानिति मतुप् कः प्रतीयते कथञ्च बहुव्रीहिमत्वर्थयोरन्यतरोऽतिरिच्यत इति । एवं समासपाठे

पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥ ३ ॥

प्राणो ह्येष यः सर्व्वभूतैर्विभाति विजानन्

---

स्यैव वा ज्योतिरस्याविनाशि कर्त्तारं सर्वस्य जगत ईशं पुरुषं ब्रह्मयोनिं ब्रह्म च तद्योनिश्चासौ ब्रह्मयोनिस्तं ब्रह्मयोनिं ब्रह्मणो वाऽपरस्य योनिं स यदा चैवं पश्यति तदा स विद्वान् पश्यः पुण्यपापे बन्धनभूते कर्म्मणी समूले विधूय निरस्य दग्ध्वा निरञ्जनो निर्लेपो विगतक्लेशः परमं प्रकृष्टं निरतिशयं साम्यं समतामद्वयलक्षणां द्वैतविषयाणि सामान्यतो वाच्ये वातोऽद्वयलक्षणमेतत्परमं साम्यमुपैति प्रतिपद्यते ॥ ३ ॥

किञ्च योऽयं प्राणस्य प्राणः पर ईश्वरो ह्येष प्रकृतः सर्व्वैर्भूतैर्ब्रह्मादिस्तम्बपर्य्यन्तैः। इत्थम्भूतलक्षणा तृतीया। सर्वभूतस्थः सर्व्वात्मा सन्नित्यर्थः। विभाति विविधं दीप्यते। एवं सर्वभूतस्थं यः साक्षादात्मभावेनायमहमस्मीति विजानन् विद्वान् वाक्यार्थज्ञानमात्रेण न स भवते न भवतीत्येतत्। किम्। अतिवादी अतीत्य सर्व्वानन्यान् वदितुं शीलमस्येत्यतिवादी। यस्त्वेवं साक्षादात्मानं प्राणस्य प्राणं विद्वान्नातिवादी भवतीत्यर्थः। सर्व्वं यदात्मैव नान्यदस्तीति दृष्टं

---

द्वयोरर्थवत्त्वमासीत् समासपाठे त्वन्यतरे मन्नुवतिरिच्यते विशेष्यते वाक्यक्रियाभिहस्तिताभादित्यर्थः ॥ १ ॥ २ ॥ ३ ॥

एकदेशिव्याख्या तद्वाच्य निरावष्टे । केचिदित्यादिना ॥ अनेन वचनेन

विद्वान् भवती नातिवादी। आत्मक्रीड आत्म-

---

तदा किं स्वसावतीत्य वदेत्। यस्य त्वपरमपरमन्यद्दृष्टमस्ति स
तदतीत्य वदति। अयन्तु विद्वानात्मनोऽन्यन्न पश्यति नान्य-
च्छृणोति नान्यद्विजानाति। अतो नातिवदति। किञ्चात्म-
क्रीड आत्मन्येव क्रीडनं यस्य नान्यत्र पुत्रदारादिषु स
आत्मक्रीडः। तथाऽऽत्मरतिरात्मन्येव च रतीरमणं प्रीति-
र्यस्य स आत्मरतिः। क्रीडा बाह्यसाधनसापेक्षा। रतिस्तु सा-
धननिरपेक्षा बाह्यविषयप्रीतिमात्रमिति विशेषः। तथा
क्रियावान् ज्ञानध्यानवैराग्यादिक्रिया यस्य सोऽयं क्रिया-
वान्। समासपाठे आत्मरतिरेव क्रियाऽस्य विद्यत इति
बहुव्रीहिमतुवर्थयोरन्यतरोऽतिरिच्यते। केचित्त्वग्निहोत्रा-
दिकर्मब्रह्मविद्ययोः समुच्चयार्थमिच्छन्ति। तच्चैष ब्रह्मविदां
वरिष्ठ इत्यनेन मुख्यार्थवचनेन विरुध्यते। न हि बाह्य-
क्रिया आत्मरतिश्च भवितुं शक्नुतः। कश्चिद्बाह्यक्रियावि-
निवृत्तो ह्यात्मक्रीडो भवति बाह्यक्रियात्मक्रीडयोर्विरो-
धात्। न हि तमःप्रकाशयोर्युगपदेकत्र स्थितिः सम्भवति।
तस्मादसत्प्रलपितमेतत्। अनेन ज्ञानकर्मसमुच्चयप्रतिपा-
दनम्। अन्या वाचो विमुञ्चथ सन्न्यासयोगादिश्रुतिभ्य-
श्च। तस्मादयमेवेह क्रियावान् यो ज्ञानध्यानादिक्रियान-
सम्भिन्नार्थमर्य्यादः सन्न्यासी। य एवंलक्षणो नातिवाद्यात्म-

---

ज्ञानकर्म्मसमुच्चयप्रतिपादनं क्रियत इत्येतदसत्प्रलपितमेवेति योजना॥ ४।

रतिः क्रियावानेष ब्रह्मविदां वरिष्ठः ॥ ४ ॥
सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन
ब्रह्मचर्य्येण नित्यम्। अन्तः शरीरे ज्योतिर्म्मयो

---

क्रीड आत्मरतिः क्रियावान् ब्रह्मनिष्ठः स ब्रह्मविदां सर्व्वेषां वरिष्ठः प्रधानः ॥ ४ ॥ अधुना सत्यादीनि भिक्षोः सम्यग्ज्ञानसहकारीणि साधनानि विधीयन्ते निवृत्तिप्रधानानि। सत्येनानृतत्यागेन मृषावदनत्यागेन लभ्यः प्राप्तव्यः। किञ्च तपसा हीन्द्रियमनएकाग्रतया। मनसश्चेन्द्रियाणाञ्चैकाग्र्यं परमं तप इति स्मरणात्। तद्ध्यनुकूलमात्मदर्शनाभिमुखीभावात् परमं साधनं तपो नेतरच्चान्द्रायणादि। एष आत्मा लभ्य इत्यनुषङ्गः। सर्व्वत्र सम्यग्ज्ञानेन यथाभूतात्मदर्शनेन ब्रह्मचर्य्येण मैथुनासमाचारेण नित्यं सत्येन नित्यं तपसा नित्यं सम्यग्ज्ञानेनेति सर्व्वत्र नित्यशब्दोऽन्तर्दीपकन्यायेनानुषक्तव्यः। वक्ष्यति च। न येषु जिह्ममनृतं न माया चेति। कोऽसावात्मा य एतैः साधुभिर्लभ्यत इत्युच्यते। अन्तः शरीरेऽन्तर्मध्ये शरीरस्य पुण्डरीकाकाशे ज्योतिर्मयो हि रुक्मवर्णः शुभ्रः शुद्धोऽयमात्मानं

---

सम्यग्ज्ञानसहकारीणीत्यत्र सम्यग्ज्ञानशब्देन वस्तुविषयावगतिफलावसानं वाक्यार्थज्ञानमुच्यते। अवगतिफलस्य स्वकार्य्येऽविद्यानिवृत्तौ सहकार्य्यपेक्षाभावात्। अतोऽपरिपक्वज्ञानस्य सत्यादीनाञ्च परिपक्वविद्याकाभाय सहत्रय दृश्यत एव। नैतावता भास्कराभिमतसिद्धिः। परिपक्वविद्यासहकार्य्यपेक्षायां मानाभावात्। ततः कर्म्मोऽसंज्ञे-

हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥ ५ ॥
सत्यमेव जयते नानृतं सत्येन पन्था विततो देवयानः। येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परमं निधानम् ॥ ६ ॥

---

पश्यन्त्युपलभन्ते यतयो यतनशीलाः सन्न्यासिनः क्षीणदोषाः क्षीणक्रोधादिचित्तमलाः स आत्मा नित्यं सत्यादिसाधनैः सन्न्यासिभिर्लभ्यत इत्यर्थः। न कादाचित्कैः सत्यादिभिर्लभ्यते सत्यसाधनस्तुत्यर्थोऽयमर्थवादः ॥ ५ ॥
सत्यमेव सत्यवानेव जयते जयति नानृतं नानृतवादीत्यर्थः। न हि सत्यानृतयोः केवलयोः पुरुषानाश्रितयोः सम्भवो जयः पराजयो वा सम्भवति। प्रसिद्धं लोकेऽसत्यवानृतवाद्यभिभूयते न विपर्ययोऽतः सिद्धं सत्यस्य बलवत्साधनत्वम्। किञ्च। शास्त्रतोऽप्यवगम्यते सत्यस्य साधनातिशयत्वम्। कथम्। सत्येन यथाभूतवादव्यवस्थया पन्था देवयानाख्यो विततो विस्तीर्णः सातत्येन प्रवृत्तः। येन यथा ह्याक्रमन्ति क्रमन्ते ऋषयो दर्शनवन्तः कुहकमायाशाठ्याहङ्कारदम्भानृतवर्जिता ह्याप्तकामा विगततृष्णाः सर्वतो यत्र यस्मिन् तत्परमार्थतत्त्वं सत्यस्योत्तमसाधनस्य सम्बन्धि साध्यं परमं प्रकृष्टं निधानं पुरुषार्थरूपेण निधीयते प्रवर्त्तते। तत्र च

---

मन्त्रस्त्वाहिंसादीनां कर्मविहीनानां सङ्क्षिप्तवचार्थेति ॥ ५ ॥
कुहकं परवञ्चनमसत्यवचसा स्वीकृत्य बहिरन्यथा प्रकाशनम्। माया शाठ्यं विभवाद्युपायैरप्रदानम्। अहङ्कारो मिथ्याभिमानः। दम्भो धर्मध्वजित्वम्। अनृतमयथादृष्टभाषणम्। एतैर्वर्-

बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्म-तरं विभाति। दूरात्सुदूरे तदिहान्तिके च पश्य-

येन यथा क्रमन्ति सत्येन वितत इति पूर्व्वेण सम्बन्धः। किन्तत्किंधर्मकं तदित्युच्यते॥ ६॥

बृहच्च तन्महच्च तत्प्रकृतं ब्रह्म सत्यादिसाधनेन सर्वतो व्याप्तत्वात्। दिव्यं स्वयम्प्रभमनिन्द्रियगोचरमत एव न चिन्तयितुं शक्यतेऽस्य रूपमित्यचिन्त्यरूपम्। सूक्ष्मादाकाशा-देरपि तत्सूक्ष्मतरं निरतिशयं हि सौक्ष्म्यमस्य सर्वकारण-त्वाद्विभाति विविधमादित्यचन्द्राद्याकारेणाभाति दीप्यते। किञ्च दूराद्विप्रकृष्टदेशात्सुदूरे विप्रकृष्टतरे देशे वर्त्ततेऽवि-दुषामत्यन्तागम्यत्वात्तद्ब्रह्म। इह देहेऽन्तिके समीपे च। विदुषामात्मत्वात् सर्व्वान्तरत्वाच्चाकाशस्याप्यन्तरश्रुतेः। इह पश्यत्सु चेतनावत्स्वित्येतन्निहितं स्थितं दर्शनादिक्रियावत्त्वेन योगिभिर्लक्ष्यमाणम्। क्व। गुहायां बुद्धिलक्षणायाम्। तत्र हि निगूढं लक्ष्यते विद्वद्भिः। तथाप्यविद्यया संवृतं सन्न लक्ष्यते

मैर्वर्जित इत्यर्थः। सत्यस्य निधानं यदुक्तं तत्पुनर्विशेष्यत इत्याह। किन्तत्किंधर्मकन्तदिति॥ ६॥

ज्ञानप्रसादेनेत्यत्र ज्ञायतेऽर्थोऽनेनेति व्युत्पत्त्या बुद्धिरुच्यते। ध्यायमानो ज्ञानप्रसादं लभ्यते। ज्ञानप्रसादेनात्मानं पश्यतीति क्रमो द्रष्टव्यः संशयादिप्रतिबन्धरहितस्य प्रमाणज्ञानस्यैव साक्षात्कारहेतुत्वाद्ध्यान-क्रियायाः प्रमितिसाधनत्वासिद्धेरित्यर्थः। लौहादेश्चित्तादौ चेतनत्व-भ्रमदर्शनाच्चित्तं तस्मिन् स्वसंसर्गिणि च चैतन्याभिव्यञ्जकत्वे स्वभावत एव योग्यम्। ततश्चित्ते परमात्मनोऽभिव्यक्तिसद्भाव-मात्रेण तस्य ज्ञेयत्वमुच्यत इति सम्भावनार्थमाह। प्राणैः पञ्चेन्द्रि-

त्स्मिन्हैव निहितं गुहायाम् ॥ ७ ॥ न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा । ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः ॥ ८ ॥ एषोऽणुरात्मा

---

तत्रस्थमेवाविद्वद्भिः ॥ ७ ॥ पुनरप्यसाधारणोऽप्यसाधारणं तदुपलब्धिसाधनमुच्यते ॥ यस्मान्न चक्षुषा गृह्यते केनचिदप्यरूपत्वान्नापि गृह्यते वाचाऽनभिधेयत्वान्न चान्यैर्देवैरिन्द्रियैः । तपसः सर्वप्राप्तिसाधनत्वेऽपि न तपसा गृह्यते । तथा वैदिकेनाग्निहोत्रादिकर्मणा प्रसिद्धमहत्त्वेनापि न गृह्यते । किं पुनस्तस्य ग्रहणसाधनमित्याह । ज्ञानप्रसादेनात्मावबोधनसमर्थमपि स्वभावेन सर्वप्राणिनां ज्ञानं बाह्यविषयरागादिदोषकलुषितमप्रसन्नमशुद्धं सन्नावबोधयति नित्यं सन्निहितमप्यात्मतत्त्वं मलावनद्धमिवादर्शम् । विलुलितमिव सलिलम् । तद्यदेन्द्रियविषयसंसर्गजनितरागादिमलकालुष्यापनयनादादर्शसलिलादिवत्प्रसादितं स्वच्छं शान्तमवतिष्ठते तदा ज्ञानस्य प्रसादः स्यात् । तेन विशुद्धान्तःकरणो योग्यो ब्रह्म द्रष्टुं यस्मात्तस्मात्तमात्मानं पश्यते पश्यति उपलभते निष्कलं सर्वावयवभेदवर्जितं ध्यायमानः सत्यादिसाधनतानुपसंहृतकरण एकाग्रेण मनसा ध्यायमानश्चिन्तयन्नयमात्मानमेव पश्यतीति ॥ ८ ॥ एषोऽणुः

---

द्वेश्चित्तमिति ॥ ओतं चैतस्मिन सर्वस्य तर्हि चित्ते किमिति ब्रह्म स्वत एवापरोक्षं न भवतीत्यत आह । यस्मिन् चित्त इति ॥ सगुणवि-

चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश। प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन् विशुद्धे विभवत्येष आत्मा॥ ९ ॥ यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान्। तं तं लोकं जायते तांश्च कामांस्तस्मादात्मज्ञं

---

सूक्ष्मश्चेतसा विशुद्धज्ञानेन केवलेन वेदितव्यः। क्वासौ। यस्मिञ्छरीरे प्राणो वायुः पञ्चधा प्राणापानादिभेदेन संविवेश सम्यक्प्रविष्टस्तस्मिन्नेव शरीरे हृदये चेतसा ज्ञेय इत्यर्थः। कीदृशेन चेतसा वेदितव्य इत्याह। प्राणैः सहेन्द्रियैश्चित्तं सर्वमन्तःकरणं प्रजानामोतं व्याप्तं येन क्षीरमिव स्नेहेन काष्ठमिवाग्निना। सर्वं हि प्रजानामन्तःकरणं चेतनावत्प्रसिद्धं लोके। यस्मिंश्च चित्ते क्लेशादिमलवियुक्ते शुद्धे विभवत्येष य उक्त आत्मा विशेषेण स्वेनात्मना विभवत्यात्मानं प्रकाशयतीत्यर्थः ॥ ९ ॥ य एवमुक्तलक्षणं सर्वात्मानमात्मत्वेन प्रतिपन्नस्तस्य सर्वात्मत्वादेव सर्वावाप्तिलक्षणं फलमाह। यं यं लोकं पित्रादिलक्षणं मनसा संविभाति सङ्कल्पयति मह्यमन्यस्मै वा भवेदिति विशुद्धसत्त्वः क्षीणक्लेश आत्मविन्निर्मलान्तःकरणः कामयते यांश्च कामान् प्रार्थयते भोगांस्तं तं लोकं जयते प्राप्नोति तांश्च कामान् सङ्कल्पितान् भोगान्। तस्माद्विदुषः सत्य-

---

द्याफलमपि निर्गुणविद्यास्तुतये प्ररोचनार्थमुच्यते। यं यमिति परमार्थ-

ह्यर्च्चयेद्भूतिकामः ॥ १० ॥ इति तृतीयमुण्डके प्रथमः खण्डः ॥ १ ॥

स वेदैतत्परमं ब्रह्म धाम यत्र विश्वं निहितं भाति शुभ्रम्। उपासते पुरुषं ये ह्यकामास्ते शुक्र-मेतदतिवर्त्तन्ति धीराः ॥ १ ॥ कामान् यः काम-

---

सङ्कल्पत्वादात्मज्ञमात्मज्ञानेन विशुद्धान्तःकरणं ह्यर्च्चये-त्पूजयेत् पादप्रक्षालनशुश्रूषानमस्कारादिभिर्भूतिकामो विभूतिमिच्छुः। ततः पूजार्ह एवासौ ॥ १० ॥ इति तृती-यमुण्डके प्रथमखण्डभाष्यम् ॥ १ ॥

यस्मात्स वेद जानात्यसावेतद्यथोक्तलक्षणं परमं ब्रह्म प्रकृष्टं धाम सर्वकामानामाश्रयमास्पदं यत्र यस्मिन् ब्रह्मणि धाम्नि विश्वं समस्तं जगन्निहितमर्पितं यच्च स्वेन ज्योतिषा भाति शुभ्रं शुद्धम्। तमप्येवमात्मज्ञं पुरुषं ये ह्यकामा विभूतितृष्णावर्जिता मुमुक्षवः सन्त उपासते परमिव देवं ते शुक्रं नृबीजं यदेतत्प्रसिद्धं शरीरोपादान-कारणमतिवर्त्तन्तेऽतिगच्छन्ति धीरा बुद्धिमन्तो न पुन-र्योनिं प्रसर्पन्ति। न पुनः क्व रतिं करोतीति श्रुतेः। अतस्तं पूजयेदित्यभिप्रायः॥ १ ॥ मुमुक्षोः कामत्याग

---

तत्स्वस्थानादित्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ इति तृतीयमुण्डके प्रथमखण्डभाष्यटीका ॥ १ ॥

विषयेषु यथास्थितदोषदर्शनात्पर्याप्तकामः क्षीणरागो विरक्तस्तथया-ऽऽत्मकामस्यात्मबुभुत्सयैव पर्याप्तचित्तस्य विषयेभ्यः कामा निवृत्ता

यते मन्यमानः स कामभिर्जायते तत्र तत्र। पर्य्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामाः ॥ २ ॥ नायमात्मा प्रवचनेन

---

एव प्रधानं साधनमित्येतद्दर्शयति । कामान् यो दृष्टादृष्टेष्टविषयान् कामयते मन्यमानस्तद्गुणांश्चिन्तयानः प्रार्थयते स तैः कामभिः कामैर्धर्म्माधर्म्मप्रवृत्तिहेतुभिर्विषयेच्छारूपैः सह जायते तत्र तत्र। यत्र यत्र विषयप्राप्तिनिमित्तकामाः कर्म्मसु पुरुषं नियोजयन्ति तत्र तत्र तेषु तेषु विषयेषु तैरेव कामैर्वेष्टितो जायते। यस्तु परमार्थतत्त्वविज्ञानात् पर्य्याप्तकाम आत्मकामत्वेन परि समन्ततं आप्ताः कामा यस्य तस्य पर्य्याप्तकामस्य कृतात्मनोऽविद्यालक्षणादपररूपादपनीय स्वेन परेण रूपेण कृत आत्मा विद्यया यस्य तस्य कृतात्मनस्त्विहैव तिष्ठत्येव शरीरे। सर्वे धर्म्माधर्म्मप्रवृत्तिहेतवः प्रविलीयन्ति विलयमुपयन्ति नश्यन्तीत्यर्थः। कामास्तज्जन्महेतुविनाशान्न जायन्त इत्यभिप्रायः ॥ २ ॥ यद्येवं सर्वलाभात्परमात्मलाभस्तल्लाभाय

---

भवन्तीत्यर्थः सामर्थ्यादवगम्यते। स्वहेतुविनाशात्पुनः कामा न जायन्त इति॥ जातानां नाशं विनापि क्षयसम्भवादित्यर्थः। न बहुना श्रुतेनेति श्रवणनिर्वाहकव्यतिरिक्तेनेत्यर्थः। तेन वरणेनेति कथं व्याख्यानं यत्तदोर्भिन्नार्थत्वं साधनविवक्षायाः प्रस्तुतत्वादित्यर्थं ब्रूमः। परमात्मात्मनोरभेदानुसन्धानं वरणम्। तेन वरणेनैष आत्मा लभ्यो भवति। बहिर्मुखेन तु यतमानोऽपि प्रवचनादौ क्रियमाणे न लभ्यते। अतः पर-

लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वाम् ॥ ३ ॥

नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाप्यलिङ्गात् । एतैरुपायैर्यतते यस्तु

---

प्रवचनादय उपाया बाहुल्येन कर्त्तव्या इति प्राप्त इदमुच्यते । योऽयमात्मा व्याख्यातो यस्य लाभः परः पुरुषार्थो नाऽसौ वेदशास्त्राध्ययनबाहुल्येन प्रवचनेन लभ्यः। तथा न मेधया ग्रन्थार्थधारणशक्त्या । न बहुना श्रुतेन नापि भूयसा श्रवणेनेत्यर्थः । केन तर्हि लभ्य इत्युच्यते । यमेव परमात्मानमेष विद्वान् वृणुते प्राप्तुमिच्छति तेन वरणेनैष परमात्मा लभ्यः नान्येन साधनान्तरेण । नित्यलब्धस्वभावत्वात् । कीदृशोऽसौ विदुष आत्मलाभ इत्युच्यते । तस्यैष आत्माऽविद्यासञ्छन्नां स्वां परां तनूं स्वात्मतत्त्वस्वरूपां विवृणुते प्रकाशयति प्रकाश इव घटादिर्विद्यायां सत्यामाविर्भवतीत्यर्थः ॥ ३ ॥

तस्मादन्यत्यागेनात्मलाभप्रार्थनैवाऽऽत्मलाभसाधनमित्यर्थः । आत्मप्रार्थनासहायभूतान्येतानि च साधनानि बला-

---

मात्माऽस्मीत्यनुसन्धानं परमात्मभजनं पुरस्कृत्यैव श्रवणादि सम्पादनीयमिति भावः । अथवाऽयमेव परमात्मानं वृणुते तेन परमात्मना स्वस्वरूपव्यवस्थितेन वरणेनाभेदानुसन्धानलक्षणेन प्रार्थनेन कृत्वा लभ्यः परमात्मैव स्वस्वरूपव्यवस्थित इत्यभेदानुसन्धानेनैव लभ्यो न कर्मणेत्यर्थः ॥ १ ॥ २ ॥ ३ ॥

वीर्यमिति मिथ्याज्ञानानभिभाव्यत्वलक्षणो विशेषः । अविद्या-

विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम ॥ ४ ॥
संप्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः
प्रशान्ताः। ते सर्वगं सर्वतः प्राप्य धीरा युक्ता-

प्रमादतपांसि लिङ्गयुक्तानि संन्याससहितानि। यस्मादयमात्मा बलहीनेन बलप्रहीणेनात्मनिष्ठाजनितवीर्यहीनेन न लभ्यो नापि लौकिकपुत्रपश्वादिविषयासङ्गनिमित्तप्रमादात्। तथा तपसो वाप्यलिङ्गाल्लिङ्गरहितात्। तपोऽत्र ज्ञानम्। लिङ्गं संन्यासस्तत्संन्यासरहितात् ज्ञानान्न लभ्य इत्यर्थः। एतैरुपायैर्बलाप्रमादसंन्यासज्ञानैर्यतते तत्परः सन् प्रयतते। यस्तु विद्वान् विवेकी आत्मवित् तस्य विदुषः आत्मा एष विशते संप्रविशति ब्रह्मधाम ॥ ४ ॥
कथं ब्रह्म विशत इत्युच्यते। संप्राप्य समवगम्यैनमात्मानमृषयो दर्शनवन्तस्तेनैव ज्ञानेन तृप्ता न बाह्येन तृप्तिसाधनेन शरीरोपचयकारणेन। कृतात्मानः परमात्मस्वरूपेणैव निष्पन्नात्मानः सन्तः। वीतरागा विगतरागादिदोषाः। प्रशान्ता उपरतेन्द्रियाः। त एवम्भूताः सर्वगं सर्वव्यापिनमाकाशवत्सर्वतः सर्वत्र प्राप्य नोपाधिपरिच्छिन्नेनैकदेशेन। किन्तर्हि ब्रह्मैवाद्वयमात्मत्वेन प्रतिपद्य धीरा अत्यन्तविवेकिनो युक्तात्मानो नित्यसमाहितस्वभावाः सर्वमेव समस्तं शरीरपातकालेऽप्याविशन्ति भिन्न-

---

हिनि कथम्। इन्द्रजनकगार्गीप्रभृतीनामप्यात्मलाभश्रवणात्। सत्यं संन्यासो नाम सर्वत्यागात्मकस्तेषामपि स्वत्वाभिमानाभावादस्त्येवा-

त्मानः सर्वमेवाविशन्ति ॥ ५ ॥ वेदान्तविज्ञान-सुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।

---

घटाकाशवदविद्याकृतोपाधिपरिच्छेदं जहाति । एवं ब्रह्मविदो ब्रह्मधाम प्रविशन्ति ॥ ५ ॥ किञ्च वेदान्तजनितविज्ञानं वेदान्तविज्ञानं तस्यार्थः परमात्मा विज्ञेयः सोऽर्थः सुनिश्चितो येषां ते वेदान्तविज्ञानसुनिश्चितार्थाः । ते च संन्यासयोगात् सर्व्वकर्म्मपरित्यागलक्षणयोगात् केवलब्रह्मनिष्ठा स्वरूपाद्योगाद्यतयो यत्नशीलाः शुद्धसत्त्वाः शुद्धं सत्त्वं येषां संन्यासयोगात्ते शुद्धसत्त्वाः । ते ब्रह्मलोकेषु । संसारिणां ये मरणकालास्ते परान्तकालास्तानपेक्ष्य मुमुक्षूणां संसारावसाने देहपरित्यागकालः परान्तकालस्तस्मिन् परान्तकाले साधकानां बहुत्वाद्ब्रह्मैव लोको ब्रह्मलोक एकोऽप्यनेकवद्दृश्यते प्राप्यते च । अतो बहुवचनं ब्रह्मलोकेष्विति ब्रह्मणीत्यर्थः । परामृताः परममृतममरणधर्म्मकं ब्रह्मात्मभूतं येषां ते परामृता जीवन्त एव ब्रह्मभूताः परामृताः सन्तः परिमुच्यन्ति परिसमन्तात्प्रदीपनिर्व्वाणवद्घटाकाशवच्च निर्वृतिमुपयन्ति परिमुच्यन्ति परिसमन्तान्मुच्यन्ते सर्व्वे न देशान्तरं गन्तव्यमपेक्षन्ते । शकुनीनामिवाकाशे जले वारिचरस्य च । पदं यथा न दृश्येत तथा ज्ञानविदां

---

ऽऽन्तरः संन्यासो वाङ्मात्रं लिङ्गमविवक्षितम् ॥ न लिङ्गं धर्म्मकारणमिति स्मरणात् । नैष्कर्म्यसाधनत्वन्तु विवक्षितं प्रदीपस्य वर्त्तितैलादिच्छेदध्वंसे यथा तेजःसामान्यतापत्तिस्तद्वदित्याह । प्रदीपनिर्व्वाणवदिति ।

ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमु
च्यन्ति सर्वे ॥ ६ ॥

गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रति-
देवतासु। कर्म्माणि विज्ञानमयश्च आत्मा परे

---

गतिः। अनध्वगा अध्वसु पारयिष्णव इति श्रुतिस्मृतिभ्यां देशपरिच्छिन्ना हि गतिः संसारविषयैव। परिच्छिन्नसाधनसाध्यत्वात्। ब्रह्म तु समस्तत्वान्न देशपरिच्छेदेन गन्तव्यम्। यदि हि देशपरिच्छिन्नं ब्रह्म स्यान्मूर्त्तद्रव्यवदाद्यन्तवदन्याश्रितं सावयवमनित्यं कृतकञ्च स्यात्। न त्वेवंविधं ब्रह्म भवितुमर्हति। अतस्तत्प्राप्तिश्च नैव देशपरिच्छिन्ना भवितुं युक्ता ॥ ६ ॥

अपि चाविद्यादिसंसारबन्धापनयनमेव मोक्षमिच्छन्ति ब्रह्मविदो न तु कार्य्यभूतम्। किञ्च मोक्षकाले या देहारम्भकाः कलाः प्राणाद्यास्ताःस्वाः प्रतिष्ठाः प्रतिष्ठाङ्गताः स्वं स्वं कारणं गता भवन्तीत्यर्थः। प्रतिष्ठा इति द्वितीयाबहुवचनम्। पञ्चदश पञ्चदशसङ्ख्यका या अन्त्यप्रश्न-

---

पदं पादन्यासः। प्रतिबिम्बं न दृश्येताभावादेवेत्यर्थः॥ अध्वस्विति संसाराध्वनां पारयिष्णवः पारयितुं समापयितुमिच्छन्तीति समाप्तिकामा अनध्वगा भवन्तीत्यर्थः। तर्कतोऽपीहैव मोक्षो वक्तव्य इत्याह। देशपरिच्छिन्ना हीत्यादिना ॥ ४ ॥ ५ ॥ ६ ॥

स्वाः प्रतिष्ठाः प्रतिगता भवन्तीति भूतानामां भौतिकानाञ्च महाभूतेषु लयो दर्शितः। अन्त्यप्रश्नेतिमाह्रुपपन्ने षष्ठप्रश्ने प्राण

ऽव्यये सर्व एकीभवन्ति ॥ ७ ॥ यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमु-

---

परिपठिताः प्रसिद्धा देवाश्च देहाश्रयाश्चक्षुरादिकरणस्थाः सर्व्वे प्रतिदेवतास्वादित्यादिषु गता भवन्तीत्यर्थः। यानि च मुमुक्षुणा कृतानि कर्म्माण्यप्रवृत्तफलानि प्रवृत्तफलानामुपभोगेनैव क्षीणत्वाद्विज्ञानमयश्चात्माऽविद्याकृतबुद्ध्याद्युपाधिमात्मत्वेन मत्वा जलादिषु सूर्य्यादिप्रतिबिम्बवदिह प्रविष्टो देहभेदेषु कर्म्मणां तत्फलार्थत्वात्सह तेनैव विज्ञानमयेनात्मना। अतो विज्ञानमयो विज्ञानप्रायः। ते एते कर्म्माणि विज्ञानमयश्चात्मोपाध्यपनयनेन सति परेऽव्ययेऽनन्तेऽक्षये ब्रह्मण्याकाशकल्पेऽजेऽजरेऽमृतेऽभयेऽपूर्व्वेऽनपरेऽनन्तरेऽबाह्येऽद्वये शिवे शान्ते सर्व्वे एकीभवन्त्यविशेषतां गच्छन्त्येकत्वमापद्यन्ते जलाद्याधारापनय इव सूर्य्यादिप्रतिबिम्बाः सूर्य्ये घटाद्यपनयनाकाशे घटाद्याकाशः ॥ ७ ॥ किञ्च यथा नद्यो गङ्गाद्याः स्यन्दमाना गच्छन्त्यः समुद्रं प्राप्यास्तमदर्शनमविशेषात्मभावं गच्छन्ति प्राप्नुवन्ति नाम च रूपञ्च नामरूपे विहाय हित्वा तथाऽविद्याकृतनामरूपाद्विमुक्तः सन् परादक्षरात्पूर्व्वोक्तात्परं

---

प्रश्नाद्या याः कलाः पठिता इत्यर्थः। मायामयमहाभूतांशावष्टब्धे जीवाविद्यामयभूतसूक्ष्मैः प्रातिस्विकैरदृष्टसंसृष्टैः प्रातिस्विकाः प्राणादय

पैति दिव्यम् ॥८॥ स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति। नास्याब्रह्मवित्कुले भवति। तरति शोकं, तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ॥ ९ ॥ तदेतदृचाऽभ्युक्तं

---

दिव्यं पुरुषं यथोक्तलक्षणमुपैत्युपगच्छति ॥ ८ ॥ ननु श्रेयस्यनेके विघ्नाः प्रसिद्धा अतः क्लेशानामन्यतमेनान्येन वा देवादिना च विघ्नतो ब्रह्मविदप्यन्यां गतो गच्छति न ब्रह्मैव। न विद्ययैव सर्व्वप्रतिबन्धस्यापनीतत्वात्। अविद्याप्रतिबन्धमात्रे हि मोक्षो नान्यप्रतिबन्धः। नित्यत्वादात्मभूतत्वाच्च। तस्मात्स यः कश्चिद्ध वै लोके तत्परमं ब्रह्म वेद साक्षादहमेवास्मीति स नान्याङ्गतिं गच्छति। देवैरपि अस्य ब्रह्मप्राप्तिं प्रति विघ्नो न शक्यते कर्त्तुम्। आत्मा ह्येषां प्रभवति। तस्माद्ब्रह्मविद्विद्वान् ब्रह्मैव भवति। किञ्च नास्य विदुषोऽब्रह्मवित्कुले भवति। किञ्च तरति शोकमनेकेष्टवैकल्यनिमित्तं मानसं सन्तापं जीवन्नेवातिक्रान्तो भवति। तरति पाप्मानं धर्म्माधर्म्माख्यं गुहाग्रन्थिभ्यो विमुक्तः सन्नमृतो भवतीत्युक्तमेव भिद्यते हृदयग्रन्थिरित्यादि ॥९॥ अथेदानीं ब्रह्मविद्यासम्प्रदानविध्युपदर्शनेनोप-

---

आरभ्यन्ते। ते च कर्म्मक्षिप्तैर्देवैः सूर्य्यादिभिरधिष्ठीयन्ते। कर्म्मणो भोगेनावसाने ते देवाः स्वस्थानं गच्छन्ति। यच्च प्रातिस्विकं स्वाविद्याकार्य्यं तच्च सर्व्वं ब्रह्मैव सम्पद्यत इत्याह। यानि चेत्यादिना ॥ ७ ॥ ८ ॥

क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः। स्वयं जुह्वत एकर्षिं श्रद्धयन्तस्तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम् ॥१०॥ तदेतत् सत्यमृषिरङ्गिराः पुरोवाच नैतदचीर्णव्रतोऽधीते।

---

संस्कारः क्रियते। तदेतद्विद्यासम्प्रदानविधानचया मन्त्रेणाभ्युक्तमभिप्रकाशितं। क्रियावन्तो यथोक्तकर्म्मानुष्ठानयुक्ताः। श्रोत्रिया ब्रह्मनिष्ठा अपरस्मिन् ब्रह्मण्यभियुक्ताः परब्रह्म बुभुत्सवः स्वयमेकर्षिमेकर्षिनामानमग्निं जुह्वते जुह्वति श्रद्धयन्तः श्रद्दधानाः सन्तो ये तेषामेव संस्कृतात्मनां पात्रभूतानामेतां ब्रह्मविद्यां वदेत ब्रूयाच्छिरोव्रतं शिरस्यग्निधारणलक्षणम्। यथाऽऽथर्व्वणानां वेदे व्रतं प्रसिद्धम्। यैस्तु यैश्च तच्चीर्णं विधिवद्यथाविधानं तेषामेव च वदेत॥ १० ॥ तदेतदक्षरं पुरुषं सत्यमृषिरङ्गिरा नाम पुरा पूर्व्वं शौनकाय विधिवदुपसन्नाय पृष्टवते उवाच। तद्वदन्योऽपि तथैव श्रेयोऽर्थिने मुमुक्षवे मोक्षार्थं विधिवदुपसन्नाय ब्रूयादित्यर्थः। नैतद्ग्रन्थरूपमचीर्णव्रतोऽचरितव्रतो नाप्यधीते। नयवति चीर्णव्रतस्य हि विद्या फलाय संस्कृता भवतीति॥ समाप्ता ब्रह्मविद्या सा येभ्यो ब्रह्मादिभ्यः पारम्पर्य्यक्रमेण सम्प्राप्ता तेभ्यो नमः परमऋषिभ्यः। परमं ब्रह्म साक्षा-

---

एतद्ग्रन्थद्वारकविद्याप्रदानेऽयं विधिराथर्व्वणिकानामिति प्रकृतपरामर्शादेत च्छब्दादवगम्यते ग्रन्थद्वारेण विद्यायाःप्रकृतत्वसम्भवात् वर्णित ब्रह्मविद्या-

नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ११ ॥

इति तृतीयमुण्डके द्वितीयः खण्डः ॥ २ ॥

मुण्डकोपनिषत्समाप्ता ॥ ॐ तत्सत् ॥ ॥

---

दृष्टवन्तो ये ब्रह्मादयोऽवगतवन्तश्च ते परमर्षयस्तेभ्यो भूयोऽपि नमः । द्विर्वचनमत्यन्तादरार्थं मुण्डकसमाप्त्यर्थञ्च ॥ ११ ॥ इति तृतीयमुण्डकोपनिषद्भाष्ये द्वितीयः खण्डः ॥२॥ इति श्रीगोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकस्य श्रीमच्छङ्करभगवतः कृतावाथर्वणमुण्डकोपनिषद्भाष्यं समाप्तम् ॥ ॐ तत्सत् ॥

---

सम्प्रदानमिति सूचयन्नाह । एतां ब्रह्मविद्यां वदेतेति॥ ८ ॥ १० ॥ ११ ॥इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दज्ञानविरचितं मुण्डकभाष्यव्याख्यानं समाप्तम् ॥ ॐ तत्सत् ॥ हरिः ॐ ॥

---

## सगौडपादीयकारिकाथर्ववेदीयमाण्डूक्योपनिषद्भाष्यम्॥

ॐ नमः परमात्मने॥ प्रज्ञानांशुप्रतानैः स्थिरचरनिकरव्यापिभिर्व्याप्य लोकान् भुक्त्वा भोगान् स्थविष्ठान् पुनरपि धिषणोद्भासितान् कामजन्यान्। पीत्वा सर्वान्

---

सगौडपादीयकारिकाथर्ववेदीयमाण्डूक्योपनिषद्भाष्यटीका॥

॥ॐ॥ परिपूर्णपरिज्ञानपरितृप्तिमते यते।
विष्णवे जिष्णवे तस्मै ब्रह्मनामभृते नमः॥१॥
शुद्धानन्दपदाम्भोजद्वन्द्वमद्वन्द्वतास्पदम्।
नमस्कुर्मः पुरस्कर्तुं तत्त्वज्ञानमहोदयम्॥२॥
गौडपादीयभाष्यं हि प्रसन्नमिव लक्ष्यते।
तदर्थतोऽतिगम्भीरं व्याकरिष्ये स्वशक्तितः॥३॥
पूर्वे यद्यपि विद्वांसो व्याख्यामिह चक्रिरे।
तथापि मन्दबुद्धीनामुपकाराय यत्यते॥४॥

श्रीगौडपादाचार्यस्य नारायणप्रसादतः प्रतिपन्नान्माण्डूक्योपनिषदर्थाविष्कारपरानपि श्लोकानाचार्यप्रणीतान् व्याचिख्यासुर्भगवान् भाष्यकारश्चिकीर्षितस्य भाष्यस्याविघ्नपरिसमाप्त्यादिसिद्धये परदेवतातत्त्वानुस्मरणपूर्वकं तन्नमस्काररूपं मङ्गलाचरणं शिष्टाचारप्रमाणकं स्वतः समाचरन्नर्थादपेक्षितमभिधेयाद्यनुबन्धमपि सूचयति। प्रज्ञानेत्यादिना॥ तत्र विधिमुखेन वस्तुप्रतिपादनमिति प्रक्रियां प्रदर्शयति। यत्परं ब्रह्म तन्नतोऽस्मीति। अस्मदर्थस्य तदैक्यस्मरणरूपं नमनं सूचयतो ब्रह्मपदार्थस्य प्रत्यक्त्वं सूचितमिति तत्त्वमर्थयोरैक्यं विषयो ध्वनितः। यच्छब्दस्य प्रसिद्धार्थावद्योतकत्वाद्वेदान्तप्रसिद्धं यद्ब्रह्म तन्नतोऽस्मीति सम्बन्धेन मङ्गलाचरणमपि स्फुटं क्रियते। ब्रह्मणोऽद्वितीयत्वादेव जननमरणकारणाभावादमृतमजमित्युक्तम्। जननमरणप्रबन्धस्य संसारत्वात्तन्निषेधेन स्वतोऽसंसारित्वं दर्शयता संसारानर्थनिवृत्तिरिह प्रयोजनमिति द्योतितम्। यद्यद्वितीयं स्वतोऽसंसारि ब्रह्म वेदान्तप्रमाणकं तर्हि कथमवस्थात्रयविशिष्टा जीवा भोक्तारोऽनुभूयन्ते भोजयिता चेश्वरः

विशेषान् स्वपिति मधुरभुङ्मायया भोजयन् नो माया-

---

स्वप्ने भोक्ता च विषयजातं पृथगुपलभ्यते। तदेतदद्वैते विरुध्येतेत्याशङ्क्य ब्रह्मण्येव जीवा जगदीश्वरश्चेति सर्व्वं काल्पनिकं सम्भवतीत्यभिप्रेत्याह। प्रशान्तेति॥ प्रशान्तं जन्मादिविक्रियाविरहितं कूटस्थं ज्ञानं चिद्रूपं वस्तु प्रशान्तं तच्च ब्रह्म। प्रशान्तं ब्रह्मेति श्रुतेः। तस्यांशवो रश्मयो जीवाश्चिदाभासाः सूर्य्यप्रतिबिम्बकल्पा निरूप्यमाणा बिम्बकल्पा ब्रह्मणो भेदेनासन्तस्तेषां प्रतानाः विस्तारास्तैरपर्य्यायमेवाशेषशरीरव्यापिभिः॥ तदेवाह। स्थिरेति॥ स्थिरा वृक्षादयः। चरा मनुष्यादयः। तेषां निकरः समूहस्तं व्याप्तुं शीलमेषामिति तथा तैरिति यावत्। भोक्ता भोक्ष्यमाणा विषयास्तान् व्याप्येति विषयसम्बन्धोक्तिस्तत्फलं कथयति। भोगाः सुखदुःखादिसाक्षात्कारास्तेषां स्थविष्ठत्वं स्थूलतमत्वं देवतानुग्रहीतबाह्येन्द्रियद्वारा बुद्धेस्तत्तद्विषयाकारपरिणामजन्यत्वं तान् भुक्त्वा स्वपितीति सम्बन्धः॥ एतेन जागरितं ब्रह्मणि कल्पितमुक्तम्॥ तत्रैव स्वप्नकल्पनां दर्शयति। पुनरपीति॥ जाग्रद्धेतुधर्म्माधर्म्मक्षयानन्तर्य्यं पुनःशब्दार्थः। स्वप्नहेतुकर्म्मोद्भवे च सतीत्यपि नोच्यते। न च तत्र बाह्यानीन्द्रियाणि स्थूला विषयाश्च सन्ति किन्तु धिषणावच्छिन्नसुखात्मानो वासनात्मानो विषया भासन्ते ताननुभूय स्वपितीत्यर्थः॥ तेषां प्रापकमुपन्यस्यति। काम अन्धानिति॥ कामग्रहणं कर्म्माविद्ययोरुपलक्षणार्थम्॥ अवस्थाद्वयकल्पनां ब्रह्मणि दर्शयित्वा तत्रैव सुषुप्तिकल्पनां दर्शयति। पीत्वेति॥ सर्व्वे विशेषाः सर्व्वे विषयाः स्थूलाः सूक्ष्माश्च जागरितस्वप्नरूपास्तान् पीत्वा स्वात्मन्युपशान्ते प्रविलाप्य स्वपिति कारणभावेन तिष्ठतीत्यर्थः॥ तत्रानन्दप्राधान्यमभिप्रेत्य विशिनष्टि। मधुरभुगिति। अवस्थात्रयस्य मायाकृतस्य मिथ्याभूतस्य प्रतिबिम्बकल्पे त्वस्मासु सम्बन्धितामिवापाद्यास्मान् भोजयन्नास्ते वर्त्तते। अतो ब्रह्मण्येवावस्थात्रयं तद्वन्तो जीवा मायावि ब्रह्म च ब्रह्मणि परिशुद्धे परिकल्पितं सर्व्वमित्याह। माययेति॥ तस्यैव ब्रह्मणोऽवस्थात्रयातीतत्वेन विशुद्धिमात्रत्वं दर्शयति। तुरीयमिति॥ चतुर्णां पूरणं तुरीयमिति व्युत्पत्तेर्ब्रह्मणस्तुरीय-

सङ्ख्यातुरीयं परममृतमजं ब्रह्म यत्तन्नतोऽस्मि ॥ १ ॥
यो विश्वात्मा विधिजविषयान् प्राश्य भोगान् स्थविष्ठान् ।
पश्चाच्चान्यान् स्वमतिविभवान् ज्योतिषा स्वेन सूक्ष्मान् ।

---

त्वेन निर्दिश्यमानं सद्वितीयत्वमित्याशङ्क्य कल्पितस्थानत्रयसङ्ख्यापेक्षया तुरीयत्वं न सद्वितीयत्वेनेत्याह । मायेति ॥ मायाविरहेण निरूढत्वमाशङ्क्योक्तम् । परमिति । मायाद्वारा ब्रह्मप्रपञ्चसम्बन्धेऽपि स्वरूपद्वारा न तत्सम्बन्धोऽस्तीति कुतो निरूढतेत्यर्थः ॥ १ ॥

विधिमुखेन वस्तुप्रतिपादनप्रक्रियामवलम्ब्य तदर्थेनोपक्रम्य तस्य त्वमर्थप्रत्यगात्ममात्रत्वमुक्तम् । अभिधेयफलोक्त्या सम्बन्धाधिकारिणौ च सूचितौ । सम्प्रति निषेधद्वारा वस्तुप्रतिपादनप्रक्रियामाश्रित्य त्वमर्थेनोपक्रम्य तस्य तदर्थसंसारिब्रह्ममात्रत्वं प्रत्याययति । यो विश्वात्मेति । तत्र त्वमर्थः स्वतः सिद्धचिद्धातुः सर्वनाम्ना परामृश्यते । तस्मिञ्जागरितमारोपितन्तमुदाहरति । विश्वात्मेति ॥ विश्वं पञ्चीकृतपञ्चमहाभूततत्कार्यात्मकं स्थूलं जगद्वैराजं शरीरम् । तस्मिञ्जागरिते चाहं ममेत्यभिमानवानित्यर्थः ॥ तस्यार्थक्रियामुपन्यस्यति । विधिजेति ॥ विधीयत इति विधिर्धर्मो नञानुबन्धेन ततो व्यतिरिक्तो विधिरधर्मस्ताभ्यां धर्माधर्माभ्यामविद्याकामप्रसूताभ्यां विषयाः शब्दादयो जन्यन्ते । तान् भोगयोग्यतया भोगशब्दितानादित्याद्यनुगृहीतबाह्येन्द्रियद्वारकबुद्धिपरिणामगोचरतया स्थूलतमान् प्राश्य साक्षादनुभूय स्थितोऽयं प्रत्यगात्मेत्यर्थः । तत्रैव स्वप्नावस्थामध्यस्यति । पश्चाच्चेति ॥ जागरितकर्मक्षयानन्तरं स्वप्नहेतुकर्मोद्भवे च सति स्थूलेभ्यो विषयेभ्योऽन्यानन्यादेव हेतोः सूक्ष्मान् बाह्येन्द्रियाणामुपरतत्वादविद्याकामकर्मप्रेरितात्मीयमतिप्रभावादेव प्रसूतानन्तःकरणात्मनो वासनामयानादित्यादिज्योतिषामस्तमितत्वादात्मभूतेनैव ज्योतिषा विषयीकृताननुभूयापञ्चीकृतपञ्चमहाभूततत्कार्यात्मकं सूक्ष्मं प्रपञ्चं हैरण्यगर्भं शरीरं स्वप्नस्थानञ्चाभिमन्यमानस्तैजसो भवतीत्यर्थः ॥ तत्रैव सुषुप्तत्वमां दर्शयति । सर्वानिति ॥ स्थूलसूक्ष्मविभागेन स्थानद्वयावच्छिन्नान् प्रकृतानेतानशेषानपि विशेषानुपाधिद्वयद्वारकस्थानद्वयसञ्चारप्रयुक्त-

सर्व्वानेतान् पुनरपि शनैः स्वात्मनि स्थापयित्वा हित्वा सर्व्वान् विशेषान् विगतगुणगणः पात्वसौ नस्तुरीयः ॥ २ ॥

---

अमोद्भवानन्तरं तथापि परिजिहीर्षया शनैरनुक्रमेणाक्रमेण वा स्वात्मन्यथाते कारणात्मनि स्थापयित्वोपसंहृत्याव्याकृतप्रधानः सन् प्राज्ञो भवतीत्यर्थः ॥ तस्यैव प्रत्यगात्मनः स्थानत्रयविशिष्टस्य नान्तःप्रज्ञं न बहिःप्रज्ञमित्यादिप्रतिषेधशास्त्रप्रसूतप्रमाणज्ञानबलादृढस्य सर्व्वान-नर्थविशेषान् कार्य्यकारणरूपान् प्रमाणज्ञानप्रभावादेव हित्वा निरुपाधिकपरिपूर्णपरिज्ञानपरमात्मस्वरूपेण परिनिष्पन्नं तत्त्वं कथयति । हित्वेति ॥ प्रथमश्लोकेन प्रदर्शितप्रणामस्य प्रत्यूहप्रवाहप्र-शमनात्मकं प्रयोजनं स्थानत्रयप्रकल्पनातीतं परवस्तुप्रयुक्तं प्रार्थ्यते द्वितीयेन । पात्विति ॥ सोऽस्मान् व्याख्यातृत्वेन श्रोतृत्वेन च व्यव-स्थितान् पुरुषार्थपरिपन्थितत्कारणनिरासपुरःसरं परमात्मा परास्त-ताशेषकल्पनो नित्यविज्ञप्तिस्वभावो मोक्षप्रदानेन तद्धेतुज्ञानप्रदानेन च परिरक्षतादित्यर्थः ॥ केचित्तु प्रकरणचतुष्टयात्मनो ग्रन्थस्य वेदा न्तैकदेशसम्बद्धत्वज्ञापनार्थं निष्प्रपञ्चं वाक्यप्रतिपाद्यं ब्रह्म प्रथमश्लोकेन सूचितम् । द्वितीयेन माण्डूक्यश्रुतिव्याख्यानरूपेणाद्यप्रकरणेन प्रण-वमात्राणामात्मपादानामैकीकरणेन प्रतिपाद्यं ब्रह्म सूचितमिति म-न्यन्ते । न च द्वितीयश्लोके चतुर्थपादे वृत्तलक्षणाभावादस्याश्लोकत्वमाशङ्कनीयम् । गाथालक्षणस्य तत्र सम्भवत्त्वादिति द्रष्टव्यम् । अन्ये त्वाद्यश्लोकं मूलश्लोकान्तर्भूतमभ्युपगच्छन्तो द्वितीयश्लोकं भाष्यकारप्रणीतमभ्युपयन्ति । तदसत् । उत्तरश्लोकेष्विवाद्येऽपि श्लोके भाष्यकृतो व्याख्यानप्रणयन प्रसङ्गात् । ओमित्येतदक्षरमित्यादिभाष्यविरोधाच्च । अपरे पुनराद्येन श्लोकेन शास्त्रप्रतिपाद्यपरदेवतातत्त्वानुकरणद्वारेण नम-स्क्रिया प्रकरणप्रारम्भोपयोगित्वेन क्रियते । परदेवताभक्तिवदपर देवताभक्तेरपि विद्याप्राप्त्यन्तरङ्गत्वस्य शास्त्रीयस्य शिष्यशिक्षार्थं ज्ञापनार्थमवस्थात्रयातीतान्नित्यसिद्धविज्ञानमूर्त्तेराचार्यान्मोक्षौपयिक-ज्ञानप्राप्तिः आचार्य्यवान् पुरुषो वेदेत्यादिश्रुत्यवष्टम्भेन सद्भक्त्या प्रार्थ्यत इति द्वितीयश्लोकेन कथयन्तीति ॥ २ ॥

श्रीगौडपादीयकारिकासहिताथर्ववेदीयमाण्डूक्योप-
निषदारम्भः ।

## ॥हरिः ॐ ॥ ॐमित्येतदक्षरमिदꣳ सर्वं तस्यो-

ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानम् ॥ वेदान्तार्थं सारसङ्ग्रहभूतमिदं प्रकरणचतुष्टयमोमित्येतदक्षरमित्याद्यारभ्यते । अत एव न पृथक्सम्बन्धाभिधेयप्रयोजनानि वक्तव्यानि । यान्येव तु वेदान्ते सम्बन्धाभिधेयप्रयोजनानि तान्येवेह भवितुमर्हन्ति । तथापि प्रकरणव्याचिख्यासुना सङ्क्षेपतो वक्तव्यानि । तत्र प्रयोजनवत्साधनाभिव्यञ्जकत्वेनाभिधेयसम्बद्धं शास्त्रं पारम्पर्येण विशिष्टसम्बन्धाभिधेयप्रयोजनवद्भवति । किं पुनस्तत्प्रयोजनमित्युच्यते । रोगार्त्तस्येव रोगनिवृत्तौ स्वस्थता । तथा दुःखात्मकस्यात्मनो द्वैतप्रपञ्चोपशमे स्वस्थता । अद्वैतभावः प्रयोजनम् । द्वैतप्रपञ्चस्याविद्याकृतत्वाद्विद्यया तदुपशमः

---

यदुद्दिष्टं मङ्गलाचरणं कृतं तन्निर्हेतुमादौ व्याख्येयस्य प्रतीकं गृह्णाति । ओमित्येतदिति ॥ ओमित्येतदक्षरमित्यादिप्रकरणचतुष्टयविशिष्टमिदमारभ्यते । व्याख्यातृतेऽत्राभिरभिमुद्देश्यं प्रतिजानीते । किमिदं शास्त्रत्वेन वा प्रकरणत्वेन वा व्याचिख्यासितम् । नाद्यः । शास्त्रलक्षणाभावादस्याशास्त्रत्वात् । एकप्रयोजनोपनिबद्धमशेषार्थप्रतिपादकं हि शास्त्रम् । अत्र च मोक्षलक्षणैकप्रयोजनवत्त्वेऽपि नाशेषार्थप्रतिपादकत्वम् । न द्वितीयः । । प्रकरणलक्षणाभावादित्याशङ्क्याह । वेदान्तेति ॥ शास्त्रं वेदान्तशब्दार्थः । तत्रार्थो ऽधिकारिनिर्णयतत्त्वंपदार्थशुद्धितदैक्यविरोधपरिहारसाधनफलाख्यः । तत्र सारो जीवपरैक्यं तस्य सङ्क्षेपः सङ्ग्रहः संच यविपर्यासादिप्रतिबन्धव्युदासेन तदुपायोपदेशो यस्मिन् प्रक-

पव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोङ्कार एव।

स्यादिति ब्रह्मविद्याप्रकाशनायास्यारम्भः क्रियते। यत्र हि द्वैतमिव भवति। यत्र वाऽन्यदिव स्यात्तत्राऽन्योऽन्यत्पश्येदन्योऽन्यद्विजानीयात्। यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं तद्विजानीयादित्यादिश्रुतिभ्योऽस्यार्थस्य सिद्धिः। तत्र तावदोङ्कारनिर्णयाय प्रथमं प्रकरणमागमप्रधानमात्मतत्त्वप्रतिपत्त्युपायभूतम्। यस्य द्वैतप्रपञ्चस्योपशमेऽद्वैतप्रतिपत्तिः रज्ज्वामिव सर्पादिविकल्पोपशमे रज्जुतत्त्वप्रतिपत्तिः। तस्य द्वैतस्य हेतुतो वैतथ्यप्रतिपादनाय द्वितीयं प्रकरणम्। तथाऽद्वैतस्यापि वैतथ्यप्रसङ्गप्राप्तौ युक्तितस्तथात्वदर्शनाय प्रकरणं तृतीयम्। अद्वैतस्य तथात्व-

---

रणे तत्तथेति यावत्। तथा च। शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितम्। इदं प्रकरणत्वेन शास्त्रात्तु भिन्नम्। निर्गुणवस्तुमात्रप्रतिपादकत्वात्। तत्प्रतिपादनसङ्क्षेपस्य च कार्यान्तरत्वात्प्रकरणलक्षणस्य चात्र सम्पूर्णत्वादित्यर्थः॥ प्रकरणत्वेऽपि निर्विषयत्वादिप्रयुक्तमव्याख्येयत्वमाशङ्क्याह। अत एवेति॥ प्रकरणत्वादेव प्रकृतशास्त्राद्भेदेन सम्बन्धादीनामवाच्यत्वेऽपि प्रकरणप्रवक्तृतया तानि स्वयं वक्तव्यानीत्याशङ्क्य शास्त्रीयसम्बन्धादीनां तदीये प्रकरणेऽर्थात्प्राप्तत्वात्तानि वक्तव्यत्वमर्थस्य पुनरुक्तेरित्याह। व्याख्येति॥ श्रोतारो हि शास्त्रीयं प्रकरणं प्रतिपद्यमानाः शास्त्रीयाण्येव सम्बन्धादीनि अत्र वचनाभावेऽपि बुध्यमानाः प्रवृत्तिं तस्मिन् प्रकुर्वन्तीत्यर्थः। तर्हि प्रकरणकर्तृवदेव तद्व्याख्यातृतापि विषयादीनामनाख्येयत्वाद्व्याख्यातृतो विषयाद्युपन्यासो वृथा स्यादित्याशङ्क्याह। तथापीति॥ प्रकरणकर्तुरवक्तव्यान्यपि तद्व्याख्यातृता तानि संक्षेपतो वक्तव्यानीति व्याख्यातृणां सम्मतम्। व्याख्यानग्रन्थत्वे तेषामनायासावगमाय वक्तव्यत्वादित्यर्थः॥ व्याख्यातृता प्रयोजनादीनां वक्तव्यत्वे

प्रतिपत्तिप्रतिपक्षभूतानि यानि वादान्तराण्यवैदिकानि तेषामन्योन्यविरोधित्वादतथार्थत्वेन तदुपपत्तिभिरेव निराकरणाय चतुर्थं प्रकरणम्। कथं पुनरोङ्कारनिर्णय आत्मतत्त्वप्रतिपत्त्युपायत्वं प्रतिपद्यत इत्युच्यते॥ ओँमित्येतत्। एतदालम्बनम्। एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोङ्कारः। तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति। ओमित्यात्मानं युञ्जीत ओमिति ब्रह्म ओङ्कार एवेदं सर्व्वमित्यादिश्रुतिभ्यः। रज्ज्वादिरिव सर्पादिविकल्पस्यास्पदोऽद्वय आत्मा परमार्थतः सन् प्राणादिविकल्पस्यास्पदो यथा तथा सर्व्वोऽपि वाक्प्रपञ्चः प्राणाद्यात्मविकल्पविषय ओङ्कार एव। स चात्मस्वरूपमेव। तदभिधायकत्वात्। ओँकारविकारश-

---

विद्दे शास्त्रप्रकरणयोर्मोक्षलक्षणप्रयोजनवत्त्वं प्रति जानीते। तत्रेति॥ प्रयोजनवच्छास्त्रमिति सम्बन्धः। शास्त्रपदस्थं प्रकरणोपलक्षणार्थम्। मोक्षलक्षणं फलं ब्रह्मज्ञानस्यैव न शास्त्रप्रकरणयोरित्याशङ्क्याह। साधनेति॥ सत्यं मोक्षस्य साधनं ब्रह्मात्मैकत्वज्ञानम्। तस्य जनकं शास्त्रादि तद्द्वारेण ज्ञानव्यवधानेन मोक्षफलवद्भवति शास्त्रादीत्यर्थः। तथापि ब्रह्मणा विषयेण सम्बन्धो वेदान्तानामेवेष्यते तत्कथमभिधेयत्वसम्बन्धं शास्त्रादेरत आह ब्रह्मविचारमन्तरेण तज्ज्ञानजनकत्वायोगात्तज्ज्ञानजननद्वारा विषयसम्बन्धसिद्धिरित्याह। अभिधेयेति। उक्तं ज्ञानं व्यवहितप्रयोजनादिशास्त्रादेरुपसंहरति। पारम्पर्येणेति॥ तत्र सम्बन्धो ब्रह्मज्ञानं शास्त्रादिना अन्यमेवेत्ययोगव्यवच्छेदाद्युक्तः। शास्त्रादिनैव अन्यमित्ययोगव्यवच्छेदाद्विषयोऽपि दर्शितः॥ यदुक्तं प्रयोजनवत्त्वं तदाक्षिपति। किं पुनरिति॥ साध्यत्वे स्वर्गवदनित्यत्वं नित्यत्वे साधनानधीनत्वान्न तादर्थ्येन शास्त्रादि प्रयोक्तव्यमित्यर्थः। मोक्षस्यात्मस्वरूपत्वान्नानित्यत्वं नापि साधनानर्थक्यम्। स्वरूपभूतमोक्षप्रतिबन्धनिवर्त्तकत्वेना-

स्याभिधानाभिधेयस्य सर्व्वः प्राणादिरात्मविकल्पोऽभिधान-
व्यतिरेकेण नास्ति । वाचारम्भणं विकारो नामधेयं तद-
स्येदं वाचा तन्त्या नामभिर्दामभिः सर्व्वं सितम् । सर्व्वं हीदं
नामनीत्यादिश्रुतिभ्यः । अत आह ओमित्येतदक्षरमिदं
सर्व्वमिति । यदिदमर्थजातमभिधेयभूतं तस्याभिधानाव्य-
तिरेकात् । अभिधानस्य चोङ्काराव्यतिरेकात् ओँकार एवेदं
सर्व्वम् । परञ्च ब्रह्माभिधानाभिधेयोपायपूर्व्वकमेव गम्यत
इत्योङ्कार एव । तस्यैतस्य परापरब्रह्मरूपस्याक्षरस्योमि-
त्येतस्योपव्याख्यानम् । ब्रह्मप्रतिपत्त्युपायत्वाद्ब्रह्मसमीपतया
विस्पष्टं प्रकथनमुपव्याख्यानं प्रस्तुतं वेदितव्यमिति वाक्य-
शेषः । भूतं भवद्भविष्यदिति कालत्रयपरिच्छेद्यं यत्तदप्यो-

---

मर्थवत्त्वादित्युत्तरमाह । उच्यत इति ॥ यथा देवदत्तस्य ज्वरादिना
रोगेणाभिभूतस्य स्वस्थता स्वरूपादप्रच्युतिरूपा स्वरूपभूतैव प्रागपि
सतो रोगप्रतिबद्धाऽसतीव स्थिता चिकित्साशास्त्रीयोपायप्रयोगवशात्
प्रतिबन्धभूतरोगापगमे सत्यभिव्यज्यते । न हि तत्रोपायवैयर्थ्यं प्रति-
बन्धप्रध्वंसार्थत्वात् । नचानित्यत्वं स्वस्थतायाः शङ्क्यते । तस्मात्सद-
साध्यत्वादित्युक्तेऽर्थे दृष्टान्तमाह । रोगार्त्तस्येवेति ॥ यथोदितदृष्टान्तानु-
रोधादात्मनः स्वतः समस्तृष्णातिनिर्मुक्तदुःखस्य निरतिशयानन्दैकतानस्यापि
स्वाविद्याप्रसूताहङ्कारादिद्वैतप्रपञ्चसम्बन्धादात्मनि दुःखमारोप्याहं दुःखी
सुखं मया प्राप्तव्यमिति प्रतिपद्यमानस्य परमकारुणिकाचार्य्योपदिष्टवाक्यो-
त्थाद्वैतविद्यातो द्वैतनिवृत्तौ प्रतिबन्धप्रध्वंसे स्वभावभूता परमानन्दता
निरस्तसमस्तानर्थता च स्वारस्येनाभिव्यक्ता भवति । सा च स्वस्थता
परिपूर्णा वस्तुस्वभावान्नातिरिच्यते । तदिदं शास्त्रीयं प्रयोजनं तस्य
च स्वरूपत्वेनासाध्यत्वान्नानित्यत्वं शङ्कितव्यम् । न च साधनवैयर्थ्यं

यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव ॥ १ ॥

---

ङ्कार एवोक्तन्यायतः । यच्चान्यत्त्रिकालातीतं कार्य्याधिगम्यं कालापरिच्छेद्यमव्याकृतादि तदप्योङ्कार एव । अभिधानाभिधेययोरेकत्वेऽप्यभिधानप्राधान्येन निर्द्देशः कृतः ॥ १ ॥ ओमित्येतदक्षरमिदं सर्व्वमित्याद्यभिधानप्राधा-

---

प्रदर्शितप्रतिपत्त्यनिवृत्तिफलत्वादिति दार्ष्टान्तिकमाह । यथेति ॥ ननु द्वैतस्याहङ्काराद्यात्मनो वस्तुत्वाद्वस्तुनश्च विद्यानपोह्यत्वान्नित्यनैमित्तिककर्म्मायत्तत्वान्निवृत्तेरलं विद्यार्थेन प्रकरणारम्भेणेति तत्राह । द्वैतेति ॥ आत्मनोऽविद्याकृतस्य द्वैतस्यात्मविद्यया कारणनिवृत्त्या निवृत्तेरात्मविद्याभिव्यक्तये शास्त्रारम्भो युज्यते। न च द्वैतस्याविद्याकृतस्य विद्यमानदेहत्वे प्रमाणमस्तीत्याशङ्क्यान्वयव्यतिरेकानुविधायिनीं श्रुतिमुदाहरति । यत्र हीति ॥ एवमन्वयाभ्यामविद्यावस्थायां प्रतिभातद्वैतस्य तत्प्रतिभानस्य चाभासत्वेन विद्यामयत्वमुच्यते । आत्मैवाभूदिति। विदुषो विद्यावस्थायां कर्त्तृकरणादिसर्व्वमात्ममात्रं नातिरिक्तमस्तीत्युक्त्वा विद्याद्वारा सर्व्वस्य द्वैतस्यात्ममात्रत्वश्रवणाद्विद्यानिमित्तकार्य्यकारणात्मकद्वैतनिवृत्तिरात्मैवेत्यभिधीयते । तथा च विद्यातो द्वैतनिवृत्तिनिर्द्देशात्तस्याविद्यात्मत्वद्योत्यते । आदिशब्दार्थमाह नामेत्यधिष्ठाननिष्ठात्यन्ताभावप्रतियोगित्वं द्वैतस्याभिदधत् वाक्यं वाचारम्भणवाक्यस्य गृहीतम् । अस्यार्थस्येति द्वैतगताविद्याकृतत्वस्येत्यर्थः । विषयप्रयोजनाद्यनुबन्धोपन्यासमुखेन शास्त्रारम्भे स्थिते सति आदौ प्रकरणचतुष्टयस्य प्रत्येकमसङ्कीर्णं प्रमेयं प्रतिपत्तिसौकार्य्यार्थं सूचयितव्यमित्याह । तत्र तावदिति ॥ ॐकारप्रकरणस्यासङ्कीर्णं प्रमेयं सङ्गृह्णाति । ॐकारेति ॥ तन्निर्णयाय प्रकरणमारब्धमित्युक्तम् । तन्निर्णये प्रामाण्याभावात्तस्य चानुपयोगित्वात् । आत्मप्रतिपत्तिर्हि पुरुषार्थोपयोगिनीत्याशङ्क्यागमेत्यादिविशेषणद्वयम् । तदुपदेशप्रधानं माण्डूक्योपनिषद्व्याख्यानरूपम् । तेन तत्र प्रामाण्यादुक्तो निर्णयः सेत्स्यति न त्विदं युक्तिप्रधानं युक्तिज्ञेयस्य सतोऽपि गुणत्वाद-

सर्व्वं ह्येतद्ब्रह्मायमात्मा ब्रह्म सोऽयमात्मा चतुष्पात्॥ २ ॥

---

न्येन निर्दिष्टस्य पुनरभिधेयप्राधान्येन निर्देशोऽभिधानाभिधेययोरेकत्वप्रतिपत्त्यर्थः। इतरथा ह्यभिधानतन्त्राभिधेयप्रतिपत्तिरित्यभिधेयस्याभिधानत्वं गौणमित्याशङ्का स्यात्। एकत्वप्रतिपत्तेश्च। प्रयोजनमभिधानाभिधेय-

---

प्रधानत्वात्। न चायमोङ्कारनिर्णयो नोपयुज्यते। यदात्मतत्त्वमनारोपितरूपं तत्प्रतिपत्तावुपायत्वात्। तत्प्रतिपत्तेश्च मुक्तिफलत्वात्। अतश्चाद्यं प्रकरणमोङ्कारनिर्णयद्वारावान्तरफलद्वारेण तत्त्वज्ञाने परमफले पर्यवसायीत्युपदेशवशादधिगन्तव्यमित्यर्थः॥ वैतथ्यप्रकरणस्यावान्तरविषयविशेषं दर्शयति यस्येति॥ आरोपितनिषेधे सत्यनारोपितप्रतिपत्तिः स्वाभाविकीत्यत्र दृष्टान्तमाह। रज्ज्वामिवेति॥ हेतुतो दृश्यत्वाद्यन्तवत्त्वादियुक्तिवशादित्यर्थः। अद्वैतप्रकरणस्यार्थविशेषमुपन्यस्यति। तथाऽद्वैतस्यापीति॥ तस्यापि द्वैतवदवस्त्वानुपपत्त्या मिथ्यात्वप्रसङ्गः प्रसज्यते। तस्यां सत्यामौपाधिकभेदाद्यवस्थायाः दृश्यत्वादव्यभिचारादियुक्तिवशादद्वैतस्य परमार्थत्वं प्रतिपादयितुं तृतीयं प्रकरणमित्यर्थः॥ अलातशान्तिप्रकरणस्यार्थविशेषं कथयति। अद्वैतस्येति॥ तस्य तथात्वमबाधितत्वेन वस्तुत्वं तत्प्रतिपक्षत्वं पक्षान्तराणामित्यत्र हेतुमाह। अवैदिकानीति। तेषां निराकार्यत्वे हेतुमाह। अतथार्थत्वेनेति। मिथ्याद्वैतनिष्ठत्वेनेत्यर्थः। तदुपपत्तिभिरेव निराकरणे हेतुमाह। अन्योन्येति॥ पक्षान्तरप्रतिषेधमुखेनाद्वैतमेव द्रढयितुमन्त्यप्रकरणमित्यर्थः।ओङ्कारनिर्णयद्वारेणात्मप्रतिपत्त्युपायभूतमाद्यं प्रकरणमित्ययुक्तम्। तन्निर्णयस्य तद्धेतुत्वायोगात्। न ह्यर्थान्तरज्ञानमर्थान्तरज्ञाने व्याप्तिमन्तरेणोपयुज्यते। न चात्र धूमाग्न्योरिव व्याप्तिरुपलभ्यते। न चात्मकार्यत्वमोङ्कारस्य युक्तम्। आकाशादेरविशेषात्। तस्य च सर्वात्मत्वेनात्मवत्कार्यत्वव्याघातादिति मन्वानः सन् प्रथमप्रकरणार्थं प्रागुक्तमाक्षि-

योरेकेनैव प्रयत्नेन युगपत्प्रविलापयन् तद्विलक्षणं ब्रह्म प्रतिपद्येतेति। तथा च वक्ष्यति। पादा मात्रा मात्राश्च पादा इति। तदाह। सर्व्वं ह्येतद्ब्रह्मेति। सर्व्वं यदुक्त-

---

मिति। कथमिति॥ न वयमनुमानावष्टम्भादोङ्कारनिर्णयमात्मप्रतिपत्त्यु-पायमभ्युपगच्छामो येन व्याप्त्यभावो दोषमावहेत्। किन्तु श्रुतिप्रामाण्या-त्तन्निर्णयवत्त्वहेतुरिति परिहरति। उच्यत इति॥ तत्र मृत्युना नचि-केतसं प्रति ओमित्येतदित्यनेन वाक्येन ब्रह्मत्वेनोमित्येतदुपदिष्टम्॥ समाहितेनोङ्कारोच्चारणे यच्चैतन्यं स्फुरति तदोङ्कारसामीप्यादेव वाच्या-वाचकभावेनोङ्कारशब्देन लक्ष्यते। तेन वाच्यवाचकयोरोङ्कारनिर्णयो ब्रह्मधीहेतु-रिति विवक्षित्वा श्रुतिमुदाहरति। ओमित्येतदिति॥ प्रतिमायां विष्णु-वद्ब्रह्मवदोङ्कारो ब्रह्मबुद्ध्योपास्यमानो ब्रह्मप्रतिपत्त्युपायो भवतीत्यभिप्रेत्य वाक्यान्तरं पठति। एतदालम्बनमिति॥ किञ्चायमोङ्कारो यदा परापर-ब्रह्मदृष्ट्या उपास्यते तदा तत्प्राप्त्युपायतामुपारोहतीति मत्वा पुनः श्रुतिं दर्शयति। एतद्धेति॥ किञ्च। समाधिनिष्ठो यदोमित्युच्चार्यात्मान-मनुसन्धत्ते तदा स्थूलमकारमुकारे सूक्ष्मे तञ्च कारणे मकारे तमपि कार्य्य-कारणातीते प्रत्यगात्मन्युपसंहृत्य तन्निष्ठो भवतीत्यनेन प्रकारेणोङ्कारस्य तत्प्रतिपत्त्युपायतेति विधान्तरेणाह। ओमित्यात्मानमिति॥ किञ्च योऽयं स्थाणुः स पुमानिति वद्यदेतदोमित्युच्यते तद्ब्रह्मेति बाधायां सामानाधि-करण्येन समाहितो ब्रह्म बोध्यते। तथा च युक्तमोङ्कारस्य ब्रह्मज्ञाने हेतुत्वमित्याह। ओमिति ब्रह्मेति॥ किञ्च। सर्व्वास्पदत्वादोङ्कारस्य ब्रह्मणश्च तथात्वादेकत्वसम्पत्त्यादन्यत्वासिद्धेरोङ्कारप्रतिपत्तिर्ब्रह्मप्रति-पत्तिरेवेत्याह। ओङ्कार एवेति॥ ओमितीदं सर्वमित्यादिवाक्यान्तर-सङ्ग्रहार्थमादिपदमित्यादिश्रुतिभ्यो ब्रह्मप्रतिपत्त्युपायत्वमोङ्कारस्य प्रति-पादितमिति शेषः। ननु स्वानुमतप्रतिभासे सत्यात्मे चिदात्मनि प्राणादि-विकल्पस्य कल्पितत्वादात्मनः सर्व्वास्पदत्वं न पुनरोङ्कारस्य तदस्ति अनात्म-त्वादिति तत्राह। रज्ज्वादिरिवेति॥ यथा रज्जुः शुक्तिरित्यादि-रधिष्ठानविशेषः सर्पो रजतमित्यादिविकल्पस्यास्पदोऽभ्युपगत-

मोङ्कारमात्रमिति तदेतद्ब्रह्म तच्च ब्रह्म परोक्षाभिहितं प्रत्यक्षतो विशेषेण निर्दिशति। अयमात्मा ब्रह्मेति। अयमिति

---

सर्वात्माद्वयत्वान्मिथ्यात्वे हेत्वभावात्परमार्थत्वाभावे वक्ष्यमाणस्य प्राणादिविकल्पस्यास्पदोऽभ्युपगम्यते । यथैव दृष्टान्तस्तथैव प्राणादिरात्मविकल्पो यत्तद्विषयः सर्वो वाक्प्रपञ्चो यथोक्तोङ्कारमात्रात्मकस्तदास्पदो गम्यते । न च जगतोङ्कारस्यानुगमः । ओङ्कारेण सर्वा वाक् सन्तृणोष्टीति श्रुतेः । अतो युक्तमोङ्कारस्य सर्वास्पदत्वमित्यर्थः ॥ नन्वर्थजातस्यात्मास्पदत्वादोङ्कारास्पदत्वाच्च वाक्प्रपञ्चस्य प्राप्तमास्पदद्वयमिति नेत्याह । स चेति ॥ आत्मवाचकत्वेऽपि नास्योङ्कारस्यात्ममात्रत्वं तद्वाचकस्य तन्मात्रत्वमिति व्याप्त्यभावात् । प्राणादेरात्मविकल्पस्याभिधानव्यतिरेकदर्शनादित्याशङ्क्याह । ॐकारेति ॥ तस्य विकारः सर्वो वाग्विशेषः । अकारो वै सर्वा वागिति श्रुतेः । ओङ्कारस्य च तत्प्रधानत्वात्तेन प्राणादिशब्देन वाच्यः प्राणादिरात्मविकल्पः सर्वः स्वाभिधानव्यतिरेकेण नास्ति । तच्चाभिधानं प्राणादिशब्दविशेषात्मकमोङ्कारविकारभूतमोङ्कारातिरेकेण न सम्भवतीत्योङ्कारमात्रं सर्वमिति निश्चीयते । आत्मनोऽपि तद्वाच्यस्य तन्मात्रत्वाभिधानादित्यर्थः । शब्दातिरिक्तार्थाभावे शब्दस्यार्थवाचकत्वानुपपत्तेः । एकत्वे विषयविषयित्वायोगाच्च निर्विकल्पं चिन्मात्रं वस्तु वाच्यवाचकविभागशून्यं पर्यवस्यतीत्यभिप्रेत्य कार्यस्य वस्तुतोऽसत्त्वे प्रमाणमाह । वाचारम्भणमिति ॥ कार्यस्य सर्वस्यैव मिथ्यात्वेऽपि कथमोङ्कारनिर्णयस्य ब्रह्मप्रतिपत्त्युपायत्वसिद्धिरित्याशङ्क्याह । तदस्येति ॥ तदिदं विकारजातमस्य ब्रह्मणः सर्वाभि वाचा सामान्यरूपया तन्त्या प्रसारितरज्जुतुल्यया सितं बद्धं व्याप्तमिति सम्बन्धः ॥ शब्दसामान्येनार्थसामान्यस्य व्याप्तावपि कथमर्थविशेषस्य शब्दविशेषव्याप्तिरित्याशङ्क्याह । नामभिरिति ॥ शब्दविशेषैर्दामभिर्दामस्थानीयैर्विशेषरूपमपीदमर्थजातं व्याप्तं वक्तव्यं न्यायस्य तुल्यत्वादित्यर्थः ॥ उक्तमर्थं समर्थयते । सर्वं हीति ॥ इदं हि सर्वं सामान्यविशेषात्मकमर्थजातं सामान्यविशेषरूपेण नाम्ना नीयते व्यवहारपथं प्राप्यते

चतुष्पात्त्वेन प्रविभज्यमानं प्रत्यगात्मतयाऽभिनयेन निर्दिशति । अयमात्मेति । सोऽयमात्मा ओङ्काराभिधेयः परापर

---

तेन नामनीत्युच्यते । तदेवं वागनुरक्तबुद्धिबोध्यत्वाद्वाङ्मात्रं सर्वम् । वाग्जातञ्च सर्वमोङ्कारानुविद्धत्वादोङ्कारमात्रम् । स ओङ्कार उपायत्वेनात्मधीहेतुरित्याद्यप्रकरणारम्भः सम्भवतीत्यर्थः । तद्यथा शङ्कुनेति श्रुतिशङ्कुशब्दार्थमादिपदं प्रतिज्ञातप्रथमप्रकरणार्थसिद्धिरिति शेषः ॥ सर्वमुपपाद्य तस्मिन्नर्थे श्रुतिमवतारयति । अत आहेति ॥ श्रुतिं व्याचष्टे । यदिदमिति ॥ तदिदं सर्वमोङ्कार एवेति सम्बन्धः ॥ अभिधानस्याभिधेयतया व्यवस्थितमर्थजातमोङ्कार एवेत्यत्र हेतुमाह । तस्येति ॥ तथापि पृथगभिधानभेदः स्यादिति नेत्याह । अभिधानस्येति ॥ वाच्यं वाचकञ्च सर्वमोङ्कारमात्रमित्यभ्युपगमेऽपि परं ब्रह्म पृथगेव स्यादितीत्याशङ्क्याह । परस्येति ॥ यद्धि परं कारणं ब्रह्म तच्चेदवगम्यते तदा किञ्चिदभिधानं तेनेदमभिधेयमित्येवमात्मकोपायपूर्वकमेव तदधिगमोऽभिधेयञ्च स्वाभिधानाव्यतिरिक्तं तत्पुनरोङ्कारमात्रमित्युक्तत्वाद्वाच्यं ब्रह्मापि वाचकाभिन्नं तन्मात्रमेव भविष्यति । यत्र तु कार्यकारणातीते चिन्मात्रे वाच्यवाचकविभागो व्यावर्त्तते तत्र नास्त्योङ्कारमात्रत्वमोङ्कारेण लक्षणया तदवगमाङ्गीकारादित्यर्थः ॥ तस्येत्यादिश्रुतिमवतार्य व्याकरोति । तस्येति ॥ भूतमित्यादिश्रुतिं गृहीत्वा व्याचष्टे । कालेति ॥ वाच्यस्य वाचकाभेदात्तस्य चोङ्कारमात्रत्वादित्युक्तो न्यायः ॥ कालत्रयातीतमोङ्कारातिरिक्तं अन्यं वस्तु नास्त्येव प्रमाणाभावादित्याशङ्क्याह । कार्याधिगम्यमिति ॥ अव्याकृतं साभासमज्ञानमनिर्वाच्यं तच्च कालेन परिच्छिद्यते कार्यं प्रत्यपि कारणत्वात्कार्यस्य कारणात्मत्वाद्भाविनो न प्राग्भाविकारणपरिच्छेदकत्वं सङ्गच्छते । सूत्रमर्थादिपदेन व्यज्यते तदपि न कालेन परिच्छेत्तुं शक्यते । स संवत्सरोऽभवन्न ह पुरा ततः संवत्सर आसेति सूत्रात्मकालोत्पत्तिश्रुतेः । तदपि सर्वमोङ्कारमात्रं वाच्यस्य वाचकव्यतिरेकाभावादित्यर्थः । अभिधानाभिधेययोरैकात्म्यस्यैव सति कल्पितत्वेन तदेकरूपत्वस्योक्तत्वात्किमिति पुनः सर्वं ह्येतद्ब्रह्मेत्युच्यते । तत्र हेत्वाह-

त्वेन व्यवस्थितश्चतुष्पात्कार्षापणवत् गौरिवेति त्रयाणां विश्वादीनां पूर्व्वपूर्व्वप्रविलापनेन तुरीयस्य प्रतिपत्तिरिति

---

वादपूर्व्वकं उत्तरवाक्यस्य सफलं तात्पर्य्यमाह। अभिधानेत्यादिना ॥ १ ॥
वाच्यस्य वाचकत्वोक्त्यैव तयोरेकत्वसिद्धे र्व्यतिहारनिर्द्देशो व्यर्थ इत्याशङ्क्याह।
इतरथेति ॥ वाच्येन वाचकस्यैक्यमनुक्त्वा वाचकेनैव वाच्यस्यैक्यवचने तदु-
पायोपेयप्रयुक्तमेकत्वं न मुख्यमैक्यमित्याशङ्क्येत तन्निवृत्त्यर्थं व्यतिहार-
वचनमर्थवदित्यर्थः ॥ परस्पराभेदोपदेशादभिधानाभिधेययोरेकत्वप्रति-
पत्तिरस्तु सापि विफला ब्रह्मप्रतिपत्त्यनुपयोगित्वादित्याशङ्क्याह। एक-
त्वेति ॥ अभिधानाभिधेययोरेकत्वप्रतिपत्तेश्चेदं प्रयोजनं यदेकेनैव प्रयत्नेन
द्वयमपि विलापयन्नुभयविलक्षणं ब्रह्म प्रतिपद्य निर्द्धोतीति योजना ॥
अभिधानाभिधेययोर्व्यतिहारोपदेशे वाक्यशेषमनुकूलयति। तथा चेति॥
उक्ते वाचकस्य वाच्याभिन्नत्वे वाक्यमवतार्य्य योजयति। तदाहेति॥
सर्व्वं कार्य्यं कारणञ्चेत्यर्थः ॥ ब्रह्मणः श्रुत्युपदिष्टस्य परोक्षत्वं व्यावर्त्तयति।
तच्चेति यद्ब्रह्म श्रुत्या सर्व्वात्मकमुक्तं तन्न परोक्षमिति मन्तव्यं किन्त्वय-
मात्मेति योजना। चतुष्पात्त्वेन विश्वतैजसप्राज्ञतुरीयत्वेनेत्यर्थः। अभि-
नयो नाम विवक्षितार्थप्रतिपत्त्यर्थमसाधारणः शारीरो व्यापारस्तेन
हस्ताग्रं हृदयदेशमानीय कथयतीत्यर्थः ॥ सोऽयमित्यादिवाक्यान्तरमव-
तार्य्य व्याकरोति। ओङ्कारेति॥ सर्व्वाधिष्ठानतया परोक्षरूपेण परत्वं
प्रत्यग्रूपेण चापरत्वं तेन कार्य्यकारणरूपेण सर्व्वात्मना व्यवस्थितः
सन्नात्मा प्रतिपत्तिसौकर्य्यार्थं चतुष्पात्कल्प्यते तत्र दृष्टान्तमाह। कार्षापण-
वदिति॥ देशविशेषे कार्षापणशब्दः षोडशपणानां संज्ञा। तत्र यथा
व्यवहारप्राचुर्य्याय पादकल्पना क्रियते तथेहापीत्यर्थः। यथा गौश्चतु-
ष्पादुच्यते न तथा चतुष्पादादेष्टुं शक्यते निष्कलश्रुतिव्याकोपादित्याह।
न गौरिवेति॥ त्रिष्वादिषु तुर्यान्तेषु पादशब्दो यदि करणव्युत्प-
त्तिकस्तदा विश्वादिवत् तूर्य्यस्यापि करणकोटिनिवेशे ज्ञेयासिद्धिः।
यदि तु पादशब्दः सर्व्वत्र कर्म्मव्युत्पत्तिकस्तदा साधनासिद्धिरि-
त्याशङ्क्य विभज्य पादशब्दप्रवृत्तिं प्रकटयति। त्रयाणामित्यादिना।

# जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोन-

करणसाधनः पादशब्दस्तुरीयस्य । पद्यत इति कर्म्मसाधनः पादशब्दः ॥ २ ॥

कथं चतुष्पात्त्वमित्याह । जागरितं स्थानमस्येति जागरितस्थानः । बहिःप्रज्ञः स्वात्मव्यतिरिक्ते विषये प्रज्ञा यस्य स बहिःप्रज्ञो बहिर्विषयेव प्रज्ञाऽविद्याकृताऽवभासत इत्यर्थः । तथा सप्ताङ्गान्यस्य तस्य ह वैतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो वस्तिरेव रयिः पृथिव्येव पादावग्निहोत्रकल्पनाशेषत्वेनाग्निर्मुखत्वेनाहवनीय उक्त इत्येवं सप्ताङ्गानि यस्य

करणसाधनः करणव्युत्पत्तिकः कर्म्मसाधनः कर्म्मव्युत्पत्तिक इति यावत् । आत्मनो निरवयवस्य पादद्वयमपि नोपपद्यते ॥ २ ॥

पादचतुष्टयन्तु दूरोत्सारितमिति शङ्कते । कथमिति ॥ परमार्थतश्चतुष्पात्त्वाभावेऽपि काल्पनिकमुपायोपेयभूतं पादचतुष्टयमविरुद्धमित्यभिप्रेत्याद्यं पादं व्युत्पादयति । आहेत्यादिना ॥ स्थानमस्येत्यभिमतमस्य विषयीभूतमित्यर्थः ॥ प्रज्ञायास्तावदान्तरत्वप्रसिद्धेरयुक्तमिदं विशेषणमित्याशङ्क्य व्याचष्टे । बहिरिति ॥ चैतन्यलक्षणा प्रज्ञा स्वरूपभूता न बाह्ये विषये प्रतिभासते तस्या विषयानपेक्षत्वात् । बाह्यस्य च विषयस्य वस्तुतोऽभावादित्याशङ्क्याह । बहिर्विषयेवेति ॥ न स्वरूपभूता प्रज्ञा वस्तुतो बाह्यविषयेष्यते बुद्धिवृत्तिरूपा त्वज्ञानकल्पिता तद्विषया भवति । न च सापि वस्तुतस्तद्विषयतामनुभवति । वस्तुतः स्वयमभावाद्बाह्यस्य विषयस्य काल्पनिकत्वादतस्तद्विषयत्वं प्रातिभासिकमित्यर्थः ॥ पूर्व्वेण विशेषणेन विशेषणान्तरं समुच्चिनोति । तथेति ॥ सप्ताङ्गत्वं श्रुत्यन्तरवशेन विवृणोति

विंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः ॥३॥

स सप्ताङ्गः। तथैकोनविंशतिमुखान्यस्य बुद्धीन्द्रियाणि कर्म्मेन्द्रियाणि च दश वायवश्च प्राणादयः पञ्च मनो बुद्धिरहङ्कारश्चित्तमिति मुखानीव मुखानि तान्युपलब्धिद्वाराणीत्यर्थः। स एवंविशिष्टो वैश्वानरो यथोक्तैर्द्वारैः शब्दादीन् स्थूलान् विषयान् भुङ्क्त इति स्थूलभुक्। विश्वेषां नराणामनेकधा नयनाद्विश्वानरः। यद्वा विश्वश्चासौ

---

विशदयति। तस्येत्यादिना॥ प्रकृतस्य सन्निहितप्रसिद्धस्यैवात्मनस्त्रैलोक्यात्मकस्य वक्ष्यमाणरीत्या वैश्वानरशब्दितस्य सुतेजस्त्वगुणविशिष्टो द्युलोको मूर्द्धेति द्युलोकस्य शिरस्त्वमुपदिश्यते। विश्वरूपो नानाविधः श्वेतपीतादिगुणात्मकः सूर्य्यश्चक्षुर्विवक्ष्यते। पृथङ्नानाविधं वर्त्म सञ्चरणमात्मा स्वभावोऽस्येति व्युत्पत्त्या वायुस्तथोच्यते। स च प्राणस्तस्येति सम्बन्धः। बहुलो विस्तीर्णगुणवानाकाशः सन्देहो देहस्य मध्यमो भागो रयिरन्नं तद्धेतुरुदकं वस्तिरस्य मूत्रस्थानं पृथिव्येव प्रतिष्ठात्वगुणा वैश्वानरस्य पादौ तद्युक्तं प्रथमभागस्य सद्योमीयमित्यग्निहोत्रकल्पना स्तुता। तस्याः शेषत्वेनाहवनीयोऽग्निरस्य मुखत्वेनोक्त इति योजना॥ उक्तं सप्ताङ्गत्वमुपसंहरति। इत्येवमिति॥ विशेषणान्तरं समुच्चिनोति। तथेति॥ बुद्धीन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि। कर्म्मेन्द्रियाणि वाक्पाणिपादपायूपस्थानि। तान्येतानि द्विविधानीन्द्रियाणि दश भवन्ति। प्राणादय इत्यादिशब्देनापानव्यानोदानसमाना गृह्यन्ते। उपलब्धिद्वाराणीत्युपलब्धिपदं कर्म्मोपलक्षणार्थम्। द्वारत्वं करणत्वम्। तत्र बुद्धीन्द्रियाणां मनसो बुद्धेश्च प्रसिद्धमुपलब्धौ करणत्वम्। कर्म्मेन्द्रियाणान्तु वदनादौ कर्म्मणि करणत्वम्। प्राणादीनां पुनरुभयत्र पारम्पर्य्येण करणत्वम्। तेषु सत्स्वेव ज्ञानकर्म्मणोरुत्पत्तेः। असत्सु चानुत्पत्तेः। मनोबुद्ध्योश्च सर्वत्र साधारणं करणत्वमहङ्कारस्यापि प्राणादिवदेव करणत्वं मन्तव्यम्। चित्तस्यैव चैतन्याभासोदये करणत्व-

नरश्चेति विश्वानरः विश्वानर एव वैश्वानरः । सर्व्वपिण्डात्मानन्यत्वाच्च प्रथमः पादः । एतत्पूर्व्वकत्वादुत्तरपादाधिगमस्य प्राथम्यमस्य । कथमयमात्मा ब्रह्मेति प्रत्यगात्मनोऽस्य चतुष्पात्त्वे प्रकृते द्युलोकादीनां मूर्द्धाद्यङ्गत्वमिति । नैष दोषः । सर्व्वस्य प्रपञ्चस्य साधिदैविकस्यानेनात्मना चतुष्पात्त्वस्य विवक्षितत्वात् । एवञ्च सति सर्व्वप्रपञ्चोपशमे

---

स्थूलभुगिति विशेषणम् ॥ पूर्व्वोक्तैर्विशेषणैर्विशिष्टस्य वैश्वानरस्य स्थूलभुगिति विशेषणान्तरं तद्विभजते । स एवंविशिष्ट इति ॥ शब्दादिविषयाणां स्थूलत्वं दिगादिदेवतानुगृहीतैः श्रोत्रादिभिर्ग्राह्यत्वम् । इदानीं वैश्वानरशब्दस्य प्रकृतविश्वविषयत्वं विशदयति । विश्वेषामिति ॥ कर्म्मणि षष्ठी । विश्वे च ते नराश्चेति विश्वानराः निपातात्पूर्व्वपदस्य दीर्घता । विश्वानरान् भोक्तृत्वेन व्यवस्थितान् प्रत्यनेकधा धर्म्माधर्म्मकर्म्मानुसारेण सुखदुःखादिप्रापणादयं कर्म्मफलदाता वैश्वानरशब्दितो भवतीत्यर्थः । अथवा विश्वश्चासौ नरश्चेति विश्वानरः स एव वैश्वानरः स्वार्थेऽण् तद्धितो राक्षसवायसवदित्याह । विश्वेति ॥ कथं विश्वश्चासौ नरश्चेति विग्रहो जाग्रतां नराणामनेकत्वात्तादात्म्यानुपपत्तेरित्याशङ्क्याह । सर्व्वेति ॥ सर्व्वपिण्डात्मा समष्टिरूपो विराडुच्यते तेनात्मना विश्वस्यानन्यत्वाद्यथोक्तसमासविग्रहसिद्धिरित्यर्थः । विश्वस्य तैजसादुत्पत्तेस्तस्यैव प्राथम्यं युक्तं कार्य्यस्य तु पश्चाद्भावित्वमुचितमित्याशङ्क्याह । एतदिति ॥ प्रविलापनापेक्षया प्राथम्यं न सृष्ट्यपेक्षयेत्यर्थः । अध्यात्माधिदैवयोर्भेदमादाय प्रागुक्तं सप्ताङ्गत्वमाक्षिपति । कथमिति ॥ ब्रह्मणि प्रकृते तस्य परोक्षत्वे प्राप्ते तन्निरासार्थं ब्रह्मायमात्मेति प्रत्यगात्मानं प्रकृत्य सोऽयमात्मा चतुष्पादिति चतुष्पात्त्वे तस्य प्रक्रान्ते द्युलोकादीनां मूर्द्धाद्यङ्गत्वविशिष्टं यदुक्तं तदयुक्तं प्रक्रमविरोधादित्यर्थः ॥ अध्यात्माधिदैवयोर्भेदाभावान्न प्रक्रमविरोधोऽस्तीति परिहरति । नैष दोष इति ॥ तत्र हेतुमाह । सर्व्वस्येति । आध्यात्मि

ऽद्वैतसिद्धिः। सर्व्वभूतस्थश्चात्मैको दृष्टः स्यात्। सर्व्वभूतानि चात्मनि। यस्तु सर्व्वाणि भूतानीत्यादिश्रुत्यर्थ उपसंहृतश्चैवं स्यात्। अन्यथा हि स्वदेहपरिच्छिन्न एव प्रत्यगात्मा साङ्ख्यादिभिरिव दृष्टः स्यात्तथा च सत्यद्वैतमिति श्रुतिस्ततो विशेषो न स्यात्। साङ्ख्यादिदर्शनेनाविशेषात्। दृश्यते च

---

कस्याधिदैविकेन सहितस्य प्रपञ्चस्य सर्व्वस्यैव स्थूलस्य पञ्चीकृतपञ्चमहाभूततत्कार्य्यात्मकस्यानेनात्मना विराजा प्रथमपादत्वम्। तस्यैव सूक्ष्मस्यापञ्चीकृतपञ्चमहाभूततत्कार्य्यात्मनो हिरण्यगर्भात्मना द्वितीयपादत्वम्। तस्यैव कार्य्यरूपतां त्यक्त्वा कारणरूपतामापन्नस्याव्याकृतात्मना तृतीयपादत्वम्। तस्यैव तु कार्य्यकारणरूपतां विहाय सर्व्वकल्पनाधिष्ठानतया स्थितस्य सत्यज्ञानानन्तानन्दात्मना चतुर्थपादत्वम्। तदेवमध्यात्माधिदैवयोरभेदमादायोक्तेन प्रकारेण चतुष्पात्त्वस्य वस्तुमिष्टत्वात् पूर्व्वपूर्व्वपादस्योत्तरोत्तरपादात्मना प्रविलापनात् तुरीयनिष्ठायां पर्य्यवसानं सिध्यतीत्यर्थः। यदैवं तुरीये पर्य्यवसानं जिज्ञासोर्मुमुक्षोरिष्यते तदा तत्त्वज्ञानप्रतिबन्धकस्य प्रातिभासिकद्वैतस्योपरमे सत्यद्वैतपरिपूर्णब्रह्माऽहमस्मीति वाक्यार्थसाक्षात्कारः सिद्ध्यतीति फलितमाह। एवञ्चेति॥ उक्तन्यायेन तत्त्वसाक्षात्कारे सञ्जातेऽहीते सर्व्वेषु भूतेषु ब्रह्मादिस्थावरान्तेष्वात्मैकोऽद्वितीयो दृष्टः स्यात्। एको देवः सर्व्वभूतेष्विति तत्र तत्र ब्रह्मचैतन्यस्यैव प्रत्यक्त्वेनावस्थानाभ्युपगमात्तानि च सर्व्वाणि प्रातिभासिकानि भूतानि तस्मिन्नेवात्मनि कल्पितानि दृष्टानि स्युः। तथा च पूर्णत्वमात्मनो भूतान्तराणां च तदतिरेकेण सत्तास्फुरणविरहितत्वं सिद्ध्यति। ततश्च। सर्व्वभूतस्थमात्मानं सर्व्वभूतानि चात्मनि। सम्पश्यन्नात्मयाजी वै स्वाराज्यमधिगच्छतीति श्रुतिरनुगृहीता भवतीत्याह। सर्वभूतस्थश्चेति॥ न चेदं मानवं वचनमप्रमाणमिति शङ्कनीयम्। यद्वै किञ्चन मनुरवदत्तद्भेषजमिति श्रुतेरित्यभिप्रेत्य दर्शितस्मृतिमूलभूतां श्रुतिं सूचयति। यस्त्विति॥ यो हि पादत्रयं प्रागुक्तया प्रक्रियया प्रविलाप्य

सर्व्वोपनिषदां सर्व्वात्मैक्यप्रतिपादकत्वम्। अतो युक्तमेवास्याध्यात्मिकस्य पिण्डात्मनो द्युलोकाद्यङ्गत्वेन विराडात्मनाधिदैविकेनैकत्वमभिप्रेत्य सप्ताङ्गत्ववचनम्। मूर्द्धा ते व्यपतिष्यदित्यादिलिङ्गदर्शनाच्च। विराजैकत्वमुपलक्षणार्थं हिरण्यगर्भाव्याकृतात्मनोः। उक्तञ्चैतन्मधुब्राह्मणे। यश्चाय-

---

शरीरे नित्ये विज्ञप्तिमात्रे सदानन्दैकताने परिपूर्णे प्रतिष्ठां प्रतिपद्यते च मन्त्राङ्गमयोस्यात्मानं आत्मनः सर्व्वेषां भूतानामधिष्ठानान्तरमनुपलभमान आत्मन्येव प्रातीतिकानि तानि प्रत्येति। तेषु सर्व्वेष्वात्मानं सत्तास्फूर्त्तिप्रदमवगच्छति। ततश्च न किञ्चिदपि गोपायितुमिच्छतीति श्रुत्यर्थश्च यथोक्तरीत्या तत्त्वसाक्षात्कारे सङ्गृहीते सति स्वीकृतः स्यादित्यर्थः। अध्यात्माधिदैवयोरभेदाभ्युपगमद्वारेण प्रागुक्तपरिपाट्या तत्त्वज्ञानानभ्युपगमे दोषमाह। अन्यथेति॥ शास्त्रादिपक्षस्यापि प्रामाणिकत्वात्तवैव प्रति देहं परिच्छिन्नस्य प्रत्यगात्मनो दर्शनेन प्रामाणिकोऽर्थोऽभ्युपगतो भवति॥ व्यवस्थानुपपत्त्या च प्रतिशरीरमात्मभेदः सिध्यतीत्याशङ्क्याह। तथा चेति॥ शास्त्रादीनां द्वैतविषयं दर्शनमिष्टं तेन त्वदीयदर्शनस्याद्वैतविषयस्य विशेषाभावादद्वैतं तत्त्वमिति श्रुतिसिद्धो विशेषस्त्वत्पक्षे न सिध्येदतः श्रुतिविरोधो भेदवादे प्रसज्येत। व्यवस्था त्वौपाधिकभेदमधिकृत्य सुस्था भविष्यतीत्यर्थः। ननु भेदवादेऽपि नाद्वैतश्रुतिर्विरुध्यते। ध्यानार्थमस्य ब्रह्मेति यदद्वैतं तत्त्वमित्युपदेशसिद्धेरित्याशङ्क्याह। इष्यते चेति॥ उपक्रमोपसंहारैकरूप्यादिना सर्व्वासामुपनिषदां सर्व्वेषु देहेष्वात्मैक्यप्रतिपादनपरत्वमिष्टमतो न ध्यानार्थत्वमद्वैतश्रुतेरेष्टुं शक्यम्। वस्तुपरत्वलिङ्गविरोधादित्यर्थः। अध्यात्माधिदैवयोरैकत्वमुपेत्याद्वैतपर्य्यवसाने सिद्धे तस्याध्यात्मिकस्य व्यष्ट्यात्मनो विश्वस्य त्रैलोक्यात्मकेनाधिदैविकेन विराजा सहैकत्वं गृहीत्वा तत्तस्य सप्ताङ्गत्वमुक्तं तदविरुद्धमित्युपसंहरति॥ अत इति॥ अध्यात्माधिदैवयोरैक्ये हेत्वन्तरमाह। मूर्द्धेति॥ दिवाऽऽदित्यादिकं वैश्वानरावयवं वैश्वानरबुद्ध्या ध्यायतो जिज्ञासया पुनरव-

मस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्ममित्यादि। सुषुप्ताव्याकृतयोस्त्वेकत्वं सिद्धमेव। निर्विशेषत्वात्। एवञ्च सत्येतत्सिद्धं भविष्यति सर्व्वद्वैतोपशमे चाद्वैतमिति ॥ ६ ॥

---

स्वरूपमनुपगतस्य मूर्द्धा ते व्यपतिष्यद्यन्मां नागमिष्य इत्यन्धोऽभविष्यो यन्मामित्यादिना स्वोपासननिन्दा समस्तोपासनविधित्सया दृश्यते। न च द्युलोकादिकं विपरीतबुद्ध्या गृहीतवतः स्वकीयमूर्द्धादिपरिपतनमनुचितम्। यद्यध्यात्माधिदैवयोरेकत्वं न भवेत्तदा तयोरेकत्वमत्र विवक्षितं भवतीत्यर्थः॥ ननु विराजो विश्वेनैकत्वमेव मूलग्रन्थे दृश्यते। तत्कथमविशेषेणाध्यात्माधिदैवयोरेकत्वं विवक्षित्वाऽद्वैतपर्यवसानं भाष्यकृतोच्यते तत्राह। विराजेति॥ यत्तु मतो विराजो विश्वेनैकत्वं प्रदर्शितं तत्तु हिरण्यगर्भस्य तैजसेनान्तर्यामिणश्चाव्याकृतोपहितस्य प्राज्ञेन चैकत्वस्योपलक्षणार्थमतो मूलग्रन्थेऽप्यविशेषेणाध्यात्माधिदैवयोरेकत्वं विवक्षितमित्यद्वैतपर्यवसानसिद्धिरित्यर्थः। अध्यात्माधिदैवयोर्यदेकत्वमिहोच्यते तन्मधुब्राह्मणेऽपि दर्शितमित्याह। उक्तञ्चेति॥ अधिदैवमध्यात्मञ्चैकरूपं निर्द्देशं कृत्वा प्रतिपर्यायमयमेव स इत्यभेदवचनादेकत्वमत्र विवक्षितमित्यर्थः। ननु विश्वविराजोः स्थूलाभिमानित्वात्तैजसहिरण्यगर्भयोश्च सूक्ष्माभिमानित्वादेकत्वं युक्तम्। प्राज्ञाव्याकृतयोस्तु केन साधर्म्येणैकत्वं तत्राह। सुषुप्तेति॥ प्राज्ञो हि सर्व्वं विशेषमुपसंहृत्य निर्विशेषः सुषुप्ते प्रलयदशायामव्याकृतस्तु निःशेषविशेषं स्वात्मन्युपसंहृत्य निर्विशेषरूपं तिष्ठति तेनोक्तं साधर्म्यं पुरोधाय तयोरैक्यमविरुद्धमित्यर्थः। अध्यात्माधिदैवयोरेकत्वे प्रागुक्तन्यायेन प्रविष्टे सत्युपसंहारप्रक्रियया सिद्धमद्वैतमिति फलितमाह। एवञ्चेति॥ तच्चाद्वैतं प्रतिबन्धमुख्यं समालोच्य न स्फुरति किन्तु वाक्यादेवाचार्योपदिष्टादिति वक्तुञ्च शब्दः॥ २॥

स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशति-

स्वप्नः स्थानमस्य तैजसस्य स्वप्नस्थानो जाग्रत्प्रज्ञानेक-साधना बहिर्विषयेवावभासमाना मनःस्पन्दनमात्रा सती तथाभूतं संस्कारं मनस्याधत्ते। तन्मनस्तथा संस्कृतं चित्रित इव पटो बाह्यसाधनानपेक्षमविद्याकामकर्मभिः प्रेर्यमाणं जाग्रद्वदवभासते। तथा चोक्तम्। अस्य लोकस्य सर्वावतो

द्वितीयपादमवतार्य व्याचष्टे। स्वप्न इत्यादिना॥ स्थानं पूर्ववत्। दृष्टृत्वाभिमानस्य विषयभूतमिति यावत्॥ स्वप्नपदार्थं निरूपयित्वा तत्कारणं निरूपयति। जाग्रदित्यादिना॥ तस्याः स्वप्नाद्वैधर्म्यार्थं विशेषणमाह। अनेकेति॥ अनेकानि विविधानि करणानि साधनानि यस्याः सा तथेति यावत्। विषयद्वारकमपि वैषम्यं दर्शयति। बहिरिति॥ बाह्यस्य शब्दादेर्विषयस्याविद्याविवर्तकत्वेन वस्तुतोऽभावात् बहिष्ठ-त्वमपि यथोक्तप्रज्ञाया वास्तवं किन्तु प्रातीतिकमित्यभिप्रेत्योक्तमिवेति। न च यथोक्ता प्रज्ञा प्रमाणविरुद्धा तस्या अनवस्थानापत्तेन सान्विवेद्या सेति विवक्षित्वाह। अवभासमानेति॥ द्वैततत्प्रतिभासयोर्वस्तुतोऽसत्त्वे हेतुं सूचयति। मनःस्पन्देति॥ यथोक्ता प्रज्ञा स्वानुरूपां वासनां स्वसमाना-धाराह्यत्पादयतीत्याह। तथाभूतमिति॥ जाग्रद्वासनावासितं मनो जागरितवदवभासते स्वप्नदृष्टुरित्येष्टुरित्येष्टव्यं मनस एव वासनावतः स्वप्ने विषयत्वादतिरिक्तविषयाभावादित्याह। तथा संस्कृतमिति॥ जाग्र-द्वासनावासितं मनो जागरितवद्भातीत्यत्र दृष्टान्तमाह। चित्रित इति॥ यथा पटश्चित्रितश्चित्रवद्भाति तथा मनो जागरितसंस्कृतं तद्वद्भातीति युक्तमित्यर्थः॥ स्वप्नस्य जागरिताद्वैधर्म्यं सूचयति। बाह्येति। तथोक्तस्य मनसो जागरितवदनेकधा प्रतिभाने कारणान्तर-माह। अविद्येति॥ उक्तं स्वप्नस्य जागरितजनितवासनाजन्यत्वं तत्र बृहदारण्यकश्रुतिं प्रमाणयति। तथा चेति॥ अस्य लोकस्येति जाग-

मुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः ॥ ४ ॥

---

मात्रामपादायेति। तथा परे देवे मनस्येकीभवतीति प्रस्तुत्यात्रैष देवः स्वप्ने महिमानमनुभवतीत्याथर्व्वणे। इन्द्रियापेक्षयाऽन्तःस्थत्वान्मनसस्तद्वासनारूपा च स्वप्ने प्रज्ञा यस्येत्यन्तःप्रज्ञः। विषयशून्यायां प्रज्ञायां केवलप्रकाशस्वरूपायां विषयित्वेन भवतीति तैजसः। विश्वस्य सवि-

---

रितोक्तिस्तस्य विशेषणं सर्व्वावदिति। सर्व्वां साधनसम्पत्तिरस्यास्तीति सर्व्ववान् सर्व्ववानेव सर्व्वावान् तस्य मात्रा लेशो वासना तामपादायापच्छिद्य गृहीत्वा स्वपिति वासनाप्रधानं स्वप्नमनुभवतीत्यर्थः॥ यत्तु स्वप्नरूपेण परिणतं मनः साक्षिणो विषयो भवतीति तत्र श्रुत्यन्तरं दर्शयति। तथेति॥ परत्वं मनसस्तदुपाधित्वाद्वाऽसाधारणकारणत्वाद्वा देवत्वं द्योतनात्मकत्वात्तन्मनोज्योतिरिति ज्योतिःशब्दात्तस्मिन्नेकीभवति। स्वप्ने द्रष्टा तत्प्रधानो भवतीति स्वप्नं प्रस्तुत्याह स्वप्ने स्वप्रकाशो द्रष्टा महिमानं मनसो विभूतिं नानाज्ञेयपरिणामत्वलक्षणां साक्षात्करोति। तथा च मनसो विषयत्वात्तत्साक्ष्याहकत्वमद्धेत्यर्थः। ननु विश्वस्य बाह्येन्द्रियजन्यप्रज्ञायास्तैजसस्य मनोजन्यप्रज्ञावत्त्वादन्तःस्थत्वाविशेषादन्तःप्रज्ञत्वविशेषणं न व्यावर्त्तकमिति तत्राह। इन्द्रियेति॥ उपपादितं तावद्विश्वस्य बहिःप्रज्ञत्वं तैजसस्त्वन्तःप्रज्ञो विशाध्यते बाह्यानीन्द्रियाण्यपेक्ष्य मनसोऽन्तःस्थत्वात्तत्परिणामत्वाच्च स्वप्नप्रज्ञायास्तद्वानन्तःप्राज्ञो युज्यते। किञ्च मनःस्वभावभूता या जागरितवासना तद्रूपा स्वप्नप्रज्ञेति युक्तं तैजसस्यान्तःप्रज्ञत्वमित्यर्थः॥ स्वप्नाभिमानिनस्तेजोविकारत्वाभावात्कुतस्तैजसत्वमित्याशङ्क्याह। विषयेति॥ स्थूलो विषयो यस्यां वासनामय्यां प्रज्ञायां न ज्ञायते तस्यां विषयसंस्पर्शमन्तरेण प्रकाशमात्रतया स्थिताया आश्रयत्वेन भवतीति स्वप्नद्रष्टा तैजसो विवक्षितः। तेजःशब्देन यथोक्तवासनामय्याः प्रज्ञाया निर्द्देशादित्यर्थः। ननु विश्वतैजसयोरविशेषं

विषयत्वेन प्रज्ञायाः स्थूलाया भोज्यत्वम्। इह पुनः केवला वासनामात्रा प्रज्ञा भोज्येति प्रविविक्तो भोग इति। समानमन्यत्। द्वितीयः पादस्तैजसः॥ ४ ॥

दर्शनादर्शनवृत्त्योः स्वापस्य तुल्यत्वात्सुषुप्तग्रहणार्थं यत्र सुप्त इत्यादिविशेषणम्। अथवा त्रिष्वपि स्थानेषु तत्त्वाप्रतिबोधलक्षणः स्वापोऽविशिष्ट इति पूर्वाभ्यां सुषुप्तं विभजते। यत्र यस्मिन् स्थाने काले वा सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति। न हि सुषुप्ते पूर्वयोरिवान्यथा ग्रहणलक्षणं स्वप्नदर्शनं कामो वा कश्चन विद्यते।

---

प्रविविक्तभुगिति विशेषणम्। प्रज्ञया भोज्यत्वस्य तुल्यत्वात्। नैवम्। तस्या भोज्यत्वाविशेषेऽपि तस्यामवान्तरभेदात्स्थूलविषयत्वाद्विश्वस्य भोज्या प्रज्ञा स्थूला लक्ष्यते। तैजसे तु प्रज्ञा विषयसंस्पर्शशून्या वासनामात्ररूपेति विविक्तो भोगः सिध्यतीत्याह। विषयेति॥ सप्ताङ्ग एकोनविंशतिमुखत्वमित्येतदन्यदित्युच्यते ॥ ४ ॥

पादद्वयमेवं व्याख्याय तृतीयं पादं व्याख्यातुम् व्याख्यायमानश्रुतौ न कञ्चनेत्यादिविशेषणस्य तात्पर्यमाह। दर्शनेति॥ दर्शनस्य स्थूलविषयस्य वृत्तिरस्तीति जागरितं दर्शनवृत्तिरित्युच्यते। स्थूलविषयदर्शनादन्यद्दर्शनमदर्शनं वासनामात्रं तस्य वृत्तिरस्येत्यदर्शनवृत्तिः स्वप्नस्तयोः सुषुप्तवदेव स्वापस्य तत्त्वाग्रहणस्य तुल्यत्वात्। यत्र सुप्त इत्युक्ते तयोरपि प्रसक्तौ तद्व्यवच्छेदेन सुषुप्तस्यैव ग्रहणार्थम्। यत्र सुप्त इत्यादिवाक्ये न कञ्चनेत्यादिविशेषणम्। तर्हि स्थानद्वयं व्यवच्छेद्य सुषुप्तमेव ग्राहयतीत्यर्थः। न कञ्चन स्वप्नं पश्यतीत्यनेनैव विशेषणेन स्थानद्वयव्यवच्छेदसम्भवाद्विशेषणान्तरमकिञ्चित्करमित्याशङ्क्याह। अथ-

स्वप्नं पश्यति तत्सुषुप्तम्। सुषुप्तस्थान एकीभूतः

तदेतत्सुषुप्तं स्थानमस्येति सुषुप्तस्थानः। स्थानद्वयप्रविभक्तं मनःस्पन्दितं द्वैतजातम्। तथारूपापरित्यागेनाविवेकापन्नं नैशतमोग्रस्तमिवाहः सप्रपञ्चमेकीभूतमित्युच्यते। अत एव स्वप्नजाग्रन्मनःस्पन्दनानि प्रज्ञानानि घनीभूतानीव सेयमवस्थाऽविवेकरूपत्वात्प्रज्ञानघन उच्यते। यथा रात्रौ नैशेन तमसाऽविभज्यमानं सर्व्वं घनमिव तद्वत्प्रज्ञानघन एव। एवशब्दान्न जात्यन्तरमज्ञानव्यतिरेकेणास्तीत्यर्थः।

---

प्रतिबोधः स्वापस्तस्य स्थानत्रयेऽपि तुल्यत्वाज्जागरस्वप्नाभ्यां विभज्य सुषुप्तं ज्ञापयितुं विशेषणमित्यर्थः॥ एकस्यैव विशेषणस्य व्यवच्छेदकत्वसम्भवाद्द्वाभ्यां विशेषणाभ्यामित्यस्य कः समाधिरित्याशङ्क्य विशेषणयोर्विकल्पेन व्यवच्छेदकत्वात्सामर्थ्यमिति मत्वाह। न हीति॥ यत्रेत्यस्यापेक्षितार्थं कथयति। तदेतदिति॥ अन्यथा पहृणानुभवत्वं कामसंसर्गविरहितत्वस्य विशेषणाभ्यां विवक्षितम्। कथमस्य सद्वितीयस्यैकीभूतत्वविशेषणमित्याशङ्क्याह। स्थानद्वयेति॥ जागरितं स्वप्नश्चेति स्थानद्वयम्। तेन प्रविभक्तं यद्द्वैतं स्थूलं सूक्ष्मञ्च तत्सर्व्वं मनःस्पन्दितमात्रमिति वक्ष्यते। तत्र यथा स्वकीयरूपमात्मनो विभक्तं तथैव तस्यात्यागेनाव्याकृतात्मकं कारणमापन्नं स्वकीयसर्व्वविस्तारसहितं कारणात्मकं भवति। यथाह्नैशेन तमसा ग्रस्तं तमस्त्वेनैव व्यवह्रियते तथेदमपि कार्य्यजातं कारणभावमापन्नं कारणमित्येव व्यवह्रियते। तस्यामवस्थायां तदुपाधिरात्मैकीभूतविशेषणभाग्भवतीत्यर्थः। तथापि कारणोपहितस्य प्रज्ञानघनविशेषणमयुक्तं निरुपाधिकस्यैव तथा विशेषणसम्भवादित्याशङ्क्याह अत एवेति॥ सर्व्वस्य कार्य्यप्रपञ्चस्य घनत्वस्य सुषुप्ते कारणात्मना स्थितत्वादेवेत्यर्थः। सुषुप्तावस्थायामुक्तप्रज्ञानानामेकमूर्त्तित्वं न वास्तवं पुनर्यथा पूर्व्वं विभागयोग्यत्वादिति मत्वोक्तम्। इवेति। सुषुप्तावस्थायाः कारणात्मकत्वाज्जागरस्वप्नप्रज्ञा-

प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः

मनसो विषयविषयाकारस्पन्दनायासदुःखाभावादानन्दमय आनन्दप्रायो नानन्द एव। अनात्यन्तिकत्वात्। यथा लोके निरायासः स्थितः सुख्यानन्दभुगुच्यते। अत्यन्तानायासरूपा हीयं स्थितिरनेनानुभूयत इत्यानन्दभुक्। एषोऽस्य परम आनन्द इति श्रुतेः। स्वप्नादिप्रतिबोधचेतःप्रतिद्वारीभूतत्वाच्चेतोमुखः। बोधलक्षणं वा चेतो द्वारं मुखमस्य स्वप्नाद्यागमनं प्रतीति चेतोमुखः। भूतभविष्य-

---

नानां तत्रैकीभावात्प्रज्ञानघनत्वं स्वाप्यतेत्युक्तमनुवदति। ऐक्यमिति॥ उक्तमेवार्थं दृष्टान्तेन बुद्धावाविर्भावयति। यथेत्यादिना॥ एवकारस्य नायोगव्यवच्छित्तिरित्यर्थः। किन्त्वन्ययोगव्यवच्छित्तिरित्याह। एवमत्राद्यादिति॥ प्राज्ञस्यानन्दविकारत्वाभावे कथमानन्दमयत्वविशेषणमित्याशङ्क्य स्वरूपसुखाभिव्यक्तिप्रतिबन्धकदुःखाभावात्प्राचुर्यार्थत्वं मयटो गृहीत्वा विशेषणोपपत्तिं दर्शयति। मनस इति॥ मयटः स्वरूपार्थत्वादानन्दमयत्वमानन्दत्वमेव किं न स्यादित्याशङ्क्याह। नेत्यादिना॥ न हि सुषुप्ते निरुपाधिकानन्दत्वं प्राज्ञस्याभ्युपगन्तुं शक्यं तस्य कारणोपहितत्वादन्यथा मुक्तत्वात्पुनरुत्थानायोगात्तस्मादानन्दप्राचुर्यमेवास्य सौषुप्तं युक्तमित्यर्थः॥ आनन्दभुगिति विशेषणं सदृष्टान्तं व्याचष्टे। यथेति॥ यथा सुषुप्तोऽपीति शेषः॥ दार्ष्टान्तिकं विवृणोति। अत्यन्तेति॥ इयं स्थितिरिति सुषुप्तिरुक्ता। अनेनेति प्राज्ञोक्तिः। सुषुप्तस्य पुरुषस्य तस्यामवस्थायां स्वरूपभूतानतिशयानन्दाभिव्यक्तिरस्तीत्यत्र प्रमाणमाह। एषोऽस्येति॥ प्राज्ञस्यैव चेतोमुख इति विशेषणान्तरं तद्व्याचष्टे। स्वप्नादीति स्वप्नो जागरितञ्चेति प्रतिबोधशब्दितं चेतस्तत्प्रतिद्वारभूतत्वं द्वारभावेन स्थितत्वम्। न हि स्वप्नस्य जागरितस्य वा सुषुप्तद्वारमन्तरेण सम्भवोऽस्ति तयोस्तत्कार्यत्वात्। अतः सुषुप्ताभिमानी प्राज्ञः स्वापवत्

प्राज्ञस्तृतीयः पादः ॥ ५ ॥ एष सर्वेश्वर एष

---

ज्ञातृत्वं सर्व्वविषयज्ञातृत्वमस्यैवेति प्राज्ञः। सुषुप्तोऽपि हि भूतपूर्वगत्या प्राज्ञ उच्यते। अथवा प्रज्ञप्तिमात्रमस्यैवासाधारणं रूपमिति प्राज्ञः। इतरयोर्विशिष्टमपि विज्ञानमस्ति सोऽयं प्राज्ञस्तृतीयः पादः ॥५॥ एष हि स्वरूपावस्थः सर्व्वेश्वरः साधिदैविकस्य भेदजातस्य सर्वस्येशिता नैतस्माज्जात्यन्तरभूतोऽन्येषामिव। प्राणबन्धनं हि सोम्य मन इति श्रुतेः।

---

कारणत्वाच्चेतोमुखव्यपदेशभागित्यर्थः। अथ वा प्राज्ञस्य सुषुप्ताभिमानिनः स्वप्नं जागरितं वा प्रतिक्रमाक्रमाभ्यां यदागमनं तत्प्रति चैतन्यमेव द्वारम्। न हि तद्व्यतिरेकेण कापि चेष्टा सिद्ध्यतीत्यभिप्रेत्य पक्षान्तरमाह। बोधेत्यादिना॥ भूते भविष्यति च विषये ज्ञातृत्वं तथा सर्व्वस्मिन्नपि वर्त्तमाने विषये ज्ञातृत्वमस्यैवेति प्रकर्षेण जानातीति प्रज्ञः प्रज्ञ एव प्राज्ञः॥ तदेव प्राज्ञपदं व्युत्पादयति। भूतेति॥ सुषुप्ते समस्तविशेषविज्ञानोपरमात्कुतो ज्ञातृत्वमित्याशङ्क्याह। सुषुप्तोऽपीति॥ यद्यपि सुषुप्तस्तस्यामवस्थायां समस्तविशेषविज्ञानविरहितो भवति तथापि भूता निष्पन्ना या जागरिते स्वप्ने च सर्व्वविषयज्ञातृत्वलक्षणा गतिस्तया प्रकर्षेण सर्व्वमासमन्ताज्जानातीति प्राज्ञशब्दवाच्यो भवतीत्यर्थः॥ तर्हि प्राज्ञशब्दस्य मुख्यार्थत्वं न सिद्ध्यतीत्याशङ्क्याह। अथवेति॥ असाधारणमिति विशेषणद्योतितमर्थं स्फुटयति। इतरयोरिति॥ आध्यात्मिकस्य तृतीयपादस्य व्याख्यानमुपसंहरति। सोऽयमिति॥ ५॥ प्राज्ञस्याधिदैविकेनान्तर्यामिणा सहाभेदं गृहीत्वा विशेषणान्तरं दर्शयति। एष हीति॥ स्वरूपावस्थात्वमुपाधिप्राधान्यमवधूय चैतन्यप्राधान्यम्। अन्यथा स्वातन्त्र्यानुपपत्तेः। नैयायिकादयस्तु ताटस्थ्यमीश्वरस्यातिष्ठन्ते तदयुक्तं पत्युरसामञ्जस्यादिति न्यायविरोधादित्याह। नैतस्मादिति॥ श्रुतिविरोधादपि न तस्य ताटस्थ्यमास्थेयमित्याह।

सर्व्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् ॥ ६ ॥

---

अयमेव हि सर्व्वस्य सर्व्वभेदावस्थो ज्ञातेत्येष सर्व्वज्ञ एषो ऽन्तर्याम्यन्तरनुप्रविश्य सर्व्वेषां भूतानां नियन्ताऽप्येष एव यथोक्तं सभेदं जगत्प्रसूयत इत्येष योनिः सर्व्वस्य यत एवं प्रभवश्चाप्ययश्च प्रभवाप्ययौ हि भूतानामेष एव ॥ ६ ॥

---

प्राज्ञेति ॥ प्रकृतमज्ञातं परं ब्रह्म सदाख्यं प्राज्ञशब्दितं तदयनं बध्यतेऽस्मिन् पर्य्यवस्यतीति व्युत्पत्तेः। न हि जीवस्य परमात्मातिरेकेण पर्य्यवसानमस्ति। ननु तदुपहितं जीवचैतन्यमत्र प्राज्ञशब्दस्याध्यात्मकार्यस्य परस्मिन् प्रयोगान्ननः शब्दितस्य च जीवस्य तस्मिन् पर्य्यवसानाभिधानाद्वस्तुतो भेदो नास्तीति द्योतितमित्यर्थः ॥ प्राज्ञस्यैव विशेषणान्तरं साधयति अयमेवेति ॥ नन्ववधारणं नोपपद्यते। व्यासपराशरप्रभृतीनामन्येषामपि सर्व्वज्ञत्वप्रसिद्धेरित्याशङ्क्य विशिनष्टि। सर्व्वेति ॥ अन्तर्य्यामित्वं विशेषणान्तरं विशदयति। अन्तरिति ॥ अन्यस्य कस्यचिदन्तरनुप्रवेशे नियमने च सामर्थ्याभावादवधारणमुक्तं विशेषणत्रयं हेतूकृत्वा प्रकृतस्य प्राज्ञस्य सर्व्वजगत्कारणत्वं विशेषणान्तरमाह। अत एवेति ॥ यथोक्तं स्वप्नजागरितस्थानद्वयप्रविभक्तमित्यर्थः। सभेदमध्यात्माधिदैवाधिभूतभेदसहितमिति यावत्। निमित्तकारणत्वाभिप्रायेऽपि प्राचीनानि विशेषणानि निर्वहन्तीत्याशङ्क्य प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादिति न्यायान्निमित्तोपादानयोर्जगति न भिन्नत्वमित्येवं नियमतश्चिद्रमतो विशेषणान्तरमित्याह। यत इति ॥ प्रभवत्यस्मादिति प्रभवः। अप्येत्यस्मिन्नित्यप्ययः। न चैतौ भूतानामेकस्योपादानादृते सम्भावितावित्यर्थः ॥ ६ ॥

अथ गौडपादाचार्य्यकृतैतदुपनिषदर्थाविष्करणरूप-
श्लोकावतारणम् ॥

॥ अत्रैते श्लोकाः ॥

बहिःप्रज्ञो विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः ।
घनप्रज्ञस्तथा प्राज्ञ एक एव त्रिधा स्मृतः ॥ १ ॥

---

अत्रैतस्मिन्यथोक्तेऽर्थे एते श्लोका भवन्ति । बहिःप्रज्ञ इति । पर्यायेण त्रिस्थानत्वात्सोऽहमिति स्मृत्या प्रतिसन्धानाच्च स्थानत्रयव्यतिरिक्तत्वमेकत्वं शुद्धत्वमसङ्गत्वञ्च सिद्ध-

---

आचार्य्यैर्माण्डूक्योपनिषदं पठित्वा तद्व्याख्यानश्लोकावतारणमत्रेत्यादिना कृतं तदत्रैवानूद्य भाष्यकारो व्याकरोति । एतस्मिन्निति ॥ विश्वस्य विभुत्वं प्रागुक्ताधिदैविकाभेदादवधेयम् । अध्यात्माधिदैवाभेदे पूर्व्वादाहृतां श्रुतिं सूचयितुं हिशब्दः ॥ स्थूलसूक्ष्मकारणोपाधिभेदाज्जीवभेदमाशङ्क्य स्वरूपैक्येऽपि स्वतन्त्रोपाधिभेदमन्तरेण विशेषणमात्रभेदादवान्तरभेदोक्तिरित्याह एक एवेति ॥ पदार्थानामेव पूर्व्वोक्तमेवोक्तत्वात्तात्पर्य्यं श्लोकस्य वक्तव्यमवशिष्यते तदाह । पर्य्यायेणेति ॥ यद्यात्मनश्चैतन्यमिव स्वाभाविकं स्थानत्रयं न तर्हि तद्वदेव तं व्यभिचरितुमर्हति व्यभिचरति चात्मानं स्थानत्रयं क्रमाक्रमाभ्यां तस्य त्रिस्थानत्वादतस्तद्व्यतिरिक्तत्वमात्मनः सिद्धम् । यः सुप्तः सोऽहं जागर्मीत्यनुसन्धानादेकत्वं तस्यावगतम् । एकत्वेन हि स्मृत्या घटादावेकत्वमिष्यते । धर्म्माधर्म्मरागद्वेषादिमलस्यावस्थाधर्म्मत्वात्तदतिरेके शुद्धत्वमपि सिध्यति ॥ सङ्गस्यापि वेद्यत्वेनावस्थाधर्म्मत्वात्स्वीकारात्तदतिरेकिणस्तदुरसङ्गत्वमपि सङ्गतमेवेत्यर्थः ॥ युक्तिसिद्धेऽर्थे श्रुतिमुदाहरति । महामत्स्यादिति ॥ महान् नादेयेन स्रोतसा प्रकम्पमतिरतिमहीयांस्तिमिरुभे कूले

दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः।

---

मित्यभिप्रायः। महामत्स्यादिदृष्टान्तश्रुतेः॥ १॥ जागरितावस्थायामेव विश्वादीनां त्रयाणामनुभवप्रदर्शनार्थोऽयं श्लोकः। दक्षिणाक्षीति॥ दक्षिणमक्ष्येव मुखं तस्मिन् प्राधान्येन द्रष्टा स्थूलानां विश्वोऽनुभूयते। इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुष इति श्रुतेः। इन्धो दीप्तिगुणो वैश्वानर आदित्यान्तर्गतो वैराज आत्मा चक्षुषि च द्रष्टा एकः। नन्वन्यो हिरण्यगर्भः क्षेत्रज्ञो दक्षिणेऽक्षण्यक्ष्णो-र्नियन्ता द्रष्टा चान्यो देहस्वामी न स्वतो भेदानभ्युपगमात्। एको देवः सर्व्वभूतेषु गूढ इति श्रुतेः। क्षेत्रज्ञञ्चापि मां विद्धि सर्वक्षेत्रेषु भारत। अविभक्तञ्च भूतेषु विभक्तमिव च स्थितमिति स्मृतेः। सर्व्वेषु करणेष्वविशेषेऽपि दक्षिणाक्षिण्युपलब्धिपाटवदर्शनात्तत्र विशेषेण निर्द्देशो

---

नद्याः सञ्चरन् क्रमसञ्चरणात्ताभ्यामतिरिच्यते। न च तस्य कूलद्वयगतदोषगुणवत्त्वम्। न चासौ क्वचिदपि सज्जते। न च श्येनो वा सुपर्णो वा नभसि परिपतन् क्वचिदपि प्रतिहन्यते तथैवायमात्मा क्रमेण स्थानत्रये सञ्चरन्नुक्तलक्षणोपयुक्तोऽङ्गीकर्त्तुमित्यर्थः ॥ १ ॥ विश्वतैजसप्राज्ञानां स्थानत्रयं क्रमेण सञ्चरतामात्मैक्यमेव वस्तुतो भवतीत्यत्र हेत्वन्तरं विवक्षन्नाह। दक्षिणेति॥ श्लोकस्य तात्पर्य्यं सङ्गृह्णाति। जागरितेति॥ न चैकस्यामवस्थायामेकस्मिन्नेव देहे भिन्नत्वमात्मनस्तद्वादिभिरपीष्यते जाग्रदवस्थायामिति तु देहे व्यवस्थितत्वोक्त्या विशेषणम्। तद्धि तत्र व्यवस्थितत्वं यदात्मनः सर्व्वगतस्य तदभिमानित्वम्। देहाभिमानश्च जागरिते परं सम-

आकाशे च हृदि प्राज्ञस्त्रिधा देहे व्यवस्थितः ॥ २ ॥

विश्वस्य। दक्षिणाक्षिगतो रूपं दृष्ट्वा निमीलिताक्षस्तदेव स्मरन् मनस्यन्तः स्वप्न इव तदेव वासनारूपाभिव्यक्तं पश्यति। यथाऽत्र तथा स्वप्ने। अतो मनस्यन्तस्तु तैजसोऽपि विश्व एव। आकाशे च हृदि स्मरणाख्यव्यापारोपरमे प्राज्ञ एकीभूतो घनप्रज्ञ एव भवति। मनोव्यापाराभावात्। दर्शनस्मरणे एव हि मनःस्पन्दिते तदभावे हृद्येवाविशेषेण प्राणात्मनावस्थानम्। प्राणो ह्येवैतान् सर्वान् संवृङ्क्त इति श्रुतः। तैजसो हिरण्यगर्भो मनःस्थत्वात्। लिङ्गं मनः। मनोमयोऽयं पुरुष इत्यादिश्रुतिभ्यः। ननु व्याकृतः प्राणः सुषुप्ते तदात्मकानि करणानि भवन्ति कथमव्याकृतता। नैष दोषः। अव्याकृतस्य देशकालविशेषाभावात्। यद्यपि प्राणाभि-

वति ॥ तेन तस्यामेवावस्थायामेकस्मिन्नेव देहे त्रयाणा मनुभवति तेषां मिथो भेदो नास्तीति विवक्षितोऽर्थः। कुत्स्नं द्वारमुपलब्धि-स्थानं शरीरमात्रे दृश्यमानस्य। कथमिदमुपलब्धौ विशेष.वतमनुपदिश्यते स्थानान्तरापेक्षयाऽस्य प्राधान्यादित्याह। प्र.धान्येनेति॥ अनुभूयते ध्याननिष्ठैरिति शेषः॥ उक्तेऽर्थे श्रुतिं संवादयति। इन्द्र इति॥ बृहदारण्यकश्रुतेरुदाहृतायास्तात्पर्यार्थमाह। इन्द्र इत्यादिना॥ वैरा- अस्यात्मनो यथोक्तगुणवत्त्वेऽपि दृष्टत्वागुणस्य किमायातमित्या-शङ्क्याह। चक्षुषि चेति॥ अध्यात्माधिदैवयोरेकत्वादाधिदैविको गुण-स्तद्गुणेऽप्याध्यात्मिके सम्भवतीत्यर्थः॥ उक्तमेकत्वमाक्षिपति। नन्विति॥ हिरण्यगर्भः सूक्ष्मप्रपञ्चाभिमानी सूर्यमण्डलान्तर्गतः सूक्ष्मसमष्टिदेहो

माने सति व्याप्ततैव प्राणस्य तथापि पिण्डपरिच्छिन्न-
विशेषाभिमाननिरोधः प्राणे भवतीत्यव्याप्तत एव प्राणः
सुषुप्ते परिच्छिन्नाभिमानवताम्। यथा प्राणलये परिच्छि-
न्नाभिमानिनां प्राणो व्याप्तस्तथा प्राणाभिमानिनोऽप्य-
विशेषापत्तावव्याप्तता समाना प्रसववीजात्मकत्वञ्च तद्-

---

विज्ञात्मा चक्षुर्गोलकानुगतेन्द्रियानुग्राहकः संसारिणोऽर्थान्तरम्।
विराडात्मापि स्थूलप्रपञ्चाभिमानी सूर्यमण्डलात्मकः समष्टिदेहचक्षु-
र्गोलकद्वयानुग्राहकस्ततोऽर्थान्तरमेव। क्षेत्रज्ञस्तु व्यष्टिदेहो दक्षिणे
चक्षुषि व्यवस्थितो द्रष्टा चक्षुषोः करणानां नियन्ता कार्यकरण-
स्वामी ताभ्यां समष्टिदेहाभ्यामन्योऽभ्युपगम्यते। तदेवं समष्टिव्यष्टित्वेन
व्यवस्थितजीवभेदादुक्तमेकत्वमयुक्तमित्यर्थः॥ काल्पनिको जीवभेदो वास्तवो
वेति विकल्पाद्यमङ्गीकृत्य द्वितीयं दूषयति। नेत्यादिना॥ एको हि
हि परो देवः सर्वेषु भूतेषु समष्टित्वेन व्यष्टित्वेन च समाहतस्तिष्ठतीति
श्रवणाद्वस्तुतो भेदो नास्तीत्युक्तं हेतुं साधयति। एक इति॥ सर्वेषु
क्षेत्रेषु व्यवस्थितक्षेत्रज्ञं मामीश्वरं विद्धीति भगवतो वचनाच्च तात्त्वि-
कभेदासिद्धिरित्याह। क्षेत्रज्ञञ्चेति॥ सर्वेषु भूतेषु क्षेत्रज्ञभेदाभावे कथं
तर्हि प्रति भूतं भेदप्रथेत्याशङ्क्याह। अविभक्तञ्चेति॥ तत्त्वतो विभागेऽपि
देहकल्पनया भेदधीरित्यर्थः। ननु करणेषु सर्वेषु विशेषाविशेषाच्च
दक्षिणे चक्षुषि विशेषनिर्देशो युज्यते। यद्यपि करणान्तरेभ्यश्चक्षुषि
प्राधान्यमुक्तं तथापि नार्थो दक्षिणविशेषणेनेति तत्राह। सर्वेष्विति॥
श्रुत्यनुभवाभ्यां निर्देशविशेषसिद्धिरित्यर्थः। यद्यपि देहदेशभेदे विश्वो-
ऽनुभूयते तथापि कथं जागरिते तैजसोऽनुभूयत इत्यपेक्षायां द्वितीयं पादं
व्याचष्टे। दक्षिणेति॥ यथा स्वप्ने जागरितवासनारूपेणाभिव्यक्तमर्थजातं
द्रष्टाऽनुभवति तथैव जागरिते दक्षिणे चक्षुषि द्रष्टृत्वेन व्यवस्थितः चक्षु-
र्दृष्टं रूपं द्रष्टा पुनर्निमीलिताक्षो दृष्टमेव रूपं रूपोपलब्धिजनितवासनानु-
विद्धवासनात्मना मनस्यन्तरभिव्यक्तं स्मरन् विश्वस्तैजसो भवति। यथा च

ध्यक्षत्वैकोऽव्याकृतावस्थः। परिच्छिन्नाभिमानिनामध्यात्मा-
नाञ्च तेनैकत्वमिति पूर्व्वोक्तं विशेषणमेकीभूतः प्रज्ञान-
घन इत्याद्युपपन्नम्। तस्मिन्नेतस्मिन्नुक्तहेतुत्वाच्च कथं प्राण-
शब्दत्वमव्याकृतस्य। प्राणबन्धनं हि सोम्य मन इति श्रुतेः।

---

तयोर्भेदाशङ्का नावतरतीत्यर्थः॥ स्वप्नजागरितयोर्विलक्षणत्वात्तद्द्रष्टो-
र्विश्वतैजसयोरपि वैलक्षण्यमुचितमित्याशङ्क्याह। यथेति॥ जागरिते
यथार्थजातं द्रष्टा पश्यति तथैव स्वप्नेऽपि तदुपलम्भात् ततो न तयोर्वैल-
क्षण्यसिद्धिरित्यर्थः। द्वितीयपादस्य व्याख्यामुपसंहरति। अत इति॥
स्थानद्वये द्रष्टृभेदाशङ्का निरवकाशेति दर्शयितुमेवकारः॥ तृतीयं
पादं व्याकुर्व्वन् जाग्रद्वदेव सुषुप्तिं दर्शयति। आकाशे चेति॥ यो विश्व-
तैजसत्वमुपगतः स पुनः करणाख्यस्य व्यापारस्य व्यावृत्तौ हृदयाव-
च्छिन्नाकाशे स्थितः सन् प्राज्ञो भूत्वा तत्रैव संस्थितो भवति। न हि
तस्य रूपविषयदर्शनस्थले परिहृत्य विशिष्टाकाशनिविष्टस्य प्राज्ञादर्था-
न्तरत्वम्। अतश्च स एकीभूतो विषयविषय्याकाररहितः। यतो घनप्रज्ञो
विशेषविज्ञानविरही रूपान्तररहितस्तिष्ठतीत्यर्थः॥ उक्तमर्थं प्रपञ्चय-
न्मनोव्यापाराभावादिति हेतूक्त्या व्याचष्टे। दर्शनेत्यादिना॥ अवि-
शेषेणाव्याकृतरूपेणेत्यर्थः। अवस्थानं जागरिते सुषुप्तमिति शेषः॥ यदुक्त-
मव्याकृतेन प्राणात्मना हृदयेऽवस्थानमिति तत्र प्रमाणमाह। प्राणो
हीति॥ यो हि प्राणोऽध्यात्मं प्रसिद्धः स वागादीन् प्राणात्मनि संहृत्य
संहरतीति प्राणस्याध्यात्मं वागादिसंहर्त्तृत्वमुक्तम्। अधिदैवञ्च यो वायुः
सूत्रात्मा सोऽग्न्यादीनात्मनि संहरतीत्यग्न्यादिसंहर्त्तृत्वं वायोरुक्तम्।
अध्यात्माधिदैवयोरेकत्वात्प्राणस्य वायोश्च वागादिष्वग्न्यादिषु संहर्त्तृत्वे-
नाव्याकृतत्वस्य संवर्गविद्यायां सूचितत्वादव्याकृतेन प्राणात्मना सुषुप्ते
प्राज्ञस्यावस्थानमिति युक्तमेवोक्तमित्यर्थः। पूर्व्वमेव विश्वविराजोरैक्यस्या-
नन्तरञ्च सुषुप्ताव्याकृतयोरेकत्वस्य दर्शितत्वात्तैजसहिरण्यगर्भयोरनुक्त-
मभेदं वक्तव्यमिदानीमुपन्यस्यति। तैजस इति॥ तत्र हेतुमाह। मनःस्थ

ननु तत्र सदेव सोम्येति प्रकृतं सद्ब्रह्म प्राणशब्दवाच्यम्। नैष दोषः। बीजात्मकत्वाभ्युपगमात्सतः यद्यपि सद्ब्रह्म प्राणशब्दवाच्यं तत्र तथापि जीवप्रसवं बीजात्मकत्वमपरित्यज्यैव

---

स्यादिति॥ हिरण्यगर्भस्य समष्टिमनोनिष्ठत्वात्तैजसस्य व्यष्टिमनोगतत्वात्तयोश्च समष्टिव्यष्टिमनसोरेकत्वात्तद्गतयोरपि तैजसहिरण्यगर्भयोरेकत्वमुचितमित्यर्थः। किञ्च हिरण्यगर्भस्य क्रियाशक्त्युपाधौ विज्ञानात्मतया प्रसिद्धत्वात्तस्य च सामानाधिकरण्यश्रुत्या मनसा सहाभेदावगमान्मनोनिष्ठस्य तैजसस्य युक्तं हिरण्यगर्भत्वमित्याह। विज्ञमिति॥ किञ्च पुरुषस्य मनोमयत्वश्रवणात्पुरुषविशेषत्वाच्च हिरण्यगर्भस्य तत्प्रधानत्वाधिगमात्तन्निष्ठस्तैजसो हिरण्यगर्भो भवितुमर्हतीत्याह। मनोमय इति॥ प्राणस्य प्रागुक्तमव्याकृतत्वमाक्षिपति। नन्विति॥ सुषुप्ते हि प्राणो नामरूपाभ्यां व्याकृतो युक्तस्तद्व्यापारस्य पार्श्वस्थैरपि स्पष्टं दृष्टत्वादित्यर्थः। किञ्च तस्यामवस्थायां वागादीनि करणानि प्राणात्मकानि भवन्ति। त एतस्यैव सर्वे रूपमभवन्निति श्रुतेः। अतोऽपि प्राणस्याव्याकृतत्वं युक्तमित्याह। तदात्मकानीति॥ उक्तन्यायेन प्राणस्याव्याकृतत्वयोगादव्याकृतेन प्राणात्मना सुषुप्तस्यावस्थानमयुक्तमिति निगमयति। कथमिति। एकवचनत्वादव्याकृतप्राणयोरेकत्वोपपत्तिरित्युत्तरमाह। नैष दोष इति॥ अव्याकृतं हि देशकालवस्तुपरिच्छेदशून्यम्। प्राणोऽपि सौषुप्तदृष्ट्या तथा। न हि सौषुप्तदृष्ट्या तत्कालीनस्य प्राणस्य देशादिपरिच्छेदोऽवगम्यते। तथा च वचनाविशेषादव्याकृतप्राणयोरेकत्वमविरुद्धमित्यर्थः। तस्यायं प्राणो ममायमिति देशपरिच्छेदप्रतिभानादेकवचनत्वाभावाच्च प्राणस्याव्याकृतत्वमित्याशङ्क्याह। यद्यपीति॥ परिच्छिन्नाभिमानवतां मध्ये प्रत्येकं ममायमिति प्राणाभिमाने सति प्राणस्य यद्यपि व्याकृततैव भवति तथापि सुषुप्तावस्थायां पिण्डेन परिच्छिन्नो यो विशेषस्तद्विषयो योऽयं ममेत्यभिमानस्तस्य निरोधस्तस्मिन् भवतीति प्राणोऽव्याकृत एवेति योजना। प्रतिबुद्धदृष्ट्या विशेषाभिमानविषयत्वेन व्याकृतत्वेऽपि सुषुप्तदृष्ट्या तदुपसंहारादव्याकृतत्वं प्राणस्याविरुद्धमिति भावः। विशेषाभिमान-

प्राणशब्दत्वं सतः सच्छब्दवाच्यता च। यदि निर्बीजरूपं विवक्षितं ब्रह्माऽभविष्यत् नेति नेति यतो वाचो निवर्त्तन्ते अन्यदेव तद्विदितादथो अविदितादित्यवक्ष्यत्। न सत्तन्ना-

---

निरोधे प्राणस्याव्याकृतत्वं क्व दृष्टमित्याशङ्क्याह। यथेति॥ परिच्छिन्नाभिमानिनां प्राणवतो मरणं तत्राभिमाननिरोधे प्राणो नामरूपाभ्यामव्याकृतो यथेष्यते तथैव प्राणाभिमानिनोऽपि तदभिमाननिरोधेनाविशेषापत्तिः सुषुप्तिः। तत्राव्याकृतता प्राणस्य प्रागुक्तदृष्टान्तेनाविशिष्टा। ततो विशेषाभिमाननिरोधे प्राणस्याव्याकृतत्वं प्रसिद्धमित्यर्थः। किञ्च यथाधिदैविकमव्याकृतं जगत्प्रसवबीजम्। तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियत इति श्रुतेः। तथा प्राणाख्यं सुषुप्तं जागरितस्वप्नयोर्भवति बीजम्। तथा च कार्यं प्रतिप्रसवरूपत्वमविशिष्टमुभयोरिति सम्यगविशेषादव्याकृतप्राणयोरेकत्वस्य प्रसिद्धिरित्याह। प्रश्नेति॥ समानमित्यनुकर्षार्थश्चकारः। उपाधिस्वभावालोचनया सुषुप्ताव्याकृतयोरभेदमभिधायोपहितस्वभावालोचनयापि तयोरभेदमाह। तदध्यक्षश्चेति॥ अव्याकृतावस्थः सुषुप्तावस्थश्च तयोरुपहितस्वभावयोराध्यात्मिकाधिदैविकयोरेकोऽधिष्ठाता चिदात्मा। अतोऽपि तयोरेकत्वं सिध्यतीत्यर्थः। सुषुप्ताव्याकृतयोरेवमेकत्वं प्रसाध्य तस्मिन्नव्याकृते सुषुप्ते प्रागुक्तं विशेषणं युक्तमित्याह। परिच्छिन्नेति। यद्यपि विशेषाणामभिव्यक्तिमात्रमेकीभूतत्वादिति विशेषणमुपपादितं तथापि परिच्छिन्नाभिमानिनामुपाधिप्रधानानां तत्र तत्राध्यक्षाणामुपहितानामव्याकृतेनैकत्वम्। अतोऽपि प्रागुक्तविशेषणोपपत्तिरित्यर्थः। किञ्चाध्यात्माधिदैवयोरेकत्वमिति प्रागुक्तहेतुसद्भावाच्च युक्तं सुषुप्ते प्राणे प्राणात्मन्यव्याकृते यथोक्तं विशेषणमित्याह। पूर्वोक्तमिति॥ पञ्चमतादिशब्देन सर्वेश्वरत्वादिविशेषणं गृह्यते। प्राणशब्दस्य पञ्चवृत्तौ वायुविकारे रूढत्वादव्याकृतविषयत्वं रूढिविरोधादिति शङ्कते। कथमिति। अन्यत्र रूढत्वेऽपि श्रौतप्रयोगवशादव्याकृतविषयत्वं प्राणशब्दस्य युक्तमिति परिहरति। प्राणबन्धनमिति॥ प्रकरणस्य ब्रह्मविषयत्वाद्ब्रह्मण्येव प्रकृते वाक्ये प्राणशब्दस्य प्रयोगान्नाव्याकृतविषयत्वं तस्य युक्तं प्रकरणविरोधादिति शङ्कते। नन्विति। प्रकरणस्य ब्रह्मविषय-

समुच्यत इति स्मृतेः। निर्बीजतयैव चेत् सति जीवानां सम्पन्नानां सुषुप्तप्रलययोः पुनरुत्थानानुपपत्तिः स्यात्। मुक्तानाञ्च पुनरुत्पत्तिप्रसङ्गः। बीजाभावाविशेषात्। ज्ञानदाह्य-

---

त्वेऽपि ब्रह्मणः सत्यपदस्य शबलत्वाङ्गीकारादस्मिन्नपि वाक्ये तत्रैव प्राणशब्दप्रयोगाद्युक्तं तस्याव्याकृतविषयत्वमित्युत्तरमाह। नैष दोष इति॥ सङ्क्षेपवाक्यं प्रपञ्चयति। यद्यपीति॥ तत्रेति प्राणबन्धनवाक्यं परामृश्यते। जीवशब्दः सर्व्वस्यैव कार्य्यजातस्योपलक्षणम्। प्रकरणवाक्ययो-रपि परिशुद्धब्रह्मविषयत्वेऽस्या श्रुतिरित्याशङ्क्य परिशुद्धस्य ब्रह्मणः शब्द-प्रवृत्तिनिमित्तागोचरत्वात्तत्र शब्दवाच्यत्वानुपपत्तेर्मैवमित्याह। यदि ह्यीति॥ न केवलं निरुपाधिकं निर्विशेषं ब्रह्म वाङ्मनसयोरगोचरमिति श्रुतेरेव निर्द्धार्य्यते किन्तु स्मृतेरपीत्याह। न सदिति॥ किञ्च कार्य्यजातं प्रति बीजभूताज्ञानरहिततया शुद्धत्वेनैवास्मिन् प्रकरणे ब्रह्म विवक्षितं चेत्तर्हि सता सौम्य तदा सम्पन्नो भवतीति जीवानां सत्सम्पत्तिश्रवणाद्-ब्रह्मणःसच्छब्दितस्य शुद्धत्वे सुषुप्त्यादौ तत्र लीनानामेकीभूतानां जीवानां पुनरुत्थानं नोपपद्यते दृश्यते च पुनरुत्थानम्। तेन शबलमेव ब्रह्मात्र विवक्षितमित्याह। निर्बीजतयेति॥ सुषुप्त्यादौ शुद्धे ब्रह्मणि सम्पन्नानामपि पुनरुत्थाने मोक्षत्वानुपपत्तिदोषमाह। मुक्तानाञ्चेति॥ न तेषां पुनरुत्थानं हेत्वभावादित्याशङ्क्य सुषुप्तानां प्रलीनानाञ्च न तर्हि पुन-रुत्थानं हेत्वभावस्य तुल्यत्वादित्याह। बीजाभावेति॥ ननु ज्ञानाद्यनिवर्त्यम-ज्ञानं संसारस्य बीजभूतं नास्त्येव। यद्ब्रह्मणो विशेषणमप्रत्यक्षम्। मिथ्या-ज्ञानतत्संस्काराद्यात्मज्ञानशब्दवाच्यत्वात्तत्राह। ज्ञानेति॥ अज्ञोऽहमित्य-ज्ञानमपरोक्षमप्रत्यक्षस्य च प्रत्यक्षप्रागभावस्य नापरोक्षत्वमिन्द्रियसन्निक-र्षाभावादनुपलब्धिगम्यत्वाच्च भ्रान्तितत्संस्कारयोश्चाभावे तत्कार्य्यत्वादुपा-दानतापेक्षणादात्मनश्च केवलस्यातद्धेतुत्वात्तदुपादानत्वेनाज्ञानसिद्धिः। किञ्च देवदत्तप्रमा तन्निष्ठप्रमाप्रागभावातिरिक्ताऽनादिप्रध्वंसिनी प्रमा-

बीजाभावे च ज्ञानानर्थक्यप्रसङ्गः। तस्मात्सबीजत्वाभ्युपगमेनैव सतः प्राणत्वव्यपदेशः सर्व्वश्रुतिषु च कारणत्वव्यपदेशः। अत एवाक्षरात्परतः परः। सबाह्याभ्यन्तरो ह्यजः। यतो वाचो निवर्त्तन्ते। नेति नेतीत्यादिना बीजवत्त्वापनयनेन व्यपदेशः। तामबीजावस्थां तस्यैव प्राज्ञशब्दवाच्यस्य तुरीयत्वेन देहादिसम्बन्धरहितां पारमार्थिकीं पृथग्वक्ष्यति। बीजावस्थापि न किञ्चिदवेदिषमित्युत्थितस्य प्रत्ययदर्श-

---

त्वाद्यप्रदत्तप्रमाणवत्। न च तदभावे सम्यग्ज्ञानार्थवत्त्वम्। अविद्यकत्वेन भ्रान्तेस्तदनिवर्त्त्यत्वात्संसारस्य च सत्यपि सम्यग्ज्ञाने कथिदनुवृत्तिदर्शनाच्च बाधकत्वस्य तन्निवर्त्तत्वम्। ज्ञानस्य तन्निवृत्तित्वात्। अतो ज्ञानदार्ढ्यं संसारबीजभूतमनाद्यनिर्वाच्यमज्ञानं ज्ञानस्यार्थवत्त्वायास्थेयम्। अन्यथा तदानर्थक्यप्रसङ्गादित्यर्थः॥ एवञ्च ब्रह्मणो वाक्यप्रकरणाभ्यां विवक्षितत्वाभावे फलितमाह। तस्मादिति॥ ब्रह्मणः शबलस्यैव प्राकरणिकत्वाद्वाक्येऽपि तस्मिन् प्राणशब्दाद्युक्तं प्राणशब्दस्याव्याकृतविषयत्वमिति भावः। यतोऽनाद्यनिर्वाच्याज्ञानशबलस्यैव कारणत्वं ब्रह्मणो विवक्ष्यते अत एव कारणत्वनिषेधेन परिशुद्धं ब्रह्म श्रुतिषूपदिश्यते तदेतदाह। अत एवेति॥ अक्षरमव्याकृतं तत्र कार्यापेक्षया परम्। तस्मात्परोऽयं परमात्मा। स हि कार्यकारणाभ्यामस्पृष्टो वर्त्तते। बाह्यं कार्यमभ्यन्तरं कारणमिति। ताभ्यां सह तत्कल्पनाधिष्ठानत्वेन वर्त्तमानश्चिद्धातुः। तथा च स विद्यानुसन्जन्मादिसमस्तविक्रियाशून्यत्वेन कूटस्थः श्रुतिष्वपदिश्यते। अतो ब्रह्मणः सकाशाद्वाचः सर्व्वा मनसा सहावकाशमप्राप्य निवर्त्तन्ते। तज्ज्ञानस्वरूपं विद्याद्विभेति नेति नेतीति वीप्सया सर्व्वमारोपितमपाक्रियते। आदिशब्देनास्थूलादिवाक्यं गृह्यते। बीजत्वनिरासेन शुद्धं ब्रह्म व्यपदिश्यते चेद्बीजत्वं शबलस्यैवेति सिद्धमित्यर्थः। आचार्य्येणानुक्तत्वात् कारणातिरिक्तं शुद्धं ब्रह्मास्तीत्यावश्यं नान्तःप्रज्ञमित्यादिवाक्यशेषमाश्रि-

विश्वो हि स्थूलभुङ्नित्यं तैजसः प्रविविक्त-
भुक् । आनन्दभुक्तथा प्राज्ञस्त्रिधा भोगं निबो-
धत ॥ ३ ॥ स्थूलं तर्पयते विश्वं प्रविविक्तन्तु
तैजसम् । आनन्दश्च तथा प्राज्ञं त्रिधा तृप्तिं निबो-
धत ॥ ४ ॥ त्रिषु धामसु यद्भोज्यं भोक्ता यश्च

---

नाद्देहेऽनुभूयत एवेति त्रिधा देहे व्यवस्थित इत्युच्यते ॥२॥
उक्तार्थौ श्लोकौ ॥ ३ ॥ ४ ॥ त्रिषु धामसु जाग्रदादिषु
स्थूलप्रविविक्तानन्दाख्यं भोज्यमेकं त्रिधाभूतम् । यश्च विश्व-
तैजसप्राज्ञाख्यो भोक्तैकः सोऽहमित्येकत्वेन प्रतिसन्धा-
नात् द्रष्टृत्वाविशेषाच्च प्रकीर्त्तितः । यो वेदैतदुभयं भोज्य-

---

त्याह । तामिति ॥ उक्तन्यायेन वस्तुव्यवस्थाया अव्याकृतस्य देहेऽनुभ-
वाभावात्त्रिधा देहे व्यवस्थित इति कथमुक्तमित्याशङ्क्याह । योजेति ॥२॥
विश्वादीनां त्रयाणां त्रिधा देहे व्यवस्थितिं प्रतिपाद्य तेषा-
मेव त्रिधा भोगं निगमयति । विश्वो हीति ॥ ३ ॥ भोगप्रयुक्तां तृप्ति-
मधुना त्रेधा विभजते । स्थूलमिति ॥ उदाहृतश्लोकयोर्व्याख्यानापेक्षां
वारयति । उक्तार्थाविति ॥ ४ ॥ प्रकृतभोक्तृभोग्यपदार्थद्वयपरिज्ञान-
स्यावान्तरफलमाह । त्रिष्विति ॥ पूर्वार्द्धं व्याचष्टे । जाग्रदादिष्विति ॥
भोग्यत्वेनैकत्वेऽपि त्रैविध्यमवान्तरभेदादुपेयम् ॥ भोक्तुरेकत्वे हेतुमाह ।
सोऽहमिति ॥ योऽहं सुषुप्तः योऽहं स्वप्नं प्राप्तः । अथ जागरूकः
सोऽहमिदानीं जागर्मीत्येकत्वं प्रतिसन्धीयते । न च तत्र बाधकमस्ति ।
तदुक्तं भोक्तुरेकत्वमित्यर्थः । विद्यमानं तत्कार्यं च प्रति प्राज्ञादिषु
द्रष्टृत्वस्याविशिष्टत्वात् । द्रष्टृभेदे च प्रमाणाभावादुक्तं तदेकत्वमि-
त्याह । द्रष्टृत्वेति ॥ द्वितीयार्द्धं विभजते । यो वेदेति ॥ कथमेतावता
भोगप्रयुक्तदोषराहित्यं तत्राह । भोज्यस्येति ॥ यद्यपि भोक्तुरेकस्यैव
सर्वं भोज्यमित्यवगतं तथापि स्वं सर्वं भुञ्जानो भोगप्रयुक्तदोषवान्

प्रकीर्त्तितः। वेदैतदुभयं यस्तु सभुञ्जानो न लिप्यते ॥ ५ ॥

प्रभवः सर्वभावानां सतामिति विनिश्चयः।

---

भोक्तृतयाऽनेकधा भिन्नं स भुञ्जानो न लिप्यते। भोज्यस्य सर्व्वस्यैकस्य भोक्तुर्भोज्यत्वात्। न हि यस्य यो विषयः स तेन क्षीयते वर्द्धते वा। न ह्यग्निः स्वविषयं दग्ध्वा काष्ठादि तद्वत् ॥ ५ ॥

सतां विद्यमानानां स्वेनाविद्याकृतनामरूपमायास्वरूपेण सर्व्वभावानां विश्वतैजसप्राज्ञभेदानां प्रभव उत्पत्तिः। वक्ष्यति च। वन्ध्यापुत्रो न तत्त्वेन मायया वापि जायत इति। यदि ह्यसतामेव जन्म स्याद्ब्रह्मणो व्यवहार्य्यस्य

---

भवतीत्याशङ्क्याह। न हीति ॥ उक्तमर्थं दृष्टान्तेन स्पष्टयति। न ह्यग्निरिति ॥ स्वविषयान् काष्ठादीन् दग्ध्वा न क्षीयते वर्द्धते वाग्निरिति सम्बन्धः ॥५॥

एष योनिरित्यत्र प्राज्ञस्य प्रपञ्चकारणत्वं प्रतिज्ञातं तत्र सत्कार्य्यमसत्कार्य्यं प्रति वा कारणत्वमिति सन्देहे निर्द्धारयितुमारभते। प्रभव इति ॥ तत्प्रावान्तरभेदमाह। सर्वमिति ॥ पुरुषो हि सर्व्वमचेतनं जगदुपाधिभूतं तमःप्रधानं गृहीत्वा जनयति। अत एव पुरुषे कारणशब्दि प्राणपदं प्रयुज्यते। एवं स च चैतन्यप्रधानचेतनचैतन्यसांशुवदवस्थितान् प्रतिबिम्बकल्पान् जीवानाभासभूतानुत्पादयति। एवञ्चेतनाचेतनात्मकमशेषं जगदयं ब्रह्मैव सम्पादयतीत्यर्थः। ननु सतां भावानां सत्त्वादेव प्रभवो न सम्भवति अतिप्रसङ्गादित्याशङ्क्य पूर्व्वार्द्धं व्याचष्टे। सतामिति ॥ स्वेनाधिष्ठानात्मना विद्यमानानामेव विद्याकृतं मायामयमारोपितस्वरूपं तेन प्रभवः संसारी भवतीत्यर्थः। असच्च-

सर्वं जनयति प्राणश्चेतोंऽशून् पुरुषः पृथक् ॥ ६ ॥

---

ग्रहणद्वाराभावादसत्त्वप्रसङ्गः। इष्टञ्च रज्जुसर्पादीना-
मविद्याकृतमायाबीजोत्पन्नानां रज्ज्वाद्यात्मना सत्त्वम्। न हि
निरास्पदा रज्जुसर्पमृगतृष्णिकादयः क्वचिदुपलभ्यन्ते के-
नचित्। यथा रज्ज्वां प्राक् सर्पोत्पत्तेः रज्ज्वात्मना सर्पः
सन्नेवासीत्। एवं सर्व्वभावानामुत्पत्तेः प्राक् प्राणबीजात्मनैव
सत्त्वमिति। अतः श्रुतिरपि वक्ति ब्रह्मैवेदमात्मैवेदमग्र आसी-
दिति। सर्व्वं जनयति प्राणश्चेतोंऽशूनंशव इव रवेश्चिदा-
त्मकस्य पुरुषस्य चेतोरूपा जलार्कसमाः प्राज्ञतैजसवि-
श्वभेदेन देवतिर्य्यगादिदेहभेदेषु विभाव्यमानाश्चेतोंऽशवो
ये तान् पुरुषः पृथग्विषयभावविलक्षणानग्निविस्फुलिङ्ग-

---

न्मनिरसनमन्तरेण कथं सज्जन्म निर्द्धारयितुं शक्यमित्याशङ्क्याह।
वक्ष्यतीति॥ जन्मनः पूर्व्वं सर्व्वस्य सत्त्वे च कारणव्यापारसाध्यता-
सिद्धेर्मिथ्यात्वे कथं सतामेव प्रभवो भावानामित्याशङ्क्याह।
यदीति॥ कार्य्यप्रपञ्चस्यासत्त्वे कारणस्य ब्रह्मणः स्वारस्येन व्यवहार्य्यत्वा-
भावात्तस्य ग्रहणे द्वारभूतस्य लिङ्गस्याभावादसत्त्वमेव सिद्ध्येत्। कार्य्येण
हि लिङ्गेन कारणं ब्रह्मादृष्टमपि सदित्यवगम्यते। तच्चेदसत्त्वेन
तस्य कारणेन सम्बन्धधीरित्यसदेव कारणमपि स्यादित्यर्थः। कार्य्यकार-
णयोरुभयोरपि भवत्यसत्त्वमित्याशङ्क्याह। इष्टञ्चेति॥ अविद्यया-
ऽनाद्यनिर्वाच्यया कृताश्च ते मायाबीजादुत्पन्नाश्च तेषामविद्यैव मायेत्य-
ङ्गीकारात्तेषु रज्ज्वादौ कल्पितसर्पादीनामधिष्ठानभूतरज्ज्वादिरूपेण
सत्त्वं इष्टमिति योजना। विमतं सदुपादानं कल्पितत्वाद्रज्जुसर्पवदि-
त्यर्थः। दृष्टान्तस्य साध्यविकलत्वं शङ्कित्वा परिहरति। न हीति॥
विवक्षितं दृष्टान्तमनूद्य दार्ष्टान्तिकमाह। यथेत्यादिना॥ प्राणशब्दितं

विभूतिं प्रसवन्त्वन्ये मन्यन्ते सृष्टिचिन्तकाः।

---

वस्तुलक्षणान् जलार्कवच्च जीवलक्षणांस्त्वितरान् सर्व्वभावान् प्राणो बीजात्मा जनयति यथोर्णनाभिः। यथाग्नेर्विस्फुलिङ्गा इत्यादिश्रुतेः ॥६॥ विभूतिर्विस्तार ईश्वरस्य सृष्टिरिति सृष्टिचिन्तका मन्यन्ते न तु परमार्थचिन्तकानां सृष्टावादर इत्यर्थः। इन्द्रो मायाभिः पुरुरूप ईयत इत्यादिश्रुतेः। न हि मायाविनः सूत्रमाकाशे निःक्षिप्यते न तदायुधमारुह्य चक्षुर्गोचरतामतीत्य युद्धेन खण्डशश्छिन्नं पतितं

---

बीजमज्ञातं ब्रह्म सत्त्वमयं तदात्मनेति यावत्। तदेवमचेतनं सर्व्वं जगत्प्रागुत्पत्तेर्बीजात्मना स्थितं प्राणो बीजात्मव्यवहारयोग्यतया जनयतीत्युपसंहरति। इत्यत इति। चतुर्थपादप्रतीकमादाय व्याकरोति। चेतोंऽशूनित्यादिना। रवेरंशवो यथा वर्त्तन्ते तथा पुरुषस्य स्वयं चैतन्यात्मकस्य चेतोरूपाश्चैतन्याभासाश्चेतोंऽशवो निर्द्दिश्यन्ते। तान् पुरुषो जनयतीत्युत्तरत्र सम्बन्धः। तेषां चिदात्मकात्पुरुषात्पुरुषतत्त्वतो भेदाभावं विवक्षित्वा विशिनष्टि। जलार्केति। भेदधीस्तु तेषामुपाधिभेदादित्याह। प्राणेति॥ पृथगिति सूचितं पुरुषस्य जीवसर्जने हेतुं कथयति। विषयेति। यथाग्निना समानरूपा विस्फुलिङ्गा जन्यन्ते तथा चिदात्मना समानस्वभावा जीवास्तेनोत्पाद्यन्ते। विषयविलक्षणत्वात्। न प्राणेन बीजात्मना तेषामुत्पादनम्। न चोत्पाद्यानां जीवानामुत्पादकाच्चिदात्मनस्ततो भिन्नत्वम्। जलपात्रप्रतिबिम्बितादित्यादीनां बिम्बभूतात्तत्तत्त्वतो भेदाभावात्तान् बिम्बादीन् पुरुषश्चित्प्रधानो जनयतीत्यर्थः॥ विषयभावेन व्यवस्थितान् पुनर्भावान् प्राणो जनयतीति तृतीयपादार्थमुपसंहरति। इतरानिति॥६॥ चेतनाचेतनात्मकस्य जगतः सर्गे प्रस्तुते स्वमतविवेचनार्थं मतान्तरमुपन्यस्यति। विभूतिप्रसवमिति॥ ईश्वरस्य विभूतिर्विस्तारः स्वकीयैश्वर्य्यं स्थापनं

स्वप्नमायास्वरूपेति सृष्टिरन्यैर्विकल्पिता ॥ ७ ॥

---

पुनर्वितत्य पश्यतां तत्कृतमायादिसतत्त्वचिन्तायामादरो भविष्यति । तथैवायं मायाविनः सूत्रप्रसारणसमः सुषुप्तस्वप्नादिविकासस्तदारूढमायाविसमश्च तत्स्थप्राज्ञतैजसादिः सूत्रतदारूढाभ्यामन्यः परमार्थमायावी । स एव भूमिष्ठो मायाच्छन्नोऽदृश्यमान एव स्थितो यथा तथा तुरीयाख्यं परमार्थतत्त्वम् । अतस्तच्चिन्तायामेवादरो मुमुक्षूणामार्याणां न निष्प्रयोजनायां सृष्टावादर इति । अतः सृष्टिचिन्तकानामेवैते विकल्पा इत्याह स्वप्नमायास्वरूपेति । स्वप्नस्वरूपा चेति ॥ ७ ॥

---

सृष्टिरिति पक्षे सृष्टेर्वस्तुत्वशङ्कायां पक्षान्तरमाह । स्वप्नेति ॥ कुतः सृष्टिचिन्तकानामेतन्मतं तत्त्वविदामेव किं न स्यात्तत्राह । न त्विति ॥ सृष्टेरपि वस्तुत्वाद्वस्तुचिन्तकानामपि तत्रादरो भविष्यतीत्याशङ्क्याह । इन्द्र इति ॥ मायामयी सृष्टिरादरविषया न भवतीत्यत्र दृष्टान्तमाह । न हीति ॥ मायादीत्यादिशब्देन तत्कार्यं गृह्यते ॥ दृष्टान्तनिविष्टमर्थं दार्ष्टान्तिके योजयति । तथेति ॥ तर्हि परमार्थचिन्तकानां क्वादर इत्याशङ्क्य सदृष्टान्तमुत्तरमाह । सूत्रेत्यादिना ॥ मायाच्छन्नत्वमदृश्यमानत्वे हेतुः । तुरीयाख्यं जाग्रत्स्वप्नसुषुप्तेभ्यो विश्वतैजसप्राज्ञेभ्यश्चातिरिक्तं तत्त्वमिति शेषः । परमार्थतत्त्वचिन्ता हि सम्यग्धीद्वारा फलवती न सृष्टेः । ततः सृष्टावनादरस्तत्त्वनिष्ठानामित्याह । नेति ॥ परमार्थचिन्तकानां सृष्टावनादरादपरमार्थनिष्ठानामेव सृष्टौ विशेषचिन्तेत्युक्तेऽर्थे द्वितीयार्धमवतारयति । अत इति ॥ जाग्रद्दृशामात्मनामेव स्वप्ने प्रपञ्चनात्तस्य सत्यत्वं मायायाश्च मयत्वादिवच्छायायाः सत्यत्वाङ्गीकारादनयोर्विकल्पयोः सिद्धान्ताद्वैषम्यमुन्नेयम् ॥ ७ ॥

इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिताः। कालात्प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः॥ ८॥ भोगार्थं सृष्टिरित्यन्ये क्रीडा-

---

इच्छामात्रं प्रभोः सत्यसङ्कल्पत्वात्सृष्टिर्घटादिः सङ्कल्पनामात्रं न सङ्कल्पनातिरिक्तं कालादेव सृष्टिरिति केचित् ॥ ८॥ भोगार्थं क्रीडार्थमिति चान्ये सृष्टिं मन्यन्ते। अन्ययोः पक्षयोर्दूषणं देवस्यैष स्वभावोऽयमिति। देवस्य

---

सृष्टिचिन्तकानामेव सृष्टिविषये विकल्पान्तरमुत्थापयति। इच्छामात्रमिति॥ ज्योतिर्विदां कल्पनाप्रकारमाह। कालादिति॥ परमेश्वरस्येच्छामात्रं सृष्टिरित्यत्र हेतुमाह। सत्येति॥ यथा लोके कुलालादेः सङ्कल्पनामात्रं घटादिकार्यं सृष्टिरिष्टा। नामरूपाभ्यामन्तरेव कार्यं सङ्कल्प्य बहिस्तन्निर्माणाभ्युपगमात्। तथा भगवतः सृष्टिः सङ्कल्पनामात्रा न तदतिरिक्ता काचिदस्तीति केषाञ्चिदीश्वरवादिनामित्यर्थः॥८॥ यथा तथा वा अस्तु सृष्टिस्तस्यास्तु किं प्रयोजनमित्यत्र विकल्पद्वयमाह। भोगार्थमिति॥ सिद्धान्तमाह। देवस्येति॥ कः स्वभावो नामेत्युक्ते नैसर्गिकोऽपरोक्षो मायाशब्दार्थस्तस्येत्याह। अयमिति॥ पूर्वपक्षाणामपवादं सूचयति। अस्येति॥ देवस्य परमेश्वरस्य स्वभावः सृष्टिरिति स्वभावपक्षं नैसर्गिकमायाविनिर्मिता सृष्टिरिति मतं सिद्धान्तत्वेनाश्रित्य चतुर्थपादेन दूषणमुच्यते। पक्षयोरनयोरिति योज्यम्। ईश्वरस्येश्वरत्वख्यापनं सृष्टिरित्येकः पक्षः। स्वप्नस्वरूपा मायास्वरूपा वा सृष्टिरिति पक्षद्वयमीश्वरस्य सत्यसङ्कल्पस्य सृष्टिरिति पक्षान्तरम्। कालादेव जगतः सृष्टिर्नेश्वरात्। ईश्वरस्तूदासीनः। तत्र विकल्पान्तरं भोगार्थं क्रीडार्थं वा सृष्टिरिति फलगतस्तु विकल्पद्वयम्॥ तेषामेतेषां सर्व्वेषामेव पक्षाणां दूषणं चतुर्थपादेनोक्तमिति पक्षान्तरमाह। सर्व्वेषामिति॥ नो स्वल्पाप्तकामस्य परस्यात्मनो मायां विना विभूतिख्यापनमुपयुज्यते। न च स्वप्नमायाभ्यां साद्रूप्यमन्तरेण स्वप्न-

र्थमिति चापरे। देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा ॥ ९ ॥

॥ उपनिषद् ॥

नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न

---

स्वभावपक्षमाश्रित्य सर्वेषां वा पक्षाणामाप्तकामस्य का स्पृहेति ॥ ९ ॥

न हि रज्ज्वादीनामविद्यास्वभावव्यतिरेकेण सर्पाद्याभासत्वे कारणं शक्यं वक्तुम्। चतुर्थः पादः क्रमप्राप्तो वक्तव्य इत्याह। नान्तःप्रज्ञमित्यादि। सर्वशब्दप्रवृत्तिनिमित्तशून्यत्वात्तस्य शब्दानभिधेयत्वमिति विशेषप्रतिषेधेनैव चतुरीयं निर्दिदिक्षति। शून्यमेव तर्हि तत्। मिथ्याविकल्पस्य निर्निमित्तत्वानुपपत्तेः। न हि रजतसर्पपुरुषमृगतृष्णिकादिविकल्पाः शुक्तिकारज्जुस्थाणूषरादिव्यतिरेकेणावस्त्वास्पदाः शक्याः कल्पयितुम्। एवं तर्हि प्राणादिसर्वविक-

---

मायाव्यतिरेकेणु शक्यतेऽवस्तुनोरेव तयोस्तच्छब्दप्रयोगात्। न च परमानन्दस्वभावस्य परस्य विना मायामिच्छा सम्भवति। न हि तस्य स्वतोऽविक्रियस्येच्छादिभाक्त्वं युक्तम्। न च मायामन्तरेण भोगक्रीडे तस्योपपद्येते। ततो मायामयी भगवतः सृष्टिरित्यर्थः ॥ ९ ॥

यदुक्तं कालात्प्रसूतिं भूतानामिति तत्राह। न हीति॥ अधिष्ठानभूतरज्ज्वादीनां स्वभावशक्तितस्त्वज्ञानादेव सर्पाद्याभासत्वं तथा परस्य स्वमायाशक्तिवशादाकाशाद्याभासत्वम्। आत्मन आकाशः सम्भूत इति श्रुतेः। न तु कालस्य भूतकारणत्वं प्रमाणाभावादित्यर्थः। पादत्रये व्याख्याते व्याख्येयत्वेन क्रमवशात्प्राप्तं चतुर्थं पादं व्याख्यातुमुत्तरग्रन्थप्रवृत्तिरित्याह। चतुर्थ इति॥ ननु पादत्रयविधिमुखेनैव चतुर्थः पादोऽपि

प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम् । अदृष्टव्यवहार्य्य-

---

ल्पासत्त्वात्तुरीयस्य शब्दवाच्यत्वमिति न प्रतिषेधैः प्रत्या-
य्यत्वमुदकाधारादेरिव घटादेः । न प्राणादिविकल्पस्या-
सत्त्वाच्छुक्तिकाद्याविव रजतादेः । न हि सदसतोः सम्बन्धः ।
शब्दप्रवृत्तिनिमित्तभागवस्तुत्वात् । नापि प्रमाणान्तरविष-
यत्वं स्वरूपेण गवादिवत् । नापि क्रियावत्त्वं पाचकादिवत् ।
नापि गुणवत्त्वं नीलादिवत् । अतो नाभिधानेन निर्देशम-
र्हति । शशविषाणादिसमत्वान्निरर्थकत्वं तर्हि न । आत्मत्वा-
वगमे तुरीयस्यानात्मतृष्णाव्यावृत्तिहेतुत्वात् शुक्तिकाव-
गम इव रजततृष्णायाः । न हि तुरीयस्यात्मत्वावगमे
सत्यविद्यातृष्णादिदोषाणां सम्भवोऽस्ति । न च तुरीय-

---

व्याख्यायतां किमिति निषेधमुखेन व्याख्यायते तत्राह । सर्वेति ॥ सर्वाणि
शब्दप्रवृत्तौ निमित्तानि जातीगुणादीनि तैः शून्यत्वात्तुरीयस्य वाच्यत्वा-
योगान्निषेधद्वारैव तन्निर्देशः सम्भवतीत्यर्थः । वाचावाच्यत्वाभावं द्योत-
यितुं निर्दिदिक्षतीत्युक्तम् । यदि चतुर्थं विधिमुखेन न निर्देष्टुं शक्यं
तर्हि शून्यमेव तदापद्येत तन्निषेधेनैव निर्दिश्यमानत्वात् ॥ तथाविधं
नास्त्यर्थवदिति शङ्कते । शून्यमेवेति ॥ न तुरीयस्य शून्यत्वमनुमातुं
युक्तम् । विमतं सदधिष्ठानं कल्पितत्वात् । तथाविधरजतादिवदित्यनु-
मानात्तुरीयस्य सत्त्वसिद्धेरित्युत्तरमाह । तन्नेति ॥ दृष्टान्तं साधयति । न
हीति ॥ रजतादीनां सदनुविद्धबुद्धिबोध्यत्वादवस्तुसत्त्वायोगात् ।
तद्वदेव प्राणादिविकल्पानामपि नावस्तुसत्त्वं सिध्यतीत्यर्थः ।
सदधिष्ठानत्वं तुरीयस्येष्टं तर्हि वाच्यत्वमधिष्ठानत्वाद्घटादिव-
दिति प्रक्रमभङ्गः स्यादिति चोदयति । एवं तर्हीति ॥ किं प्रातिभासिक-
मधिष्ठानत्वं हेतूकृतम् । किंवा तात्त्विकम् । नाद्यः । तस्य तात्त्विकवाच्य-

मग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्यय-

---

स्यात्मत्वानवगमे कारणमस्ति । सर्व्वोपनिषदां तादर्थ्येनोपक्षयात् । तत्त्वमसि । अयमात्मा ब्रह्म । तत्सत्यम् । स आत्मा यत्साक्षादपरोक्षाद्ब्रह्म । स बाह्याभ्यन्तरो ह्यजः । आत्मैवेदं सर्व्वमित्यादिना सोऽयमात्मा परमार्थरूपश्चतुष्पादित्युक्तः तस्यापरमार्थरूपमविद्याकृतं रज्जुसर्पादिसममुक्तं पादत्रयलक्षणं बीजाङ्कुरस्थानीयम् । अथेदानीमबीजात्मकं परमार्थस्वरूपं रज्जुस्थानीयं सर्पादिस्थानीयोक्तस्थानत्रयनिराकरणेनाह । नान्तःप्रज्ञमित्यादि । नन्वात्मनश्चतुष्पात्त्वं प्रतिज्ञाय पादत्रयकथनेनैव चतुर्थस्यान्तःप्रज्ञादिभ्योऽन्यत्वे सिद्धे नान्तःप्रज्ञमित्यादिप्रतिषेधोऽनर्थकः । न सर्पादि

---

स्याबाधकत्वात् । अतात्त्विके तु वाच्यत्वे प्रक्रमो न विरुध्येत । न द्वितीयः । शुक्त्यादिषु कल्पितरजतादेरवस्तुत्ववत् तुरीयेऽपि कल्पितप्राणादेरवस्तुत्वात्प्रतियोगिकाधिष्ठानत्वस्य तात्त्विकत्वायोगादिति दूषयति । न प्राणादीति ॥ किञ्च वाच्यत्वे तुरीयस्य निरूप्यमाणे तत्र शब्दप्रवृत्तौ निमित्तं वक्तव्यम् । तत्र शब्दो वा रूढिर्वा जातिर्वा क्रिया वा गुणो वेति विकल्प्य प्रथमं प्रत्याह । न हीति ॥ तुरीयातिरिक्तस्यावस्तुत्वात्तस्य तुरीयस्य च वस्तुभूतसम्बन्धासिद्धेर्विषयाभावे कुतः शब्द इत्यर्थः ॥ द्वितीयं दूषयति । नापीति ॥ विशिष्टरूपेण विषयत्वेऽपि स्वरूपेण निरुपाधिकात्मना तदविषयत्वात् नात्र गवादाविव रूढिरवतरतीत्यर्थः ॥ न तृतीयः । गवादाविवाद्वितीये तुरीये सामान्यविशेषभावस्याभिधातुमयोग्यत्वादिति मत्वाह । गवादिवदिति ॥ न चतुर्थः । पाचकादाविवाक्रिये तुरीये विक्रियावत्त्वस्य शब्दप्रवृत्तिनिमित्तस्य वक्तुमयुक्तत्वादित्याह । नापि क्रियावत्त्वमिति ॥ न पञ्चमः । उत्पलादौ नीलादिशब्दवन्निर्गुणे तुरीये गुणवत्त्वस्य

सारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः ॥ ७ ॥

---

विकल्पप्रतिषेधेनैव रज्जुस्वरूपप्रतिपत्तिवत्। त्र्यवस्थस्यैवात्मनस्तुरीयत्वेन प्रतिपिपादयिषितत्वात्। तत्त्वमसीतिवत्। यदि हि त्र्यवस्थात्मविलक्षणं तुरीयमन्यत्तत्प्रतिपत्तिद्वाराभावाच्छास्त्रोपदेशानर्थक्यं शून्यतापत्तिर्वा रज्जुरिव सर्पादिभिर्विकल्प्यमाना स्थानत्रयेऽपि आत्मैक एवान्तःप्रज्ञादित्वेन विकल्प्यते यदा तदान्तःप्रज्ञादित्वप्रतिषेधविज्ञानप्रमाणसमकालमेवात्मन्यनर्थप्रपञ्चनिवृत्तिलक्षणफलं परिसमाप्तमिति तुरीयाधिगमे प्रमाणान्तरं साधनान्तरं वा न मृग्यम्। रज्जुसर्पविवेकसमकाल इव रज्ज्वां सर्पनिवृत्तिफले सति रज्ज्वधिगमस्य येषां पुनस्तमोऽपनयव्य-

---

शब्दप्रवृत्तिनिमित्तस्य वस्तुन्ययुक्तत्वादित्याह । नापीति ॥ तदेवं तुरीयस्य वाच्यत्वानुमानं शब्दप्रवृत्तिनिमित्तानुपलब्धिबाधितमिति फलितमाह । अत इति ॥ यदि तुरीयस्य नास्ति विशिष्टं जात्यादिमत्त्वं तर्हि नरविषाणादिदृष्टेरिव तद्दृष्टेरपि निष्फलवत्त्वम्। विशिष्टजात्यादिमतो राजादेरुपासनस्य फलवत्त्वोपलम्भादिति शङ्कते । शशविषाणादीति ॥ यथा शुक्तिरिदमित्यवगमे रजतादिविषयतृष्णा व्यावर्त्तते तथा तुरीयं ब्रह्माहमित्यात्मत्वेन तुरीयस्य साक्षात्कारे सत्यनात्मविषया तृष्णा व्यवच्छिद्यते । तदेवमात्मत्वेन तुरीयावगमस्य सर्वाकाङ्क्षानिवर्त्तकत्वादनर्थकत्वाशङ्का न युक्तेति परिहरति । नेत्यादिना ॥ तुरीयस्यात्मत्वावगमे सति सर्वानर्थहेतुतृष्णादिदोषनिवृत्तिलक्षणं फलमुक्तं विद्वदनुभवेन साधयति । न हीति ॥ ननु तुरीयमशेषविशेषशून्यं नात्मत्वेनावगन्तुं शक्यते तद्धेत्वभावादिति तत्राह । न चेति ॥ सर्वोपनिषदामित्युक्त-

तिरेकेण घटादिगमे प्रमाणं व्याप्रियते तेषां छेद्यावयवसम्बन्धवियोगव्यतिरेकेणान्यतरावयवेऽपि छिदिर्व्याप्रियत इत्युक्तं स्यात्। यदा पुनर्घटतमसोर्विवेककरणे प्रवृत्तं प्रमाणमनुपादित्सिततमसो निवृत्तिफलावसानं छिदिरिव छेद्यावयवसम्बन्धविवेककरणे प्रवृत्ता तदवयवद्वैधीभावफलावसानान्तदा नान्तरीयकं घटविज्ञानं न तत्प्रमाणफलम्। न च तद्वदप्यात्मन्यध्यारोपितान्तःप्रज्ञत्वादिविवेककरणे प्रवृत्तस्य प्रतिषेधविज्ञानप्रमाणस्यानुपादित्सितान्तः-

---

मेवोदाहरणविशेषेण दर्शयति। तत्त्वमसीति॥ निषेधमुखेनैव तुरीयस्य प्रतिपादनं न विधिमुखेनेत्युपपाद्य वृत्तानुवादपूर्व्वकमुत्तरग्रन्थमवतारयति। योऽयमित्यादिना॥ बीजाङ्कुरस्थानीयं मिथो हेतुमद्भावेन व्यवस्थितमित्यर्थः। अबीजात्मकं कार्य्यकारणविनिर्मुक्तमिति यावत्॥ तत्र हेतुं सूचयति। परमार्थेति॥ तस्य विधिमुखेन निर्देशानुपपत्तिं प्रागुक्तामभिप्रेत्याह। सर्पादीति॥ किमुत्तरेण ग्रन्थेन तुरीयं प्रतिपाद्यते किं वा तस्य स्थानत्रयवैलक्षण्यं विवक्ष्यते। प्रथमे प्रतिपादकस्य विधानाव्यतिरेकादन्यनिषेधानर्थक्यम्। द्वितीयेऽपि तदानर्थक्यमापद्येत। चतुर्थमोक्षादन्यत्वसिद्धेरिति मन्वानः शङ्कते। नन्विति॥ न तावत्तुरीयं विधिमुखेन बोध्यम्। तस्य स्वप्रकाशत्वात्। तस्मिन् प्रमाणाद्युदयात्। तथापि समारोपितविश्वादिरूपेण प्रतिपन्नं तन्निषेधेन बोध्यते। तद्निषेधे तस्य यथावदवगमात्। अतो न निषेधानर्थक्यमिति परिहरति। न सर्पादीति॥ तुरीयस्य पादत्रयविलक्षणस्यार्थादेव सिद्धावपि जीवात्मनः स्थानत्रयविनिर्मुक्तस्य तुरीयं ब्रह्मस्वरूपमिति नोपदेशमन्तरेण सिद्ध्यतीति तुरीयग्रन्थोऽर्थवानित्यर्थः। यथा विधिमुखेन प्रवृत्तेन तत्त्वमसीतिवाक्येन स्थानत्रयधर्मविवर्जितस्य तत्पदलक्ष्यब्रह्मता यथावद् बोध्यते। तथा च निषेधवाक्येनापि तात्पर्य्यवशा जीवस्य तुरीयब्रह्मत्वं प्रतिपादयितुं दृष्टान्तमाह। तत्त्वमसीति॥ ननु स्थानत्रय-

प्रपञ्चत्वादिनिवृत्तिव्यतिरेकेण तुरीये व्यापारोपपत्तिः। अन्तःप्रज्ञत्वादिनिवृत्तिसमकालमेव प्रमातृत्वादिभेदनिवृत्तेः। तथा च वक्ष्यति। ज्ञाते द्वैतं न विद्यत इति। ज्ञानस्य द्वैतनिवृत्तिक्षणाव्यतिरेकेण क्षणान्तरानवस्थानात्। अवस्थाने चानवस्थाप्रसङ्गाद्द्वैतानिवृत्तिः। तस्मात्प्रतिषेधविज्ञानप्रमाणव्यापारसमकाल एवात्मन्यध्यारोपितान्तःप्रज्ञत्वाद्यनर्थनिवृत्तिरिति सिद्धम्। नान्तःप्रज्ञमिति तैजसप्रतिषेधः। न बहिःप्रज्ञमिति विश्वप्रतिषेधः। नोभयतः-

---

विशिष्टस्यात्मनो नैव तुरीयात्मत्वं तुरीयपदेन प्रतिपाद्यते। तुरीयस्य विशिष्टाद्विलक्षणत्वेनात्यन्तभिन्नत्वात्तत्राह। यदि हीति॥ प्रातिभासिकवैलक्षण्येऽपि विशिष्टोपलक्षणयोरात्यन्तिकवैलक्षण्याभावान्न तात्त्विकं तुरीयस्य विशिष्टाद्भिन्नत्वम्। अन्यथाऽत्यन्तभिन्नयोर्मिथःसंसर्गविरहिणोरुपायोपेयभावायोगात्तुरीयप्रतिपत्तौ विशिष्टस्य द्वारत्वाभावादन्यस्य च तत्प्रतिपत्तिद्वारस्यादर्शनात्तुरीयाप्रतिपत्तिरेव स्यादित्यर्थः॥ शास्त्रात्तत्प्रतिपत्तिः स्यादिति चेन्नेत्याह। शास्त्रेति॥ तद्विशिष्टरूपमनूद्य विशेषणांशापोहेन तस्य तुरीयत्वमुपदिशति। भेदे चात्यन्तिके तदानर्थक्याच्च शास्त्रात्तत्प्रतिपत्तिरित्यर्थः॥ मा तर्हि तुरीयप्रतिपत्तिर्भूयादिति चेत्तत्राह। शून्येति॥ विशिष्टस्यैव प्रतिपत्त्या तुरीयस्याप्रतिपत्तौ प्रतिपन्नस्य विश्वादेर्विशिष्टस्य प्रत्युदस्तत्वादन्यस्य चाप्रतिपन्नत्वान्नैरात्म्यधीरेवापद्येतेत्यर्थः। भेदपक्षे यथोक्तदोषवशान्न सम्भवति तर्हि माभूदभेदपक्षोऽपि कथं निर्वहतीति चेत्तत्र किं फलं पर्यनुयुज्यते किंवा प्रमाणान्तरमथ वा साधनान्तरमिति विकल्पाद्यं दूषयति। रज्जुरिवेति॥ यथा रज्जुरधिष्ठानभूता सर्पधारादिभिर्विकल्प्यते तथैक एवात्मा स्थानत्रयेऽपि यदान्तःप्रज्ञत्वादिना विकल्प्यमानो बहुधा भासते तदा तदनुवादेनान्तःप्रज्ञत्वादिप्रतिषेधजनितं यत्प्रमाणरूपविज्ञानं तदुत्पत्तिसमानकालमेवात्मन्यनर्थनिवृत्तिरूपं

प्रज्ञमिति जाग्रत्स्वप्नयोरन्तरालावस्थाप्रतिषेधः । न प्रज्ञा-नघनमिति सुषुप्तावस्थाप्रतिषेधः । बीजभावाविवेक-रूपत्वात् । न प्रज्ञमिति युगपत्सर्वविषयज्ञातृत्वप्रतिषेधः । नाप्रज्ञमित्यचैतन्यप्रतिषेधः । कथं पुनरन्तःप्रज्ञत्वादीना-मात्मनि गम्यमानानां रज्ज्वादौ सर्पादिवत्प्रतिषेधादसत्त्वं गम्यत इत्युच्यते । ज्ञस्वरूपाविशेषेऽपीतरेतरव्यभिचारात् रज्ज्वादाविव । रज्ज्वादाविव सर्पधारादिविकल्पितभेदव-त्सर्वत्राव्यभिचाराज्ज्ञस्वरूपस्य सत्यत्वं सुषुप्ते व्यभिचरतीति

---

फलं सिद्धमिति न फलपर्यनुयोगोऽवकाशवानित्यर्थः। शब्दस्य संकट-परोक्षज्ञानहेतोरसंकटापरोक्षज्ञानहेतुत्वायोगात्तुरीयज्ञाने प्रमाणान्तर-मेष्टव्यमिति पक्षं प्रत्याह। तुरीयेति॥ तस्य हि साक्षात्कारे न शब्दाति-रिक्तप्रमाणमन्वेष्यम्। शब्दस्य विषयानुसारेण प्रमाणहेतुत्वात्। विषयस्य तुरीयस्यासंकटापरोक्षत्वादित्यर्थः। तुरीयसाक्षात्कारे प्रसङ्ख्यानाख्यं साधनान्तरमेष्टव्यमिति पक्षं प्रतिक्षिपति। साधनान्तरं चेति॥ प्रसङ्ख्या-नस्याप्रमाणत्वान्न प्रमारूपं प्रति हेतुतेति भावः। यथा रज्जुरियं सर्पो नेति विवेकधीसमुदयसाक्षात्कारं याहयायामेव रज्ज्वां सर्पनिवृत्तिश्चेत्फल-सिद्धे रज्जुसाक्षात्कारस्य फलान्तरं प्रमाणान्तरं साधनान्तरं वा न मृग्यते कृतत्वात् तथेहापीत्याह। रज्ज्वामिति॥ विषयगतं प्राकट्यं प्रमाणफलं नाध्यक्षनिवृत्तिरित्याशङ्क्याह। येषामिति॥ स्वविषयाज्ञानापनयनाय प्रवृत्ता प्रमाणक्रिया स्वविषये भावरूपमतिशयमाधत्ते चेदपनयार्थक्रिया-त्वाविशेषाच्छिदिरपि छेद्यसंयोगापनयनातिरिक्तमतिशयमादध्यात्। न च संयोगविनाशातिरिक्ते विभागे सम्प्रतिपत्तिरस्ति। प्राकट्यस्य च प्रका-शत्वे ज्ञानवदर्थनिष्ठत्वमप्रकाशत्वे स्यात्। तेनार्थेन विना नाऽर्थोऽस्तीति भावः॥ अज्ञाननिवर्तकमेव प्रमाणमिति पक्षे विषयस्फुरणे कारणा-भावाद्विषयसंवेदनं न स्यादित्याशङ्क्याह। यदेति॥ घटो हि तमसा समा-

चेन्न । सुषुप्तस्यानुभूयमानत्वात् । न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत इति च श्रुतेः अत एवादृष्टम् । यस्माददृष्टं तस्माद्व्यवहार्य्यम् । अग्राह्यं कर्म्मेन्द्रियैरलक्षणमलिङ्गमित्येतदनुमेयमित्यर्थः । अत एवाचिन्त्यम् । अत एवाव्यपदेश्यं शब्दैः । एकात्मप्रत्ययसारं जाग्रदादिस्थानेष्वेकोऽयमा-

---

हतो व्यवहारयोग्यस्तिष्ठति तस्य तमसो निवृत्त्य व्यवहारयोग्यत्वापादने प्रत्यक्षादिप्रमाणं प्रवर्त्तते । तच्चानुपादितस्यानिष्टस्य प्रमेयस्य तमसो निवृत्तिलक्षणे यदा पर्य्यवस्यति तदा घटसंवेदनमार्थिकं प्रमाणफलं न भवति । यथा छिदिक्रिया छेद्यस्य तरोरवयवयोर्मिथःसंयोगनिरसने प्रवृत्ता सती तयोरेव छेद्यावयवयोर्द्वैधीभावे फले पर्य्यवस्यति न त्वन्यतरावयवेऽपि छिदिर्व्याप्रियते तथेहापि तमोनिवृत्तौ प्रमाणं निर्वृणोति । घटस्फुरणं त्वार्थिकम् । न च तस्य स्थायित्वमभिव्यञ्जकप्रमाणव्यापारस्यास्थिरत्वादित्यर्थः । किञ्च घटादेर्जडस्य संविदपेक्षत्वात्तत्र संविदो मानफलत्वेऽपि नात्मन्यजडे संविदेकताने मनस्यारोपितधर्म्मनिवर्त्तकत्वमन्तरेण संविज्जनकत्वव्यापारः सम्भवतीत्याह । न चेति ॥ तुरीयात्मनि संवेदनजननव्यापारो न प्रमाणस्य प्रकल्प्यते । तस्य संविदात्मकत्वादारोपितनिवृत्तिव्यतिरेकेण मानजन्यफलसंविदनपेक्षत्वादित्युक्तम् ॥ तत्रैव हेत्वन्तरमाह । अन्तः प्रज्ञत्वादीति ॥ चान्यथाभावेनाश्रितप्रमाणाभावादनन्तरक्षणे तस्य व्यापारानुपपत्तिरित्येतत् वाक्यशेषमनुकूलयति । तथा चेति ॥ किञ्च प्रमाणाधीनद्वैतनिवृत्त्यवच्छिन्नक्षणातिरेकेण न क्षणान्तरे ज्ञानं स्थातुं पारयति । न चास्थिरं ज्ञानं व्यापाराय पर्य्याप्तम् । तथा च ज्ञानस्य द्वैतनिवृत्तिव्यतिरेकेण नात्मनि व्यापारोऽस्तीत्याह । ज्ञानस्येति ॥ ननु ज्ञानं द्वैतनिवर्त्तकमपि न स्वात्मानं निवर्त्तयति । निवर्त्त्यनिवर्त्तकभावस्यैकत्र विरोधात् । अतो यावन्निवर्त्तकं स्थास्यति तत्राह । अवस्थाने चेति ॥ निवर्त्तकस्य ज्ञानस्य द्वैतनिवृत्तेरनन्तरमपि निवर्त्तकान्तरमपेक्ष्यावस्थाने च तस्य तस्य निवर्त्तकान्तरव्यपेक्षत्वादाद्यस्यापि विज्ञानस्य निवर्त्तकत्वा-

त्मेत्यव्यभिचारी यः प्रत्ययस्तेनानुसरणीयम्। अथवैक आ-
त्मप्रत्ययः सारं प्रमाणं यस्य तुरीयस्याधिगमे तत् तुरी-
यमेकात्मप्रत्ययसारम्। आत्मेत्येवोपासीत इति श्रुतेः।
अन्तःप्रज्ञत्वादि स्थानिधर्म्मप्रतिषेधः कृतः। प्रपञ्चोपशम-
मिति जाग्रदादिस्थानधर्म्माभाव उच्यते। अत एव शान्त-

---

सिद्धिः। न च ज्ञानस्य स्वनिवर्त्तकत्वानुपपत्तिः स्वपरविरोधिनां भावानां
बहुलमुपलब्धेरित्यर्थः॥ ज्ञानस्य जन्मातिरिक्तव्यापाराभावात्तज्जन्मन
एतन्निषेधेनैवोपक्षयात्तदनन्तरे विषयस्फुरणजननायानवस्थानादारो
पितातद्धर्म्मनिवृत्त्यैव ज्ञानं पर्य्यवसितमित्युपसंहरति। तस्मादिति॥
प्रतिषेधजनितं विज्ञानमेव प्रमाणम्। तस्य व्यापारो जन्मैव। तेन समान-
कालेनैवानर्थनिवृत्तिरिति योजना। तत्र हेतुमाह। बीजभावेति॥ सुषुप्तं
हि स्वप्नजागरिते प्रति बीजभावस्तस्याशेषविशेषविज्ञानाभावरूपत्वाद्विशेष
विज्ञानानां सर्व्वेषां घनमेकं साधारणमविभक्तं सुषुप्तमिति तत्प्रतिषेधो
नेत्यादिना सम्भवतीत्यर्थः। युक्तं सर्पादीनां रज्ज्वादौ भ्रान्तिप्रतिपन्नानां
प्रतिषेधादसत्त्वम्। आत्मनि तु प्रमाणेन मन्यमानानामन्तःप्रज्ञत्वादीनां न
प्रतिषेधो युज्यते मानविरोधादिति शङ्कते। कथमिति॥ प्रमाणैक-
त्वस्याविशिष्टत्वाद्युक्तमन्तःप्रज्ञत्वादीनामसत्यत्वमिति परिहरति। उच्यत
इति॥ विमतमसत्यं व्यभिचारित्वाद्भ्रान्तिप्रतिपन्नवदित्याह। सर्परूपेति॥
तस्याविशेषोऽव्यभिचारस्तत्र रज्ज्वादावित्युदाहरणम्। अन्तः प्रज्ञत्वा-
दीनामितरेतरव्यभिचारे निदर्शनं सर्पधारादीति। विमतं सत्यमव्यभि-
चारित्वाद्रज्ज्वादिवदित्याह। सर्वत्रेति॥ तस्य च सत्यत्वे सर्वकल्पनाधि-
ष्ठानत्वसिद्धिरिति भावः॥ अव्यभिचारित्वहेतोरसिद्धिं शङ्कते।
सुषुप्त इति॥ न तत्र चैतन्यस्य व्यभिचारः सुषुप्तस्य स्फुरणव्याप्ततया
साधकस्फुरणस्यावश्यकत्वादित्याह। न सुषुप्तस्येति॥ सुषुप्ते साधकस्फुरण
सत्त्वे प्रमाणमाह। न हीति निषेधशास्त्रायोजनया निर्वि-
शेषत्वं तुरीयस्योक्तं तदेव हेतूकृत्य ज्ञानेन्द्रियाविषयत्वमाह। अत-
एवेति॥ दृष्टस्यैवार्थक्रियावादर्शनादृष्टत्वादर्थक्रियाराहित्यमिति विशेष

मविक्रियं शिवं यतोऽद्वैतं भेदविकल्परहितं चतुर्थं तुरीयं मन्यन्ते। प्रतीयमानपादत्रयरूपवैलक्षण्यात्। स आत्मा स विज्ञेय इति प्रतीयमानसर्पभूच्छिद्रदण्डादिव्यतिरिक्ता यथा रज्जुस्तथा तत्त्वमसीत्यादिवाक्यार्थः। आत्माऽदृष्टो

---

चान्तरमाह। यस्मादिति॥ अदृष्टमित्यनेनाग्राह्यमित्यस्य पौनरुक्त्यं परिहरति। कर्मेन्द्रियैरिति॥ अव्यवहार्यमित्युक्तम्। कथं मानमननमित्यादिवचनोपपत्त्यादित्याशङ्क्याह। अलक्षणमिति॥ को ह्येवान्यात्कः प्राण्यादित्यादिलिङ्गोपन्यासाविरुद्धमेतदित्याशङ्क्याह। अनन्तुमेयमिति॥ प्रत्यक्षानुमानाविषयत्वप्रयुक्तं विशेषणान्तरमाह। अत एवेति। मनोविषयत्वाभावादेव शब्दाविषयत्वम्॥ शब्दप्रवृत्तेस्तत्प्रवृत्तिपूर्वकत्वादित्याह। अत एवेति॥ तर्हि यथोक्तं वस्तु नास्त्येव प्रमाणाभावादित्याशङ्क्याह। एकात्मेति॥ परोक्षार्थविषयतया विशेषणं व्याख्यायापरोक्षार्थतया व्याकरोति। अथ वेति॥ अपरोक्षात्मप्रत्ययसात्मनि प्रमाणत्वे बृहदारण्यकश्रुतिमुदाहरति॥ आत्मेत्येवेति॥ यत्राप्नोतीत्यादिना परिपूर्णत्वादिवचनवशादात्मोक्तः। स च वाङ्मनसातीतः श्रुतिभ्योऽवगतस्तमेवैकरसं परमात्मानं प्रत्ययेन गृहीत्वा तन्निर्दिशतीत्यात्मनोऽवस्थात्रयातीतस्य तुरीयस्यापरोक्षमित्यभिहितं श्रुतितो दृष्टमित्यर्थः॥ विशेषणान्तरस्य पुनरुक्तिं परिहरन्नर्थभेदमाह। अन्यैरिति॥ स्थानिधर्मस्य स्थानधर्मस्य च प्रतिषेधोऽन्तःप्रज्ञेन परामृश्यते। शान्तं रागद्वेषादिरहितम्। अविक्रियं कूटस्थमित्यर्थः। शिवं परिशुद्धं परमानन्दबोधरूपमिति यावत्॥ यथाद्वैताभावोपलक्षितं तथा चतुर्थमित्याह। यत इति। अद्वैतमित्येतद्व्याचष्टे। भेदेति॥ संख्याविशेषविषयत्वाभावे कथं चतुर्थत्वमित्याशङ्क्याह। प्रतीयमानेति॥ चतुर्थं तुरीययोर्व्याख्यानव्याख्येयत्वेनापौनरुक्त्यं तस्योक्तविशेषणत्वेऽपि मम किमायातमित्याशङ्क्याह। स विज्ञेय इति॥ तदेव व्याचष्टे। प्रतीयमानेति॥ न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वादित्यादिवाक्यानि प्रतीकोपादानेन दर्शयति। न हि द्रष्टुरिति॥

# गौडपादीयोपनिषदाविष्करणम् ॥

निवृत्तेः सर्व्वदुःखानामीशानः प्रभुरव्ययः । अद्वैतः सर्व्वभावानां देवस्तुर्यो विभुः स्मृतः ॥ १० ॥

---

द्रष्टा । न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत इत्यादिश्रुतेर्ज्ञेयः स विज्ञेय इति भूतपूर्व्वगत्या ज्ञाते द्वैताभावः ॥ ७ ॥

अत्रैते श्लोका भवन्ति ॥ प्राज्ञतैजसविश्वलक्षणानां सर्व्वदुःखानां निवृत्तेरीशानस्तुरीय आत्मा । ईशान इत्यस्य पदस्य व्याख्यानं प्रभुरिति । दुःखनिवृत्तिं प्रति प्रभुर्भवतीत्यर्थः । तद्विज्ञाननिमित्तत्वाद्दुःखनिवृत्तेः । अव्ययो न व्येति स्वरूपान्न व्यभिचरतीति यावत् । एतत्कुतः । यस्मा-

---

ज्ञातत्वव्यवहारार्थं ज्ञातेर्विषयत्वमित्याशङ्क्य भूतपूर्व्वमविद्यावस्थायां वा विषयत्वात्तस्यावगतिस्तथेदानीमपि विषयत्वमित्याह । भूतेति ॥ विद्यावस्थायामेव किमिति ज्ञातृज्ञानज्ञेयविभागो न भवति तत्राह । ज्ञात इति ॥ ज्ञानेन तत्कारणस्याज्ञानस्यापनीतत्वादित्यर्थः ॥ ७ ॥

नान्तःप्रज्ञत्वादिश्रुत्युक्तेऽर्थे तद्विवरणरूपान् श्लोकानवतारयति । अत्रेति ॥ विविधं स्थानत्रयमश्नुवतीति व्युत्पत्त्या तुरीयो विभुरुच्यते । न हि तुरीयातिरेकेण स्थानत्रयमात्मानं धारयति । सर्व्वदुःखानामाध्यात्मिकादिभेदभिन्नानां तद्धेतूनां तदाधाराणामिति यावत् । ईशानपदं प्रयुज्य प्रभुपदं प्रयुञ्जानस्य पौनरुक्त्यमित्याशङ्क्याह । ईशान इति ॥ तुरीयस्य दुःखनिवृत्तिं प्रति सामर्थ्यस्य नित्यत्वान्न कदाचिदपि दुःखं स्यादित्याशङ्क्याह । तद्विज्ञानेति ॥ संसृष्टरूपेण व्ययोऽस्तीत्याशङ्क्य विशिनष्टि । स्वरूपादिति ॥ तत्र प्रश्नपूर्व्वकमद्वितीयत्वं हेतुमाह । एतत्कुत इति ॥ अतो द्वितीयस्य व्ययहेतोरभावादिति शेषः । विश्वादीनां दृश्यमानत्वात्तुरीयस्याद्वितीयत्वासिद्धिरित्याशङ्क्याह ।

कार्य्यकारणबद्धौ ताविष्येते विश्वतैजसौ । प्राज्ञः
कारणबद्धस्तु द्वौ तौ तुर्य्ये न सिध्यतः ॥ ११ ॥
नात्मानं नापरांश्चैव न सत्यं नापि चाऽ

---

द्वैतः सर्व्वभावानां रज्जुसर्पवन्मृषात्वात् एष देवो द्योतनात्तुरीयश्चतुर्थो विभुर्व्यापी स्मृतः ॥ १० ॥

विश्वादीनां सामान्यविशेषभावो निरूप्यते तुर्य्ययाथात्म्यावधारणार्थम् । कार्य्यं क्रियत इति फलभावः । कारणं करोतीति बीजभावः । तत्त्वाग्रहणान्यथाग्रहणाभ्यां बीजफलभावाभ्यां तौ यथोक्तौ विश्वतैजसौ बद्धौ सङ्गृहीताविष्येते । प्राज्ञस्तु बीजभावेनैव बद्धः । तत्त्वाप्रतिबोधमात्रमेव हि बीजं प्राज्ञत्वे निमित्तम् । ततो द्वौ तौ बीजफलभावौ तत्त्वाग्रहणान्यथाग्रहणे तुर्य्ये न सिध्यतो न विद्येते न सम्भवत इत्यर्थः ॥ ११ ॥

कथं पुनः कारणबद्धत्वं प्राज्ञस्य तुरीये वा तत्त्वाग्र-

---

सर्व्वभावानामिति । अतस्यात्ययातीतस्य तुरीयस्योक्तलक्षणत्वं विद्वदनुभवसिद्धमिति सूचयति । स्मृत इति ॥ १० ॥

विश्वादिष्ववान्तरविशेषनिरूपणद्वारेण तुरीयमेव निर्द्धारयति । कार्य्यमिति ॥ श्लोकस्य तात्पर्य्यमाह । विश्वादीनामिति ॥ विश्वतैजसयोरुभयबद्धत्वं सामान्यं प्राज्ञस्य कारणमात्रबद्धत्वं विशेषः ॥ अथेदं निरूपणं कुत्रोपयुज्यते तत्राह । तुर्य्येति ॥ प्राज्ञस्य कारणमात्रबद्धत्वं साधयति । तत्त्वाप्रतिबोधेति ॥ त्रयाणामवान्तरविशेषे स्थिते प्रकृते तुरीये किमायातमित्याशङ्क्याह । तत इति ॥ तयास्तस्मिन्नविद्यमानत्वं चिदेकताने तयोर्निरूपयितुमशक्यत्वादित्याह सम्भवत इति ॥ ११ ॥

प्राज्ञस्य कारणबद्धत्वं साधयति । नात्मानमिति ॥ तुरीयस्य

न्‍तम् । प्राज्ञः किञ्चन संवेत्ति तुर्य्यं तत्सर्व्वदृक्

---

ग्रहणान्यथाग्रहणलक्षणौ बन्धौ न सिध्यत इति । यस्मादा-त्मविलक्षणमविद्याबीजप्रसूतं बाह्यं द्वैतं प्राज्ञो न किञ्चन संवेत्ति यथा विश्वतैजसौ ततश्चासौ तत्त्वाग्रहणेन तमसा ऽन्यथाग्रहणबीजभूतेन बद्धो भवति । यस्मात्तुरीयं तत्स-र्व्वदृक् सदा तुरीयादन्यस्याभावात्सर्व्वदा सदैवेति । सर्व्वञ्च तद्दृक्चेति सर्व्वदृक्तस्मान्न तत्त्वाग्रहणलक्षणं बीजम् । तत्र तत्प्रसूतस्यान्यथाग्रहणस्याप्यत एवाभावो न हि सवि-तरि सदा प्रकाशात्मके तद्विरुद्धमप्रकाशनं अन्यथा प्रकाशनं वा सम्भवति । न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत इति श्रुतेः । अथवा जाग्रत्स्वप्नयोः सर्व्वभूतावस्थः सर्व्व-

---

कार्य्यकारणाभ्यामसंस्पृष्टत्वं साधयति । तुर्य्यमिति ॥ बोधस्यावस्था-भावस्थामाह । कथमिति ॥ तावद्द्वात्कथमित्यस्यानुवृत्तिः सूच्यते । प्रथमचोद्योत्तरत्वेन पादत्रयं व्याचष्टे । यस्मादिति ॥ विलक्षणमना-त्मानमिति यावत् । अनृतमित्यस्य व्याख्यानमविद्याबीजप्रसूतमिति द्वैतं द्वितीयमसत्यमित्यर्थः ॥ वैधर्म्योदाहरणम् । यथेति ॥ प्राज्ञस्य विभा-गविज्ञानाभावे फलमाह । ततश्चेति ॥ यथोक्ते तमसि कार्य्यलिङ्गमनु-मानं सूचयति । अन्यथेति । द्वितीयं चोद्यं चतुर्थपादव्याख्यानेन प्रत्या-ख्याति । यस्मादित्यादिना ॥ सदैव तुरीयादन्यस्याभावात्तुरीयमेव सर्व्वं तच्च सदा दृग्रूपमिति यस्मात्तस्मादिति योजना । तत्रेति परिपूर्ण-निर्विशेषतानं तुरीयं परामृश्यते । अत एवेति कारणाभावे कार्य्या-नुपपत्तेरित्यर्थः ॥ तुरीये तत्त्वाग्रहणान्यथाग्रहणयोरसम्भवं दृष्टान्तेन साधयति । न हीति ॥ यत्तु तुरीयस्य सदा दृगात्मत्वमुक्तं तत्र प्रमाण-माह । न हि द्रष्टुरिति ॥ चतुर्थपादं प्रकारान्तरेण योजयति । अथ

सदा ॥ १२ ॥ द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः । बीजनिद्रायुतः प्राज्ञः सा च तुर्ये न विद्यते ॥ १३ ॥

---

वस्तुदृगाभासस्तुरीय एवेति सर्वदृक् सदा । नान्यदतोऽस्ति द्रष्टृ इत्यादिश्रुतेः ॥ १२ ॥ निमित्तान्तरप्राप्ताशङ्कानिवृत्त्यर्थोऽयं श्लोकः । कथं द्वैताग्रहणस्य तुल्यत्वात्कारणबद्धत्वं प्राज्ञस्यैव न तुरीयस्येति प्राप्ता शङ्का निवर्त्त्यते । यस्माद्बीजनिद्रायुतस्तत्त्वाप्रतिबोधो निद्रा । सैव च विशेषप्रतिबोधप्रसवस्य बीजम् । सा बीजनिद्रा । तया युतः प्राज्ञः सदा दृक्स्वभावत्वात्तत्त्वाप्रतिबोधलक्षणा निद्रा तुरीये न विद्यते । अतो न कारणबन्धस्तस्मिन्नित्यभिप्रायः ॥ १३ ॥

---

नेति ॥ तत्रापि श्रुतिमनुकूलयति । नान्यदिति ॥ १२ ॥ अनुमानप्रयुक्तां तुरीयेऽपि कारणबद्धत्वाशङ्कां परिहरति । द्वैतस्येति ॥ श्लोकस्य तात्पर्यं संगृह्णाति । निमित्तान्तरेति ॥ विमतं कारणबद्धं द्वैताग्रहणत्वात्प्राज्ञवदित्यनुमानमेव दर्शयन्निमित्तान्तरमेव स्फोरयति । कथमिति ॥ अनुमानलताशङ्कानिवर्त्तकत्वेन श्लोकमवतारयति । प्राज्ञेति ॥ प्राज्ञस्योत्तरभाविप्रबोधादिकार्यापेक्षया नियतपूर्वभावित्वं कारणबद्धत्वे प्रयोजकम् । न च तुरीयस्य तदस्तीत्यप्रयोजको हेतुरित्याह । यस्मादिति ॥ किञ्च तुरीयस्य विशुद्धचिन्मात्रत्वप्रसाधनप्रमाणबाधात् । कालात्ययापदिष्टो हेतुरित्याह । सदेति ॥ न च पूर्वोक्तोपाधेः साधनव्याप्तिस्तुरीयस्योत्तरभाविकार्यापेक्षया नियतप्राग्भावित्वाभावादिति मत्वाह । तत्त्वेति ॥ दृष्टान्तवत्त्वेनानुमानस्याभासत्वं फलितमाह । अतो नेति ॥ १२ ॥

स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया। न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः ॥१४॥

---

स्वप्नोऽन्यथाग्रहणं सर्प इव रज्ज्वाम्। निद्रोक्ता तत्त्वाप्रतिबोधलक्षणं तम इति। ताभ्यां स्वप्ननिद्राभ्यां युक्तौ विश्वतैजसौ। अतस्तौ कार्य्यकारणबद्धावित्युक्तौ। प्राज्ञस्तु स्वप्नवर्जितः केवलयैव निद्रया युत इति कारणबद्ध इत्युक्तम्। नोभयं पश्यन्ति तुरीये निश्चिता ब्रह्मविदो विरुद्धत्वात्सवितरीव तमः। अतो न कार्य्यकारणबद्ध इत्युक्तस्तुरीयः॥ १४॥

---

कार्य्यकारणबद्धौ ताविष्यादिश्लोकोक्तमर्थमनुभवावष्टम्भेन प्रपञ्चयति। स्वप्नेति॥ ननु तैजसस्यैव स्वप्नयुक्तत्वं न तु विश्वस्य प्रबुध्यमानस्य तद्योगो यस्मात् प्रबुध्यमानत्वव्याघातात्। कथमविशेषेण विश्वतैजसौ स्वप्ननिद्रायुताविति। तत्र स्वप्नशब्दार्थमाह। स्वप्न इति॥ यथा रज्ज्वां सर्पो गृह्यमाणोऽन्यथा गृह्यते तथाऽऽत्मनि देहादिग्रहणमन्यथाग्रहणम्। आत्मनो देहादिवैलक्षण्यस्य श्रुतियुक्तिसिद्धत्वात्तेन स्वप्नशब्दितेनान्यथाग्रहणेन संसृष्टत्वं विश्वतैजसयोरविशिष्टमित्यर्थः। तथा निद्रा-यस्यैव निद्रा युक्ता न तु प्रबोधवतो विश्वस्येत्याशङ्क्याह। निद्रेति॥ उक्ताभ्यां स्वप्ननिद्राभ्यां विश्वतैजसयोर्वैशिष्ट्यं निगमयति। ताभ्यामिति॥ तयोरन्यथाग्रहणेनाग्रहणेन च वैशिष्ट्यमुपेत्य प्रागपि सूचितमित्याशङ्क्याह। अत इति॥ द्वितीयं पादं विभजते। प्राज्ञस्त्विति॥ द्वितीयार्धं व्याचष्टे। नोभयमिति॥ तुरीये निद्रास्वप्नयोरदर्शने हेतुमाह। विरुद्धत्वादिति॥ अज्ञानतत्कार्य्ययोर्नित्यविज्ञप्तिरूपे तुरीये विरुद्धत्वादनुपलब्धिरित्यत्र दृष्टान्तमाह। सवितरीवेति॥ तुरीये वस्तुतो नाविद्यातत्कार्य्ययो सङ्गतिरस्तीत्युक्तेऽत्र प्रागपि सूचितमित्याह। अतो नेति॥ १४॥

अन्यथा गृह्णतः स्वप्नो निद्रा तत्त्वमजानतः। विपर्य्यासे तयोः क्षीणे तुरीयं पदमश्नुते ॥ १४ ॥

---

कदा तुरीये निश्चितो भवतीत्युच्यते। स्वप्नजागरितयोरन्यथा रज्ज्वां सर्प इव गृह्णतस्तत्त्वं स्वप्नो भवति। निद्रा तत्त्वमजानतस्तिसृष्ववस्थासु तुल्या। स्वप्ननिद्रयोस्तुल्यत्वाद्विश्वतैजसयोरेकराशित्वम्। अन्यथाग्रहणात् प्राधान्याच्च गुणभूता निद्रेति तस्मिन् विपर्य्यासः स्वप्नः। तृतीये तु स्थाने तत्त्वाज्ञानलक्षणा निद्रैव केवला विपर्य्यासः। अतस्तयोः कार्य्यकारणस्थानयोरन्यथाग्रहणाग्रहणलक्षणविपर्य्यासे कार्य्यकारणबन्धरूपे परमार्थतत्त्वप्रतिबोधतः

---

कदा तर्हि स्वप्नो भवतीत्यपेक्षायामाह। अन्यथेति॥ निद्रा तर्हि कदेति चिन्तायां प्रत्याह। निद्रेति॥ तुरीयप्रतिपत्तिसमयं सङ्गिरते। विपर्य्यास इति॥ श्लोकव्याख्यायामाकाङ्क्षां दर्शयति। कदेति॥ कदा स्वप्ननिष्ठो भवति कदा निद्रानिष्ठः स्यादित्यपि द्रष्टव्यम्॥ प्रश्नत्रयस्योत्तरं श्लोकेन दर्शयति। उच्यत इति॥ तत्र कदा स्वप्नो भवतीति प्रश्नं परिहरति। स्वप्नेति॥ अवस्थाद्वये स्वप्नद्रष्टुरित्यर्थः। द्वितीयं प्रश्नं समाधत्ते। निद्रेति॥ विश्वादिषु त्रिषु तयोरिति द्विवचनं कथमित्याशङ्क्याह। स्वप्ननिद्रयोरिति॥ विश्वतैजसावेको राशिः। प्राज्ञो द्वितीयः। ततः श्लोके द्विवचनमविरुद्धमित्यर्थः। प्रथमे राशौ विपर्य्यासस्वरूपं कथयति। अन्यथेति॥ द्वितीये राशौ विपर्य्यासविशेषं दर्शयति। तृतीये त्विति॥ द्वितीयार्द्धगताक्षराणि व्याकरोति। अत इति॥ द्विवचनस्योपपन्नत्वाद्विपर्य्यासस्य च विभागेन निर्द्धारितत्वादित्यर्थः। तृतीयं प्रश्नं

अनादिमायया सुप्तो यदा जीवः प्रबुध्यते।

बीजे तुरीये पदमश्नुते तदोभयलक्षणं बन्धरूपं तत्रा-पश्यन् तुरीये निश्चितो भवतीत्यर्थः ॥ १५ ॥

योऽयं संसारी जीवः स उभयलक्षणेन तत्त्वाप्रतिबोधरूपेण बीजात्मना अन्यथाग्रहणलक्षणेन चानादिकालप्रवृत्तेन मायालक्षणेन स्वप्नेन ममायं पिता पुत्रोऽयं नप्ता क्षेत्रं पशवोऽहमेषां स्वामी सुखी दुःखी क्षयितोऽहमनेन वर्द्धितश्चानेनेत्येवंप्रकारान् स्वप्नान् स्थानद्वयेऽपि पश्यन् सुप्तो यदा वेदान्तार्थतत्त्वाभिज्ञेन परमकारुणिकेन गुरुणा नास्येवं त्वं हेतुफलात्मकः किन्तु तत्त्वमसीति प्रतिबोध्यमानो यदा तदैवं प्रतिबुध्यते। कथं नास्मिन् बाह्यमाभ्यन्तरं वा जन्मादिभावविकारोऽस्त्यतोऽजं सबाह्याभ्यन्तरसर्व्वभावविकारवर्जितमित्यर्थः। यस्माज्जन्मादिकारणभूतं नास्मिन्नविद्यातमोबीजं निद्रा विद्यत इत्य-

---

प्रतिविधत्ते। तदेति॥ तत्त्वप्रबोधाद्विपर्य्यासबन्धावस्थाबाधमित्यर्थः॥ १५॥

कदा तत्त्वप्रतिबोधो विपर्य्यासबन्धहेतुर्भवतीत्यपेक्षायामाह। अनादीति॥ प्रतिबुध्यमानं तत्त्वमेव विशिनष्टि। अजमिति॥ [जीवशब्दवाच्यमर्थं निर्दिशति। योऽयमिति परमात्मैव जीवभावमापन्नः संसरतीत्यर्थः। तत्र कथं जीवभावापत्तिरित्याशङ्क्य कार्य्यकारणवद्भावादित्याह। स इति॥ परमात्मोभयलक्षणेन स्वापेन युतो भवतीत्यन्वयः। स्वापस्योभयलक्षणत्वमेव प्रकटयति। तत्त्वेत्यादिना॥ मायालक्षणेनेत्युभयत्र सम्बध्यते॥ सुषुप्तमेव व्यनक्ति। ममेत्यादिना॥ स्वापपरिष्वङ्गीतस्यैव प्रतिबोधनात्मकार्य्यो भवतीत्याह। यदेति॥ यदा सुषुप्तस्तदा बुध्यते

अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा ॥ १६ ॥

प्रपञ्चो यदि विद्येत निवर्त्तेत न संशयः ।

---

निद्रम् । अनिद्रं हि तत्तुरीयमत एवास्वप्नम् । तन्निमित्तत्वा दन्यथा ग्रहणस्य । यस्माच्चानिद्रमस्वप्नं तस्मादजमद्वैतं तुरीयमात्मानं बुध्यते तदा ॥ १६ ॥

प्रपञ्चनिवृत्त्या चेत्प्रतिबुध्यतेऽनिवृत्ते प्रपञ्चे कथमद्वैतमिति । उच्यते । सत्यमेवं स्यात्प्रपञ्चो यदि विद्येत रज्ज्वां सर्प इव कल्पितत्वात् न तु स विद्यते विद्यमानश्चेन्निवर्त्तेत न संशयः । न हि रज्ज्वां भ्रान्तिबुद्ध्या

---

इति शेषः ॥ प्रतिबोधकं निर्दिशति । वेदान्तार्थेति ॥ कथं प्रतिबोधनं तदाह । नास्तीति ॥ अनुभूयमानत्वेऽपीत्युच्यते । यथोक्तविशेषणेन गुरुणा प्रतिबुध्यमानः शिष्यस्तदाऽसावेवं वक्ष्यमाणप्रकारेण प्रतिबुद्धो भवतीत्युक्तम् ॥ तमेव प्रकारं प्रश्नपूर्व्वकं द्वितीयार्द्धव्याख्यानेन विशदयति । कथमित्यादिना ॥ अस्मिन्निति सप्तम्याबोध्यात्मरूपं परामृश्यते । बाह्यं कार्य्यमान्तरं कारणं तदुभयमिह नास्ति । ततो जन्मादेर्भावविकारस्य नात्रावकाशः सम्भवतीत्यर्थः ॥ अवतारितं विशेषणं सम्प्रत्यर्थं योजयति ॥ यवाह्येति ॥ अजत्वादेवानिद्रं कार्य्याभावे कारणस्य प्रमाणाभावेन वक्तुमशक्यत्वादिति मत्वाह । यस्मादिति ॥ अनिद्रत्वं हेतुं कृत्वा विशेषणान्तरं दर्शयति । अत एवेति ॥ अग्रहणान्यथाग्रहणस्वभाववैधुर्य्यं हेतुं कृत्वा विशेषणद्वयमित्याह । यस्माच्चेति ॥ तत्त्वमेवंलक्षणमस्तु आत्मनः किमायातमित्याशङ्क्याह । तुरीयमिति । तदा विशिष्टेनाचार्य्येण विशिष्टं शिष्यं प्रति प्रतिबोधनावस्थायामित्यर्थः ॥ १६ ॥

तुरीयमद्वैतमित्युक्तं तदयुक्तं प्रपञ्चस्य द्वितीयस्य सत्त्वादित्याशङ्क्याह । प्रपञ्च इति ॥ प्रपञ्चनिवृत्त्या तुरीयप्रतिबोधात्तदद्वितीयत्वमविरुद्धमिति सैद्धान्तिकोमाशङ्कां पूर्व्ववाद्यनुवदति । प्रपञ्चेति ॥ तर्हि पूर्व्वं प्रपञ्चनिवृत्तेरनिवृत्तस्य तस्य सत्त्वान्नाद्वैतं सेद्धुमर्हतीति

मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥ १७ ॥

कल्पितः सर्पो विद्यमानः सन् विवेकतो निवृत्तः । नैव माया मायाविना प्रयुक्ता तद्दर्शिनां चक्षुर्बन्धापगमे विद्यमाना सती निवृत्ता । तथेदं प्रपञ्चाख्यं मायामात्रं द्वैतं रज्जुवन्मायाविवच्चाद्वैतं परमार्थतस्तस्मान्न कश्चित्प्रपञ्चः प्रवृत्तो निवृत्तो वास्तीत्यभिप्रायः ॥ १७ ॥

---

पूर्वगाथेव प्रवीति । अनिवृत्त इति॥ विद्वान्वी श्लोकेनोत्तरमाह । उच्यत इति॥ किं प्रपञ्चस्य वस्तुत्वमपेक्ष्याद्वैतानुपपत्तिरुच्यते किंवा ऽवस्तुत्वमिति विकल्पमाद्ये द्वैतानुपपत्तिमङ्गीकरोति॥ सत्यमिति॥ अद्वैतं तर्हि कथमुपपद्येतेत्याशङ्क्य प्रपञ्चस्यावस्तुत्वपक्षे तदुपपत्तिरित्याह। रज्ज्वामिति ॥ यथा सर्पो रज्ज्वां कल्पितो वस्तुतो नास्ति तथा प्रपञ्चोऽपि कल्पितत्वान्न वस्तुतो विद्यते। तथाच तात्त्विकमद्वैतमविरुद्धमित्यर्थः ॥ उक्तमर्थं व्यतिरेकमुखेन साधयति। विद्यमानश्चेति। यद्यात्मनि कारणाधीनः सन् प्रपञ्चो विद्येत तदा कृतकस्यानित्यत्वनियमात्तन्निवृत्तिरवश्यम्भाविनी। कार्यस्य च निवृत्तिर्नाम कारणसंसर्गस्ततः सति कारणे प्रपञ्चनिवृत्तेरनात्यन्तिकत्वादद्वैतानुपपत्तिराशङ्क्येत। न च कारणाधीनः सन् प्रपञ्चोऽस्ति। तस्य कल्पितत्वेनावस्तुत्वादित्यर्थः॥ प्रपञ्चस्य मायया विद्यमानत्वं न तु वस्तुत्वमित्युदाहरणाभ्यामुपपादयति। न हीत्यादिना॥ सर्पो हि रज्ज्वां भ्रान्त्या कल्पितो नायं सर्पो रज्जुरेवेति विवेकधिया निवृत्तो नैव वस्तुतो विद्यते। बाधितस्य कालत्रयेऽपि सत्त्वाभावात्। माया चेन्द्रजालशब्दवाच्या मायाविना प्रदर्शिता पार्श्वस्थानां मायादर्शनवतां चक्षुर्गतस्य यथार्थदर्शनप्रतिबन्धकस्यापगमे सति सम्यक्पश्यज्जगद्दर्शनतो निवृत्ता सती नैव वस्तुतो विद्यमाना भवितुमुत्सहते ॥। यथेदमुदाहरणद्वयं तथेदं द्वैतं प्रपञ्चाख्यं मायामात्रं न परमार्थतोऽस्तीत्यर्थः। प्रपञ्चस्यासत्त्वे शून्यवादः स्यादित्याशङ्क्याह। रज्जुवदिति॥ प्रपञ्चस्य कालत्रयेऽपि सत्त्वाभावे तात्त्विकमद्वैतमविरुद्धमित्युपसंहरति। तस्मादिति॥ १७॥

विकल्पो विनिवर्त्तेत कल्पितो यदि केनचित्। उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥ १८ ॥

---

ननु शास्ता शास्त्रं शिष्य इति विकल्पः कथं निवृत्त इत्युच्यते। विकल्पो विनिवर्त्तेत यदि केनचित्कल्पितः स्यात्। यथाऽयं प्रपञ्चो मायारज्जुसर्पवत्तथाऽयं शिष्यादिभेदविकल्पोऽपि प्राक् प्रतिबोधादेवोपदेशनिमित्तोऽत उपदेशादयं वादः शिष्यः शास्ता शास्त्रमित्युपदेशकार्य्ये

---

प्रकारान्तरेणाद्वैतानुपपत्तिमाशङ्क्य परिहरति। विकल्प इति॥ यदि केनचिद्धेतुना तत्त्वज्ञानेन कार्य्येण शास्त्रादिविकल्पो हेतुतया विकल्पितस्तथाप्यसौ बाधितो निवर्त्तेत न तु तात्त्विकमद्वैतं विरोद्धुमर्हति। तत्त्वज्ञानात्प्रागवस्थायामेव तत्त्वोपदेशनिमित्तो यतः। शास्त्रादिभेदोऽनूद्यते। उपदेशप्रयुक्ते तु ज्ञाने निर्वृत्ते न किञ्चिदपि द्वैतमस्तीत्यद्वैतमविरुद्धमित्यर्थः। श्लोकव्यावर्त्यामाशङ्कामाह। नन्विति॥ तदनिवृत्तौ नाद्वैतसिद्धिर्न च शास्त्रादिभेदस्य कल्पितत्वादविरोधः। तथा सति धूमाभासवत्तत्त्वज्ञानहेतुत्वानुपपत्तिरित्यर्थः॥ धूमाभासस्याव्याप्तस्य तद्धेतुत्वेऽपि कल्पितस्य शास्त्रादेस्तत्त्वज्ञानहेतुत्वं प्रतिबिम्बादिवदुपपन्नमित्युत्तरमाह। उच्यत इति॥ शिष्यः शास्ता शास्त्रमित्ययं विकल्पो विभागः सोऽपि निवृत्तिप्रतियोगित्वादवस्तुत्वाज्ज्ञानबाध्यत्वादद्वैताविरोधीत्यर्थः॥ शिष्यादिविभागस्य कल्पितत्वं दृष्टान्तेन स्पष्टयति। यथेति॥ मायाविना प्रयुक्ता माया यथा कल्पितेष्यते यथा च सर्पधारादिर्विकल्पितस्तथाऽयं प्रपञ्चः सर्वोऽपि कल्पितो वस्तु न भवतीति प्रपञ्चितं तथैव प्रपञ्चैकदेशः शिष्यादिरपि ज्ञानात्प्राक्कल्पितः सन्ज्ञानफलतो मिथ्येत्यर्थः॥ किमिति ज्ञानात्पूर्वमसौ कल्प्यते तत्राह। उपदेशेति॥ उपदेशस्तद्विषयं यथोक्तविभागवचनमित्युक्तपर्यं

सोऽयमात्माऽध्यक्षरमोङ्कारोऽधिमात्रं पादा मात्रा मात्राश्च पादा अकार उकारो मकार इति ॥ ८ ॥

---

तु ज्ञाने निवृत्ते ज्ञाते परमार्थतत्त्वे द्वैतं न विद्यते ॥ १८ ॥

अभिधेयप्रधान ओङ्कारश्चतुष्पादात्मेति व्याख्यातो यः सोऽयमात्माऽध्यक्षरमक्षरमधिकृत्याभिधानप्राधान्येन वर्ण्यमानोऽध्यक्षरम्। किं पुनस्तदक्षरमित्याह। ओङ्कारः। सोऽयमोङ्कारः पादशः प्रविभज्यमानोऽधिमात्रं मात्रामधिकृत्य वर्त्तत इत्यधिमात्रम्। कथमात्मनो ये पादास्त ओङ्कारस्य मात्राः। काश्ताः। अकार उकारो मकार इति ॥ ८ ॥

---

इरति यत इति। उपदेशात्प्रागिव तस्मादूर्ध्वमपि भेदेऽनुवर्त्तताम् इत्याशङ्क्य विरोधिसद्भावान्नैवमित्याह। उपदेशेति॥ १८॥

तत्त्वज्ञानसमर्थानां मध्यमानामुत्तमानां चाधिकारिणामध्यारोपापवादाभ्यां पारमार्थिकं तत्त्वमुपदिष्टमिदानीं तत्त्वप्रत्ययासमर्थानामधमाधिकारिणामात्मध्यानविधानायारोपदृष्टिमेवावष्टभ्य व्याचष्टे। अभिधेयेत्यादिना॥ अध्यक्षरमित्येतद्व्याकरोति। अक्षरमिति॥ अध्यक्षरमित्यत्र किं पुनस्तदक्षरमिति प्रश्नपूर्वकं व्युत्पादयति। किं पुनरित्यादिना॥ तस्य विशेषणान्तरं दर्शयति। सोऽयमिति॥ स आत्मा हि पादशो विभज्यते मात्रामधिकृत्य पुनरोङ्कारो वर्त्तते तत्कथं पादशो विभज्यमानस्याधिमात्रत्वमिति पृच्छति। कथमिति॥ पादानां मात्राणां चैकत्वादेतदविरुद्धमित्याह। आत्मन इति॥ ८॥

जागरितस्थानो वैश्वनरोऽकारः प्रथमा मा-त्राप्तेरादिमत्त्वाद्वाप्नोति ह वै सर्व्वान् कामानादिश्च भवति य एवं वेद ॥ ९ ॥

---

तत्र विशेषनियमः क्रियते। जागरितस्थानो वैश्वानरो यः स ओङ्कारस्याकारः प्रथमा मात्रा। केन सामान्येनेत्याह। आप्तेराप्तिर्व्याप्तिरकारेण सर्व्वा वाग्व्याप्ता। अकारो वै सर्व्वा वागिति श्रुतेः। तथा वैश्वानरेण जगत्। तस्य ह वैतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजा इत्यादि-श्रुतेः। अभिधानाभिधेययोरेकत्वञ्चावोचाम। आदिरस्य विद्यत इत्यादिमद्यथैवादिमदकाराख्यमक्षरं तथैव वैश्वा-नरस्तस्माद्वा सामान्यादकारत्वं वैश्वानरस्य। तदेकत्वविदः फलमाह। आप्नोति ह वै सर्व्वान् कामानादिः प्रथमश्च

---

पादानां मात्राणाञ्च मध्ये विश्वस्य विशेषस्याकारविशेषत्वं नियमयति। तत्रेति विश्वाकारयोरेकत्वं सादृश्ये सत्यारोपयितुं शक्यमन्यत्व सत्येव तस्मिन्नारोपसन्दर्शनात्तथा च किं तदारोपप्रयोजकं सादृश्यमिति पृच्छति। केनेति॥ सामान्योपन्यासपरां श्रुतिमवतारयति। आहेति॥ आप्तिमेवाकारस्य श्रुत्युपन्यासेन व्यनक्ति। अकारेणेति॥ अध्यात्माधि-दैविकयोरेकत्वं पूर्व्वमुक्तमुपेत्य विश्वस्य वैश्वानरस्य जगद्व्याप्तिं श्रुत्य-वष्टम्भेन स्पष्टयति। तथेति॥ किञ्च सामान्यद्वारा वाच्यवाचकयोरेकत्व-मारोप्यं न भवति तयोरेकत्वस्य प्रागेवोक्तत्वादित्याह। अभिधानेति॥ सामान्यान्तरमाह। आदिरिति॥ तदेव स्फुटयति। यथैवेति॥ उकारो मकारश्चेत्युभयमपेक्ष्य प्रथमपाठादिमत्त्वमकारस्य द्रष्टव्यम्। विश्वस्य पुनरादिमत्त्वम्। तैजसप्राज्ञावपेक्ष्याद्यस्थाने वर्त्तमानत्वादित्यर्थः॥ उक्तस्य सामान्यान्तरस्य फलं दर्शयति। तस्मादिति॥ किमर्थमित्थं सामा-

स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रोत्कर्षादुभयत्वाद्वोत्कर्षति ह वै ज्ञानसन्ततिं समानश्च

---

भवति महतां य एवं वेद यथोक्तमेकत्वं वेदेत्यर्थः ॥ ९ ॥

स्वप्नस्थानस्तैजसो यः स ओङ्कारस्योकारो द्वितीया मात्रा। केन सामान्येनेत्याह। उत्कर्षात्। अकारादुत्कृष्ट इव ह्युकारस्तथा तैजसो विश्वादुभयत्वाद्वा अकारमकारयोर्मध्यस्थ उकारस्तथा विश्वप्राज्ञयोर्मध्ये तैजसोऽत उभयभाक्त्वसामान्याद्विद्वत्फलमुच्यते। उत्कर्षति ह वै ज्ञानसन्ततिम्। विज्ञानसन्ततिं वर्द्धयतीत्यर्थः। समान-

---

न्याद्वारा तयोरेकत्वमुच्यते तद्विज्ञानस्य फलवत्त्वादित्याह। तदेकत्वेति ॥ ९ ॥

साधर्म्यविकल्पादेव फलविकल्पः॥ द्वितीयपादस्य द्वितीयमात्रायाश्चैकत्वं व्यपदिशति। स्वप्नेत्यादिना॥ यथा प्रथमपादस्य प्रथममात्रायाश्चैकत्वं सामान्यं पुरस्कृत्योक्तं तथा द्वितीयपादस्य द्वितीयमात्रायाश्चैकत्वं सत्येव सामान्ये वक्तव्यं तदभावे तदारोपायोगादिति पृच्छति। केनेति॥ सामान्योपन्यासपूर्वकमेकत्वारोपं साधयति। आहेति॥ अकारस्य सर्ववाग्व्यापकत्वेनोत्कृष्टत्वस्य स्पष्टत्वात्कथं तस्मादुकारस्योत्कर्षो वर्ण्यते तत्राह। अकारादिति॥ अकारस्योत्कर्षे वाच्येऽपि पाठक्रमादुकारस्योत्कर्षवत्त्वमौपचारिकमिवकारस्तमर्थमुपोद्बलयति। यथा अकारादुकारोत्कर्षो दर्शितस्तथा विश्वात्तैजसस्योत्कर्षो वक्तव्यः॥ स्थूलाभिमानिनः सूक्ष्माभिमानिनः प्रकाशादुत्कर्षस्य युक्तत्वादित्याह। तथेति॥ उकारतैजसयोर्न प्रत्येकमुभयत्वं एकत्वस्योभयत्वव्याघातादित्याशङ्क्य व्याकरोति। अकारेति॥ मध्यस्थत्वादुकारतैजसयोरुभयभाक्त्वं सामान्यं तस्मात्तयोरेकत्वं शक्यमारोपयितुमित्याह। अत इति॥ यथोक्तैकत्वविज्ञानं फलवत्त्वादुपादेयमिति सूचयति।

भवति नास्याब्रह्मवित्कुले भवति य एवं वेद ॥ १० ॥

सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा मिते-

रपीतेर्वा मिनोति ह वा इदं सर्वमपीतिश्च भवति य एवं वेद ॥ ११ ॥

---

तुल्यश्च भवत्यविशेषेण । अब्रह्मविदस्य कुले न भवति य एवं वेद ॥ १० ॥

सुषुप्तस्थानः प्राज्ञो यः स ओङ्कारस्य मकारस्तृतीया मात्रा । केन सामान्येनेत्याह सामान्यमिदमत्र । मितेर्मितिर्मानं मीयेत इव हि विश्वतैजसौ प्राज्ञेन प्रलयोत्पत्त्योः प्रवेशनिर्गमाभ्याम् । प्रस्थेनेव यवाः । तथा ओङ्कारसमाप्तौ पुनः प्रयोगे च प्रविश्य निर्गच्छत इवाकारोकारौ मकारे । अपीतेर्वाऽपीतिरप्यय एकीभावः । ओङ्कारोच्चारणेऽन्त्येऽक्षरे

---

विद्वदिति ॥ ज्ञानसन्ततेस्तुल्यत्वं नाम कुतस्तत्स्याभेदावेदनं तस्येष्टत्वाभावे कथं फलवत्त्वमित्याशङ्क्य व्याचष्टे । विज्ञानेति ॥ पक्षद्वयतुल्यत्वमेव प्रकटयति । अप्रद्वेष्य इति ॥ साधनभेदेन फलभेदमावेद्य द्विविधसाधनप्रयुक्तैकत्वविज्ञानफलमाह । अब्रह्मविदिति ॥ १० ॥

तृतीयपादस्य तृतीयमात्रया चैकत्वमुपन्यस्यति सुषुप्तेति ॥ पूर्ववदेकत्वप्रयोजकमत्रापि प्रश्नपूर्वकमुपदर्शयति । केनेत्यादिना ॥ मानमेव विवृणोति ॥ मीयेत इति ॥ आमित्योङ्कारस्य नैरन्तर्येणोच्चारणे तत्राकारोकारौ प्रथमं मकारे प्रविश्य पुनस्तस्मान्निर्गच्छन्ताविवोपलभ्येते तेन मकारेऽपि मानसामान्यमिति वक्तव्यमित्यर्थः ॥ एकीभावमेव स्फोरयति । ओङ्कारेति ॥ मकारवत्प्राज्ञेऽपि तदस्ति सामान्यमित्याह । तत्रेति उक्तस्यापि सामान्यस्य फलमाह । अतो वेति ॥ सामान्यद्वयद्वारेण प्राज्ञमकारयोरेकत्वज्ञानं नाविवक्षितं फलवत्त्वादित्याह । विद्वदिति ॥ अविदुषोऽपि जगद्विषयज्ञानमस्तीत्याशङ्क्य विशिनष्टि । जगद्याथात्म्यमिति ॥ तद्याथात्म्यज्ञानात्तत्त्वं प्रत्यग्ब्रह्मैक्यमनिष्ट-

रपीतिर्वा मिनोति ह वा इदं सर्व्वमपीतिश्च भवति य एवं वेद ॥ ११ ॥

॥ गौडपादीयश्लोकाः ॥

विश्वस्यात्वविवक्षायामादिसामान्यमुत्कटम् ।
मात्रासम्प्रतिपत्तौ स्यादाप्तिसामान्यमेव च ॥१९॥

---

एकीभूताविवाकारोकारौ । तथा विश्वतैजसौ सुषुप्तकाले प्राज्ञे । अतो वा सामान्यादेकत्वं प्राज्ञमकारयोः । विद्वत्फलमाह । मिनोति ह वेदं सर्व्वं जगद्याथात्म्यं जानातीत्यर्थः । अपीतिश्च जगत्कारणात्मा भवतीत्यर्थः ॥ अत्रावान्तरफलवचनं प्रधानसाधनस्तुत्यर्थम् ॥ ११ ॥

अत्रैते श्लोका भवन्ति । विश्वस्यात्वमकारमात्रत्वं यदा विवक्ष्यते तदादित्वसामान्यमुत्क्रम्यायेनोत्कटमुद्भूतं दृश्यत इत्यर्थः । अत्वविवक्षायामित्यस्य व्याख्यानं मात्रासम्प्रतिपत्ताविति । विश्वस्याकारमात्रत्वं यदा सम्प्र-

---

त्याय फलमित्याशङ्क्याह ॥ जगदिति ॥ तत्रैकत्वज्ञाने फलभेदकथनाद्द्युपासनाभेदमाशङ्क्याङ्गेषु फलभेदश्रुतेरर्थवादत्वमुपेत्याह । अत्रेति ॥ पादानां मात्राणाञ्च क्रमादेकत्वविज्ञाने फलकथनं सर्व्वान् पादान्मात्राश्च सर्व्वाः स्वात्मन्यन्तर्भाव्य प्रधानस्य ब्रह्मध्यानस्य साधनं यदोङ्कारात्मकमक्षरं तस्य स्तुतावुपयुज्यते तेन च तदेवैकमुपासनमितरस्यातदङ्गत्वाच्चोपास्तिभेदकत्वमित्यर्थः ॥ ११ ॥

पादानां मात्राणाञ्च यदेकत्वं सनिमित्तं श्रुत्योपन्यस्तं तत्र श्रुत्यर्थविवरणरूपान् पूर्व्ववदेव श्लोकानवतारयति । अत्रेति ॥ प्रथमपादस्य प्रथममात्रायाश्चाभेदारोपार्थमुक्तं सामान्यद्वयं विशदयति विश्वस्येति ॥ उत्क्रम्यायेनादिरस्येत्यादाविति शेषः ।

तैजसस्योत्वविज्ञाने उत्कर्षो दृश्यते स्फुटम् ।
मात्रासम्प्रतिपत्तौ स्यादुभयत्वं तथाविधम् ॥२०॥
मकारभावे प्राज्ञस्य मानसामान्यमुत्कटम् ।
मात्रासम्प्रतिपत्तौ तु लयसामान्यमेव च ॥ २१ ॥
त्रिषु धामसु यत्तुल्यं सामान्यं वेत्ति निश्चितः ।
सम्पूज्यः सर्व्वभूतानां वन्द्यश्चैष महामुनिः ॥२२॥

---

तिपद्यत इत्यर्थः । आप्तिसामान्यमेव चोत्कटमित्यनुवर्त्तते चशब्दात् ॥ १९ ॥ तैजसस्योत्वविज्ञाने उकारत्वविवक्षायामुत्कर्षो दृश्यते स्फुटं स्पष्ट इत्यर्थः । उभयत्वञ्च स्फुटमेवेति । पूर्ववत्सर्व्वम् ॥ २० ॥

मकारत्वे प्राज्ञस्य मितिलयावुत्कृष्टे सामान्य इत्यर्थः ॥ २१ ॥ यथोक्तस्थानत्रये तुल्यमुक्तं सामान्यं वेत्त्येवमेवैतदिति निश्चितो यः सम्पूज्यो वन्द्यश्च ब्रह्मविल्लोके भवति ॥ २२ ॥

---

पुनरुक्तिपरिहारद्वारा विवक्षितमर्थमाह । आत्वेति ॥ अनुद्भिन्नद्योतकं दर्शयति । चशब्दादिति ॥१९॥ द्वितीयपादस्य द्वित यमात्रायाश्चैकत्वारोपप्रयोजकद्वयं श्लोकं व्यनक्ति । तैजसस्येति ॥ स्फुटमिति क्रियाविशेषणम् । तथाविधमित्यस्यार्थं स्फुटमित्याह । स्फुटमेवेति ॥ उक्तविज्ञान इत्यस्य व्याख्यानं मात्रासम्प्रतिपत्ताविति तस्य व्याख्यानं सर्व्वमित्युच्यते तत्पूर्व्ववद्द्रष्टव्यमित्युच्यते । पूर्व्ववदिति ॥ २० ॥

तृतीयपादस्य तृतीयमात्रायाश्चैकत्वाध्यासे सामान्यद्वयं श्लोको दर्शितं विशदयति । मकारेति ॥ अक्षरार्थस्य पूर्व्ववदेव सुज्ञानत्वात्तात्पर्य्यार्थमाह । मकारत्व इति ॥ २१ ॥ विश्वादीनामकारादीनाञ्च यत्तुल्यं सामान्यमुक्तं तद्विज्ञानं स्तौति । त्रिष्विति ॥ यथोक्तस्थानत्रयं जागरितं स्वप्नं सुषुप्तञ्चेति । त्रितयं तुल्यं पादानां मात्राणाञ्चेति शेषः ॥ उक्तं सामान्यमाप्तिरुत्कर्षो मितिरित्यादिना ॥ महामुनिरित्यस्यार्थमाह । ब्रह्मविदिति ॥२२॥

**अकारो नयते विश्वमुकारश्चापि तैजसम्।**
**मकारश्च पुनः प्राज्ञं नामात्रे विद्यते गतिः॥२३॥**

---

यथोक्तैः सामान्यैरात्मपादानां मात्राभिः सहैकत्वं कृत्वा यथोक्तोङ्कारं प्रतिपद्य यो ध्यायीत तमकारो नयते विश्वं प्रापयति अकारालम्बनोङ्कारं विद्वान् वैश्वानरो भवतीत्यर्थः। तथोकारस्तैजसम्। मकारश्चापि पुनः प्राज्ञं चशब्दान्नयत इत्यनुवर्त्तते। क्षीणे तु मकारे बीजभावक्षयादमात्रे ओङ्कारे गतिर्न विद्यते क्वचिदित्यर्थः॥ २३॥

---

पूर्वोक्तसामान्यज्ञानवतो ध्याननिष्ठस्य फलविभागं दर्शयति। अकार इति॥ यत्र तु पादानां मात्राणां च विभागो नास्ति तस्मिन्नोङ्कारे तुरीयात्मनि व्यवस्थितस्य प्राप्तृप्राप्तव्यप्राप्तिविभागो नास्तीत्याह। नामात्र इति॥ ओङ्कारध्यायिनमकारो विश्वं प्रापयतीत्युक्तमयुक्तम्। विश्वप्राप्तेर्ध्यानमन्तरेण सिद्धत्वात्। अकारस्य चाध्येयस्योक्तफलप्रापकत्वायोगादित्याशङ्क्याह। अकारेति॥ तदालम्बनं तत्प्रधानमिति यावत्। अकारप्रधानमोङ्कारं ध्यायतो यथा वैश्वानरप्राप्तिस्तथोकारप्रधानं तमेव ध्यायतस्तैजसस्य हिरण्यगर्भप्राप्तिर्भवतीत्याह। तथेति॥ यस्तु मकारप्रधानमोङ्कारं ध्यायति तस्य प्राज्ञाव्याकृतप्राप्तिर्युक्तेत्याह। मकारश्चेति॥ क्रियापदानुवृत्तिश्चशब्दस्य विवक्षिता॥ चतुर्थपादं व्याचष्टे। क्षीणे त्विति॥ स्थूलप्रपञ्चो जागरितं विश्वश्चेत्येतत्त्रितयमकारमात्रं सूक्ष्मप्रपञ्चः स्वप्नस्तैजसश्चेति त्रितयमुकारमात्रं प्रपञ्चद्वयकारणं सुषुप्तं प्राज्ञश्चेत्येतत् त्रितयं मकारमात्रं तत्रापि पूर्वं पूर्वमुत्तरोत्तरभावमापाद्यते। तदेवं सर्वमोङ्कारमात्रमिति ध्यात्वा स्थितस्य यदेतावन्तं कालमोमिति रूपेण प्रतिपन्नं तत्परित्यज्य ब्रह्मैवात्मेत्याचार्योपदेशवशादुत्पन्नसम्यग्ज्ञानेन पूर्वोक्तसर्वविभागनिमित्ताज्ञानस्य मकारत्वेन गृहीतस्य क्षये ब्रह्मण्येव शुद्धे पर्यवसितस्य न क्वचिद्गतिरुपपद्यते परिच्छेदाभावादित्यर्थः॥ २२॥

अमात्रश्चतुर्थोऽव्यवहार्य्यः प्रपञ्चोपशमः शिवो ऽद्वैत एवमोङ्कार आत्मैव संविशत्यात्मनाऽऽत्मानं

---

अमात्रो मात्रा यस्य नास्ति सोऽमात्र ओङ्कारश्चतुर्थस्तुरीय आत्मैव केवलोऽभिधानाभिधेयरूपयोर्वाङ्मनसयोः क्षीणत्वादव्यवहार्य्यः। प्रपञ्चोपशमः शिवोऽद्वैतः संवृत्त एवं यथोक्तविज्ञानवता प्रयुक्त ओङ्कारस्त्रिमात्रस्त्रिपादः। आत्मैव संविशत्यात्मना स्वेनैव स्वं पारमार्थिकमात्मानं य एवं वेद। परमार्थदर्शिनां ब्रह्मविदां तृतीयं बीजभावं दग्ध्वाऽऽत्मानं प्रविष्ट इति न पुनर्जायते तुरीय-

---

प्रत्यक्चैतन्यमोङ्कारसंवेदनं त्रिमात्रेणोङ्कारेणाध्यस्तेन तादात्म्यादोङ्कारो निरूप्यते। तस्य परेण ब्रह्मण्यैक्यममात्रादिश्रुत्या विवक्ष्यते तामवतार्य्य व्याकरोति। अमात्र इत्यादिना॥ केवलत्वमद्वितीयत्वम्। विशेषणान्तरमुपपादयति। अभिधानेति॥ अभिधानं वागभिधेयं मनश्चित्तातिरिक्तार्थाभावस्याभिधानमानत्वात्तयोर्भूमावेव क्षीणत्वादिति हेत्वर्थः॥ अव्यवहार्य्यत्वे दात्मा नास्त्येवेत्याशङ्क्य विकारजातविनाशावधित्वेनात्मनोऽविशेषात्सत्त्वमित्याह। प्रपञ्चेति॥ तस्य च सर्व्वानर्थाभावोपलक्षितस्य परमानन्दत्वेन पर्य्यवसानं सूचयति। शिव इति॥ तस्यैव सर्व्वद्वैतकल्पनाधिष्ठानत्वेनावस्थानमभिप्रेत्याह। अद्वैत इति॥ ओङ्कारस्तुरीयः सन्नात्मैवेति यदुक्तं तदुपसंहरति। एवमिति॥ यथोक्तं विज्ञानं पादानां मात्राणाञ्चैकत्वम्। न च पादा मात्राश्च तुरीयात्मन्योङ्कारे सन्ति। पूर्व्वपूर्व्वविभागस्योत्तरोत्तरान्तर्भावेन क्रमादात्मनि पर्य्यवस्यतीत्येवंवच-सहता प्रयुक्तः सन्नोङ्कारो मात्राः पादाश्च स्वाधिष्ठानभाव्यावस्थितस्यात्मनो भेदमपह्नुवानस्तद्रूपो भवतीत्यर्थः॥ उक्तैक्यज्ञानस्य फलमाह। संविशतीति॥

य एवं वेद य एवं वेद ॥ १२ ॥ इति माण्डूक्योपनिषन्मूलमन्त्राः समाप्तिङ्गताः ॥ ॐ तत्सत् हरिः ॐ ॥

---

स्वाबीजत्वात्। न हि रज्जुसर्पयोर्विवेके रज्ज्वां प्रविष्टः सर्पो बुद्धिसंस्कारात् पुनः पूर्ववत्तद्विवेकिनामुत्थास्यति। मन्दमध्यमधियान्तु प्रतिपन्नसाधकभावानां सन्मार्गगामिनां सन्न्यासिनां मात्राणां पादानाञ्च क्लृप्तसामान्यविदां यथावदुपास्यमान ओङ्कारो ब्रह्मप्रतिपत्तये आलम्बनीभवति। तथा च वक्ष्यति। आश्रमास्त्रिविधा हीना इत्यादि ॥ १२ ॥ इति माण्डूक्यमूलमन्त्रभाष्यम् ॥ ॐ ॥

---

सुषुप्ते ब्रह्मप्राप्तस्य पुनरुत्थानवत् मुक्तस्यापि पुनर्जन्म स्यादित्याशङ्क्याह। परमार्थेति॥ सुषुप्तस्य पुनरुत्थानं बीजभूताज्ञानस्य सत्त्वादुपपद्यते। इह तु बीजभूतमज्ञानं तृतीयं सुषुप्ताख्यं दग्ध्वैव तेषाम् आत्मानं तुरीयं प्रविष्टो विद्वानिति न सौ पुनरुत्थानमर्हति। कारणमन्तरेण तदयोगादित्यर्थः॥ तुरीयमेव पुनरुत्थानबीजभूतं भविष्यतीत्याशङ्क्य कार्य्यकारणविनिर्म्मुक्तस्य तस्य तदयोगान्नैवमित्याह। तुरीयञ्चेति॥ मुक्तस्यापि पूर्व्वसंस्कारात् पुनरुत्थानमाशङ्क्य दृष्टान्तेन निराचष्टे। न हीति॥ पूर्ववदित्यविवेकावस्थायामिवेत्यर्थः। तद्विवेकिनां रज्जुसर्पविवेकविज्ञानवतामिति यावत्। बुद्धिसंस्कारादीत्यत्र बुद्धिशब्देन सर्पभ्रान्तिर्गृह्यते। उत्तमाधिकारिणामोङ्कारद्वारेण परिशुद्धब्रह्मात्मैक्यविदामपुनरावृत्तिलक्षणमुक्तं फलम्। इदानीं मन्दानां मध्यमानाञ्च कथं ब्रह्मप्रतिपत्त्या फलप्राप्तिरित्याशङ्क्याह। मन्देति॥ तेषामपि क्रममुक्तिरविरुद्धेत्यर्थः॥ तत्रैव वाक्यशेषानुकूल्यं कथयति। तथा चेति॥ १२॥ इति माण्डूक्यमूलमन्त्रभाष्यटीका समाप्ता॥ ॐ॥

## ॥ गौड़पादीयश्लोकाः ॥

ओङ्कारं पादशो विद्यात् पादा मात्रा न संशयः ।
ओङ्कारं पादशो ज्ञात्वा न किञ्चिदपि चिन्तयेत् ॥२४
युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम् ।

---

पूर्ववदत्रैते श्लोका भवन्ति । यथोक्तैः सामान्यैः पादा एव मात्रा मात्राश्च पादास्तस्मादोङ्कारं पादशो विद्यादित्यर्थः । एवमोङ्कारे ज्ञाते दृष्टार्थमदृष्टार्थं वा न किञ्चित्प्रयोजनं चिन्तयेत्कृतार्थत्वादित्यर्थः ॥२४॥ युञ्जीत समादध्यात् यथा व्याख्याते परमार्थरूपे प्रणवे चेतो मनो

---

यथा पूर्व्वमाचार्य्येण श्रुत्यर्थप्रकाशकाः श्लोकाः प्रणीतास्तथोत्तरेऽपि श्लोकाः श्रुत्युक्तेऽर्थे एवं सम्भवन्तीत्याह । पूर्व्ववदिति ॥ ओङ्कारस्य पादशो विद्या कीदृशीत्याशङ्क्याह । पादा इति ॥ पादानां मात्राणाञ्चान्योन्यमेकत्वं कृत्वा तद्विभागविधुरमोङ्कारं ब्रह्मबुद्ध्या ध्यायतो भवति कृतार्थतेति दर्शयति । ओङ्कारमिति । तस्मात्पादानां मात्राणाञ्चान्योन्यमेकत्वादित्यर्थः । तदेकत्वं पुरस्कृत्योङ्कारमुभयविभागशून्यं ब्रह्मबुद्ध्या जानीयादित्याह । ओङ्कारमिति ॥ उत्तरार्द्धस्य तात्पर्य्यमाह । एवमिति ॥ २४ ॥ प्रणवानुसन्धानकुशलस्य प्रणवज्ञानेनैव सर्व्वद्वैतापवादद्वारेण कृतार्थता भवतीत्युक्तम् । इदानीं तदनभिज्ञस्य परोपदेशमात्रशरणस्य ध्यानकर्त्तव्यतां कथयति । युञ्जीतेति ॥ ननु मनसः समाधानं ब्रह्मणि कर्त्तव्यं किमिति प्रणवे तत्कर्त्तव्यतोच्यते तत्राह । प्रणव इति ॥ सम्प्रति प्रणवे समाहितचित्तस्य फलं दर्शयति । प्रणवे नित्यं इति ॥ समाधानविषयमाह । यथेति ॥ तुरीयरूपं यथोच्यते तत्र

प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ॥ २५ ॥
प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः ।
अपूर्व्वोऽनन्तरो वाह्यो न परः प्रणवोऽव्ययः ॥ २६ ॥

---

यस्मात्प्रणवो ब्रह्म निर्भयम् । न हि तत्र सदा युक्तस्य भयं विद्यते क्वचिद्विद्वान्न बिभेति कुतश्चनेति श्रुतेः ॥ २५ ॥ परापरे ब्रह्मणी प्रणवः परमार्थतः क्षीणेषु मात्रापादेषु पर एवात्मा ब्रह्मेति न पूर्व्वं कारणमस्य विद्यत इत्यपूर्वः । नास्यान्तरं भिन्नजातीयं किञ्चिद्विद्यत इत्यनन्तरः । तथा वाह्यमन्यन्न विद्यत इत्यवाह्यः । अपरं कार्य्यमस्य न विद्यत इत्यनपरः । स वाह्याभ्यन्तरो ह्यजः सैन्धवघनवदित्यर्थः ॥ २६ ॥

---

हेतुमाह । यस्मादिति ॥ तदेव साधयति । न हीति ॥ तत्र तैत्तिरीयकश्रुत्याऽऽनुकूल्यमाह । विद्वानिति ॥ २५ ॥ कीदृशस्तर्हि प्रणवो मन्दानां मध्यमानाञ्चाधिकारिणां ध्येयो भवतीत्याशङ्क्याह । प्रणवे हीति ॥ उत्तमाधिकारिणां कीदृशस्तर्हि प्रणवः सम्यग्ज्ञानगोचरो भवति तत्राह । पूर्व्व इति ॥ परापरब्रह्मात्मना प्रणवो मन्दमध्यमाधिकारिणोर्ध्येयतामुपगच्छतीति पूर्व्वार्द्धं व्याचष्टे । परेति ॥ उत्तमाधिकारिणस्तु सर्व्वविशेषशून्यमेकरसं प्रत्यग्भूतं ब्रह्म तद्रूपेण प्रणवः सम्यग्ज्ञानाधिगम्यो भवतीत्युत्तरार्द्धं विभजते । परमार्थत इत्यादिना ॥ उक्तेऽर्थे प्रमाणं सूचयति । सवाह्येति ॥ २६ ॥

सर्व्वस्य प्रणवो ह्यादिर्मध्यमान्तस्तथैव च ।
एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम् ॥२७॥
प्रणवं ह्रीश्वरं विद्यात्सर्व्वस्य हृदि संस्थितम् ।

---

आदिमध्यान्ता उत्पत्तिस्थितिप्रलयाः । सर्वस्यैव मायाहस्तिरज्जुसर्पमृगतृष्णिकास्वप्नादिवदुत्पद्यमानस्य वियदादिप्रपञ्चस्य यथा मायाव्यादयः । एवं हि प्रणवमात्मानं मायाव्यादिस्थानीयं ज्ञात्वा तत्क्षणादेव तदात्मभावं व्यश्नुत इत्यर्थः ॥ २७ ॥ सर्वप्राणिजातस्य स्मृतिप्रत्ययास्पदे हृदये

---

यदोङ्कारस्य प्रत्यगात्मत्वमापन्नस्य तुरीयस्यापूर्व्वत्वमनन्तरत्वमित्यादिविशेषणमुक्तं तत्र हेतुमाह । सर्व्वस्येति ॥ यथोक्तविशेषणं प्रणवं प्रत्यञ्चं प्रतिपद्य तत्क्षणात् कृतकृत्यो भवतीत्याह । एवं हीति ॥ पूर्व्वार्द्धं व्याकरोति । आदीति ॥ सर्व्वस्यैवोत्पद्यमानस्योत्पत्तिस्थितिलया यथोक्तप्रणवाधीना भवन्ति । अतस्तस्योक्तं विशेषणं युक्तमित्यर्थः ॥ तत्र परिणामवादं व्यावर्त्त्य विवर्त्तवादं द्योतयितुमुदाहरति । मायेति ॥ अनेकोदाहरणमुत्पद्यमानस्यानेकविधत्वबोधनार्थं प्रणवस्य प्रत्यगात्मत्वप्राप्तस्याविकृतस्यैव स्वमायाशक्तिवशाज्जगद्धेतुत्वमित्यत्र दृष्टान्तमाह । यथेति यथा ॥ मायावी स्वगतविकारमन्तरेण मायाहस्त्यादेरिन्द्रजालस्य स्वमायावशादेव हेतुः । यथा वा रज्ज्वादयः स्वगतविकारविरहिणः स्वाज्ञानादेव सर्पादिहेतवस्तथाऽयमात्मा प्रणवभूतो व्यवहारदशायां स्वाविद्यया सर्व्वस्य हेतुर्भवति । अतो युक्तं तस्य परमार्थावस्थायां पूर्व्वोक्तविशेषणवत्त्वमित्यर्थः । द्वितीयार्द्धं विभजते । एवं हीति । पूर्व्वोक्तविशेषणसम्पन्नमिति यावत् । ज्ञानस्य मुक्तिहेतोः कालान्तरापेक्षा नास्तीति सूचयति । तत्क्षणादेवेति ॥ तदात्मभावमित्यत्र तच्छब्देनापूर्व्वादिविशेषणं परमार्थवस्तु परामृश्यते ॥ २७ ॥ अक्षरबुद्धा प्रणवमिति ध्यायतो हृदयाख्यं देशमुपदिशति । प्रणवमिति ।

सर्वव्यापिनमोङ्कारं मत्वा धीरो न शोचति ॥२८॥
अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः ।
ओङ्कारो विदितो येन स मुनिर्नैतरोजनः ॥ २९॥

---

स्थितमीश्वरं प्रणवं विद्यात्सर्वव्यापिनं व्योमवदोङ्कार-मात्मानमसंसारिणं धीरो बुद्धिमान् मत्वा न शोचति । शोकनिमित्तानुपपत्तेः । तरति शोकमात्मविदितिश्रुतिभ्यः ॥ २८ ॥ अमात्रस्तुरीय ओङ्कारो मीयतेऽनयेति मात्रा-परिच्छित्तिः सा अनन्ता यस्य सोऽनन्तमात्रः । नैतावत्त्व-मस्य परिच्छेत्तुं शक्यत इत्यर्थः । सर्वद्वैतोपशमत्वादेव शिवः । ओङ्कारो यथा व्याख्यातो विदितो येन स परमार्थत-

---

परमार्थदर्शिनस्तु देशाद्यनवच्छिन्नवस्तुदर्शनादार्थिकशोकाभावं तत्र को मोहः कः शोक इत्यादिश्रुतिसिद्धमनुवदति । सर्वव्यापिनमिति ॥ हृदयदेशे प्रणवभूतस्य ब्रह्मणो ध्येयत्वे हेतुं सूचयति । स्थितिप्रत्ययेति ॥ बुद्धिमानिति विवेकित्वमुच्यते । मत्वेति साक्षात्कारसम्पत्तिर्विवक्ष्यते ॥ विवेकद्वारा तत्त्वसाक्षात्कारे सति शोकनिवृत्तौ हेतुमाह । शोकेति ॥ तस्य हि निमित्तमात्माज्ञानम् । तस्यात्मसाक्षात्कारतो निवृत्तौ शोकानुपपत्तिरित्यत्र प्रमाणमाह । तरतीति ॥ आदिशब्देन भिद्यते हृदयग्रन्थिरित्यादिश्रुतिर्गृह्यते ॥ २८ ॥ ओङ्कारं तुरीयभावमापन्नो यः प्रतिपन्नस्तं स्तौति ॥ अमात्र इति ॥ यथोक्तप्रणवप्रतिपत्तिविहीनस्तु जननमरणमात्रभागो न पुरुषार्थभाग्भवतीति विद्यारहितं निन्दति । नेतर इति । यावद्विभागस्य मात्रा विभागस्य चाभावादोङ्कारस्तुरीयः सन्नमात्रो भवतीत्याह । अमात्र इति ॥ ननु कथमनन्तापरिच्छित्तिरोङ्कारस्य तुरीयस्योच्यते । न हि तत्र परिच्छित्तिरेवास्तीत्याशङ्क्याह ॥ नैतावत्त्वमिति ॥ अनर्थात्मकद्वैतसंसर्गाभावादप्रतिबन्धेन

इति माण्डूक्योपनिषदर्थाविष्करणपरायां गौड़-पादीयकारिकायां प्रथममागमप्रकरणम् ॥ ॐ तत्सत् ॥

---

त्यस्य मननान्मुनिः । नेतरो जनः शास्त्रविदपीत्यर्थः ॥२८॥ इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यस्य शङ्करभगवतः कृतावागमशास्त्रविवरणे गौड़पादीयकारिकासहितमाण्डूक्योपनिषद्भाष्ये प्रथममागमप्रकरणं सम्पूर्णम् ॥ ॐ ॥ तत्सत् ॥

---

परमानन्दत्वं तस्मिन्नाविर्भवतीत्यभिप्रेत्याह सर्व्वेति ॥ यथा व्याख्यातः पूर्व्वार्द्धेनोक्तविशेषणवानित्यर्थः । ननु यथोक्तप्रणवपरिज्ञानरहितस्यापि शास्त्रपरिज्ञानवत्त्वाच्च जन्मोपलक्षितसंसारभाक्त्वेन पुरुषार्थासिद्धिः । नैवम् । शास्त्रविदोऽपि तत्त्वज्ञानाभावे तुच्छपुरुषार्थासिद्धेरित्यभिप्रेत्याह । नेतर इति ॥ तदेवं प्रणवद्वारेण निरुपाधिकमात्मानमनुसन्दधानस्य पुरुषार्थपरिसमाप्तिर्नेतरेषां वहिर्मुखानामिति स्थितम् ॥ २८ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीशुद्धानन्दपादपूज्यशिष्यभगवदानन्दज्ञानविरचितायां माण्डुक्योपनिषदाविष्करणपरगौड़पादीयकारिकाभाष्यटीकायां प्रथममागमप्रकरणं सम्पूर्णम् ॥ ॐ ॥ तत्सत् ॥ १ ॥

# अथ गौडपादीयकारिकायां वैतथ्याख्यं द्वितीयं प्रकरणम्॥

हरिः ॐ॥

**वैतथ्यं सर्व्वभावानां स्वप्न आहुर्मनीषिणः।**

---

ॐ॥ ज्ञाते द्वैतं न विद्यत इत्युक्तम्। एकमेवाद्वितीयमित्यादिश्रुतिभ्यः। आगममात्रं तत्तत्रोपपत्त्यापि द्वैतस्य वैतथ्यं शक्यतेऽवधारयितुमिति द्वितीयं प्रकरणमारभ्यते। वैतथ्यमित्यादिना। वितथस्य भावो वैतथ्यं असत्यत्वमित्यर्थः। कस्य। सर्वेषां बाह्याध्यात्मिकानां भावानां पदार्थानां स्वप्न उपलभ्यमानानामाहुः कथयन्ति मनीषिणः प्रमाणकुशलाः। वैतथ्ये हेतुमाह। अन्तःस्था-

---

ॐ॥ आगमप्राधान्येनाद्वैतं प्रतिपादयता तत्प्रत्यनीकस्य द्वैतस्य मिथ्यात्वमप्युक्तं इदानीं तन्मिथ्यात्वमुपपत्तिप्राधान्येनापि प्रतिपत्तुं शक्यमिति दर्शयितुं प्रकरणान्तरमवतारयन्नादौ दृष्टान्तसिद्ध्यर्थं तदनु रूपमुपपत्तिमाह। वैतथ्यमिति॥ न केवलमाप्तोक्तिवशादेव स्वप्नमिथ्यात्वं किन्तु युक्तितोऽपीत्याह। अन्तःस्थानादिति॥ पूर्वोत्तरप्रकरणयोः सम्बन्धसिद्ध्यर्थं पूर्वप्रकरणे वृत्तं संक्षिप्यानुवदति। ज्ञात इति॥ आदिशब्देन यत्र हि द्वैतमिव भवतीत्यादिश्रुतिर्गृह्यते। तर्हि द्वैतमिथ्यात्वस्य प्रागेव सिद्धत्वादुत्तरं प्रकरणमनर्थकमित्याशङ्क्याह। आगमेति॥ यद्द्वैतमिथ्यात्वं पूर्वमुक्तं तदागममात्रं आगमप्राधान्येनानुगतं न युक्तितः सिद्धम्। तस्मिन्नागमतोऽवगते युक्तिप्राधान्येनापि तन्मिथ्यात्वमवगन्तव्यमिति प्रकरणान्तरं प्रारब्धमित्यर्थः। प्रमाणानुग्राहकत्वात्तर्कस्यानुग्राह्यप्रमाणस्य प्रधानत्वात्तदधीनविचा-

# अन्तःस्थानात्तु भावानां संवृतत्वेन हेतुना ॥ १ ॥

नात् । अन्तःशरीरस्य मध्ये स्थानं येषाम् । तत्र हि भावा उपलभ्यन्ते पर्वतहस्त्यादयो न बहिः शरीरात् । तस्मात्ते वितथा भवितुमर्हन्ति । ननु अपवरकाद्यन्तरुपलभ्यमानैर्घटादिभिरनैकान्तिको हेतुरित्याशङ्क्याह । संवृतत्वेन हेतुनेति । अन्तः संवृतस्थानादित्यर्थः । न ह्यन्तः संवृते देहान्तर्नाडीषु पर्वतहस्त्यादीनां भावोऽस्ति । नहि देहे पर्वतोऽस्ति ॥ १ ॥

---

रानन्तरं तर्काधीनविचारस्य सावकाशत्वाद्युक्तं पौर्व्वापर्य्यं पूर्व्वोत्तरप्रकरणयोरित्युक्तम् ॥ सम्प्रति श्लोकाक्षराणि योजयति । वितथस्येत्यादिना ॥ बाह्या घटादयः । सुखादयस्त्वाध्यात्मिका भावाः ॥ शरीरान्तरवस्थानं स्वाप्नानां भावानामित्यत्रानुभवं प्रमाणयति । तत्र हीति ॥ तेषामन्तरुपलभ्यमानत्वेऽपि न वैतथ्यं व्यभिचारादित्याशङ्कामनूद्य परिहरति । नन्वित्यादिना ॥ हेत्वन्तरशङ्कां वारयति । अन्तरिति ॥ यद्यपि देहान्तःसङ्कुचिते देशे स्वाप्ना भावा भवन्ति तथापि कथं तेषां मृषात्वमित्यत आह । न हीति ॥ अन्तरित्युक्तं स्फुटयति । संवृत इति ॥ तमेव सङ्कुचितं देशविशेषं स्थान्तरं स्फोरयति । देहान्तर्नाडीष्विति ॥ उक्तमर्थं कैमुतिकन्यायेन स्फुटयति । न हीति ॥ यदा देहेऽपि पर्व्वतादयो न सम्भाव्यन्ते तदा तदन्तर्वर्त्तिनीषु नाडीषु अतिसूक्ष्मासु तेषां सम्भावना नास्तीति किमु वक्तव्यमित्यर्थः । स्वाप्ना भावाः सत्या न भवन्ति उचितदेशशून्यत्वाद्रजतभुजङ्गादिवदिति भावः ॥ १ ॥

अदीर्घत्वाच्च कालस्य गत्वा देशान्न पश्यति।

---

स्वप्नदृश्यानां भावानामन्तः संवृतस्थानमित्येतदसिद्धम्। यस्मात्प्राच्येषु सुप्त उदक्षु स्वप्नान् पश्यन्निव दृश्यते इत्येतदाशङ्क्याह। न देहाद्बहिर्देशान्तरं गत्वा स्वप्नान् पश्यति। यस्मात्सुप्तमात्र एव देहदेशाद्योजनशतान्तरिते मासमात्रप्राप्ये देशे स्वप्नान् पश्यन्निव दृश्यते। न च तद्देशप्राप्तेरागमनस्य च दीर्घः कालोऽस्ति। अतो दीर्घत्वाच्च कालस्य न स्वप्नदृग्देशान्तरं गच्छति। किञ्च प्रतिबुद्धश्च वै सर्वः स्वप्नदृक् स्वप्नदर्शनदेशे न विद्यते। यदि च

---

देहाद्बहिरेव देशान्तरं गत्वा स्वाप्नानाम्भावानामुपलम्भात्तेषां देहान्तःसंवृते नाडीप्रदेशे दर्शनमसम्प्रतिपन्नमित्याशङ्कां परिहरति। अदीर्घत्वाच्चेति॥ बहिः स्वप्नोपलब्धिपक्षे दोषान्तरमाह। प्रतिबुद्धश्चेति॥ श्लोकव्याख्यामाशङ्कामनुवदति। स्वप्नेति। तेषां देहान्तःसङ्कुचिते नाडीदेशे स्थितिदर्शनान्मिथ्यात्वमित्यतदप्यसम्प्रतिपन्नमित्यत्र हेतुमाह। यस्मादिति। पश्यन्निवेति स्वप्नदर्शनस्य निरूपणे सत्याभासत्वमिवशब्देन द्योत्यते। एतच्छब्देन चोद्यं परामृश्यते। स्वप्नद्रष्टा गत्वा स्वप्नांश्च पश्यतीत्यत्र हेतुमाह। यस्मादिति॥ इवशब्दस्तु पूर्ववत्। तथापि कथं बहिः स्वप्नोपलम्भो न भवतीति निर्द्धारितमित्याशङ्क्याह। न चेति॥ स्वप्नः सत्यो न भवति उचितकालविकलत्वात् असम्प्रतिपन्नवदित्यभिप्रेत्य फलितमाह। अत इति॥ इतश्च न देहाद्बहिर्देशान्तरे स्वप्नदर्शनमित्याह। किञ्चेति॥ सर्वोऽपि स्वप्नद्रष्टा देशान्तरे स्वप्नान् पश्यन्नकस्मादेव प्रतिबुद्धो न तत्रास्ति किन्तु शयनदेशे वर्त्तते तथापि गत्वा स्वप्नदर्शने कानुपपत्तिरित्याशङ्क्याह। यदि चेति॥ अन्तरेव स्वप्नदर्शनमिति स्थिते स्वप्नमिथ्यात्वमुचितकालशून्यत्वादित्युक्तं प्रपञ्चयति। रात्राविति॥ यद्यपि

**प्रतिबुद्धश्च वै सर्व्वस्तस्मिन् देशे न विद्यते ॥ २ ॥**
**अभावश्च रथादीनां श्रूयते न्यायपूर्वकम् ।**

---

स्वप्ने देशान्तरं गच्छेन् यस्मिन् देशे स्वप्नान् पश्येत् तत्रैव प्रतिबुध्येत । नचैतदस्ति । रात्रौ सुप्तोऽहनि इव भावान् पश्यति बहुभिः सङ्गतो यैश्च सङ्गतो भवति तैर्गृह्येत । न च गृह्यते । गृहीतश्चेत् त्वामद्य तत्रोपलब्धवन्तो वयमिति ब्रूयुः । नचैतदस्ति । तस्मान्न देशान्तरं गच्छति स्वप्ने ॥२॥

इतश्च स्वप्नदृश्या भावा वितथाः । यतो अभावश्चैव रथादीनां स्वप्नदृश्यानां श्रूयते न्यायपूर्वकं युक्तितः श्रुतौ न तत्र रथा इत्यत्र तेनान्तःस्थानसंवृतत्वादिहेतुना प्राप्तं वैतथ्यं तदनुवादिन्या श्रुत्या स्वप्ने स्वयं ज्योतिष्ट्वप्र-

---

रात्रौ निद्रामुपगतस्तथापि भावानहनि पश्यन्निव तिष्ठति । सुप्त संवृतचक्षुरादिकरणोऽपि पश्यति । ययानोऽपि पर्य्यटनं प्रतिपद्यते । यद्यपि सहायविहीनः सुप्तस्तथापि बहुभिः सहायः स्वप्नानुपलभते । तस्मादुचितस्य कालस्य करणस्य सहकारिणश्चाभावेऽपि स्वप्नदर्शनात्तस्मिन्मिथ्यात्वं सिद्धमित्यर्थः । स्वप्नमिथ्यात्वे हेत्वन्तरमाह । यैश्चेति ॥ सहदर्शिभिरगृह्यमाणत्वं स्वप्नद्रष्टुरसम्मतिपन्नमित्याशङ्क्याह । गृहीतश्चेदिति ॥ पुरुषान्तरसंवादादर्शनात्तद्देशान्तरप्राप्तिद्वारा स्वप्नदर्शनमिति वक्तुमशक्यत्वादन्तरेव स्वप्नदर्शनमित्युचितदेशकालाद्यभावात्तन्मिथ्यात्वं सिद्धमित्युपसंहरति । तस्मादिति ॥ २ ॥

स्वप्नदृश्यानां भावानां मिथ्यात्वे हेत्वन्तरमाह । अभावश्चेति ॥ न तत्र रथा न रथयोगा न पन्थानो भवन्तीत्यादिश्रुत्या स्वप्ने स्वयं ज्योतिष्ट्वमात्मनो दर्शयन्त्या तत्र दृश्यानां रथादीनामभावो योग्यदेशाद्यभावद्योतकन्यायपुरःसरं श्रूयते । अतस्तेन न्यायेन प्राप्तमेव स्वप्नदृश्यभावानामस्ति

वैतथ्यं तेन वै प्राप्तं स्वप्न आहुः प्रकाशितम् ॥३॥
अन्तःस्थानात्तु भेदानां तस्माज्जागरिते स्मृतम् ।

---

तिपादनपरया प्रकाशितमाहुर्ब्रह्मविदः ॥ ३ ॥ जाग्रद्दृश्यानां भावानां वैतथ्यमिति प्रतिज्ञा दृश्यत्वादिति हेतुः स्वप्नदृश्यभाववदिति दृष्टान्तः । यथा तत्र स्वप्ने दृश्यानां

---

मिथ्यात्वमन्यपरया श्रुत्या प्रकाशितमिति ब्रह्मविदो वदन्ति । तथा च स्वप्ने भावानां मिथ्यात्वं श्रुतियुक्तिभ्यां सिद्धमित्यर्थः ॥ हेत्वन्तरपरत्वं श्लोकस्य दर्शयति । इतश्चेति इतःशब्दार्थमेव स्फुटयति । अत इति ॥ ज्ञेयाभावे ज्ञानाभावाद्रथादिज्ञानस्यापि श्रुतमसत्त्वमिति चकारशब्दः । श्रूयते न तत्रेत्याद्यायां श्रुताविति सम्बन्धः ॥ न्यायपूर्वकमिति व्याचष्टे । युक्तित इति ॥ योग्यदेशाद्यभावो युक्तिः ॥ तर्हि न्यायसिद्धेऽर्थे किमन्यपरया श्रुत्या क्रियते तत्राह । तेनेति ॥ अन्तःशरीरमध्यस्थानं नाडीचक्रम् । तत्रातिसूक्ष्मे संवृतत्वेन सङ्कुचितत्वेनावस्थानं पर्वतादीनामुपलभ्यते । ततश्चोचितदेशाभावो योग्यकालाभावश्चेत्यादिना प्रागुक्तेन हेतुना प्राप्तं स्वप्नदृश्यानां भावानां वैतथ्यं तदेव तदनुवादिन्या श्रुत्यापि प्रकाशितमित्याहुर्ब्रह्मविदः । जाग्रदवस्थायामादित्यादिप्रकाशानां वागादिज्योतिषां च विद्यमानत्वादासनादिव्यवहारस्य तन्निमित्तत्वसम्भवादात्मचैतन्यनिबन्धनो व्यवहारो न निर्धारयितुं शक्यते । स्वप्ने पुनः सूर्याद्यभावेऽपि व्यवहारदर्शनात्तस्य च निमित्तापेक्षत्वादात्मचैतन्यस्य तन्निमित्तत्वनिर्णयात्तत्रात्मनः स्वयंज्योतिष्ट्वं प्रतिपादयितुं न तत्रेत्याद्या श्रुतिः । तथा तत्परया न्यायसिद्धं स्वप्नमिथ्यात्वमनुवदन्त्या तदप्रतिपादितमपि प्रकाशितमिष्यते । तथा च श्रुतियुक्तिभ्यां प्रतिपन्नं स्वप्नमिथ्यात्वमिति दृष्टान्तसिद्धिरित्यर्थः ॥ ३ ॥ उक्तन्यायेन दृष्टान्ते सिद्धे फलितमनुमानमाह । अन्तःस्थानादिति ॥ भेदानामित्यत्र सूचितमनुमानमारचयति । जाग्रदिति ॥ तृतीयेन पादेन पक्षधर्मत्वं व्याप्तस्य हेतोरुच्यते तद्दर्शयति ।

यथा तत्र तथा स्वप्ने संवृतत्वेन भिद्यते ॥ ४ ॥
स्वप्नजागरिते स्थाने ह्येकमाहुर्मनीषिणः ।
भेदानां हि समत्वेन प्रसिद्धेनैव हेतुना ॥ ५ ॥

---

भावानां वैतथ्यं तथा जागरितेऽपि दृश्यत्वमविशिष्टमिति हेतूपनयः । तस्माज्जागरितेऽपि वैतथ्यं स्मृतमिति निगमनम् । अन्तःस्थानात्संवृतत्वेन स्वप्नदृश्यानां भावानां जाग्रद्दृश्येभ्यो भेदः । दृश्यत्वमसत्यत्वञ्चाविशिष्टमुभयत्र ॥ ४ ॥ प्रसिद्धेनैव भेदानां ग्राह्यग्राहकत्वेन हेतुना समत्वेन स्वप्नजागरितस्थानयोरेकत्वमाहुः । विवेकिन इति । पूर्व्वप्रमाणसिद्धस्यैव फलम् ॥ ५ ॥

---

यथेति । द्वितीयेन पादेन प्रतिकूलप्रमाणाभावसूचकं प्रतिज्ञोपसंहारवचनं निगमनं सूचितमित्याह । तस्मादिति ॥ सर्व्वद्वैतवैतथ्यवादिनां येन विशेषेण पक्षसपक्षविभागसिद्धिरित्याशङ्क्यान्तःस्थानात्तु संवृतत्वेन भिद्यत इत्यत्र विवक्षितमर्थमाह । अन्तःस्थानादिति ॥ स्वप्नदृश्यानामन्तःस्थानं संवृतत्वञ्च न तथा जाग्रद्दृश्यानां तेनोचितदेशाद्यभावात्तेषां तेभ्यो वैषम्यं स्फुटम् । सिद्धं हि योग्यदेशाद्यभावेन स्वप्नस्य मिथ्यात्वमिति सपक्षत्वम् । जागरितस्य पुनरुचितदेशादिसद्भावादस्फुटमिथ्यात्वमिति पक्षत्वमित्यर्थः । तर्हि सर्व्वथा वैषम्याद्दृष्टान्तदार्ष्टान्तिकभावासिद्धिरित्याशङ्क्याह । दृश्यत्वमिति ॥४॥ स्वप्नवज्जागरितस्य मिथ्यात्वे स्वप्ननिद्रायुतावित्यादौ जागरिते स्वप्नशब्दप्रयोगो युक्तो भवतीत्याह । स्वप्नेति ॥ उभयत्रैकत्वं विद्वदभिमतमित्यत्र हेतुमाह । भेदानामिति ॥ भेदा भिद्यमाना भावास्तेषामवस्थाद्वयवर्त्तिनां ग्राह्यत्वं ग्राहकत्वमविशिष्टम् । तेन दृश्यत्वेन हेतुना प्रसिद्धमेव तेषां मिथ्यात्वेन समत्वं तेन स्थानयोरेकरूपत्वं विवेकिनामभिप्रेतमिति यत्पूर्व्वमनुमानाख्यं प्रमाणं सिद्धं तस्यैव फलं साधनस्थानद्वयाविशेषरूपमनेन श्लोकेनोक्तमिति श्लोकयोजनया दर्शयति । प्रसिद्धेनैवेति ॥ ५ ॥

आदावन्ते च यन्नास्ति वर्त्तमानेऽपि तत्तथा।
वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः ॥ ६॥

---

इतश्च वैतथ्यं जाग्रद्दृश्यानां भेदानामाद्यन्तयोरभावात् यदादावन्ते च नास्ति वस्तु मृगतृष्णिकादि तन्मध्येऽपि नास्तीति निश्चितं लोके। तथेमे जाग्रद्दृश्या भेदाः। आद्यन्तयोरभावाद्वितथैरेव मृगतृष्णिकादिभिः सदृशत्वाद्वितथा एव तथाप्यवितथा इव लक्षिता मूढैरनात्मविद्भिः ॥ ६ ॥ स्वप्नदृश्यवज्जागरितं दृश्यानामप्यसत्त्वमिति यदुक्तं तदयुक्तम्। यस्माज्जाग्रद्दृश्या अन्नपानवाहनादयः क्षुत्पिपासादिनिवृत्तिं कुर्वन्तः। गमनागमनादिकार्येषु सप्रयोजना दृष्टाः न तु स्वप्नदृश्यानां तदस्ति तस्मात्स्वप्नदृश्यवज्जाग्रद्दृश्यानामसत्त्वं मनोरथमात्रमिति। तत्र

---

जाग्रद्दृश्यानां भावानां मिथ्यात्वमित्यत्रानुमानान्तरमाह। आदाविति॥ यदि जाग्रद्दृश्या भावा मिथ्यात्वेन प्रसिद्धस्वप्नादिभिः समत्वान्मिथ्या कथं तर्हि तेषां घटः सन् पटः सन्नित्यसद्रूपत्वेन प्रतीतिरित्याशङ्क्याह। वितथैरिति॥ प्रकृते जाग्रन्मिथ्यात्वे हेत्वन्तरपरत्वं श्लोकस्योपन्यस्यति। इतश्चेति॥ विमतं मिथ्या आदिमत्त्वादन्तवत्त्वात् स्वप्नादिवदित्यर्थः॥ उक्तानुमानलिङ्गे व्याप्तिं कथयति। यदादाविति॥ यदादिमदन्तवच्च तन्मिथ्या यथा मृगतृष्णिकादीत्यर्थः। व्याप्तिमतः साधनस्य पक्षधर्मतोपन्यासेन प्रतिज्ञोपसंहारवचनं निगमनं दर्शयति तथेति॥ अनुमानस्य घटादिषु सत्त्वसाधकप्रत्यक्षविरोधमाशङ्क्य सद्गन्धर्व्वनगरमिति वस्त्वापातिकसत्त्वविषयत्वान्नैवमित्याह। तथापीति ॥ ६ ॥ स्वप्नस्य मिथ्यात्वमाद्यन्तवत्त्वान्न भवति किन्तु फलपर्यन्तत्वाभावाज्जागरितस्य फलपर्यन्तत्वान्न मिथ्यात्वमित्याशङ्क्याह। स प्रयोजन-

सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते। तस्मा-
दाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः॥ ७॥

---

कस्माद्यस्मात्सप्रयोजनता दृष्टा या अन्नपानादीनां सा स्वप्ने विप्रतिपद्यते। जागरिते हि भुक्त्वा पीत्वा चातृप्तो विनिवर्तिततृट् सुप्तमात्र एव क्षुत्पिपासाद्यार्तमहोरात्रोषितमभुक्तवन्तमात्मानं मन्यते। यथा स्वप्ने भुक्त्वा पीत्वा चातृप्तोत्थितस्तथा। तस्माज्जाग्रद्दृश्यानां स्वप्नेऽपि विप्रतिपत्तिर्दृष्टा। अतो मन्यामहे तेषामप्यसत्त्वं स्वप्नदृश्यवदनाशङ्कनीयमिति। तस्मादाद्यन्तवत्त्वमुभयत्र समानमिति मिथ्यैव खलु ते स्मृताः॥ ७॥

---

तेति॥ फलपर्यन्ततारहित्योपाधेः साधनव्यापकत्वं फलितमाह। तस्मादिति॥ जाग्रद्दृश्याभावा बहुशो दृश्यन्ते। लोकस्य व्यावर्त्यामुपाध्याशङ्कामुत्थापयति। स्वप्नेति॥ जाग्रद्दृश्यानामिव स्वप्नदृश्यानामपि तुल्यं सप्रयोजनत्वमित्युपाधेरसत्त्वमित्याशङ्क्याह। नत्विति॥ अनुमानस्य सोपाधिकत्वेनासाधकत्वं फलितमाह। तस्मादिति॥ हेतोः सोपाधिकत्वं दूषयति। तत्रेति॥ साधनव्याप्त्यादिदोषादृते नोपाधिनिरसनं शक्यमित्याशङ्क्याह। कस्मादिति॥ फलपर्यन्तताविरहितोपाधेः साधनव्याप्तिमाह। यस्मादित्यादिना॥ तामेव विप्रतिपत्तिं प्रकटयति। जागरिते हीति॥ उक्तमर्थं दृष्टान्तेन स्फुटयति। यथेत्यादिना॥ उपाधेः साधनव्याप्तिं निगमयति। तस्मादिति॥ हेतोः सोपाधिकत्वाभावे फलितमाह। अत इति॥ हेतुद्वयमुपसंहरति। तस्मादिति॥ ७॥

अपूर्वं स्थानिधर्मो हि यथा स्वर्गनिवासिनाम् ।

स्वप्नजाग्रद्देशयोः समत्वाज्जाग्रद्भेदानामसत्त्वमिति यदुक्तं तदसत् । कस्मात् । दृष्टान्तस्यासिद्धत्वात् । कथं नहि जाग्रद्दृष्टा एवैते भेदाः स्वप्ने दृश्यन्ते किन्तर्हि अपूर्वं स्वप्ने पश्यति चतुर्दन्तगजमारूढमष्टभुजमात्मानं मन्यते । अन्यदप्येवंप्रकारमपूर्वं पश्यति स्वप्ने । तन्नान्येनासता सममिति सदेवातो दृष्टान्तोऽसिद्धस्तस्मात्स्वप्नवज्जागरितस्यासत्त्वमित्ययुक्तम् । तन्न स्वप्ने दृष्टमपूर्वं यन्मन्यसे न तत्स्वतः सिद्धम् । किन्तर्हि अपूर्वं स्थानिधर्मो हि स्थानिनो द्रष्टुरेव हि स्वप्नस्थानवतो धर्मः । यथा स्वर्गनिवासिनामिन्द्रादीनां सहस्राक्षत्वादि तथा स्वप्नदृशोऽपूर्वोऽयं धर्मः । न स्वतः सिद्धो द्रष्टुः स्वरूपवत् । तानेवं प्रकारानपूर्वान् स्वचित्त-

---

दृष्टान्तस्य साध्यविकलत्वं शङ्कित्वा परिहरति । अपूर्वमिति ॥ यथा स्वर्गनिवासिनामिन्द्रादीनां सहस्राक्षत्वादिधर्मस्तथा यदिदमपूर्वं स्वप्नदर्शनं मन्यसे तदपि स्थानिनः स्वप्नस्थानवतो द्रष्टुरेव धर्मः । तेन दृष्टत्वात्तस्य मिथ्यात्वसिद्धिरित्यर्थः । कथं तेनैव दृष्टत्वं तत्राह । तानेवमिति ॥ यथैवेह व्यवहारभूमौ सुशिक्षितो देशान्तरप्राप्तिमार्गस्तेन मार्गेण देशान्तरं गत्वा तत्रत्यान् पदार्थान् वीक्षते तथाऽयं स्वप्नगतान् पदार्थान् यथोक्तप्रकारान् प्रतिपद्यते । अतश्च स्वप्नस्य स्थानिधर्मत्वाद्रज्जुसर्पादिवदध्यात्ममित्यर्थः ॥ लोकव्यवहारा-भावशङ्कामुपन्यस्यति । स्वप्नेति ॥ समत्वमाद्यन्तवत्त्वादि । अनुमानवि-रुद्धार्थत्वादनुमानदोषोक्तिमन्तरेणापन्नमयुक्तमिति पृच्छति । कस्मादिति ॥ व्याप्तिभूमिं दूषयन् व्याप्तिभङ्गं दोषमाह । दृष्टान्तस्येति ॥ असिद्धत्वं प्रश्नपूर्वकं विशदयति । कथमित्यादिना ॥ अपूर्वं दर्शनमेव विवृणोति ।

तानयं प्रेक्षते गत्वा यथैवेह सुशिक्षितः ॥ ८ ॥
स्वप्नवृत्तावपि त्वन्तश्चेतसा कल्पितन्त्वसत् ।
बहिश्चेतोगृहीतं सद्दृष्टं वैतथ्यमेतयोः ॥ ९ ॥

---

विकल्पानयं स्थानी स्वप्नदृक् स्वप्नस्थानं गत्वा प्रेक्षते । यथैवेह लोके सुशिक्षितो देशान्तरमार्गस्तेन मार्गेण देशान्तरं गत्वा तान् पदार्थान् पश्यति तद्वत् । तस्माद्यथा स्थानिधर्म्माणां रज्जुसर्पमृगतृष्णिकादीनामसत्त्वं तथा स्वप्नदृश्यानामपूर्व्वाणां स्थानिधर्म्मत्वमेवेत्यसत्त्वं अतो न स्वप्नदृष्टान्तस्यासिद्धत्वम् ॥ ८ ॥ अपूर्व्वत्वाशङ्कां निराकृत्य स्वप्नदृष्टान्तस्य पुनः स्वप्नतुल्यतां जाग्रद्भेदानां प्रपञ्चयन्नाह । स्वप्नवृत्तावपि स्वप्नस्थानेऽप्यन्तश्चेतसा मनोरथसङ्कल्पितम-

---

चक्षुर्न्नमिति ॥ यद्यदपि विमतत्वादिदृष्टान्तस्य साध्यविकलत्वे सिद्धे प्रागुक्तानुमानानुपपत्तिरिति फलितमाह । तस्मादिति ॥ दृष्टान्तासिद्धिं दूषयन्ननुमानं साधयति । नन्वेति ॥ तत्किं स्वभावतः सिद्धं परतो वा । नाद्यः । अतस्तु तद्योगादित्याह । न तदिति ॥ द्वितीये तत्सिद्धा-त्वमित्यभिप्रेत्य मन्त्रपूर्व्वकमाद्यपादमवतारयति किमर्हीति ॥ तद्-ताम्यक्षराणि व्याकरोति । स्थानिन इति ॥ अपूर्व्वस्वप्नदर्शनस्य स्थानिधर्म्मत्वं दृष्टान्तेन साधयति । यथेत्यादिना ॥ अपूर्व्वदर्शनं स्वप्नद्रष्टृधर्म्मोऽपि चेत्तथापि किं न स्यादित्याशङ्क्य बाधोपलब्धेर्मैवमि-त्याह । न सत इति ॥ उत्तरार्द्धं विभजते । तानित्यादिना ॥ अपूर्व्वाणां स्वप्नदृश्यानां स्थानिधर्म्मत्वेऽपि मिथ्यात्वमित्याशङ्क्याह । तस्मादिति ॥ स्वप्नदृष्टान्तस्य साध्यविकलत्वाभावं निगमयति । अतो नेति ॥ अपूर्व्वस्यानपूर्व्वस्य वा स्वप्नद्रष्टृधर्म्मत्वेन तदविद्याविजृम्भितत्वाद्दृष्टान्ते साध्यव्यतिपत्तेस्तथैव जाग्रद्भेदानां मिथ्यात्वं युक्तमित्यर्थः ॥ ८ ॥ जाग-द्दृश्यानां मिथ्यात्वं तेषु सदसद्विभागप्रतिभानविरुद्धमित्याशङ्क्य दृष्टान्तेन

जाग्रद्वृत्तावपि त्वन्तश्चेतसा कल्पितं त्वसत् ।
बहिश्चेतो गृहीतं सद्युक्तं वैतथ्यमेतयोः ॥ १० ॥

---

सत् । सङ्कल्पानन्तरसमकालमेवादर्शनात्तत्रैव स्वप्ने बहिश्चेतसा गृहीतं चक्षुरादिद्वारेणोपलब्धं घटादि सदित्येवमसत्त्वमिति निश्चितेऽपि सदसद्विभागो दृष्टः । उभयोरप्यन्तर्बहिश्चेतः कल्पितयोर्वैतथ्यमेव दृष्टम् ॥ ९ ॥

सदसतोर्वैतथ्यं युक्तम् । अन्तर्बहिश्चेतःकल्पितत्वाविशेषादिति व्याख्यातमन्यत् ॥ १० ॥ चोदक आह । स्वप्नजाग्रत्स्थानयोर्भेदानां यदि वैतथ्यं क एतानन्तर्बहिश्चेतः कल्पितान् बुध्यते । को वै तेषां विकल्पकः । स्मृतिज्ञानयोः क आलम्ब

---

समाधत्ते । स्वप्नवृत्ताविति ॥ श्लोकस्य तात्पर्यार्थमाह । अपूर्वत्वेति ॥ स्वप्नदृष्टानामपूर्वदर्शनत्वप्रयुक्तां बाध्यविषयत्वशङ्कां परिहृत्येति यावत् । स्वप्नस्थाने सर्वस्य मिथ्यात्वाविशेषेऽपीत्यर्थः । असत्त्वं परमार्थतद्विलक्षणत्वेन मिथ्यात्वम् । तत्रापि तर्हि विभागप्रतिभासविरोधात्कुतो मिथ्यात्वमित्याशङ्क्य बाधाविशेषादित्याह । उभयोरिति ॥ ९ ॥

दार्ष्टान्तिकमाह । जाग्रदिति ॥ युक्तत्वे हेतुमाह । अन्तरिति ॥ श्लोकस्यानाक्षराणां व्याख्यानमनपेक्षितं व्याख्यातप्रायत्वादित्याह । व्याख्यातमिति ॥ १० ॥ सर्वस्य मिथ्यात्वे प्रमातृप्रमाणादिव्यवहारानुपपत्त्या विशेषमाशङ्कते । उभयोरिति ॥ कर्तृकरणव्यवस्थानुपपत्त्या विरोधोऽस्तीत्याह । को वा इति ॥ विकल्पको निर्मातेति यावत् । श्लोकस्य चोद्यपरत्वं प्रतिजानीते । चोदक इति ॥ अक्षरयोजनया प्रथमार्धार्थविरोधं स्फोरयति । स्वप्नेति ॥ चतुर्थपादमवतार्यार्थापत्त्यन्तरविरोधं स्फुटयति । को वै तेषामिति ॥ कर्ता हि पूर्वानुभूतं स्मृत्वा तज्जातीयान् निर्मिमीतेऽनुभूतानुभवाश्रयापेक्षैव कर्त्राक्षेपो विवक्षित-

उभयोरपि वैतथ्यं भेदानां स्थानयोर्यदि ।
क एतान् बुध्यते भेदान् को वै तेषां विकल्पकः
॥ ११ ॥ कल्पयत्यात्मनात्मानमात्मदेवः स्वमा-

---

इत्यभिप्रायः। न चेन्निरात्मवाद इष्टः ॥ ११ ॥ स्वयं स्वमायया स्वमात्मानमात्मा देव आत्मन्येव वक्ष्यमाणं भेदाकारं कल्पयति रज्ज्वादाविव सर्पादीन्। स्वयमेव च तान् बुध्यते भेदान् तद्वदेवेत्येवं वेदान्तनिश्चयः। नाऽन्यो-

---

न्यथा च कर्त्रादिव्यवहारानुपपत्तिः सर्वमिथ्यात्वे दुर्वारेत्यर्थः॥ योऽध्यात्मं प्रमाता यश्चाधिदैवं कर्त्तेश्वरस्तावुभावपि मिथ्येत्यङ्गीकारा-त्प्रमात्रादेरसत्त्वमित्याशङ्क्याह। न चेदिति॥ यदि प्रमाता कर्त्ता वा नेष्यते तर्हि नैरात्म्यमिष्टमेवापद्यते। न च तद्युक्तं प्रत्यगात्मनि कारणस्य दुष्करत्वान्निराकर्त्तुरेवात्मत्वादित्यर्थः॥ ११ ॥ कर्तृकार्या-दिव्यवस्थानुपपत्तिं परिहरति। कल्पयतीति॥ कारणान्तरं व्यव-च्छिनत्ति। आत्मनेति॥ कर्मान्तरं व्यावर्त्तयति। आत्मानमिति। कर्त्रन्तरं निवारयति। आत्मेति॥ तस्य द्योतकान्तरापेक्षां प्रतिक्षिपति। देव इति॥ विवर्त्तवादं द्योतयति। स्वमाययेति॥ सर्वस्य मिथ्यात्वेऽपि मायया विकल्पितभेदानुरोधेन कर्तृत्वादिव्यवहा-रस्य सिद्ध्यतीति भावः। प्रमातृप्रमाणादिव्यवहारानुपपत्तिं प्रत्याह। स एवेति॥ एकस्मिन्नेवाद्वितीये प्रतीचि वस्तुनि काल्पनिकभेदनिबन्धना सर्वा व्यवस्थेत्यत्र प्रमाणमाह। इति वेदान्तेति॥ यथा घटस्रष्टा कुलालोऽऽधिष्ठाता मृदोऽन्यो दृष्टो न तथेहान्योऽधिष्ठातास्तीत्याह। स्वयमिति॥ यथा तत्र मृदाख्यमुपादानमधिष्ठातुरन्यदधिगतं न तथा-त्मान्यदुपादानमस्तीत्याह। स्वमात्मानमिति॥ तत्र च घटं कुर्वतो भूभागो भवत्याधारस्तथेहाधारोऽन्योऽस्तीत्याह। आत्मन्येवेति॥ परिणाम-वादं व्यावर्त्य विवर्त्तवादं प्रकटयितुं स्वमाययेत्युक्तं तत्र दृष्टान्तमाह।

यया। स एव बुध्यते भेदानिति वेदान्तनि-
श्चयः ॥ १२ ॥

विकरोत्यपरान् भावानन्तश्चित्ते व्यवस्थि-

---

ऽसौ ज्ञानस्मृत्याश्रयः। न च निरास्पदे एव ज्ञानस्मृती वैनाशिकानामिवेत्यभिप्रायः ॥ १२ ॥

सङ्कल्पयन् केन प्रकारेण कल्पयतीत्युच्यते। विकरोति नाना करोत्यपरान् लौकिकान् भावान् पदार्थान् शब्दादीनन्यांश्चान्तश्चित्ते वासनारूपेण व्यवस्थितानव्याकृतान्वि-

---

रज्ज्वादाविति ॥ मायाद्वारेण चिदात्मनो जगन्निर्मातृत्वमुक्त्वा तस्यैव बुद्धिप्रतिबिम्बितस्य प्रमातृत्वमित्याह। स्वयमेव चेति ॥ न च प्रमातृत्वस्य वास्तवत्वं रज्ज्वादौ सर्पादिदर्शनवदेव मिथ्यात्वनिर्धारणादित्याह। वद्वदिति ॥ कर्त्रादिभेदस्य प्रमात्रादिभेदस्य च मिथ्यात्वे नेह नानाऽस्तीत्यादिश्रुतिं प्रमाणयति। इत्येवमिति ॥ स एवेत्येवकारार्थमाह। नान्योऽस्तीति ॥ यो जगत्स्रष्टा यश्च प्रमाता ततोऽन्यस्य ज्ञानस्य स्मृतेश्चाश्रयो नास्ति। चेतनभेदे मानाभावादनुभवस्मृत्योश्चैकाश्रयत्वस्य प्रसिद्धत्वादित्यर्थः। ज्ञानस्मृत्योराश्रयापेक्षा विषयापेक्षा वा नास्तीत्यापक्ष्याबाधितप्रसिद्धिविरोधान्नैवमित्याह। न चेति ॥ १२ ॥

प्रकृतायां कल्पनायां विवक्षितं क्रममुपन्यस्यति। विकरोतीति ॥ नियतांश्चेति चकारादनियतांश्चेति विवक्ष्यते। प्रतिपिपित्सितं क्रमप्रतिपत्त्यर्थं पृच्छति। कः सङ्कल्पयन्निति ॥ लोकायतबोधनया बुभुत्सितं क्रमं प्रत्याययति। उच्यत इत्यादिना ॥ अन्यांश्चेति शास्त्रीयानिति यावत्। चित्तमध्ये वासनारूपेण व्यवस्थितानभिव्यक्तनामरूपत्वेन अव्यवहार्यत्वमाह। अव्याकृतानिति ॥ स कल्पनाकालान् विद्युदादीन् स्थिरानित्यर्थः। बहिश्चित्तो बहिर्मुखान् बाह्यान् व्यवहारयोग्यान् पदार्थान् कल्पयति। अन्तश्चित्तस्तु तेभ्यो व्यावर्त्तवदि-

तान् । नियतांश्च बहिश्चित्त एवं कल्पयते प्रभुः ॥ १३ ॥ चित्तकाला हि येऽन्तस्तु द्वयकालाश्च ये

---

यतांश्च पृथ्व्यादीन् अनियतांश्च कल्पनाकालान् बहिश्चित्तः सन्। तथाऽन्तश्चित्तो मनोरथादिलक्षणानित्येवं कल्पयति। प्रभुरीश्वर आत्मेत्यर्थः ॥ १३ ॥ स्वप्नवच्चित्तपरिकल्पितं सर्वमित्येतदाशङ्क्यते। यस्माच्चित्तपरिकल्पितैर्मनोरथादिलक्षणैश्चित्तपरिच्छेद्यैर्वैलक्षण्यं बाह्यानामन्योऽन्यपरिच्छेद्यत्वमिति सा न युक्ताऽऽशङ्का। चित्त-

---

र्मनोरथादिलक्षणात्मव्यवस्थितान् भावान् व्यवहारयोग्यान् कल्पयित्वा पुनर्व्यवहारयोग्यतायै कल्पयतीत्यर्थः। एतदुक्तं भवति। यथा लोके कुलालो वा तन्तुवायो वा घटं पटं वा कार्य्यं चिकीर्षुरादौ व्यवहारयोग्यां व्यक्तिं बुद्ध्या वाऽऽविर्भाव्य पश्चात्तामेव बहिर्नामरूपाभ्यां सम्पादयति। तथैवायमादिकर्त्तापि मायावशात् स्वचित्ते नामरूपाभ्यामव्यक्तरूपेण स्थितान् प्रपञ्चपदार्थान् प्रथमं सङ्कल्पिताकारेणान्तर्विभाव्य पश्चाद्बहिः सर्व्वप्रतिपत्तिसाधारणरूपेण सम्पादयतीति कल्पनायां क्रमाधिगतिरिति ॥१३॥ कल्पितानां कल्पनाकालादन्यस्मिन् काले सत्त्वाभावात्प्रापञ्चवायनाश्च कल्पनाकालात्कालान्तरेऽपि प्रत्यभिज्ञया सत्त्वावगमादनुपपन्ने तेषां मिथ्यात्वमित्याशङ्क्याह। चित्तेति॥ ये कल्पना कालभाविनो भावा मनस्यन्तर्वर्त्तन्ते। ये च प्रत्यभिज्ञायमानत्वेन पूर्व्वापरकालभाविनो बहिरेव व्यवहारयोग्या दृश्यन्ते ते सर्व्वे कल्पिताः सन्तो मिथ्यैव भवितुमर्हन्ति। प्रत्यभिज्ञायमानत्वलक्षणो विशेषवस्तुना कल्पितत्वप्रयुक्तः कल्पितेऽपि तद्दर्शनादित्यर्थः। श्लोकव्याख्यामाशङ्कां दर्शयति। स्वप्नवदिति॥ यथा स्वप्ने दृश्यमानं सर्व्वं कल्पितं मिथ्यैवेष्यते। तथा जागरितेऽपि दृष्टं सर्व्वं चित्तसम्बन्धितं तेन कल्पितं मिथ्यैवेत्येतन्नाद्यापि निर्द्धारि-

**बहिः । कल्पिता एव ते सर्वे विशेषो नान्यहेतुकः ॥ १४ ॥**

---

काला हि येऽन्तस्तु चित्तपरिच्छेद्याःनान्यश्चित्तकालव्यतिरेकेण परिच्छेदकः कालो येषां ते चित्तकालाः । कल्पनाकाल एवोपलभ्यन्त इत्यर्थः । द्वयकालाश्च भेदकाला अन्योन्यपरिच्छेद्याः । यथा गोदोहनमास्ते यावदास्ते तावद्गां दोग्धि यावद्गां दोग्धि तावदास्ते । तावानयमेतावान् स इति परस्परपरिच्छेदकत्वं बाह्यानां भेदानां ते द्वयकाला अन्तश्चित्तकाला बाह्याश्च द्वयकालाः क-

---

तमित्यत्र हेतुमाह । यस्मादिति ॥ आत्माविद्याविवर्त्तेन चित्तेन तावदन्तर्विनिर्म्मिता मनोरथरूपामनस्यन्तर्वर्त्तमाना बही रज्जुसर्पादयश्चते चित्तेनैव परिच्छिद्यन्ते । ते हि कल्पनाकालमात्रभाविनो न प्रतीयन्ते । तैः सहैवोत्पन्नं मनसो बहिर्व्यापद्यमानानां भावानामन्योऽन्यपरिच्छेद्यत्वं कालद्वयावच्छिन्नत्वेन प्रत्यभिज्ञानगोचरत्वमिति यस्मादुपलभ्यते तस्मादयुक्तं जागरितस्य स्वप्नवन्मिथ्यात्वमित्यर्थः ॥ श्लोकाक्षरैरुत्तरमाह । कालेति ॥ येन मनसान्तर्मनोरथरूपाभावास्ते चित्तकाला भवन्तीत्यचित्तकालत्वे विग्रहयति । चित्तेत्यादिना ॥ व्याख्यार्थस्था विवक्षितार्थमाह । कल्पनेति ॥ द्वितीयपादमवतार्य व्याकरोति । द्वयेति ॥ ये मनसो बहिरुपलभ्यन्ते भेदकालाः कालस्य भेदो भेदकालः स येषां ते तथेति व्युत्पत्तेः । ततश्चान्येन पूर्व्वेणान्येन चापरेण परिच्छेद्याभिन्नकालावच्छिन्नत्वेन प्रत्यभिज्ञायमाना इत्यर्थः ॥ प्रत्यभिज्ञायमानत्वमुदाहरणनिष्ठतया स्फुटयति ॥ यथेति ॥ यावद्गोदोहनं गोदोहनपर्य्यन्तमास्ते देवदत्तस्तिष्ठतीति प्रत्यभिज्ञायेयत्वेनाभि-मोदाहरणीया यावता कालेनावच्छिन्नो वर्त्तते तावता कालेनावच्छिन्नो

अव्यक्ता एव येऽन्तस्तु स्फुटा एव च ये बहिः।

कल्पिता एव ते सर्व्वे न वाह्यो कालद्वयत्वविशेषः कल्पितत्वव्यतिरेकेणान्यहेतुकः। अत्रापि हि स्वप्नदृष्टान्तो भवत्येव॥ १४॥

यद्यप्यन्तरव्यक्तत्वं भावानां मनोवासनामात्राभिव्यक्तानां स्फुटत्वं वा बहिश्चक्षुरादीन्द्रियान्तरे विशेषः।

मोदोहनं निर्वर्त्तयतीत्यनेककालावस्थायित्वेन प्रत्यभिज्ञाविषयत्वं तत्र दर्शयति। यावदिति॥ यावता कालेनायं घटोऽर्थक्रियां निर्वर्त्तयितुं शक्नोति तावता कालेनावच्छिन्नः सन्नेव तिष्ठतीत्युदाहरणान्तरमाह। तावान्निति॥ परोक्षतया स्थितो यावता कालेनावच्छिन्नः स्वकार्यं निर्वर्त्त्यं निर्दिष्टोऽस्ते तावता कालेनावच्छिन्नः संतिष्ठतीत्यपरमुदाहरणमाह। एतावान्निति॥ उक्तेन न्यायेन परेणापरेण च कालेन परिच्छेद्यत्वं जाग्रद्दृश्यानां भावानामुपलभ्यते कालद्वयस्य चऽ परिच्छेदकत्वम् तथा ते सर्व्वे भावा बहिर्दृश्यमानाद्यकालेन कालद्वयेन परिच्छेद्या भवन्तीत्यर्थः। तृतीयपादं व्याचष्टे। अन्तरिति॥ चतुर्थपादार्थमाह। अनेनेत्यादिना॥ वाह्यो जाग्रद्दृश्येषु वाह्यपदार्थेषु अवस्थितोकालद्वयत्वेन कालद्वयावच्छेदेन ततः प्रत्यभिज्ञायमानत्वरूपो विशेषो ऽन्यहेतुको न भवति॥ कल्पितेऽपि तथाविधविशेषसम्भवादित्यत्र दृष्टान्तमाह। अत्रापि हीति॥ यद्यपि सर्व्वं जाग्रद्भेदजातं कल्पितं तथापि तत्र यथोक्तो विशेषः स्फुटः सिध्यति। स्वप्ने सर्व्वस्य भेदजातस्य कल्पितत्वेऽपि प्रत्यभिज्ञायमानत्वाज्जागरितेऽपि तदुपपत्तेरित्यर्थः॥ १४॥

स्वप्नजागरितयोरुभयोरपि मिथ्यात्वे स्फुटास्फुटावभासविभागानुपपत्तेनाविशेषेण मिथ्यात्वमित्याशङ्क्याह। अव्यक्ता इति॥ ये मनस्यन्तर्भावाद्रूपत्वादस्फुटा ये च मनसो बहिरुपलभ्यमानाः स्फुटा भवन्ति ते सर्व्वे मनःस्पन्दनमात्रत्वेन कल्पिता मिथ्यैवान्त-

कल्पिता एव ते सर्वे विशेषस्त्विन्द्रियान्तरे ॥१५॥
जीवं कल्पयती पूर्वं ततो भावान् पृथग्विधान्।

---

नासौ भेदानामस्थित्वकृतः स्वप्नेऽपि तथा दर्शनात्। किन्तर्हीन्द्रियान्तरकृत एवान्तः कल्पिता एव। जाग्रद्भावा अपि स्वप्नभाववदिति सिद्धम् ॥ १५ ॥ बाह्याध्यात्मि-

---

र्बहिरिन्द्रियभेदनिमित्तः स्फुटत्वादस्फुटत्वविशेषो न मिथ्यात्वममिथ्यात्वं वा तत्रोपयुज्यते। मिथ्याभूतेष्वपि तद्दर्शनादित्यर्थः॥ श्लोकस्थाक्षराणि व्याकरोति। अव्यक्ता इत्यादिना॥ मनस्यन्तर्मनोरथरूपाणां भावानामव्यक्तत्वमस्फुटत्वं तत्र हेतुमाह। मनइति॥ चक्षुरादिग्राह्यत्वेन मनसो बहिर्भावानां स्फुटत्वं दृष्टं तदेषाममिथ्यात्वकृतमिति शङ्कां वारयति। नासाविति॥ सर्वसम्मतिपक्षमिथ्यात्वेऽपि स्वप्ने स्फुटत्वविशेषप्रतिभानात्तस्मात् विशेषो मिथ्यात्वममिथ्यात्वं वा प्रयोजयितुं प्रभवतीत्याह। स्वप्नेऽपीति॥ अयं विशेषस्तर्हि केन सिध्यतीत्याशङ्क्य चतुर्थपादार्थमाह। किं तर्हीति॥ मनोमात्रसम्बन्धादन्तर्भावानां वासनामात्ररूपाणामस्फुटत्वम्। बहिर्भावानान्तु चक्षुरादिबहिरिन्द्रियसम्बन्धात् युक्तं स्फुटत्वं तदेव विशेषो मिथ्यात्वाविशेषेऽपि सिध्यतीत्यर्थः। स्फुटत्वास्फुटत्वप्रतिभासभेदस्य मिथ्यात्वेऽपि सम्भवात्प्रागुक्तमनुमानमविरुद्धमित्युपसंहरति। अन्त इति ॥ १५ ॥ भवतु सर्वस्य कल्पितत्वम्। सा पुनः सर्वकल्पना केन द्वारेणेत्याशङ्क्याह। जीवमिति॥ आत्मा हि सर्वं स्वमायावशेन कल्पयन्नादौ विशिष्टरूपेण जीवं कल्पयति। तत इति॥ तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः स्वयमेव जीवभावमापद्यते। तद्द्वारेण पुनर्नानाविधान् भावान् निर्मिमीते। प्रागनुभूतिवैषम्यात्तत्कल्पेषु भावेषु वैषम्योपपत्तिरित्यर्थः। श्लोकव्याख्यावशं प्रश्नद्वारापयति। बाह्येति। पदार्थाः साध्यसाधनतया स्थिता बाह्याः सुखदुःखं ज्ञानं रागद्वेषप्रमादयस्त्वाध्यात्मिकास्तेषां परस्परं निमित्तनैमित्तिकताऽस्ति। बाह्यानिमित्तीकृत्याध्यात्मिका भवन्ति। तानपि

वाह्यानाध्यात्मिकांश्चैव यथाविद्यस्तथास्मृतिः॥१६

कानां भावानामितरेतरनिमित्तनैमित्तिकतया कल्पनायाः किं मूलमिति उच्यते। जीवं हेतुफलात्मकमहं करोमि मम सुखदुःखे इत्येवं लक्षणम्। अनेनैवं लक्षण एव शुद्धे आत्मनि रज्ज्वामिव सर्पं कल्पयते पूर्वम्। ततस्तादर्थ्येन क्रियाकारकफलभेदेन प्राणादीन्नानाविधान् भावान् वाह्यानाध्यात्मिकांश्चैव कल्पयते। तत्र कल्पनायां को हेतुरित्युच्यते। योऽसौ स्वयं कल्पितो जीवः सर्वकल्पनायामधिकृतः स यथाविद्यो यादृशी विद्या विज्ञानमस्येति यथाविद्यस्तथाविधैव स्मृतिस्तस्येति तथास्मृतिर्भवति स इति।

निमित्तीकृत्येतरे आवन्ते। तदेवमितरेतरनिमित्ततया नैमित्तिकतया च कल्पनायां मूलं वक्तव्यम्। निर्मूलकल्पनायामतिप्रसङ्गादित्यर्थः। श्लोकाक्षरयोजनया परिहरति। उच्यत इति॥ हेतुफलात्मकमित्युक्तमेव व्यनक्ति। अहमिति॥ हेतुफलभावविकल्पं परिगृह्यात्मरूपं जीवकल्पनाधिष्ठानं दर्शयति। अनेनैवमिति॥ आरोपस्याधिष्ठानापेक्षात्वे दृष्टान्तमाह। रज्ज्वामिवेति॥ द्वितीयतृतीयपादौ विभजते। तत इति॥ तादर्थ्येन प्रथमं कल्पितस्य भोक्तुर्जीवस्य शेषत्वेनेत्यर्थः। यद्यपि जीवः सर्वकल्पनायां मूलभूतो हेतुस्तथापि तस्य कल्पनाविशेषो विषयहेतुव्यतिरेकेण न सम्भवतीति पृच्छति। तत्रेति॥ चतुर्थपादेनोत्तरमाह। उच्यत इति॥ कल्पितो विशिष्टरूपेणेति शेषः। अधिकृतः स्वामित्वेन सम्बन्धेन सम्बद्ध इत्यर्थः। इति शब्दः श्लोकाक्षरयोजनासमाप्तिद्योतनार्थः॥ प्रकृतकल्पनामेव प्रपञ्चयति। अत इत्यादिना॥ तत्तत्पानाद्युपयोगे तृप्त्यादि भवति। असति न भवतीत्यन्वयव्यतिरेकरूपाभ्यामात् भोजनादिकं हेतुरिति कल्पनाविज्ञानमुत्पद्यते। ततस्तस्या-

अनिश्चिता यथा रज्जुरन्धकारे विकल्पिता ।

---

अतो हेतुकल्पनाविज्ञानात्फलविज्ञानं ततो हेतुफलस्मृतिस्ततस्तद्विज्ञानतदर्थक्रियाकारकतत्फलभेदविज्ञानानि । तेभ्यस्तत्स्मृतिस्तत्स्मृतेश्च पुनस्तद्विज्ञानानि तेभ्यस्तत्स्मृतिस्तत्स्मृतेश्च पुनस्तद्विज्ञानानीत्येवं बाह्यानाध्यात्मिकांश्चेतरेतरनिमित्तनैमित्तिकभावेनानेकधा कल्पयते ॥ १६ ॥

तत्र जीवकल्पना सर्वकल्पनामूलमित्युक्तं सैव जीवकल्पना किंनिमित्तेति दृष्टान्तेन प्रतिपादयति । यथा लोके स्वेन रूपेणानिश्चिताऽनवधारिता एवमेवेति रज्जु-

---

दिकं फलमिति कल्पनाविज्ञानं जायते । ततोऽपरेद्युरुक्तयोरुभयोरपि हेतुफलयोः स्मृतिरुद्भवति । ततश्च फलसाधनासमानजातीये कर्तव्यताविज्ञानम् । ततश्चाभिलषितस्वर्गादिफलार्थत्वे पाकादिक्रियातत्कारकतण्डुलादितत्फलान्ननिष्पत्त्यादीनि विशेषविज्ञानादीनि भवन्ति । ततो हेत्वादिस्मृतिः । ततस्तदनुष्ठानम् । ततश्च फलमित्यनेन क्रमेण मिथो हेतुहेतुमत्तया कल्पना भवतीत्यर्थः । प्रकृतां कल्पनामुपसंहरति । एवमिति ॥ १६ ॥

इदानीं जीवकल्पनानिमित्तं निरूपयति । अनिश्चितेति ॥ श्लोकस्य तात्पर्यं दर्शयितुं वृत्तं कीर्तयति । तत्रेति ॥ पूर्वश्लोकः सप्तम्यर्थः । जीवकल्पनाया नित्यत्वायोगात् अनिमित्तत्वस्य वक्तव्यत्वात् तस्य च वस्तुत्वे निवृत्त्यनुपपत्तेः । अवस्तुत्वे च निमित्तत्वासिद्धेर्जीवकल्पनाया दुर्घटत्वात्तत्कार्यभूतापि कल्पना नावकल्पत इत्याशङ्कते । सैवेति ॥ उत्तरत्वेन श्लोकाक्षराण्यवतार्य व्याचष्टे । दृष्टान्तेनेति ॥ असाधारणं रूपं रज्जुत्वं तेनेति यावत् । अनवधारितत्वमेव स्फोरयति । एवमेवेति ॥ रज्जुरेवेत्यभिलपनेन

सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पितः ॥ १७ ॥

मन्दान्धकारे किं सर्प उदकधारा दण्ड इति वानेकधा विकल्पिता भवति पूर्वं स्वरूपानिश्चयनिमित्तम्। यदि हि पूर्वमेव रज्जुः सर्पेण निश्चिता स्यात् न सर्पादिविकल्पोऽभविष्यत्। स यथा स्वहस्ताङ्गुल्यादिषु एष दृष्टान्तस्तद्धेतुफलादिसंसारधर्म्मानर्थविलक्षणतया स्वेन विशुद्धविज्ञप्तिमात्रसत्ताद्वयरूपेणानिश्चितत्वात् जीवप्राणाद्यनन्तभावभेदैरात्मा विकल्पित इत्येष सर्व्वोपनिषदां सिद्धान्तः ॥ १७ ॥

प्रकारेणेत्यर्थः ॥ सर्पादिकल्पनायामन्वयव्यतिरेकसिद्धमुपादानमुपन्यस्यति। स्वरूपेति ॥ उदकधारत्वादिवत्त्वे कारणं सूचयति। मन्देति ॥ पूर्वं रज्जुस्वरूपनिश्चयात्प्रागवस्थायामित्यर्थः एतदेव व्यतिरेकद्वारा विवृणोति। यदि हीति ॥ देवदत्तस्य हस्ताद्यवयवेषु तद्रूपेणैव निश्चितेषु सर्पादिविकल्पो यथा नोपलभ्यते तथा पुरोवर्त्तिन्यपि रज्जुस्वरूपेण निश्चितेनासौ युक्तस्तथा च रज्ज्वज्ञानादेव भवतीत्यर्थः। उपपादितं दृष्टान्तमनूद्य दार्ष्टान्तिकमभिसन्दधानश्चतुर्थपादार्थमाह। एष इति ॥ हेतुफलादित्यादिशब्देन कर्त्तृत्वभोक्तृत्वरागद्वेषादि गृह्यते। विलक्षणत्वमेव स्फुटयति। स्वेनेति ॥ अनारोपितेनेति यावत्। विज्ञप्तेर्विशुद्धत्वं अज्ञानादिराहित्यमाकारान्तरशून्यत्वं तन्मात्रत्वमित्यर्थः। तन्मात्रत्वमयुक्तं सामान्यविशेषाभावादित्याशङ्क्याह। सत्तेति ॥ न च तत्रान्यदस्ति शून्यमिति मत्वा विशिनष्टि। अद्वयेति ॥ सच्चिदानन्दाद्वयात्मा विद्याविलसितं द्वैतमित्यत्र प्रमाणं सूचयति। इत्येष इति ॥ अद्वैतश्रुतयस्तावत्तत्रोपलभ्यन्ते यत्र हि द्वैतमिव भवतीत्याद्याश्च द्वैततत्प्रतिभासमानयोर्म्मिथ्यात्वमावेदयन्त्यः श्रुतयः श्रूयन्ते ॥ तेनाद्वैतं तत्त्वं द्वैतमविद्याविजृम्भितमिति प्रमाणसिद्धमित्यर्थः ॥ १७ ॥

निश्चितायां यथा रज्ज्वां विकल्पो विनिवर्त्तते ।
रज्जुरेवेति चाद्वैतं तद्वदात्मविनिश्चयः ॥ १८ ॥

---

रज्जुरेवेति निश्चये सर्वविकल्पनिवृत्तौ रज्जुरेवेति चाद्वैतं यथा तथा नेति नेतीति सर्वसंसारधर्म्मशून्यप्रतिपादकशास्त्रजनितविज्ञानसूर्य्यालोककृतात्मविनिश्चयः । आत्मैवेदं सर्वं अपूर्व्वोऽनपरोऽनन्तरोऽबाह्यः सबाह्याभ्यन्तरो ह्यजोऽजरोऽमरोऽमृतोऽभय एवाद्वय इति ॥ १८ ॥

---

अविद्याकृता जीवकल्पनेत्यन्वयमुखेनोक्तं तदेवेदानीं व्यतिरेकमुखेन दर्शयति । निश्चितायामिति ॥ रज्जुरेवेति रज्ज्वां निश्चितायां तदज्ञाननिवृत्तेस्तदुत्थसर्पादिविकल्पः सर्व्वथा निवर्त्तते रज्जुमात्रञ्चावशिष्यते तद्वदात्मनि श्रौतो निश्चयो यदा सम्पद्यते तदा सर्व्वस्यात्मनोऽविद्याकल्पितस्य जीवादिविकल्पस्य व्यावृत्तेरद्वैतमेवात्मतत्त्वं परिशिष्यते । तस्मादात्मनोऽविद्याविजृम्भिता जीवकल्पनेत्यर्थः ॥ दृष्टान्तभागं व्याचष्टे । रज्जुरिति ॥ तद्वदित्यादि व्याकरोति । तथेति ॥ सर्पस्यापि संसारात्मनो धर्म्मस्यात्मन्यारोपितस्यावस्तुत्वावेदकं यन्निषेधशास्त्रं तेन जनितं विज्ञानमेव सूर्य्यालोकस्तत्कृतो योऽयमात्मविनिश्चयः स एवाद्वितीयः शिष्यते । द्वैतं पुनः सर्व्वमेव व्यावृत्तं भवतीत्यर्थः । आत्मविनिश्चयमेव विशिनष्टि । आत्मैवेति ॥ सर्व्वमिदमात्मैवेत्युक्तेः पूर्ण्णत्वं तस्योच्यते । पूर्व्वभाविना कारणेन संस्पर्शशून्योऽपूर्व्वः पश्चाद्भाविना कार्य्येण सम्बन्धविधुरोऽनपरमन्तरं छिद्रं तच्छून्योऽनन्तरश्चिदेकरसत्वस्यैव प्रत्यक्त्वमबाह्यत्वं कार्य्यकारणस्य दृष्टभवकल्पनाधिष्ठानत्वेन ततोऽर्थान्तरत्वादित्याह । सबाह्येति ॥ विशेषणत्रयं कौटस्थ्यव्यवस्थापनार्थम् ॥ जन्मादिसम्बन्धाभावे कारणमविद्यासम्बन्धराहित्यं दर्शयति । अभय इति ॥ न खल्वविद्या तत्र कारणत्वेन सम्बन्धमनुभवति । तस्य पूर्ण्णत्वेन कारणानपेक्षत्वादित्याह ।

प्राणादिभिरनन्तैश्च भावैरेतैर्विकल्पितः ।
मायैषा तस्य देवस्य यया सम्मोहितः स्वयम् ॥१९॥

---

यद्यात्मैक एवेति निश्चयः कथं प्राणादिभिरनन्तैर्भावैरेतैः संसारलक्षणैर्विकल्पित इति । उच्यते । शृणु मायैषा तस्यात्मनो देवस्य । यथा मायाविना विहितमायागगनमतिविमलं कुसुमितैः सपलाशैस्तरुभिराकीर्णमिव करोति तथेयमपि देवस्य माया ययाऽयं स्वयमपि मोहितो भवति । मम माया दुरत्ययेत्युक्तम् ॥ १९ ॥

---

एक इति ॥ द्वैताद्वैतव्याख्यत्ववैधर्म्यमवधारणं न विद्यायाः । निरात्मकत्वोपपत्तेः। आत्मयान्तरस्य चासत्त्वात् । तत्रैव सा प्रविशतीति चेत् सत्यम् । अविद्यादृष्ट्या तस्यास्तत्र प्रवेशेऽपि वस्तुदृष्ट्या नासौ तस्मिन् प्रवेष्टुं प्रभवतीत्याह । अद्वय इति ॥ १८ ॥ आत्मनो द्वितीयत्वे कथमनेकैर्भावैस्तस्य विकल्पितत्वमित्यभिप्रायाप्रतिपत्त्या प्रत्यवतिष्ठते । प्राणादिभिरिति ॥ सिद्धान्ती स्वाभिसन्धिसुगाढयन्नुत्तरमाह । मायेति ॥ चोद्यभागं विभजते । यदीति ॥ उत्तरार्द्धमुत्तरत्वेन व्याकरोति । उच्यत इति ॥ मायामेव दृष्टान्तेन स्पष्टयति । यथेति ॥ तामेव मायां कार्यद्वारा स्फोरयति । यथेति ॥ यथा लौकिको मोहितो मोहपरवशो दृश्यते तथाऽयमात्मा स्वयमेव मायासम्बन्धान्मोहितो भवति । अतो मोहद्वाराऽऽत्मन्येवं मायाधिगतिरित्यर्थः । मायाया मोहहेतुत्वं भगवतापि सूचितमित्याह ॥ ममेति ॥ १९ ॥

प्राण इति प्राणविदो भूतानीति च तद्विदः ।
गुणा इति गुणविदस्तत्त्वानीति च तद्विदः ॥ २० ॥
पादा इति पादविदो विषया इति च तद्विदः ।
लोका इति लोकविदो देवा इति च तद्विदः ॥ २१ ॥

---

प्राणः प्राज्ञो बीजात्मा तत्कार्य्यभेदा हीतरे स्थि-

---

के ते प्राणादयोऽनन्ता भावा यैरात्मा विकल्प्यते न यथेत्यपेक्षायां प्राणादिविकल्पमुदाहरति । प्राण इति ॥ प्राणो हिरण्यगर्भस्तटस्थेश्वरो वा स जगतो हेतुरिति प्राणविदो हैरण्यगर्भाद्या वैशेषिकादयश्च कल्पयन्ति । तदिदं कल्पनामात्रम् । स्वतन्त्रस्य हिरण्यगर्भस्य सर्व्वजगद्धेतुत्वे मानाभावात् । पौरुषेयागमस्यापौरुषेयश्रुतिविरोधे स्वार्थे मानत्वायोगात्तटस्थेश्वरवादस्य च प्रमाणयुक्तिविहीनस्य प्रतिपत्तुमशक्यत्वादित्यर्थः । कल्पनान्तरं दर्शयति । भूतानीति चेति ॥ पृथिव्यप्तेजोवायवस्तत्त्वानि तानि च चत्वारि भूतानि जगत्कारणानीति लौकायतिकास्तदपि कल्पनामात्रम् । न हि भूतानि स्वतः सिद्धानि जडत्वविरोधात् । नापि परतः सिद्धानि । स्वगुणस्य चैतन्यस्य स्वग्राहकत्वायोगाद्बहिर्गतौ ग्राहकस्य बहिर्विषयत्वादर्शनात् । अतो भूतानि जगत्कारणानीति कल्पनैवेत्यर्थः । सत्त्वरजस्तमांसि त्रयो गुणाः साम्येनावस्थिता जगतो महदादिलक्षणस्य कारणमिति साङ्ख्याः । तदपि कल्पनामात्रम् । साम्येन स्थितानां कारणत्वे प्रलयाभावप्रसङ्गात् । वैषम्यभञ्जनस्य च निर्हेतुकत्वे सदा तदापातात् । सहेतुकत्वे हेतोर्नित्यत्वे प्राचीनदोषानुषङ्गादनित्यत्वे हेत्वन्तरापेक्षायामनवस्थानादित्याह । गुणा इतीति ॥ कल्पनान्तरमाह । तत्त्वानीति चेति ॥ २० ॥ आत्मविद्या शिवेति सङ्क्षेपतस्त्रीणि तत्त्वानि सर्व्वजगत्प्रवर्त्तकानीति शैवा मन्यन्ते तदपि कल्पनामात्रम् । आत्मनो भिन्नत्वे शिवस्य घटादितुल्यत्वप्रसङ्गादभिन्नत्वे तत्त्वानां त्रित्वव्याघातादित्यर्थः । एकस्यात्मनो विश्वादयः सर्व्वव्यवहारहेतवो भवन्तीत्यपि कल्पनामात्रम् । निरंशस्यात्म-

वेदा इति च वेदविदो यज्ञा इति च तद्विदः ।
भोक्तेति च भोक्तृविदो भोज्यमिति च तद्विदः ॥२२

---

त्यन्ताः । अन्ये च सर्वे लौकिकाः सर्वप्राणिपरिकल्पिता

---

भेोऽप्यभेदानुपपत्तेरित्याह । पादा इतीति ॥ वात्स्यायनप्रभृतीनां कल्पनां कथयति । विषया इतीति ॥ शब्दादयो विषया भूयो भूयो भुज्यमानाः सत्यमिति विभ्रममात्रम् ॥ विषस्य विषयाणाञ्च दूरमत्यन्तमन्तरम् । उपभुक्तं विषं हन्ति विषयाः स्मरणादपीति ॥ विषयाणामनुसन्धानस्य निन्दितत्वात्तेषां पारमार्थिकतत्त्वभावानुपपत्तेरित्यर्थः ॥ भूर्भुवः स्वरिति त्रयो लोका वस्तुभूताः सन्तीति पौराणिकाः । तदपि कल्पनामात्रम् । स्थानभेदेन त्रित्वे तदानन्त्यस्य दुरुत्तरत्वात्तत्तात्म्यस्य चासिद्धत्वादित्याह । लोका इतीति ॥ अग्नीन्द्रादयो देवास्तत्तत्फलदातारो नेश्वरस्तथेति देवताकाण्डीयाः । तदपि कल्पनामात्रम् । अस्मदादिप्रयत्नमपेक्ष्य फलदातृत्वे तेषां भृत्येभ्यो विशेषभावप्रसङ्गात् । स्वातन्त्र्ये चोपकारकत्वे तदाराधनवैयर्थ्यात् । तद्भक्तानामपि विप्रतिपत्तिदर्शनात् तत्प्रसादस्याकिञ्चित्करत्वादित्याह । देवा इति चेति ॥२१॥ ऋग्वेदादयो वेदा अपौरुषेयाः सन्तीति पाठका वदन्ति । तदपि कल्पनामात्रम् । न हि वेदा लौकिकवर्णव्यतिरिक्ता दृश्यन्ते । क्रमवतामेव वर्णानां वेदशब्दवाच्यत्वाङ्गीकारात् । क्रमस्योच्चारणोपलब्ध्योरन्यतरगतो वर्णेष्वारोप्यते । तथा च तथाविधक्रमवतां वर्णानामारोपितरूपेण वेदशब्दवाच्यत्वात्कुतो वेदानां परमार्थतेत्याह । वेदा इति ॥ ज्योतिष्टोमादयो यज्ञा वस्तुभूता भवन्तीति बौधायनप्रभृतयो याज्ञिका मन्यन्ते तदपि भ्रान्तिमात्रम् । यज्ञं व्याख्यास्यामो द्रव्यं देवता त्याग इत्यत्रैकैकस्मिन्यज्ञविभागाभावात्समुदायस्य चावस्तुत्वादित्याह । यज्ञा इति चेति ॥ भोक्तैवात्मा न कर्तेति साङ्ख्याः । तत्र भोगो यदि विक्रिया सोऽक्रियते तर्हि कथं नानित्यत्वादिप्रसङ्गः स्वभावत्वे सदा स्यादिति विषयसन्निधौ भोक्तृत्वं भ्रान्तिरेवेत्याह । भोक्तेति चेति ॥ सूपकारास्तु भोज्यं वस्त्विति प्रतिजानते । तदपि न । मधुरादिरसव्यञ्जनादेस्तदैवान्यथात्वदर्शनादेव-

सूक्ष्म इति सूक्ष्मविदः स्थूल इति च तद्विदः ।
मूर्त इति मूर्तविदो ऽमूर्त इति च तद्विदः ॥ २३ ॥
काल इति कालविदो दिश इति च तद्विदः ।
वादा इति वादविदो भुवनानीति तद्विदः ॥ २४ ॥

---

भेदा रज्ज्वामिव सर्पादयः तच्छून्ये आत्मनात्मस्वरूपा

---

रूपाद्यन्तवादित्याह । भोज्यमिति चेति ॥ २२ ॥ आत्मासूक्ष्मोऽणुपरिमाणः स्यादिति केचित् । तन्न । युगपदेवशरीरव्यापिवेदनानुभ-व्याघातविरोधेरित्याह । सूक्ष्म इतीति ॥ स्थूलो देहोऽहंप्रत्ययवादात्मेति लोकायतभेदः । तच्च न । भूतचतुष्टयोरपि सङ्घाताविशेषाच्चैतन्यप्रसङ्गात् । एकैकस्य च भूतस्य चैतन्यादर्शनात्सङ्घातस्य चावस्तुत्वादित्याह । स्थूल इति चेति ॥ मूर्तस्त्रिशूलादिधारी महेश्वरश्चक्रादिधारी वा परमार्थो भवतीत्यागमिकाः । तदपि भ्रान्तिमात्रम् । अस्मदादिशरीरवत्तस्यापि शरीरस्य पाञ्चभौतिकत्वात्तेनाविपक्षकस्य तस्य । विपक्षाभावे बीजाभावादयुक्तमित्याह । मूर्त इति ॥ अमूर्तः सर्वाकारशून्यो निःस्वभावः परमार्थ इति शून्यवादिनः तदपि कल्पनामात्रम् । परमार्थो निःस्वभावश्चेति व्याघातादित्याह । अमूर्त इति चेति ॥ २३ ॥ कालः परमार्थ इति ज्योतिर्विदः । तच्च न । कालैक्ये मुहूर्तादिव्यवहारायोगात् । तन्नानात्वेऽपि न स्वातन्त्र्यम् । अन्यविषयत्वेन प्रतीतेः । उदयकाल इत्यादिना क्रियाधर्मत्वेन प्रतीतेः स्फुटत्वात् । न च क्रियाधर्मत्वं कालेऽपि तदुत्पत्तिदर्शनादन्यथाकालानवच्छिन्नत्वेन क्रियानित्यत्वापातादित्याह । काल इतीति ॥ स्वरोदयविदस्तु दिशः परमार्था इत्याहुः । तदपि भ्रान्तिमात्रम् । तद्विदामपि पराजयदर्शनादित्याह । दिश इति चेति ॥ धातुवादो मन्त्रवादश्चेत्यादयो वादा वस्तुभूता भवन्तीति केचित् । तदपि कल्पनामात्रम् । ताम्रादिस्वभावे स्थिते नष्टे च कनकादिस्वभावासम्भवात् । मन्त्रवादेऽपि कालदृष्टो भवति । अका-

मन इति मनोविदो बुद्धिरिति च तद्विदः ।
चित्तमिति चित्तविदो धर्म्माधर्म्मौ च तद्विदः ॥२५॥
पञ्चविंशक इत्येके षड्विंश इति चापरे ।
एकत्रिंशक इत्याहुरनन्त इति चापरे ॥ २६ ॥

---

निश्चयहेतोरविद्यया कल्पिता इति पिण्डीकृतोऽर्थः ।

---

अदृष्टः स्वयमेवोत्थास्यतीत्यभ्युपगमः व्यामोहमात्रमित्याह । वादा इतीति ॥ भुवनानि चतुर्दश वस्तूनीति भुवनकोषविदः । तदपि कल्पनामात्रम् । तेषामदृष्टत्वात् । न च तेभ्यस्तद्दर्शनम् । तेषां मिथो विप्रतिपत्तिदर्शनादित्याह । भुवनानीति ॥ २४ ॥ मन एवात्मेति लोकायतभेदः । तदपि भ्रान्तिमात्रम् । तस्य स्वातन्त्र्ये क्लेशप्राप्त्यनुपपत्तेः । अस्वातन्त्र्ये च घटवदनात्मत्वात्करणत्वाच्च दीपवदात्मत्वायोगादित्याह । मन इति ॥ बुद्धिरेवात्मेति बौद्धाः । तेषामपि भ्रान्तिमात्रमेव । तत्सुषुप्ते व्यभिचाराद्वेद्यस्य च घटवदतिरिक्तवेद्यत्वादित्याह । बुद्धिरिति ॥ चित्तमेव बाह्याकारशून्यं विज्ञानम् । तदेवात्मेत्यपरे । तत्रापि प्रागुक्तन्यायाविशेषात्तस्य भ्रान्तत्वमित्याह । चित्तमिति ॥ धर्म्माधर्म्मौ विधिनिषेधचोदनागम्यौ परमार्थाविति मीमांसकाः । तदपि कल्पनामात्रम् । देशकालादिषु धर्म्माधर्म्मयोर्विप्रतिपत्तिदर्शनादित्याह । धर्म्मेति ॥ २५ ॥ प्रधानं मूलप्रकृतिः । महदहङ्कारतन्मात्राणीति सप्त प्रकृतिविकृतयः । पञ्च ज्ञानेन्द्रियाणि । पञ्च कर्म्मेन्द्रियाणि । पञ्च विषयाः । मनश्चैकमिति षोडश विकाराः । पुरुषस्तु द्रष्टृस्वभाव इति पञ्चविंशतिसङ्ख्याकः प्रपञ्चो वस्त्विति साङ्ख्याः । तच्च कल्पनामात्रम् । पञ्चविंशतिविशेषणस्याव्यावर्त्तकत्वे वैयर्थ्यात् व्यावर्त्तकत्वे च व्यावर्त्त्यं प्रमित्यप्रमित्योरनुपपत्तेरित्याह । पञ्चविंशक इति ॥ पातञ्जलाः पुनरीश्वरमधिकं पश्यन्तः षड्विंशतिपदार्था इति विकल्पयन्ति । तदयुक्तम् । ईश्वरस्य पुरुषान्तर्भावादधिकत्वानुपपत्तेः । अनन्तर्भावे च घटवदनीश्वरत्वप्रसङ्गादित्याह । षड्विंश इति चेति ॥ पाशुपतास्तु रागविद्यानियतिकालकलामायाधिकास्त

लोकान् लोकविदः प्राहुराश्रमा इति तद्विदः
स्त्रीपुंनपुंसकं लैङ्गाः परापरमथापरे ॥ २७ ॥
सृष्टिरिति सृष्टिविदो लय इति च तद्विदः ।

---

प्राणादिश्लोकानां प्रत्येकं पदार्थव्याख्याने फल्गुप्रयोजन-

---

एकत्रिंशत्पदार्था इति ब्रुवते। तन्न। क्लेशत्वेऽपि रागाविद्ययोरवान्तरभेदवदस्मदादेरपि तद्भिन्नत्वेन षड्व्यतिरेकात् तस्य रागोपलक्षितत्वेन तस्याप्यविद्योपलक्षितत्वेन च न्यूनतापातादविद्यामाययोरेकत्व इवान्तरभेदे च नियतावपि तदुपपत्तेः षड्व्यतिरेकतादवस्थ्यम् कालकलादेश्च तत्प्रसिद्धेरित्याह। एकत्रिंशक इति॥ अनन्तः पदार्थभेदो न नियतोऽस्तीति केचित्। तदपि न। वादिनां विवाददर्शनात्। विवादस्य चाज्ञानमूलकत्वादित्याह। अनन्त इतीति॥ २६॥ लोकानुरञ्जनमेव तत्त्वमिति लौकिकाः। तदपि विभ्रममात्रम्। लोकस्य भिन्नरुचित्वात्तदनुरञ्जनस्येश्वरेणापि कर्तुमशक्यत्वादित्याह। लोकानिति॥ इत्थम्भूतवर्णाश्रमाः परमार्था इति समर्थयन्ते। तदसत्। देहस्याश्रमपदार्थत्वे शूद्रादेरपि प्रसङ्गाज्जातेश्च दुर्विवेचनत्वात्तन्मूलस्याश्रमस्य दुर्विज्ञेयत्वात्संस्कारस्य च देहसमवायित्वे पारलौकिकत्वायोगादसङ्गे चात्मनि तदसमवायादित्याह। आश्रमा इतीति॥ वैयाकरणास्तु स्त्रीपुंनपुंसकं शब्दजातं तत्त्वमिति वर्णयन्ति। तदप्ययुक्तम्। स्फोटादेः शब्दस्वभावत्वे वर्णादीनां त्रिविधत्वायोगादेकस्यानेकस्वभावत्वासम्भवादौपाधिकधर्मत्वे च तस्यावस्तुत्वप्रसङ्गादित्याह। स्त्रीपुंनपुंसकमिति॥ द्वे ब्रह्मणी वेदितव्ये परं चापरं चेति केचित्। तच्च न। परिच्छेदे क्वचिदपि ब्रह्मत्वायोगात् वस्तुतोऽपरिच्छिन्नस्य तद्भावादित्याह। परापरमिति॥ २७॥ सृष्टिर्वा लयो वा स्थितिर्वा तत्त्वमिति पौराणिकाः। तदपि कल्पनामात्रम्। सतोऽसतश्चोत्पत्त्याद्यभावस्य वक्ष्यमाणत्वादिति मत्वाह। सृष्टिरित्यादिना॥ यथोक्तकल्पनाधिष्ठानं सूचयति। सर्वे चेति॥ उदाहृतानुदाहृताश्च कल्पनाभेदा यावन्तो विद्यन्ते ते सर्वेऽपि प्रत्य-

स्थितिरिति स्थितिविदः सर्व्वे चेह तु सर्व्वदा॥२८
यं भावं दर्शयेद्यस्य तं भावं स तु पश्यति ।

---

त्वादात्मनो न ज्ञात: ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

किं बहुना प्राणादीनामन्यतममुक्तमनुक्तं वाऽन्यं यं भावं पदार्थं दर्शयेद्यस्याचार्य्योऽन्यो वाऽऽप्त इदमेव तत्त्वमिति स तं भावमात्मभूतं पश्यत्ययमहमिति वा ममेति वा तञ्च द्रष्टारं सभावोऽवति यो दर्शितो भावो स भूत्वा रक्षति ।

---

तात्त्विक्येव कल्पनावस्थायां कल्पान्ते नात्मनः कल्पितत्वम् । सर्व्वस्य कल्पितत्वेनाधिष्ठानत्वायोगादित्यर्थः॥ प्राणादिश्लोकेषु प्राणशब्दार्थमाह । प्राण इति॥ तस्यैव बीजात्मनो विकारविशेषत्वादितरेषां न ततोऽत्यन्तभिन्नतेत्याह । तत्कार्य्यैरिति ॥ अन्तिमपदार्थं स्फुटयति। अन्य इति॥ कुलधर्म्मो ग्रामधर्म्मो देशधर्म्मश्चेत्येते सर्व्वशब्देन गृह्यन्ते । तेषामात्मनि तदज्ञानादेव कल्पितत्वं सदृष्टान्तं स्पष्टयति रज्ज्वामिति ॥ आत्मनोऽधिष्ठानयोग्यतार्थं कल्पनाशून्यत्वमाह । तच्छून्य इति ॥ किमिति समुदायार्थः श्लोकानामुच्यते । श्लोकान्तरेष्विव प्रत्येकं पदार्थव्याख्यानमेतेषु किं न स्यादित्याशङ्क्याह । प्रत्येकमिति॥ २८ ॥

लौकिकानां परीक्षकाणाञ्च कतिपयकल्पनाभेदानुदाहृत्यानन्त्यादशेषतस्तेषामिहाहर्त्तमशक्यत्वं दृष्ट्वा सङ्क्षेपमात्मनाचष्टे । यं भावमिति ॥ पादत्रयं विभजते । किं बहुनेत्यादिना ॥ तमेव भावं विशिनष्टि । यो दर्शित इति ॥ स कथं द्रष्टारं रक्षतीत्यपेक्षायामाह । असाविति साधकपुरुषतादात्म्यमापद्येत्यर्थः । रक्षणप्रकारं प्रकटयति । स्वेनेति ॥ साक्षाद्ध्यानधारणरूपत्वेन तत्रैव निष्ठामापाद्य ततोऽन्यत्र प्रवृत्तिमुपासकस्य निवारयतीत्यर्थः चतुर्थपादं व्याचष्टे । तस्मिन्निति ॥ एतेनान्यत्र

तञ्चावति स भूत्वासौ तद्ग्रहः समुपैति तम् ॥२८॥

---

स्वेनात्मना सर्व्वतो निरुणद्धि। तस्मिन् ग्रहस्तद्ग्रहस्तदभि-
निवेशः। इदमेव तत्त्वमिति स तं ग्रहीतारमुपैति। तस्या-
त्मभावं निगच्छतीत्यर्थः ॥ २९ ॥ एतैः प्राणादिभिरा-
त्मनोऽपृथग्भूतैरपृथग्भावैरेष आत्मा रज्जुरिव सर्पादि-
विकल्पनारूपैः पृथगेवेति लक्षितोऽप्यलक्षितो मूढैरित्यर्थः।
विवेकिनान्तु रज्ज्वामिव कल्पिताः सर्पादयो नात्मव्यति-
रेकेण प्राणादयः सन्तीत्यभिप्रायः। इदं सर्वं यदयमा-
त्मेति श्रुतेः। एवमात्मव्यतिरेकेणासत्त्वं रज्जुसर्पवदात्मनि
कल्पितानामात्मानञ्च केवलं निर्विकल्पं यो वेद तत्त्वेन

---

प्रवृत्तिनिरोधे हेतुरुक्तस्तर्हि प्राणादीनामात्मवत्त्वं प्राप्तमित्याशङ्क्य
कल्पितानामधिष्ठानातिरेकेणावस्तुत्वान्नैवमित्याह॥ एतैरिति ॥२९॥
उक्तज्ञानस्तुत्यर्थमाह। एवमिति॥ पूर्वार्द्धं व्याकरोति एतैरिति॥
कल्पितानामधिष्ठानातिरेकेण सत्त्वास्फुरणयोरभावात्तद्द्वारेणात्मनि
भेददर्शनमविवेकिनामस्तु। तदन्येषां कथमुपलब्धिरित्याशङ्क्याह॥
विवेकिनान्त्विति॥ प्राणादीनामात्मातिरेकेणासत्त्वे प्रमाणमाह।
इदमिति॥ उत्तरार्द्धं योजयति। एवमिति॥ तत्त्वेनात्मवेदनोपायं
सूचयति। तत्त्वेनेति॥ स्वप्नदृष्टवज्जाग्रद्दृष्टानां मिथ्यात्वसाधको दृश्य-
त्वादिहेतुरत्र युक्तिरित्युच्यते। यथोक्तविज्ञानवान्वेद किङ्करो न
भवति किन्तु स यं वेदार्थं ब्रूते स एव वेदार्थो भवतीत्यर्थः। विभागतो
वेदार्थव्याख्यानमभिनयति। इदमिति॥ ज्ञानकाण्डं साक्षादद्वैतवस्तु-
परम्। कर्म्मकाण्डं तु साध्यसाधनसम्बन्धबोधनद्वारा परम्परया तस्मिन्
पर्य्यवसितम्। सर्व्वे वेदा यत्पदमामनन्तीति श्रुतेरित्यर्थः। आत्मविदो
वेदार्थवित्त्वमुक्तं व्यनक्ति। न हीति॥ तदेव हि वेदार्थतत्त्वं यत्प्रत्यगा-

एतैरेषोऽपृथग्भावैः पृथगेवेति लक्षितः ।
एवं यो वेद तत्त्वेन कल्पयेत्सोऽविशङ्कितः ॥ ३०॥
स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा ।
तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः॥ ३१ ॥

---

श्रुतितो युक्तितश्च सोऽविशङ्कितो वेदार्थं विभागतः कल्प-
येत् कल्पयतीत्यर्थः । इदमेवं परं वाक्यमदोऽन्यपरमिति ।
नह्यनध्यात्मविद्वेदान् ज्ञातुं शक्नोति तत्त्वतः । नह्यनात्मवि-
त्कश्चित्क्रियाफलमुपाश्नुत इति हि मानवं वचनम् ॥ ३० ॥
यदेतद्द्वै तस्याः सत्त्वमुक्तं युक्तितस्तद्वेदान्तप्रमाणावग-
तमित्याह । स्वप्नश्च माया च स्वप्नमाये असद्वस्त्वात्मिके
ऽसत्यौ सद्वस्त्वात्मिके इव लक्ष्येते अविवेकिभिः । यथा च
प्रसारितपण्यापणगृहप्रासादस्त्रीपुंजनपदव्यवहाराकीर्णमिव
गन्धर्वनगरं दृश्यमानमेव सदकस्मादभावतां गतं दृष्टम् ।

---

तत्स्वरूपमतश्चाध्यात्मविदेव याथात्म्येन तत्त्वज्ञाने प्रभवतीत्यर्थः। उक्तेऽर्थे
स्मृतिमुदाहरति । न हीति क्रियाशब्देन प्रमाणमुच्यते । तत्फलं तत्त्वज्ञान
मग्निहोत्रादिक्रियायाश्च शुद्धिद्वारा तस्मिन् पर्यवसानादित्यर्थः ॥ ३० ॥
याभिर्युक्तिभिरस्मिन् प्रकरणे द्वैतस्य मिथ्यात्वं कथ्यते तासां
प्रमाणानुग्राहकत्वादनाभासत्वमवसेयमित्याह । स्वप्नेति ॥ श्लोकस्य
तात्पर्यार्थमाह । यदेतद्द्वैतस्येति ॥ असत्त्वे सत्त्ववत् प्रतिभानं कथमित्या-
शङ्क्य श्लोकाक्षराणि व्याचष्टे । स्वप्नश्चेति । प्रसारितानि तत्र तत्र
प्रकटतां प्रापितानि । पण्यानि क्रयविक्रयद्रव्याणि येषामापणेषु हट्टेषु
ते प्रसारितपण्यापणास्ते च गृहाश्च प्रासादाश्च स्त्रीपुञ्जनपदाश्च तेषां
व्यवहारास्तैराकीर्णमिति योजना ॥ दृष्टान्तद्वयमनूद्य दार्ष्टान्तिकमाह ।

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ३२ ॥

---

यथा च स्वप्नमाये दृष्टेऽसद्रूपे तथाविश्वमिदं द्वैतं समस्तमसद्दृष्टं केत्याह। वेदान्तेषु। नेह नानास्ति किञ्चन। इन्द्रो मायाभिः। आत्मैवेदमग्र आसीत्। ब्रह्मैवेदमग्र आसीत् द्वितीयाद्वै भयं भवति। नतु तद्द्वितीयमस्ति। यत्र त्वस्य सर्वमात्मैवाभूदित्यादिषु विचक्षणैर्निपुणतरवस्तुदर्शिभिरेभिः पण्डितैरित्यर्थः। तमः श्वभ्रनिभं दृष्टं वर्षबुद्बुदसन्निभम्। नाशप्रायं सुखाद्धीनं नाशोत्तरमभावगमिति हि व्यासस्मृतेः ॥ ३१ ॥ प्रकरणार्थोपसंहारार्थोऽयं श्लोकः यदा वितथं द्वैतमात्मैवैकः परमार्थतः सन् तदेदं निष्पन्नं भवति। सर्वोऽयं लौकिको वैदिकश्च व्यवहारो ऽविद्याविषय एवेति। तदा न निरोधः। निरोधनं नि-

---

यथा चेति॥ गन्धर्वनगराकारं चकारार्थः। नेह नानास्ति किञ्चनेति वेदान्ताः। द्वैतस्य वस्तुतोऽसत्त्वे स्मृतिमपि दर्शयति। तम इति। तमश्च मन्दान्धकारे रज्ज्वामधिष्ठाने भुजङ्गमिति यद्भ्रान्त्या भाति तन्निभं वस्तुत्वं विवेकिभिर्विश्वं दृष्टं तच्चातीव चञ्चलमावर्जितं नाशप्रायं वर्त्तमानकालेऽपि तद्योग्यतारूढत्वात्। न च द्वैतं कदाचिदपि सुखकरमुपलभ्यते दुःखाक्रान्तं तु दृश्यते। तच्च नाशग्रस्तम्। नाशादूर्ध्वमसत्त्वमेवापगच्छति न तर्हि तस्य परमार्थत्वं प्रमाणाभावादित्यर्थः॥ ३१॥ प्रमाणयुक्तिभ्यां द्वैतमिथ्यात्वप्रसाधनेनाद्वैतमेव पारमार्थिकमिति स्थिते निर्धारितमर्थं तं सङ्क्षिपति। नेत्यादिना॥ श्लोकस्य तात्पर्यार्थमाह। प्रकरणेति॥ कोऽसौ प्रकरणार्थस्तस्य सङ्ग्रहे किं सिध्यति तदाह। यदेति॥ व्यवहारमात्रस्याविद्याविषयत्वेऽपि किं स्यादिति चेत्त-

रोधः प्रलय उत्पत्तिर्जननं बद्धः संसारी जीवः साधकः साधनान्मोक्षस्य मुमुक्षुर्मोचनार्थी मुक्तो विमुक्तबन्धः । उत्पत्तिप्रलययोरभावाद्बद्धादयो न सन्तीत्येषा परमार्थता । कथमुत्पत्तिप्रलययोरभाव इत्युच्यते । द्वैतस्यासत्त्वात् । यत्र हि द्वैतमिव भवति । य इह नानेव पश्यति । आत्मैवेदं सर्वम् । ब्रह्मैवेदं सर्वम् । एकमेवाद्वितीयमिदं सर्वम् । यदयमात्मेत्यादिना श्रुतिभ्यो द्वैतस्यासत्त्वं सिद्धम् । सतो ह्युत्पत्तिः प्रलयो वा स्यान्नासतः शशविषाणादेः । नाप्यद्वैतमुत्पद्यते लीयते वा । अद्वयस्योत्पत्तिप्रलयवत्त्वेति विप्रतिषिद्धम् ।

---

दाह । तदेति ॥ चतुर्थपादार्थमाह । उत्पत्तीति ॥ उक्तमेवार्थं प्रश्नप्रतिवचनाभ्यां प्रपञ्चयति । कथमित्यादिना ॥ द्वैतासत्त्वं श्रुतवदन्येन स्पष्टयति । यत्र हीति ॥ द्वैतस्यासत्त्वे कथमुत्पत्तिप्रलयौ न स्यातामित्याशङ्क्य किं द्वैतस्य तौ किंवाऽद्वैतस्येति चाद्यं विकल्पं दूषयति । सतो हीति ॥ द्वितीयं प्रत्याह । नापीति ॥ व्यावहारिकद्वैतालोकाराद्रस्यैवोत्पत्तिप्रलयावित्याशङ्क्याह । यस्त्विति ॥ विमतसत्त्वतो नोत्पत्तिप्रलयवान् कल्पितत्वाद्रज्जुसर्पवदित्यत्र दृष्टान्तासिद्धिमाशङ्क्य रज्जुसर्पस्य रज्ज्वामुत्पत्तिप्रलयौ मनसि वा द्वयोर्वेति विकल्प्य प्रथमं प्रत्याह । न हीति रज्ज्वां पश्यतां सर्वेषामुपलब्धिप्रसङ्गादित्यर्थः ॥ द्वितीयं दूषयति । न चेति ॥ बहिरुपलब्धिविरोधादित्यर्थः ॥ तृतीयं निरस्यति । न चेति ॥ उभयतो मनोरज्जुलक्षणेन रज्जुसर्पस्योत्पत्तिप्रलयौ युक्तौ द्वयाधारत्वोपलम्भादित्यर्थः । रज्जुसर्पवद्द्वैतस्य मानसत्वाविशेषाच्च तत्त्वतो जन्मविनाशौ दर्शयितुं शक्याविति दार्ष्टान्तिकमाह । तथेति ॥ द्वैतस्य न कुतश्चित्तात्त्विकौ जन्मविनाशाविति शेषः । मानसत्वासिद्धिमाशङ्क्याह । न हीति ॥ अन्वयव्यतिरेकाभ्यां द्वैतं मनोविकल्पनामात्रमिति निगमयति । अत इति ॥ न च मनो द्वैतस्य दर्शनमात्रे निमित्तमिति युक्तम् ।

यस्तु पुनर्द्वैतसंव्यवहारः स रज्जुसर्पवदात्मनि प्राणादिलक्षणः कल्पित इत्युक्तम्। न हि मनोविकल्पनायाः रज्जुसर्पादिलक्षणाया रज्ज्वां प्रलय उत्पत्तिर्वा। न च मनसि रज्जुसर्पस्योत्पत्तिः प्रलयो वा न चोभयतो वा। तथा मानसत्वाविशेषाद्द्वैतस्य। न हि नियते मनसि सुषुप्ते वा द्वैतं गृह्यते। अतो मनोविकल्पनामात्रं द्वैतमिति सिद्धम्। तस्मात्सूक्तं द्वैतस्यासत्त्वान्निरोधाद्यभावः परमार्थतेति। यद्येवं द्वैताभावे शास्त्रव्यापारो नाद्वैते विरोधात्। तथा च सत्यद्वैतस्य वस्तुत्वे प्रमाणाभावात् शून्यवादप्रसङ्गः। द्वैतस्य

---

भ्रमसिद्धस्याज्ञातसत्तायां प्रमाणाभावादित्यभिप्रेत्य प्रकृतमुपसंहरति। तस्मादिति॥ निरोधाद्यभावस्य परमार्थत्वे तत्रैव शास्त्रव्यापारादद्वैते तद्व्यापारादभावबोधने व्याप्तस्य भावबोधने व्यापारविरोधादद्वैतमप्रामाणिकं प्राप्तमिति शङ्कते। यद्येवमिति॥ अद्वैतस्य प्रामाणिकत्वाभावे किं स्यादित्याशङ्क्याह। तथा चेति॥ अद्वैतस्याप्रामाणिकत्वेऽपि कुतः शून्यवादो द्वैतस्य सत्त्वादित्याशङ्क्याह। द्वैतस्येति॥ नाप्रामाणिकशून्यवादो युक्तो यथा रज्ज्वामारोपितसर्पादे रज्जुरधिष्ठानम्। न हि निरधिष्ठानो भ्रमोऽस्ति। तथा द्वैतकल्पनाया निरधिष्ठानत्वायोगात्तदधिष्ठानत्वेनाद्वैतमास्थेयमित्योङ्कारप्रकरणे परिहृतमेतच्चोद्यं कथमुद्भावयसीति सिद्धान्तवाद्याह। नेत्यादिना॥ तत्र शून्यवादी स्वमतानुसारेण दृष्टान्तासम्प्रतिपत्त्या चोदयति। आहेति॥ स्वमतस्यासतस्यैव दृष्टान्तत्वनियमात्। प्रसिद्धिमात्रेण परप्रतिबोधनसम्भवात्। भ्रमबाधे परिशिष्यमाणस्यावधेः सत्यताया रज्ज्वादौ दृष्टत्वाद्द्वैतभ्रमबाधावधितया स्फुरणं यदद्वैतं तस्याकल्पितत्वादेव सत्त्वाच्छून्यताप्रसक्तिरित्युत्तरमाह। नेत्यादिना॥ अद्वैतमसदप्रामाणिकत्वाद्रज्जुसर्पवदिति तदकल्पितत्वासिद्धिं शङ्कते। रज्ज्वामिति॥ रज्जुसर्पस्यासत्त्वे भ्रान्तिविषयत्वं प्रयोजकं आत्मनस्तु भ्रमबाधितत्वानियमेन भ्रमा-

स्याभावात् न रज्जुसर्पादिविकल्पनाया निरास्पदत्वानुपपत्तिरिति प्रत्युक्तमेतत् कथमुज्जीवसीत्याह। रज्जुरपि सर्व्वविकल्पस्यास्पदभूता विकल्पितैवेति दृष्टान्तानुपपत्तिः। न। विकल्पनाश्रयेऽविकल्पितस्याविकल्पितत्वादेव सत्त्वोपपत्तेः। रज्जुसर्पवदसत्त्वमिति चेत्। न। एकान्तेनाविकल्पितत्वादविकल्पितरज्ज्वंशवत्प्राक्सर्पाभावविज्ञानात्। विकल्पयितुश्च प्राक्विकल्पनोत्पत्तेः सिद्धत्वाभ्युपगमादेव सत्त्वानुपपत्तिः। कथं पुनः स्वरूपे व्यापाराभावे शास्त्रस्य द्वैतविज्ञाननिवर्त्तकत्वम्। नैष दोषः। रज्ज्वां सर्पादिवदा-

---

विषयत्वाज्ज्ञासत्त्वमित्युत्तरमाह। नैकान्तेनेति॥ अप्रामाणिकत्वहेतोरनैकान्तिकत्वं दोषान्तरमाह। अविकल्पितेति॥ नाऽयं सर्पो रज्जुरेषेति सर्पाभावज्ञानपूर्वकपुरोवर्त्तिरज्जुत्वनिश्चयात्प्रागवस्थायां प्रामाणिकत्वाभावेऽपि सत्त्वेवाज्ञातो रज्ज्वंशोऽभ्युपगम्यते। तथा सदेव प्रामाणिकत्वाभावेऽपि सत्त्वेवात्मा भविष्यतीत्यर्थः॥ आत्मनोऽसत्त्वाभावे हेत्वन्तरमाह॥ विकल्पयितुश्चेति॥ आत्मनो द्वैतभ्रमाधिष्ठानत्वेन सम्भावितत्वाद्बाधसाक्षित्वेन परिशिष्टत्वात्पूर्व्वं भ्रमोत्पत्तेः स्वतः सिद्धत्वाच्च प्रमाणविषयत्वेऽपि नास्ति न्यूनतेत्युक्तम्॥ इदानीं प्रमिते धर्म्मिणि प्रतिषेधदर्शनादात्मनाऽप्रमितत्वे तत्र द्वैताभावप्रमापकं शास्त्रमयुक्तमिति शङ्कते। कथमिति॥ प्रतिपन्ने धर्म्मिणि प्रतिषेधात्प्रमिते प्रतिषेधस्य विशेषणवैफल्यादेवानभ्युपगमादात्मनश्च सर्वकल्पनास्वधिष्ठानाकारेण स्फुरणाङ्गीकरणात् तस्मिन् प्रतिपन्ने द्वैतस्य प्रतिषेधः सम्भवतीति परिहरति। नैष दोष इति॥ भ्रमाविषयस्यात्मनोऽध्यासानुगततया स्फुरणमघटमानमित्याक्षिपति। कथमिति॥ स्वप्रकाशत्वेन स्वतो निर्विकल्पकस्फुरणेऽपि सविकल्पकव्यवहारे समारोपितसंस्पृष्टाकारेण भ्रमविषयत्वमविरुद्धमित्याह। उच्यतेमित्यादिना॥ उक्तन्यायेनात्मप्र-

त्मनि द्वैतस्याविद्याध्यस्तत्वात् कथं सुख्यहं दुःखी मूढो
जातो मृतो जीर्णो देहवान् पश्यामि व्यक्ताव्यक्तः कर्त्ता
फली संयुक्तो वियुक्तः क्षीणो वृद्धोऽहं ममैतदित्येवमादयः
सर्वे आत्मन्यध्यारोप्यन्ते। आत्मैतेष्वनुगतः सर्व्वत्राव्यभि-
चारात् यथा सर्पधारादिभेदेषु रज्जुः। यदा चैवं विशे-
ष्यस्वरूपप्रत्ययस्य सिद्धत्वान्न कर्त्तव्यत्वं शास्त्रेण। अकृत-
कर्त्तृ च शास्त्रं कृतानुकारित्वेऽप्रमाणम्। यतोऽविद्याध्या-
रोपितसुखित्वादिविशेषप्रतिबन्धादेवात्मनः स्वरूपेणानव-
स्थानं स्वरूपावस्थानञ्च श्रेय इति। सुखित्वादिनिवर्त्तकं
शास्त्रमात्मन्यसुखित्वादिप्रत्ययकरणेन नेति नेत्यस्थूलादि-
वाक्यैरात्मस्वरूपवदसुखित्वाद्यपि सुखित्वादिभेदेषु नानु-

---

नीतेः सिद्धत्वात्प्रतिपक्षे तस्मिन् द्वैतप्रतिषेधस्य सुकरतेति फलित-
माह। यदा चेति॥ न केवलमारोपितविशेषणैर्विशेष्यस्यात्मनः स्वरूप-
स्फुरणस्य सिद्धत्वादेव न शास्त्रेण कर्त्तव्यत्वमनुवादत्वेनाप्रामाण्य-
प्रसङ्गाच्चेत्याह। अकृतेति॥ स्फुरत्यात्मनि द्वैतनिषेधकत्वेऽपि
शास्त्रस्य फलाभावादप्रामाण्यं तदवस्थमित्याशङ्क्याह। अविद्येति॥ प्रति-
षेधशास्त्रादपनीते प्रतिबन्धे स्वरूपावस्थानं फलतीत्यर्थः॥ निःशेष-
दुःखनिवृत्तिर्निरतिशयानन्दावाप्तिश्च परं श्रेयो न स्वरूपावस्थानमित्या-
शङ्क्याह। स्वरूपेति॥ इति प्रसिद्धं मोक्षशास्त्रेष्विति शेषः॥ द्वैत-
निवर्त्तकत्वे शास्त्रस्य कारकत्वं स्यादित्याशङ्क्याह। आत्मनीति॥
असुखित्वादेः स्वाभाविकत्वादात्मनि स्फुरतः स्फुरणमनुपपन्नमित्याशङ्क्य
भ्रमविषयशुक्तीदमंशादेव स्वाभाविकोऽपि रजतादिभेदो दोषमा-
हात्म्याद्यथा न प्रतिभाति तथाऽचिन्त्यशक्त्यविद्याप्रभावादात्मनि स्फुर-
त्यपि सुखित्वाद्यध्यासविरोध्यसुखित्वादिरूपेण स्फुरणमविरुद्धमित्याह।
आत्मेति॥ विपक्षे भ्रमानुपपत्तिरित्याह। यदीति॥ उक्तमर्थं संक्षिप्य

भावैरसद्भिरेवायमद्वयेन च कल्पितः।

---

वृत्तोऽस्ति धर्मः। यद्यनुवृत्तस्यात्माध्यारोपितसुखित्वादि-लक्षणो विशेषः। यथोष्णत्वगुणविशेषवत्यग्नौ शीतता तस्मिन्निर्विशेष एवात्मनि सुखित्वादयो विशेषाः कल्पिताः। यच्चसुखित्वादिशास्त्रमात्मनस्तत्सुखित्वादिविशेषनिवृत्त्यर्थमेवेति सिद्धम्। सिद्धन्तु निवर्त्तकत्वादित्यागमविदां सूत्रम्॥ २२॥

पूर्व्वश्लोकार्थस्य हेतुमाह। यथा रज्ज्वामसद्भिः सर्पधारादिभिरद्वयेन रज्जुद्रव्येण सताऽयं सर्प इयं धारा-

---

निगमयति। तस्मिन्निति॥ असुखित्वादेरकल्पितत्वमसिद्धमाशङ्क्य निरस्यति। यच्चेति॥ अस्यूलमशोकान्तरमित्यादि वाक्यं शास्त्रशब्देन गृह्यते॥ उक्तेऽर्थे द्रविडाचार्य्यसम्मतिमाह। सिद्धं त्विति। अज्ञापि पदानां व्युत्पत्त्यभावेऽपि सिद्धमेव शास्त्रप्रामाण्यमभावबोधनव्युत्पन्नञ्पदसंसृष्टैः स्थूलादिव्युत्पन्नपदैः स्वाभाविकद्वैताभावबोधनेनाध्यस्तनिवर्त्तकत्वादिति सूत्रार्थः॥ २२॥

यदुक्तं निरोधाद्यभावस्य परमार्थतेति तदयुक्तम्। सामान्यविशेषात्मकं वस्तु नानारसमिति मते निरोधादेः सुसाध्यत्वादित्याशङ्क्याह। भावैरिति॥ भावा व्यावृत्ता विशेषास्ते च व्यभिचारित्वादसन्तो रज्जुसर्पवदद्वयमनुवृत्तं सामान्यं विशेषाकारैरवस्तुभूतैः सामान्याकारेण च तादृशेनावस्थाऽऽस्त्वानुगतपूर्णसत्ताचिदेकतानः सूत्रात्मैव मूढैर्मोहमाहात्म्यात कल्प्यते। न वस्तुतः सामान्यविशेषभावोऽस्ति। परस्परान्वयत्वादित्यर्थः॥ विशेषाणामसत्त्वे कथं सत्त्वेन व्यवहारः स्यादित्याशङ्क्य सत्तादात्म्येन कल्पितत्वात् तेषां सत्त्वेन व्यवहारोपपत्तिरित्याह। भावा इति। अनुगतसत्ताकारेण कल्पिताः सत्त्वव्यवहारा भवन्तीति शेषः।

भावा अप्यद्वयेनैव तस्मादद्वयता शिवा ॥ ३३ ॥

---

दण्डोऽयमिति वा रज्जुद्रव्यमेव कल्प्यते। एवं प्राणादिभिरनन्तैरसद्भिरेवाविद्यमानैः परमार्थतः। न ह्यप्रचलिते मनसि कश्चिद्भाव उपलक्षयितुं शक्यते केनचित्। न चात्मनः प्रचलनमस्ति। प्रचलितस्यैवोपलभ्यमाना भावा न परमार्थतः सन्तः कल्पयितुं शक्याः। अतोऽसद्भिरेव प्राणादिभावैरद्वयेन च परमार्थसताऽऽत्मना रज्जुवत्सर्वविकल्पास्पदभूतेनायं स्वयमेवात्मा कल्पितः। सदैकस्वभावोऽपि संस्ते च प्राणादिभावा अद्वयेनैव सताऽऽत्मना विक-

---

सामान्यविशेषभावस्य कल्पितत्वादखण्डैकरसत्वे वस्तुनः सिद्धे निरोधादेर्दुःसाधनत्वमुचितमिति फलितमाह। तस्मादिति॥ श्लोकतात्पर्यं दर्शयति। पूर्व्वेति॥ निरोधादिसर्व्वविशेषाभावोपलक्षितं वस्तु वस्तुभूतमिति पूर्व्वश्लोकार्थस्तस्य सामान्यविशेषात्मके वस्तुनि विशेषेणान्वित्य निरोधादेः सुसाधनत्वादसत्त्वमाशङ्क्यते। तेन तस्य साधनापेक्षायां तत्प्रदर्शनपरोऽयं श्लोक इत्यर्थः॥ तत्र पूर्व्वार्द्धगतान्यक्षराणि दृष्टान्तावष्टम्भेन व्याचष्टे। यथेत्यादिना॥ संसृष्टरूपेण कल्पितत्वेऽपि स्वरूपेणामारोपितत्वाद्रज्जुद्रव्यस्य व्यावहारिकसत्त्वमुक्तमेवम्। अविद्यमानैरयमात्मा कल्प्यते न परमार्थतस्तेषां सत्त्वमिति शेषः। कथं प्राणादीनां परमार्थतोऽसत्त्वमित्याशङ्क्यान्वयव्यतिरेकाभ्यां तेषां मनःस्पन्दितमात्रत्वप्रतीतेर्व्वात्वं स्वप्नवदित्याह। न हीति॥ आत्मपरिणामत्वान्मनश्चलनमन्तरेणापि प्राणादिभावानां परमार्थतः सत्त्वमित्याशङ्क्याह। न चेति॥ न हि विभोरात्मनो नभोवच्चलनं वास्तवमवकल्पते। न च तदभावनिरवयवस्य परिणामसम्भावनेत्यर्थः। प्राणादीनामात्मपरिणामत्वासम्भवे फलितमाह। प्रचलितस्येति॥ प्रगतं चलितं यस्य स तथा कूटस्थस्यैवात्मनो भावस्तामा भावा-

नात्मभावेन नानेदं न स्वेनापि कथञ्चन ।

---

ल्पिताः । न हि निरास्पदा काचित्कल्पनोपलभ्यते अतः सर्वकल्पनास्पदत्वात्स्वेनात्मनाऽद्वयस्याव्यभिचारात् । कल्पनावस्थायामप्यद्वयता शिवा । कल्पना एव त्वशिवाः । रज्जुसर्पादिवत्त्रासादिकारिण्यो हि ताः । अद्वयता अभया अतः सैव शिवा ॥ ३३ ॥ कुतश्चाद्वयता शिवा नानाभूतं पृथक्त्व-

---

न परमार्थतः सन्तो भवितुमुत्सहन्ते । दृश्यत्वजडत्वादिना स्वप्नवन्मिथ्यात्वसिद्धेरित्यर्थः । एवं प्राणादिभावानां मिथ्यात्वं प्रसाध्य फलितं दर्शयन् पूर्वार्द्धाक्षराणां व्याख्यानमुपसंहरति । अत इति ॥ अद्वयस्य परमार्थत्वात् तदात्मना कथमात्मकल्पितः स्यादित्याशङ्क्य स्वरूपेणाकल्पितस्य संसृष्टरूपेण कल्पितत्वमिष्टमित्याह । परमार्थसत्त्वेति ॥ अविद्यावशादिष्टा कल्पना न स्वभाववशादित्याह । सदेति ॥ प्राणादीनामसत्त्वे सत्त्वेन कथं व्यवहारगोचरत्वमित्याशङ्क्य तृतीयपादार्थमाह । ते चेति ॥ कल्पितानां प्राणादिभावानामधिष्ठानसत्तया सत्त्वेन न सत्ताऽवकल्प्यते । तेषामधिष्ठानापेक्षानियमाभावादित्याशङ्क्याह । न हीति ॥ सर्वविकल्पना साधिष्ठानैव दृश्यते । न चासतोऽधिष्ठानत्वमारोपितानुवेधाभावात्तदनुवेधात्तु सतोऽधिष्ठानत्वमेष्टव्यम् । तथा च प्राणादिभावानां वस्तुतोऽसत्त्वेऽपि सति कल्पितानां सत्त्वेन व्यवहारसिद्धिरित्यर्थः ॥ चतुर्थपादार्थमाह । अत इति ॥ स्वेनेति विशेषणं संसृष्टरूपेण व्यभिचाराङ्गीकारार्थम् । कल्पनाराहित्यदशायामेवाद्वयता शिवेत्याशङ्क्य कल्पनानामेवाशिवत्वमित्याह । कल्पनेति ॥ त्रासादीत्यादिशब्देन कम्पमोहादयो गृह्यन्ते ॥ यदुक्तमद्वयता शिवेति तदुपपादयति । अद्वयतेति ॥ ३३ ॥ किञ्च किमिदं नानाभूतं द्वैतमात्मतादात्म्येन वा सिध्यति स्वतन्त्र्येण वेति विवेक्तव्यम् । नाद्य इत्याह । नात्मभावेनेति ॥ इदं हि नानाभूतं द्वैतं नात्मतादात्म्येन सिद्धमर्हति । जडाजडयोर्विरुद्धस्वभावयोस्तादात्म्यायोगात् । भेदादिशून्यात्मतादात्म्ये च द्वैतस्य

न पृथङ्नापृथक्किञ्चिदिति तत्त्वविदो विदुः ॥ ३४

मन्यस्यात्मस्यान्यत्र इष्टं तत्राप्येवं भवेत्। न ह्यात्माद्वये परमार्थसत्यात्मनि प्राणादिसंसारजातमिदं जगदात्मभावेन परमार्थस्वरूपेण निरूप्यमाणं नानावस्त्वन्तरभूतं भवति। यथा रज्जुस्वरूपेण प्रकाशेन निरूप्यमाणेन नानाभूतः कल्पितः सर्पोऽस्ति तद्वत्। नापि स्वेन प्राणाद्यात्मनेदं विद्यते। कदाचिदपि रज्जुसर्पवत्कल्पितत्वादेव।

---

नानात्वासिद्धेरित्यर्थः ॥ द्वितीयं दूषयति। न स्वेनेति॥ स्वेन सत्ताप्रतीत्योरन्यानपेक्षतालक्षणस्वातन्त्र्येणापि नेदं द्वैतं सेद्धुं पारयति। तथा स्वातन्त्र्ये सत्यात्मत्वप्रसङ्गादनात्मनोऽद्वैतत्वापातादित्यर्थः। किञ्च किमिदं द्वैतमन्योऽन्यं पृथक् पृथग्वेति विवेक्तव्यं नाद्य इत्याह। न पृथगिति॥ न हि किञ्चिदपि द्वैतं परस्परं पृथगेव सिध्यति। पृथक्त्वस्य धर्मिप्रतियोगिरूपावच्छिन्नत्वेनान्योऽन्याश्रयत्वाद्धर्मत्वस्वरूपत्वयोर्दुर्वचत्वादित्यर्थः। नापि किञ्चिदन्योन्यमपृथग्भूत्वा सिध्यति। घटपटादिशब्दानां पर्यायत्वप्रसङ्गाद्व्यवहारलोपापातादित्याह। नापृथगिति॥ अतो वास्तवाकारेण सर्वथा निरूपणासहमेव द्वैतमिति फलितमाह। इति तत्त्वेति॥ यदुक्तमद्वयता शिवेति तत्र हेत्वन्तरोपन्यासपरत्वं श्लोकस्य दर्शयति। कुतश्चेति॥ तदेव स्फुटयति। नानाभूतेत्यादिना॥ नानाभूतमित्यस्य पर्यायोपादानं पृथगिति। तस्य भयकारणत्वं प्रकटयति। अन्यस्येति॥ तत्र व्याघ्रचोरादाविति यावत्। तद्भयकारणं भेददर्शनमद्वये वस्तुनि नास्तीत्याह। न हीति॥ अध्यस्तमधिष्ठानरूपेण तत्त्वतो निरूप्यमाणं असदेव भवतीत्यत्र दृष्टान्तमाह। यथेति॥ प्रदीपप्रकाशेनाधिष्ठानमात्रतया समारोपितः सर्पो यदा निरूप्यते तदा नासौ तद्व्यतिरेकेण सिध्यति। तथा जगदपीदं तदात्मस्वरूपेण निरूप्यमाणं नान्यत्वेन सिद्ध्येदित्यर्थः॥ एवं प्रथमपादं

वीतरागभयक्रोधैर्मुनिभिर्वेदपारगैः ।

---

तथाऽन्योन्यं न पृथक्प्राणादि वस्तु। यथाऽश्वान्माहिषः पृथग्विद्यत एव। अतोऽसत्त्वान्नापृथग्विद्यतेऽन्योन्यं परेण वा किञ्चिदिति। एवं परमार्थतत्त्वमात्मविदो ब्राह्मणा विदुः। अतोऽभिवहेतुत्वाभावादद्वयतैव शिवेत्यभिप्रायः ॥ ३४ ॥

तदेतत् सम्यग्दर्शनं स्तूयते। विगतरागभयद्वेषक्रोधादिसर्वदोषैः सर्वदा मुनिभिर्मननशीलैर्विवेकिभिर्वेदपारगैरवगतवेदार्थतत्त्वैर्ज्ञानिभिर्निर्विकल्पः सर्वविकल्पशून्योऽयमात्मा दृष्ट उपलब्धो वेदान्तार्थतत्परैः। प्रपञ्चोपशमः प्रपञ्चो द्वैतभेदविस्तारस्तस्योपशमोऽभावो यस्मिन् स

---

व्याख्याय द्वितीयपादं व्याचष्टे। नाप्नोति ॥ कदाचिदपीति कल्पनावस्थायां प्रागूर्ध्वं चेत्यर्थः ॥ न पृथगित्यस्यार्थमाह। तथेति ॥ पृथक्त्वस्यान्योन्याश्रयत्वेन दुर्वचनत्वाद्धर्म्योदाहरणं तु प्रातीतिकं पृथक्त्वमधिकृत्याविरुद्धम् ॥ नापृथगित्यादि व्याकरोति। अत इति ॥ द्वैतस्य प्रागुक्तन्यायेनासत्त्वात्तत्तदन्योन्यं वा परेणात्मना वा सहापृथग्भूत्वा भेत्तुमर्हति। अतो दुर्निरूपत्वान्न किञ्चित् द्वैतं नामास्तीति ब्रह्मविदां मतमित्यर्थः ॥ इष्टं हि द्वैतं भवहेतुस्तदसत्त्वे पुनरद्वैतमभयमेवेत्युपसंहरति। अत इति ॥ ३४ ॥

किमिति यथोक्तमद्वैतं सर्वेषां न प्रतीतिगोचरत्वमाचरतीत्याशङ्क्याह। विगतेति ॥ रागादिप्रतिबन्धविधुराणामेव यथोक्तमद्वैतदर्शनं न सर्वेषामित्यर्थः ॥ श्लोकस्य तात्पर्यमाह। तदेतदिति ॥ स्तुतिश्च तदुपायप्रवृत्तावुपकरोतीति शेषः। आदिपदेन सम्यग्दर्शनप्रतिबन्धकाः सर्वे दोषाः संगृह्यन्ते ॥ रागादिविमोको यदा कदाचिदनधिकारिणमपि संभवत्यतो विशिनष्टि। सर्वदेति ॥ सदा रागादिव्यावृत्तौ विवेकं हेतुं प्रपञ्चयति। मुनिभिरिति ॥ विवेके च पदशक्तेर्वाक्यतात्पर्यस्य च

निर्विकल्पो ह्ययं दृष्टः प्रपञ्चोपशमोऽद्वयः ॥३५॥
तस्मादेवं विदित्वैनमद्वैते योजयेत् स्मृतिम् ।

---

आत्मा प्रपञ्चोपशम अत एवाद्वयः । विगतद्वेषैरेव पण्डितैर्वेदान्तार्थतत्परैः संन्यासिभिः परमात्मा द्रष्टुं शक्यो नान्यैः रागादिकलुषितचेतोभिः स्वपक्षपातदर्शनैस्तार्किकादिभिरित्यभिप्रायः ॥ ३५ ॥ यस्मात्सर्वानर्थप्रशमनरूपत्वादद्वयं शिवं अभयं अत एवं विदित्वाऽद्वैते स्मृतिं योजयेत् । अद्वैतावगमायैव स्मृतिं कुर्यादित्यर्थः । तच्चाद्वैतमवगम्याहमस्मि परं ब्रह्मेति विदित्वाऽशनायाद्यतीतं सा-

---

परिज्ञानं कारणमित्याह । वेदेति ॥ एवं सम्यग्ज्ञानाधिकारिणं साधनपञ्चकसम्पन्नमुक्त्वा तद्विषयं निरूपयति । निर्विकल्प इति ॥ आत्मनश्चाक्षुषत्वशङ्कां वारयति । उपशम इति ॥ शिवद्वयोरर्थमाह । वेदान्तेति ॥ सर्वविकल्पशून्यत्वमात्मनः स्फुटयितुं प्रपञ्चोपशमविशेषणमात्मनोऽभावत्वं बौद्धोक्त्या प्रत्युदस्यते । हेतुहेतुमद्भावेन पुनरुक्तिं विशेषणयोर्व्यासेधति । अतएवेति ॥ सम्यग्दर्शनाधिकारिणो दर्शितानुपसंहरति ॥ विगतेति ॥ अनधिकारिणो दर्शयन् वैशेषिकवैनाशिकादिशास्त्राभिज्ञानामपि तदन्तर्भावं सूचयति । नान्यैरिति ॥ ३५ ॥ मिथ्याज्ञानप्रचयसंस्काराद्वेदान्तार्थतात्पर्यवतां पण्डितानामपि नाद्वैते प्रत्ययदार्ढ्यं सिध्यतीत्याह । तस्मादिति ॥ साक्षादद्वैतमवगम्य स्मृतिसन्ततिं कुर्वतो लोकानुवर्तने विधिनियममाह । अद्वैतमिति ॥ तस्मादित्यस्यार्थमाह । यस्मादिति ॥ एवमिति निर्विकल्पत्वादिपरामर्शः । विदित्वा शास्त्रतोऽवगम्येत्यर्थः । अद्वैतावगतिदार्ढ्यार्थं स्मृतिसन्ततिं कर्तव्यतायां नियमविधिमभ्यनुजानाति । अद्वैत इति ॥ अद्वैतमित्याद्युत्तरार्धं विभजते । तच्चेति ॥ अशनायाद्यतीतस्य कथं लोकाचरणमबुद्धिपूर्वकारित्वादित्याशङ्क्याह ।

अद्वैतं समनुप्राप्य जडवल्लोकमाचरेत् ॥ २६ ॥
निस्तुतिर्निर्नमस्कारो निःस्वधाकार एव च ।

---

त्वादपरोक्षादजमात्मानं सर्व्वलोकव्यवहारातीतो जडवल्लोकमाचरेत् । अप्रख्यापयन्नात्मानमहमेवंविध इत्यभिप्रायः ॥ २६ ॥

कया चर्य्यया लोकमाचरेदित्याह । स्तुतिनमस्कारादिसर्व्वकर्म्मवर्जितस्त्यक्तसर्व्वबाह्यैषणः प्रतिपन्नपारमहंस्यपारिव्राज्य इत्यभिप्रायः । एतं वै तमात्मानं विदित्वेत्यादिश्रुतेः । तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणा इत्यादिस्मृतेश्च । चलं शरीरं प्रतिक्षणमन्यथाभावात् । अचलमात्मतत्त्वम् । यदा कदाचिद्भोजनादिव्यवहारनि-

---

सर्व्वलोकेति ॥ लौकिकव्यवहारानतीत्य विदुषो जडवदाचरणं कीदृशमित्यपेक्षायां चतुर्थं पादमनूद्य तात्पर्य्यमाह । जडवदिति ॥ २६ ॥

एवंविधोऽहमित्यात्मानं विद्याभिजनादिभिर्न प्रख्यापयन् जडवदेव विद्वान् लोकमाचरेदिति योजना । ननु परापरदेवयोः स्तुतिपूर्व्वकप्रणामस्य श्राद्धादिक्रियायाश्च कर्त्तव्यतया प्रतिबन्धात्कथं विदुषो जडवदाचरणमिति तत्राह । निस्तुतिरिति ॥ तथापि जीवतां क्वापि स्थातव्यत्वादाश्रयमुद्दिश्य प्रवृत्तेरावश्यकत्वात्कुतो जडत्वमित्याशङ्क्याह । चलेति ॥ चलश्चाचलश्च चलाचले ते निकेतो यस्याश्रयः स तथेति यावत् । तथापि कौपीनाच्छादनाशनपानादिदेहस्थितिप्रयोजकापेक्षया प्रवृत्तिध्रौव्यान्न विदुषो जडत्वमित्याशङ्क्याह । यतिरिति ॥ आकाङ्क्षापूर्व्वकं पूर्व्वार्द्धाक्षराणि व्याचष्टे । कर्म्मेत्यादिना ॥ वर्णाश्रमाभिमानवतस्तत्कर्म्मसु वर्त्तमानस्य कथमिदं विशेषणमित्याशङ्क्याह । त्यक्तेति ॥

चलाचलनिकेतश्च यतिर्यादृच्छिको भवेत् ॥३७॥

मित्तमाकाशवदचलं स्वरूपमात्मतत्त्वमात्मनो निकेतनमाश्रयमात्मस्थितिं विस्मृत्याहमिति मन्यते यदा तदा चलो देहो निकेतो यस्य सोऽयमेवं चलाचलनिकेतो विद्वान् न पुनर्बाह्यविषयाश्रयः। स च यादृच्छिको भवेत्। यदृच्छाप्राप्तकौपीनाच्छादनग्रासमात्रदेहस्थितिरित्यर्थः॥ ३७॥ बाह्यं पृथिव्यादि तत्त्वमाध्यात्मिकञ्च देहादिलक्षणं रज्जुसर्पादिवत् स्वप्नमायादिवच्चासत्। वाचारम्भणं विकारो

---

पारमहंस्यं पारिव्राज्यं प्रतिपत्तुमशक्यमप्रामाणिकत्वादिति चेत् नैवं श्रुतिस्मृतिसिद्धत्वादित्याह। एवमिति॥ विदित्वेत्यापातिकं वेदनं व्युत्थानहेतुत्वेनोच्यते। तस्मिन्नेव परस्मिन् वस्तुनि विषयान्तरेभ्यो व्यावृत्ता बुद्धिर्येषामिति तथा। तदेव परं वस्त्वात्मा निरुपचरितं स्वरूपं येषां ते तथोच्यन्ते॥ तस्मिन्नेव परस्मिन्नात्मनि निष्ठा निश्चयेन स्थितिर्येषान्ते तथेत्याह। तन्निष्ठा इति॥ तदेवात्मभूतं परं वस्तु परमयनं परा गतिर्येषान्ते तथेत्याह। तत्परायणा इति॥ चादिशब्देन सर्वकर्माणि मनसेत्यादिवाक्यं गृह्यते॥ कदा पुनश्चलो देहो विदुषो निकेतो भवति तत्राह। यदेति॥ अविवक्षिते हि कालविशेषे विवक्षितं व्यवहारं निमित्तीकृत्यात्मस्थितिं उक्तविशेषणवतीं विस्मृत्याहङ्कारममकारपरवशो यदा विद्वानवतिष्ठते तदेति योजना। स्वभावस्वच्छमात्मस्वरूपमेवास्य निकेतनम्। चलं पुनः शरीरमुपदर्शितविचारव्यहारेणेति निगमयति। सोऽयमिति॥ अविदुषो विशेषार्थं व्यावर्त्त्यं कीर्त्तयति। न पुनरिति॥ चतुर्थपादार्थमाह। स चेति॥ ३७॥ अहमेव परं ब्रह्म न मत्तोऽन्यदस्ति किञ्चिदिति स्मृतिसन्ततिकरणमपि न कालविशेषनियतं किन्तु नैरन्तर्येण कर्त्तव्यमित्याह। तत्त्वमिति॥ अध्यात्मिकं शरीरादि कल्पितं

तत्त्वमाध्यात्मिकं दृष्ट्वा तत्त्वं दृष्ट्वा तु बाह्यतः।

नामधेयमित्यादिश्रुतेः। आत्मा च सबाह्याभ्यन्तरो ह्यजोऽपूर्वोऽनपरोऽनन्तरोऽबाह्यः कृत्स्न आकाशवत्सर्वगतः सूक्ष्मोऽचलो निर्गुणो निष्कलो निष्क्रियस्तत्सत्यं स आत्मा तत्त्वमसीतिश्रुतेः। इत्येवं तत्त्वदृष्ट्या तत्त्वीभूतस्तदारामो न बाह्यरमणो यथाऽतत्त्वदर्शी कश्चिच्चित्तमात्मत्वेन प्रतिपन्नश्चित्तचलनमनुचलितमात्मानं मन्यमानस्तत्त्वाच्चलितं देहादिभूतमात्मानं कदाचिन्मन्यते प्रच्युतोऽहमात्मतत्त्वादिदानीमिति। समाहिते तु मनसि कदाचित्तत्त्वभूतं प्रसन्नात्मानं मन्यते इदानीमस्मि तत्त्वीभूत इति। न तथात्मविद्भवेत्। आत्मन एकरूपत्वात् स्वरूपप्रच्यवनासम्भवाच्च। सदैव ब्रह्मास्मीत्यप्रच्युतो भवेत्त

तत्त्वमधिष्ठानमात्रं दृष्ट्वा बाह्यतो देहाद्बहिरिव स्थितं पृथिव्यादि च कल्पितत्वेनावस्तुत्वादधिष्ठानमेवेत्यनुभूय स्वयमपि द्रष्टा परमार्थवस्तुस्वभावमापन्नस्तत्रैवासक्तचेता बाह्येभ्यो विषयेभ्यो व्यावृत्तबुद्धिस्तस्मिन्नेव तत्त्वे परमार्थभूते प्रतिष्ठितस्तद्दर्शननिष्ठः स्यादित्यर्थः॥ पृथिव्यादेर्देहादेश्च प्रत्येकं परमार्थत्वसम्भवे कथमद्वैतनिष्ठा सिद्ध्येदित्याशङ्क्य व्याचष्टे। बाह्यमित्यादिना॥ किन्तदुभयोस्तत्त्वं तदाह। रज्जुसर्पवदिति॥ उक्तस्य विकारजातस्यासत्त्वे प्रमाणमाह। वाचारम्भणमिति॥ द्रष्टुरात्मनोऽपि दृश्यप्रतियोगित्वात्तुल्यं वाचारम्भणत्वमित्याशङ्क्याह। आत्मा चेति॥भवतु परस्यात्मनस्तत्तदागमवचननिर्देशादुक्तलक्षणत्वं तथापि द्रष्टुरात्मनो न यथोक्तरूपत्वमित्याशङ्क्याह। तत्त्वमिति॥ विशेषणानि तु प्रागुक्तानि तत्तदागमोपात्तानि अपुनरुक्तानि॥ द्वितीयार्द्धं व्याचष्टे। इत्येवमिति॥ आत्मारामत्वं कथमित्याशङ्क्य बाह्यविषयसक्तिं त्यक्त्वा प्रत्य-

तत्त्वीभूतस्तदारामस्तत्त्वादप्रच्युतो भवेत् ॥३८॥

---

त्त्वात् सदाऽप्रच्युतात्मदर्शनो भवेदित्यभिप्रायः। शुनि चैव श्वपाके च। समं सर्वेषु भूतेषु इत्यादिस्मृतेः॥ ३८॥ इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य शङ्करभगवतः कृतौ गौडपादीये आगमशास्त्रभाष्ये द्वितीयप्रकरणं वैतथ्याख्यं समाप्तम् ॥ २॥

---

गात्मन्येव * परिसमाप्तत्वादित्याह। न याप्नोति॥ तत्त्वादप्रच्युतो भवतीत्येतत् व्यतिरेकमुखेन व्याकरोति। यथेत्यादिना॥ अतत्त्वदर्शीति च्छेदः। आत्मविदोऽनाव्यवस्थितमात्मदर्शनमित्यत्र हेतुमाह। आत्मन इति॥ सति स्वरूपे स्वरूपात्प्रच्युतेरप्रसक्तत्वात्तत्प्रतिषेधो युक्तो न भवतीत्याशङ्क्याह। सदेति॥ वस्तुनः सदैकरूपत्वे स्मृतिमुदाहरति। शुनि चेति॥ समदर्शिनः सदैकरूपवस्तुदर्शिन एव पण्डिता नान्ये तथेत्यर्थः। स्वरूपप्रच्यवने च स्मृतिं दर्शयति। सममिति॥तत्र हि विनश्यत्स्वविनश्यन्तमिति स्वरूपाप्रच्यवनमुक्तम्॥ ३८॥ इति श्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचितायां गौडपादीयकारिकाभाष्यटीकायां द्वितीयप्रकरणं समाप्तम् ॥२॥

---

* भवेदित्येतदिति पाठान्तरम्।

# ॐ। उपासनाश्रितो धर्म्मो जाते ब्रह्मणि वर्त्तते।

ॐकारनिर्णये उक्तः प्रपञ्चोपशमः शिवोऽद्वैत आत्मेति प्रतिज्ञामात्रेण। ज्ञाते द्वैतं न विद्यत इति च। तत्र द्वैताभावस्तु वैतथ्यप्रकरणेन स्वप्नमायागन्धर्वनगरादिदृष्टान्तैर्दृश्यत्वाद्यन्तवत्त्वादिहेतुभिस्तर्केण च प्रतिपादितः। अद्वैतं किमागममात्रेण प्रतिपत्तव्यमाहोस्वित्तर्केणापीत्यत आह। शक्यते तर्केणापि ज्ञातुम्। तत्कथमित्यद्वैतप्रकरणमारभ्यते। उपास्योपासनादिभेदजातं सर्व्वं वितथं केवलश्चात्माऽद्वयः परमार्थ इति स्थितमतीतप्रकरणे। यत उपासनाश्रित उपासनामात्मनो मोक्षसाधन-

---

तर्कावष्टम्भेन द्वैतवैतथ्यनिरूपणं परसमाप्याद्वैतं पारमार्थिकमपि तर्कतः सम्भावयितुं प्रकरणान्तरं प्रारिप्सुरुपास्योपासकभेददृष्टिं तावदुपवदति। उपासनेति॥ देहस्य धारणाद्धर्म्मो जीवो भूतसङ्घाताकारेण जाते ब्रह्मणि तदभिमानित्वेन वर्त्तते। स प्रागुत्पत्तेरजः सर्व्वमित्येवं कार्यावच्छिन्नं वस्तु मन्यते। स पुनरुपासनां पुरुषार्थसाधनत्वेनाश्रितस्तदेव ब्रह्म प्रतिपत्स्येऽत्र शरीरपातादूर्द्ध्वमित्येवम्। यतो मिथ्याज्ञानवानवतिष्ठते तेनासौ कृपणोऽल्पको ब्रह्मविद्भिः स्मृतश्चिन्तित इत्यर्थः॥ प्रकरणान्तरमवतारयन् वृत्तमनुद्रवति। ओङ्कारेति॥ तत्र हि निर्णये प्रथमे प्रकरणे प्रपञ्चोपशमः शिवोऽद्वैत इति विशेषणैरात्मा प्रतिज्ञामात्रेणाद्वितीयो व्याख्यात इत्यर्थः। द्वितीयप्रकरणार्थं सङ्क्षिप्यानुवदति। ज्ञात इति॥ तत्रैवाद्ये प्रकरणे ज्ञाते द्वैतं न विद्यत इत्यत्र प्रतिज्ञामात्रेण द्वैताभाव उक्तः। स तु द्वितीयेन प्रकरणेन हेतुदृष्टान्ताभ्यां तर्केण च प्रतिपादितो नात्र प्रतिपादयितव्यमवशिष्टमस्तीत्यर्थः॥ तृतीयं प्रकरणमाकाङ्क्षापूर्व्वकमवतारयति। अद्वैतमिति॥ नैषा तर्केण मतिरापनेयेति श्रुतेरद्वैतं कथं तर्केण ज्ञातुं शक्यमित्याक्षिपति। तत्कथमिति॥

प्रागुत्पत्तेरजं सर्वं तेनासौ कृपणः स्मृतः ॥ १ ॥

त्वेन गत उपासकोऽहं ममोपास्यं ब्रह्म । तदुपासनं कृत्वा जाते ब्रह्मणि इदानीं वर्त्तमानोऽजं ब्रह्म शरीरपातादूर्द्ध्वं प्रतिपत्स्ये प्रागुत्पत्तेश्चाजमिदं सर्वमहञ्च । यदात्मकोऽहं प्रागुत्पत्तेरिदानीं जातो जाते ब्रह्मणि च वर्त्तमान उपासनया पुनस्तदेव प्रतिपत्स्य इत्येवमुपासनाश्रितो धर्मः । साधको येनैवं क्षुद्रब्रह्मवित् तेनासौ कारणेन कृपणो दीनोऽल्पकः स्मृतो नित्याजब्रह्मदर्शिभिर्महात्मभिरित्यभिप्रायः । यद्वाचा नाभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत इत्यादि श्रुतेस्तलवकाराणाम् ॥ १ ॥

अतत्त्वतर्कप्रवेशेऽपि तत्त्वागमिकतर्कस्य सहकारितया सम्भा वना-हेतुत्वात्तर्केणापि ज्ञातुं शक्यमिति व्यवहारोपपत्तिरिति मत्वाह । अद्वैतेति ॥ यदि तर्केणाद्वैतं सम्भावयितुं प्रकरणमारभ्यते तर्हि किमित्युपासकनिन्दा प्रथमं प्रस्तूयते तत्राह । उपास्येति ॥ वक्ष्यमाण-विरोधित्वादुपासकस्य तन्निन्दा प्रकृतोपयोगिनीत्यर्थः । कथं तर्हि तस्याजत्वमात्मनो दर्शयन्ती श्रुतिर्घटिष्यते तत्राह । प्रागिति ॥ प्रागव-स्थायां सर्वमिदमजमहञ्च तथेत्युपासके यतो मन्यतेऽतश्च प्रागवस्थ-ब्रह्मविषया भविष्यत्यजत्वश्रुतिरित्यर्थः । कार्य्यस्थित्यवस्थायां यदि ब्रह्म तदात्मकमिदं तर्हि किमुपासनया प्राप्तव्यमित्याशङ्क्याह । यदात्मक इति ॥ इदानीमुत्पत्त्यवस्थायां जातो जाते ब्रह्मणि स्थित्यवस्थायां वर्त्तमानोऽहं प्रागुत्पत्तेर्यदात्मकः सन्नासं तदेव पुनः प्रलयावस्थायामुपासनया प्रति-पत्स्ये तत्कृतत्वाभावादिति सम्बन्धः । तलवकाराणां शाखायामुपास्यस्य ब्रह्मत्वनिषेधदर्शनाच्चोपासकनिन्दा युक्तेत्याह । यद्वाचेति ॥ अनभ्युदि-तमनभिप्रकाशितमभ्युद्यतेऽभिप्रकाश्यते उपास्यते वाचा विषयीकुर्वन्ती-त्यर्थः । आदिशब्देन यन्मनसेत्यादि गृह्यते ॥ १ ॥ भेददर्शिनमुपास-

## अतो वक्ष्याम्यकार्पण्यमजाति समताङ्गतम्।

---

सबाह्याभ्यन्तरमजमात्मानं प्रतिपत्तुमशक्नुवन्नविद्यया दीनमात्मानं मन्यमानो जातोऽहं जाते ब्रह्मणि वर्त्ते तदुपासनाश्रितः सन् ब्रह्म प्रतिपत्स्य इत्येवं प्रतिपन्नः कृपणो भवति यस्मादतो वक्ष्याम्यकार्पण्यमकृपणभावमजं ब्रह्म। तद्धि कार्पण्यास्पदं यत्रान्योऽन्यत् पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं मर्त्त्यं सद्वाचारम्भणं विकारो नामधेयमित्यादिश्रुतिभ्यः। तद्विपरीतं सबाह्याभ्यन्तरमजमकार्पण्यं भूमाख्यं ब्रह्म। यत्प्राप्याविद्याकृतसर्वकार्पण्यनिवृत्तिस्तदकार्पण्यं वक्ष्यामीत्यर्थः। तदजाति अविद्यमाना जातिरस्य। समताङ्गतं सर्वसाम्यं गतम्। कस्मात्। अवयववैषम्याभावात्। यद्धि सावयवं वस्तु तदवयववैषम्यं जायत इत्युच्यते। इदन्तु निरवयवत्वात्समताङ्गतमिति

---

क्रमद्वैतविरोधिनं निन्दित्वा सम्यगद्वैतप्रतिज्ञां करोति। अत इति॥ जातिर्जन्म तद्रहितमजाति। तत्र हेतुमाह। समतामिति॥ जन्मराहित्यं साधयति। यथेति॥ अतःशब्दार्थमाह। सबाह्येति। प्रतिज्ञाभागं विभजते। अकृपणेति॥ तदेव व्यतिरेकमुखेन स्फोरयति। तद्धीति॥ दर्शनादिविशेषव्यवहारगोचरीभूतं कार्य्यजातं परिच्छिन्नं नाशि चोच्यते। तदेव कृपणत्वालम्बनमित्यर्थः। तत्र मिथ्याभूतमित्यत्र प्रमाण-माह। वाचारम्भणमिति॥ कार्पण्यमुक्त्वा तदभावरूपमकार्पण्यं प्रकटयति। तद्विपरीतमिति॥ प्राप्य ज्ञात्वेति यावत्। द्वितीयपादं व्याचष्टे। तदजातीत्यादिना॥ सर्व्वात्मना साम्यं निर्व्विशेषत्वं गतमित्यत्र हेतुं पृच्छति। कस्मादिति॥ निर्व्विशेषत्वे हेतुमाह। अवयवेति॥ हेतुमेव प्रकटयन् व्यतिरेकमुखेनाजत्वं प्रपञ्चयति। यद्धीत्यादिना।

यथा न जायते किञ्चिज्जायमानं समन्ततः ॥२॥
आत्मा ह्याकाशवज्जीवैर्घटाकाशैरिवोदितः।

---

न क्वचिदवयवैः स्फुटत्यतोऽजात्यकार्पण्यम्। समन्ततः समन्ताद्यथा न जायते किञ्चिदल्पमपि न स्फुटति रज्जुसर्पवदविद्याकृतदृष्ट्या जायमानं येन प्रकारेण न जायते सर्वतोऽजमेवं ब्रह्म भवति तथा तं प्रकारं शृणु इत्यर्थः ॥ २ ॥

अजाति ब्रह्माकार्पण्यं वक्ष्यामीति प्रतिज्ञातं तत्सिद्ध्यर्थं हेतुं दृष्टान्तं वक्ष्यामीत्याह। आत्मा परो हि यस्मादाकाशवत् सूक्ष्मो निरवयवः सर्वगत आकाशवदुक्तो जीवैः क्षेत्रज्ञैर्घटाकाशैरिव घटाकाशतुल्य उदित उक्तः। स एवाकाशसमः पर आत्मा। अथवा घटाकाशैर्यथोदित

---

समन्तत इति पूर्वत्वसङ्कीर्त्तनम्॥ द्वितीयार्द्धं व्याचष्टे। यथेत्यादिना॥ यथा रज्ज्वां सर्पो भ्रान्त्या जायते तथा सर्वं भ्रान्तिदृष्ट्या जायमानत्वेन भासमानमपि यथा येन प्रकारेण वस्तुतो न जायते तथा किन्तु सर्वतो देशतः कालतो वस्तुतश्च पूर्णं कूटस्थमेव वस्तु भवति तथा तं प्रकारमिति सम्बन्धः ॥ २ ॥

प्रतिज्ञावाक्ये ब्रह्मशब्देन परमात्मा प्रकृतः स कीदृगित्यपेक्षायामाह। आत्मा हीति॥ जीवभेदप्रतीतिस्तर्हि कथमित्याशङ्क्याह। जीवैरिति॥ यथाऽऽकाशो विभुत्वादिधर्मैः समततात्स्वकभेदवान्न भवति तथा परमात्मा विशेषाभावात्। यथा च महाकाशो घटाकाशाकारेण प्रतीयते तथा परमात्मा नानाविधजीवाकारेण प्रतीतिगोचरो भवतीत्यर्थः। कथं सङ्घातानां परस्मादुत्पत्तिरित्याशङ्क्याह। घटादिवदिति। यथा मृदः सकाशाद्घटादयो जायन्ते तथा परमात्मनैव पृथिव्यादिसङ्घाताकारेण जायत इत्यर्थः। यदाऽऽत्मनो जीवादीनामुत्पत्ति-

घटादिवच्च सङ्घातैर्जातावेतन्निदर्शनम् ॥ ३ ॥

---

उत्पन्नस्तथा परो जीवात्मभिरुत्पन्नो जीवात्मनां परस्मादात्मन उत्पत्तिर्या श्रूयते वेदान्तेषु सा महाकाशाद्घटाकाशोत्पत्तिसमानं परमार्थत इत्यभिप्रायः। तस्मादेवाकाशाद्घटादयः सङ्घाता यथोत्पद्यन्त एवमाकाशस्थानीयात्परमात्मनः पृथिव्यादिभूतसङ्घाता आध्यात्मिकाश्च कार्य्यकारणलक्षणा रज्जुसर्पवद्विकल्पिता जायन्ते। अत उच्यते घटादिवच्च सङ्घातैरुदित इति। यदा मन्दबुद्धिप्रतिपिपादयिषया श्रुत्यात्मनो जातिरुच्यते जीवादीनां तदा जाताबुपगम्यमानायामेतन्निदर्शनं दृष्टान्तो यथोदिताकाशवदित्यादिः ॥ ३ ॥

---

रिष्टा तदा तस्मादुत्पत्तौ दृष्टान्तवचनमेतदित्याह। जाताविति॥ श्लोकस्य वृत्तानुवादपूर्व्वकं तात्पर्य्यमाह। जातीत्यादिना॥ प्रथमपादस्याक्षरार्थमाह। आत्मेत्यादिना॥ विमतस्वगततात्त्विकभेदशून्यः सूक्ष्मत्वाद्विरवयवत्वादिभुत्वादाकाशवत्। न च परमाण्वादौ सूक्ष्मत्वादेर्व्यभिचारः। तस्यैवाप्रसिद्धत्वात्। क्वचिदपि तात्त्विकभेदस्याप्रतिपत्तेश्चेत्यर्थः॥ जीवैरित्यादिना व्याचष्टे। जीवैरिति॥ जीवाकारेण परमात्मैवोक्तः। चेतनश्चापि मां विद्धीति स्मृतेरित्यर्थः। उदितशब्दश्चेदुत्पन्नार्थस्तर्हि परस्यैवात्मनः सङ्घातरूपेणोक्तत्वे सप्रपञ्चत्वं प्रसज्येतेत्याशङ्क्याह। यथेति॥ तर्हि नात्मश्रुतेरिति न्यायविरोधः स्यादित्याशङ्क्याह। जीवात्मनामिति॥ तृतीयपादं व्याचष्टे। तस्मादेवेति॥ उक्तेऽर्थे वाक्यमवतारयति। अत इति॥ आकाशस्यावकाशप्रदाने च घटाद्युत्पत्तौ कारणत्वं निर्व्विकारस्यैव दृष्टमिति द्रष्टव्यम्। जाताविल्यादेरर्थमाह। यदेति॥ ३॥

घटादिषु प्रलीनेषु घटाकाशादयो यथा ।
आकाशे सम्प्रलीयन्ते तद्वज्जीव इहात्मनि ॥ ४ ॥
यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते ।

---

यथा घटाद्युत्पत्त्या घटाकाशाद्युत्पत्तिः । यथा च घटादिप्रलये घटाकाशादिप्रलयस्तद्वद्देहादिसङ्घातोत्पत्त्या जीवोत्पत्तिस्तत्प्रलये च जीवानामिहात्मनि प्रलयो न स्वत इत्यर्थः ॥ ४ ॥

सर्व्वदेहेष्वात्मैकत्वे एकस्मिन् जननमरणसुखादिमत्यात्मनि सर्व्वात्मनां तत्सम्बन्धः क्रियाफलसाङ्कर्य्यञ्च स्यादिति य आहुर्द्वैतिनस्तान् प्रतीदमुच्यते । यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते संयुक्ते न सर्वे घटाकाशादयस्तद्रजोधूमादिभिः संयुज्यन्ते तद्वज्जीवाः सुखादिभिः ।

---

अद्वैतस्य जीवसृष्टिश्रुतिविरोधं परिहृत्य तस्यैव जीवप्रलयश्रुत्या विरोधमाशङ्क्य परिहरति । घटादिष्विति ॥ औपाधिकौ जीवानामुत्पत्तिप्रलयौ न स्वाभाविकौ । तथा चोत्पत्तिश्रुत्या विरोधाभाववदद्वैतस्य प्रलयश्रुत्यापि न विरोधोऽस्तीति श्लोकाक्षरव्याख्यानेन प्रकटयति । यथेत्यादिना ॥ ४ ॥

इदानीमद्वैतस्य व्यवस्थानुपपत्त्या विरोधमाशङ्क्य परिहरति । यथैकस्मिन्निति ॥ उक्तदृष्टान्तवशादेकस्मिन् जीवे सुखादिसंयुक्ते सत्यपरे जीवास्तैरेव सुखादिभिर्न युज्यन्ते औपाधिकभेदादित्याह । तद्वदिति ॥ श्लोकव्यावर्त्त्यामाशङ्कां दर्शयति । सर्व्वदेहेष्विति ॥ एकात्मत्वे कर्त्तर्य्येकस्मिन् कर्त्तारः सर्व्वे भोक्तरि चैकस्मिन् भोक्तारः सर्व्वे भवेयुरित्यव्यवस्थान्तरमाह । क्रियेति ॥ व्यवस्थानुपपत्त्या द्वैतमेष्टव्यमिति वदन्तं प्रत्युत्तरत्वेन श्लोकमवतारयति । तान् प्रतीति ॥ किमिदमेकात्मत्वे साङ्कर्य्यं

न सर्वे सम्प्रयुज्यन्ते तद्वज्जीवाः सुखादिभिः ॥५॥

---

नन्वेक एवात्मा। बाढम्। ननु न श्रुतं त्वया आकाशवत्सर्व्वसङ्घातेष्वेक एवात्मेति। यदि एक एवात्मा तर्हि सर्वत्र सुखी दुःखी च स्यात्। न चेदं साङ्ख्यचोद्यं सम्भवति। न हि साङ्ख्य आत्मनः सुखदुःखादिमत्त्वमिच्छति बुद्धिसमवायाभ्युपगमात् सुखदुःखादीनाम्। न चोपलब्धिस्वरूपस्यात्मनो भेदकल्पनायां प्रमाणमस्ति। भेदाभावे प्रधानस्य पारार्थ्यानुपपत्तिरिति चेत्। न। प्रधानकृतस्यार्थस्यात्मन्यसमवायात्। यदि हि प्रधानकृतो बन्धो मोक्षो वार्थः पुरुषेषु भेदेन समवैति ततः प्रधानस्य पारार्थ्य-

---

किमेकस्मिन् जीवे व्यवस्थितेन सुखादिना जीवान्तराणां तद्वत्त्वं स्यादित्युच्यते किंवा सर्व्वोपाधिष्वात्मैक्यात्तस्य स्वरूपेण सर्व्वसुखादिमत्त्वं स्यादित्यापाद्यते तत्राद्यं प्रत्याह। तद्वदिति॥ आत्मनः सर्व्वत्रैकत्वात्तस्य स्वरूपेण सर्व्वसुखादिमत्त्वमिति द्वितीयं पक्षं विवक्षन्नाशङ्कते। नन्विति॥ सर्व्वत्रात्मैकत्वमुक्तमङ्गीकरोति। बाढमिति॥ तदेकत्वमुपपत्तिशून्यं कथमङ्गीकृतमित्याशङ्क्याह। ननु नेति॥ यदि सर्व्वत्रैकत्वं नियतमिष्यते तर्हि तत्र तत्र सुखित्वं दुःखित्वं च तस्यैकस्य प्राप्तमिति व्यवस्थाऽसिद्धिरिति चोदयति। यद्येक एवेति॥ आत्मस्वरूपस्य सर्व्वत्रैकत्वेऽपि कल्पितभेदात्तु व्यवस्थासिद्धिरित्यभिप्रेत्य किमिदं साङ्ख्यस्य चोद्यं किंवा वैशेषिकादेरिति विकल्प्याद्यं प्रत्याह। न चेदमिति॥ किञ्चैकात्म्यं दूषयता साङ्ख्येन तद्भेदोऽभ्युपगम्यते। स च नाभ्युपगन्तुं शक्यते तन्मानाभावादित्याह। न चेति प्रधानं हि कस्यचिद्भोगमपवर्गञ्च कस्यचिदादधत्पुरुषभेदमिच्छते। तच्च पुरुषभेदाभावे नोपपद्यते। तेनार्थापत्त्या पुरुषभेदः सिध्यतीति शङ्कते। भेदेति॥ अर्थापत्तेरन्यथासिद्धिं वदन्नुत्तरमाह। नेत्या-

मात्मैकत्वेनोपपद्यत इति युक्ता पुरुषभेदकल्पना । न च सांख्यैर्बन्धो मोक्षो वार्थः पुरुषसमवेतोऽभ्युपगम्यते । निर्विशेषाश्च चेतनमात्रा आत्मनोऽभ्युपगम्यन्ते । अतः पुरुषसत्तामात्रप्रयुक्तमेव प्रधानस्य पारार्थ्यं सिद्धं न तु पुरुषभेदप्रयुक्तमिति । अतः पुरुषभेदकल्पनायां प्रधानस्य पारार्थ्यं हेतुः । न चान्यत्पुरुषभेदकल्पनायां प्रमाणमस्ति सांख्यानाम् । परसत्तामात्रमेव चैतन्निमित्तीकृत्य स्वयं बध्यते मुच्यते च प्रधानम् । परश्चोपलब्धिमात्रसत्तास्वरूपेण प्रधानप्रवृत्तौ हेतुर्न केनचिद्विशेषेणेति । केवलमूढतयैव पुरुषभेदकल्पना वेदार्थपरित्यागश्च । ये त्वाहुर्वैशेषिकादय इच्छा-

---

दिना ॥ संक्षिप्तमेवोक्तं विवृणोति । यदि हीति ॥ प्रधानस्य पारार्थ्यसामर्थ्यादेव पुरुषे कश्चिदतिशयो भविष्यतीत्याशङ्क्यापसिद्धान्तप्रसङ्गान्मैवमित्याह । निर्विशेषा इति ॥ किञ्च प्रधानस्य पारार्थ्यं परं शेषित्वमपेक्षते । न तस्मिन् भेदमपि काङ्क्षते । इतोऽन्यथाप्युपपत्तिरित्याह । अत इति ॥ जन्ममरणव्यवस्थानुपपत्त्या पुरुषभेदकल्पनमपि न युक्तं अधिकरणत्वादिति मत्वाह । न चेति ॥ न केवलं प्रमाणशून्या पुरुषभेदकल्पना किन्तु प्रयोजनशून्या चेत्याह । परेति ॥ ननु न पुरुषसत्तामात्रं निमित्तीकृत्य प्रधानं प्रवर्त्तते । किन्त्वीश्वराधिष्ठितमिति सेश्वरादिमतमाशङ्क्य तस्यापि पुरुषत्वाविशेषादुपलब्धिमात्रत्वमभ्युपेत्याह । परश्चेति ॥ वेदार्थो वेदप्रतिपाद्यमद्वैतं द्वितीयस्तत्त्यापयति । ये त्विति ॥ बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारा नव विशेषगुणाः । ते च प्रत्येकमात्मसु व्यवस्थया समवेताः स्वीक्रियन्ते । तेषां व्यवस्थानुपपत्त्या प्रतिदेहमात्मभेदसिद्धिरित्यर्थः । किं बुद्ध्यादयो रूपादिवदात्मव्यापिनः किंवा संयोगादिवदेकदेशवृत्तयः । नाद्यः । ज्ञानादिगुणानामात्मव्यापिनामात्मसंयुक्ते सर्व्वस्मिन्नपर्य्यायेण ज्ञातृत्वादिव्यवहारजनकत्वप्रसङ्गादित्याह । तदप्यसदिति ॥ द्वितीयेत्वेकदेशः सत्योऽसत्यो वा । प्रथमे

दय आत्मसमवायिन इति। तदप्यसत्। स्मृतिहेतूनां संस्काराणामप्रदेशवत्यात्मन्यसमवायात्। आत्ममनःसंयोगाच्च स्मृत्युत्पत्तेः स्मृतिनियमानुपपत्तिः। युगपद्वा सर्वस्मृत्युत्पत्तिप्रसङ्गः। न च भिन्नजातीयानां स्पर्शादिहीनानामात्मनां मनआदिभिः सम्बन्धो युक्तः। न च द्रव्याद्रूपादयो गुणाः कर्मसामान्यविशेषसमवाया भिन्नाः सन्ति। परेषां यदि ह्यत्यन्तभिन्ना एव द्रव्यात् स्युरिच्छादयश्चात्मनस्तथासति द्रव्येण तेषां सम्बन्धानुपपत्तिः। अयुत-

---

घटादिवदात्मनः सैकदेशत्वात् कार्य्यत्वादिप्रसङ्गः। द्वितीये कल्पतैकदेशानामेव ज्ञानादिगुणवत्त्वं आत्मनस्तु न तद्वत्त्वं सिध्यतीत्याह। स्मृतीति॥ स्मृतिहेतवः संस्कारा भावनाख्यास्तेषां ग्रहणमितरेषामुपलक्षणार्थं तेषामात्मनि समवायाभावात् परस्य सिद्धान्तासिद्धिरिति शेषः। किञ्चात्ममनःसंयोगासमवायिकारणाज्ज्ञानानामुत्पत्तिरिष्टा। तथा च सति ग्रहणसमये स्मृतिर्न सम्भवत्येवेति नियमो नोपपद्यते। ग्रहणकारणसंयोगेनैव स्मृत्युपपत्तिसम्भवादित्याह। आत्मेति॥ किञ्चात्ममनसोः संयोगादेकस्मादेकस्याः स्मृतेः समुत्पत्तिसमये स्मृत्यन्तराण्यपि समुत्पद्येरन्। असमवायिकारणस्य तुल्यत्वात्। न च समुत्पत्तिबुद्धिसंस्कारायौगपद्याद्युगपदनुत्पत्तिः। तेषां तदुद्बोधस्य चात्मनि विप्रतिपन्नत्वेन स्मृतिसामग्र्यन्तर्भावासम्भवादित्यभिप्रेत्याह। युगपद्वेति॥ किञ्च समानजातीयानां स्पर्शादिमतामेव परस्परं सम्बन्धो दृष्टः। यथा मल्लानां मेषाणां रज्जुघटादीनाञ्च तदुभयाभावाद्वात्मनां मनआदिभिः सम्बन्धासिद्धेर्नैतस्मादसमवायिकारणाद्बुद्ध्यादिगुणोत्पत्तिः सिध्यतीत्याह। न चेति॥ गुणादीनां साजात्यस्य स्पर्शादिमत्त्वस्य चाभावेऽपि द्रव्येण सम्बन्धवदात्मनो मनआदिभिः सम्बन्धः सिध्यति चेन्नेत्याह। न चेति॥ स्वतन्त्रं सन्मात्रं द्रव्यशब्देनात्र विवक्षितं न ततो भेदेन गुणादयो वेदान्तिमते विद्यन्ते। शुक्लः पटः खण्डो गौरित्यादिसामानाधिकरण्य-

सिद्धानां समवायलक्षणः सम्बन्धो न विरुध्यत इति चेत्। न। इच्छादिभ्योऽनित्येभ्य आत्मनो नित्यस्य पूर्वसिद्धत्वा-त्त्वयुतसिद्धत्वोपपत्तिः। आत्मना युतसिद्धत्वे चेच्छादी-नामात्मगतमहत्त्ववन्नित्यत्वप्रसङ्गः। स चानिष्टः। आत्म-नोऽनिर्मोक्षप्रसङ्गात्। समवायस्य च द्रव्यादन्यत्वे सति द्रव्येण सम्बन्धान्तरं वाच्यम्। यथा द्रव्यगुणयोः समवायो नित्यसम्बन्ध एवेति न वाच्यमिति चेत्। तथा समवा-यसम्बन्धवतां नित्यसम्बन्धप्रसङ्गात्पृथक्त्वानुपपत्तिः। अत्य-

---

दर्शनात्। द्रव्यमेव तु कल्पनया तत्तदाकारेण भातीत्यभ्युपगमात् अतो दृष्टान्तासम्प्रतिपत्तिरित्यर्थः॥ विपक्षे दोषमाह। यदि हीति। गुणा-दयो द्रव्यादत्यन्तभिन्ना हिमवद्विन्ध्ययोरिव यदि स्युर्यदि चात्मनः सका-शादिच्छादयोऽत्यन्तं भिन्ना भवेयुस्तदा गुणादीनां द्रव्येण तद्वदेव सम्ब-न्धानुपपत्तेः। इच्छादीनाञ्चात्मना तद्योगात्पारतन्त्र्यसिद्धिरित्यर्थः। अत्यन्तभिन्नानामपि समवायसम्बन्धात्पारतन्त्र्योपपत्तिरिति शङ्कते। अयु-तेति॥ किमिदमयुतसिद्धत्वमपृथक्कालत्वं किं वा पृथग्देशत्वमुतापृथक् स्वभावत्वमाहोस्वित् संयोगविभागायोग्यत्वम्। नाद्यः। विकल्पासह-त्वात्। किमिच्छाद्यपेक्षयाऽपृथक्कालत्वं किं वात्मापेक्षया इच्छादीनामिति विकल्प्याद्यं दूषयति। नेत्यादिना॥ यद्यात्मना सहाऽपृथक्कालत्वमिच्छा-दीनां तदात्मनोऽनादित्वात्तद्गतमहत्त्ववन्नित्यत्वं तेषामापनतीत्याह। आत्मनेति॥ प्रसङ्गस्येष्टत्वमाशङ्क्य निराचष्टे। स चेति॥ न चापृथग्दे-शत्वमयुतसिद्धत्वम्। तन्तुपटादीनां पृथग्देशानामयुतसिद्धाभावप्रस-ङ्गात्। न चापृथक्स्वभावत्वमयुतसिद्धत्वम्। भेदपक्षपरित्यागात्। न च संयोगविभागायोग्यत्वमयुतसिद्धत्वम्। देवदत्तस्य हस्तादीनां चायुतसिद्धाभावापातादित्यभिप्रेत्य समवायस्य द्रव्यादनन्यत्वे तावन्मात्रत्वेन तत्सम्बन्धत्वव्याघातात्ततोऽन्यत्वेन सम्बन्धान्तरमस्ति न वेति विकल्पमाद्ये स्यादनवस्थेति मत्वाह। समवायस्येति॥

न्तपृथक्त्वं च द्रव्यादीनां सर्पवदसर्पद्रव्ययोरिव षष्ठ्यर्था-
नुपपत्तिः इच्छाद्युपजनापायवद्गुणवत्त्वे चात्मनो नित्यत्व-
प्रसङ्गः। देहफलादिवत्सावयवत्वं विक्रियावत्त्वञ्च देहादि-
वदेवेति दोषावपरिहार्य्यौ। यथा त्वाकाशस्याऽविद्याध्यारो-
पितरजोधूममलत्वादिदोषवत्त्वं तथात्मनोऽविद्याध्यारोपि-
पितबुद्ध्याद्युपाधिकृतसुखदुःखादिदोषवत्त्वे बन्धमोक्षादयो
व्यवहारिका न विरुध्यन्ते। सर्व्ववादिभिरविद्याकृतव्यव-

---

द्वितीयं प्रकृते। समवाय इति॥ न वाच्यं सम्बन्धान्तरमिति शेषः। समवायस्य नित्यसम्बन्धत्वे समवायवतां द्रव्यगुणादीनामपि तद्वत्त्वात्। भेदस्य कदाचिदप्यनुपलम्भात् पृथक्त्वप्रथानुपपत्तिरिति दूषयति। तथा चेति॥ संयोगस्यापि समवायसाम्यं चकारेण सूच्यते। समवायस्य समवायिभिर्गुणादीनाञ्च द्रव्येणात्यन्तभेदे हिमविन्ध्ययोरिव सम्बन्धानुपपत्तेः। तेषु परतन्त्रताव्यवहारासिद्धिरित्याह। अत्यन्तेति॥ किञ्चेच्छादयो नात्मगुणाः उपजनापायवत्त्वाद्रूपादिवत्। यद्वाऽऽत्मा नानित्यगुणवाननित्यत्वाद्व्यतिरेकेण देहादिवदित्याह। इच्छादीति॥ न केवलमात्मनोऽनित्यगुणत्वेऽनित्यत्वप्रसक्तिरेव दोषः किन्त्वन्यदपि दोषद्वयं दुष्परिहरमिति बाधकान्तरमाह। सावयवत्वमिति॥ यद्यात्मनो नेच्छादिगुणवत्त्वं तदा तस्य बन्धाभावान्मोक्षो न स्यादतो बन्धमोक्षव्यवस्थानुपपत्त्या प्रति देहं सुखदुःखादिविशिष्टात्मभेदसिद्धिरित्याशङ्क्याह। यथा त्विति॥ अवस्तुत्वादविद्यायास्तत्कृतव्यवहारायोगाद्व्यवहारिकबन्धाद्यभ्युपगमासिद्धिरित्याशङ्क्याह। सर्व्ववादिभिरिति॥ अविद्याकृतमनुष्यत्वाध्यारोपेण लौकिकवैदिकव्यवहारः सर्व्ववादिभिरिष्यते तत्कृता च व्यवस्था स्वीयते। तस्मादस्माकमपि तथैव सर्व्वमविरुद्धमित्यर्थः। परमार्थे च मोक्षे केनापि वादिना व्यवहारो नाभ्युपगम्यते। तथा च मोक्षे . परेषां व्यवहारस्यैवाभावात्तन्निर्व्वाहकपारमार्थिकभेदाभ्युपगमो वृथेत्याह। परमार्थेति॥ कल्पितभेदवशादपि पूर्व्वोक्तसर्व्वव्य-

रूपकार्य्यसमाख्याश्च भिद्यन्ते तत्र तत्र वै ।
आकाशस्य न भेदोऽस्ति तद्वज्जीवेषु निर्णयः ॥६॥

---

हाराभ्युपगमात् परमार्थानभ्युपगमाच्च । तस्मादात्मभेदपरिकल्पना वृथैव तार्किकैः क्रियत इति ॥ ५ ॥

कथं पुनरात्मभेदनिमित्तव्यवहार एकस्मिन्नात्मन्यविद्याकृत उपपद्यत इति । उच्यते । यथेहाकाश एकस्मिन् घटकरकापवरकाद्याकाशानामल्पत्वमहत्त्वादिरूपाणि भिद्यन्ते तथा कार्य्यमुदकाहरणधारणशयनादिसमाख्याश्च घटाकाशकरकाकाश इत्याद्यास्तत्कृताश्च भिन्नाश्च दृश्यन्ते । तत्र तत्र वै व्यवहारविषय इत्यर्थः । सर्व्वोऽयमाकाशरूपादिभेदकृतो व्यवहारो न परमार्थ एव । परमार्थतस्त्वाकाशस्य भेदोऽस्ति । न चाकाशभेदनिमित्तो व्यवहारोऽस्त्य-

---

स्याशौस्यात् पारमार्थिकात्मभेदकल्पनाप्रमाणप्रयोजनशून्येत्युपसंहरति । तस्मादिति ॥ ५ ॥

अद्वैतस्य श्रुत्यादिविरोधाभावेऽप्यनुमानविरोधमाशङ्क्यानैकान्तिकत्वेनानुमानं दूषयति । रूपेति ॥ श्लोकव्यावर्त्त्यामाशङ्कामाह । कथमिति ॥ यथात्मभेदवादे तद्भेदनिमित्तो रूपादिव्यवहारस्तथैकस्मिन्नेवात्मन्यात्मैक्यपक्षे रूपादिव्यवहारो नोपपद्यते । तथा च विमता जीवात्मानस्ततो भिद्यन्ते भिन्ननामकत्वात् । भिन्नकार्य्यकरत्वाद्भिन्नरूपत्वाद्घटपटादिवदित्यनुमानविरुद्धमद्वैतमित्यर्थः । घटाकाशादिष्वनैकान्तिकत्वं विवक्षितत्वात् ॥ श्लोकाक्षराणि व्युत्पादयति उच्यत इत्यादिना ॥ शयनादिसमाख्याश्च भिद्यन्त इति सम्बन्धः । तत्कृता इत्येतत् तच्छब्देन विवक्षितो घटाकाशभेदो गृह्यते चकारोऽवधारणार्थः । घटाकाशादीनामुक्तभेदत्वेऽपि विपक्षत्वाभावे कथमनैकान्तिकत्वमित्याशङ्क्याह । सर्व्वो-

**नाकाशस्य घटाकाशो विकारावयवौ यथा।
नैवात्मनः सदा जीवो विकारावयवौ तथा ॥७॥**

---

न्तरेण परोपाधिकृतं द्वारं यथैतत्। तद्वद्देहोपाधिभेदकृतेषु जीवेषु घटाकाशस्थानीयेष्वात्मसु निरूपणात्कृतो बुद्धिमद्भिर्निर्णयो निश्चय इत्यर्थः ॥ ६ ॥

ननु तत्र परमार्थकृत एव घटाकाशादिषु रूपकार्यादिभेदव्यवहार इति। नैतदस्ति। यस्मात्परमार्थाकाशस्य घटाकाशो न विकारः। यथा सुवर्णस्य रुचकादिर्यथा वाऽपां फेनबुद्बुदहिमादिर्नाप्यवयवः। यथा च वृक्षस्य शाखादिः। न तथाऽऽकाशस्य घटाकाशः। विकारावयवौ यथा तथा नैवात्मनः परस्य परमार्थसतो महाकाशस्थानीयस्य घटाकाशस्थानीयो जीवः सदा सर्व्वदा यथोक्त-

---

ऽयमिति ॥ उक्तेऽर्थे तृतीयं पादं विभजते। न चेति ॥ परोपाधिशब्देन घटकरकादिरुच्यते। दृष्टान्तमनूद्य दार्ष्टान्तिकं व्याचष्टे। यथैतदित्यादिना ॥ ६ ॥

घटाकाशादीनां विपक्षत्वाभावमाशङ्क्य परिहरति। नेत्यादिना ॥ घटाकाशादिराकाशस्य विकारोऽवयवो वेत्यङ्गीकारात्तत्रापि भेदस्य तात्त्विकत्वान्न विपक्षतेति लोकस्य व्यवस्थां चोद्यमुत्थापयति। नन्विति ॥ आकाशस्य निर्व्विकारत्वं निरवयवत्वञ्च लोकसिद्धं गृहीत्वा परिहरति नैतदस्तीति ॥ तत्र वैधर्म्योदाहरणद्वयमाह। यथेति ॥ घटाकाशादिराकाशाख्यस्य महाकाशस्यावयवो न भवतीत्यत्र व्यतिरेकदृष्टान्तमाह। यथा वृक्षस्येति ॥ उक्तदृष्टान्तानां दार्ष्टान्तिकमाह। न तथेति ॥ घटाकाशस्य महाकाशं प्रति विकारत्वमवयवत्वञ्च नास्तीत्युक्तम् ॥ दृष्टान्तत्वेनानूद्य दार्ष्टान्तिकं दर्शयन्नुत्तरार्द्धं व्याकरोति ॥ यथेत्यादिना ॥

यथा भवति बालानां गगनं मलिनं मलैः ।
तथा भवत्यबुद्धानामात्माऽपि मलिनो मलैः ॥ ८॥

---

दृष्टान्तवन्न विकारो नाप्यवयवः । अत आत्मभेदकृतव्यवहारो मृषैवेत्यर्थः ॥ ७ ॥

यस्माद्यथा घटाकाशादिभेदबुद्धिनिबन्धनो रूपकार्यादिभेदव्यवहारस्तथा देहोपाधिजीवभेदकृतो जन्ममरणादिव्यवहारः तस्मात्तत्कृतमेव क्लेशकर्मफलमलवत्त्वमात्मनो न परमार्थत इत्येतमर्थं दृष्टान्तेन प्रतिपिपादयिषन्नाह । यथा भवति लोके बालानामविवेकिनां गगनमाकाशं घनरजोधूमादिमलैर्मलिनं मलवन्न गगनं मलवत् तद्याथात्म्यविवेकिनाम् । तथा भवत्यात्मा परोऽपि यो विज्ञाता प्रत्यक् क्लेशकर्मफलमलैर्मलिनोऽबुद्धानां प्रत्यगात्मविवेक

---

अनैकान्तिकत्वेनानुमानस्यामानत्वे स्थिते फलितमाह । अत इति ॥ ७ ॥

जीवो ब्रह्मणो नांशो न विकारोऽपि तु ब्रह्मैवोपाध्यनुप्रविष्टं जीववद्भातमित्युक्तं तदयुक्तं ब्रह्मणः शुद्धत्वाज्जीवस्य रागादिमलवत्त्वादनेकत्वादेकत्वायोगादित्याशङ्क्य परमार्थतो जीवस्यापि नास्ति मलवत्त्वमित्याह । यथेति ॥ श्लोकस्य तात्पर्यमाह । यस्मादिति ॥ घटाकाशो मठाकाशः सूचीपाशाकाशश्चेति उपाधिनिमित्तो भेदस्तद्विषया बुद्धिस्तत्प्रयुक्तो रूपभेदोऽर्थक्रियाभेदो नामभेदश्चेति व्यवहारो नभसि यथोपलभ्यते तथा देहाद्युपाधिभेदप्रयुक्तो जीवभेदस्तत्कृतो जननमरणसुखदुःखादिव्यवहारो व्यवस्थितो यस्मादास्थीयते तस्मात्तेनाविद्याविद्यमानेन कृतमेवात्मनो रागादिमत्त्वं न वस्तुतोऽस्तीत्येतमर्थं दृष्टान्तद्वारा प्रतिपिपादयिषन्नादौ दृष्टान्तमाहेति योजना ॥ दृष्टान्त-

**मरणे सम्भवे चैव गत्यागमनयोरपि ।**
**स्थितौ सर्व्वशरीरेषु आकाशेनाविलक्षणः ॥ ६ ॥**

---

रहितानां नात्मविवेकवताम् । न ह्यू परदेशस्थसमुद्रमध्यारोपितोदकफेनतरङ्गादिमान् । तथा नात्मा अबुधारोपितक्लेशादिमलैर्मलिनो भवतीत्यर्थः ॥ ८ ॥

पुनरप्युक्तमेवार्थं प्रपञ्चयति घटाकाशजन्मनाशगमनागमनस्थितिवत्सर्व्वशरीरेष्वात्मनो जन्ममरणादिराकाशेनाविलक्षणः प्रत्येतव्य इत्यर्थः ॥ ६ ॥

---

भामनिविष्टान्यक्षराणि व्याचष्टे । यथेत्यादिना ॥ दार्ष्टान्तिकभागगतानामक्षराणामर्थमाह । तथेति ॥ यो हि प्रत्यागात्मा विज्ञाता सोऽप्यबुद्धानां मलिनो भवतीति सम्बन्धः ॥ अबुद्धानामित्येतद्व्याचष्टे ॥ प्रत्यगात्मेति ॥ अविवेकिभिरध्यारोपितेऽपि प्रत्यगात्मनो मलवत्त्वे मलप्रयुक्तं फलं तत्र वास्तवं भविष्यतीत्याशङ्क्याह । न हीति ॥ ८ ॥

ननु जीवो मरणानन्तरं धर्म्मानुरोधेन स्वर्गं गच्छति । अधर्म्मवशाच्च नरकं प्रतिपद्यते । धर्म्माधर्म्मयोश्च भोगेन क्षये पुनरागत्य योनिविशेषे सम्भवति । तत्र यावद्भोगं स्थित्वा पुनरपि परलोकाय प्रतिष्ठते ॥ एवमिहलोकपरलोकसञ्चरणव्यवहारविरुद्धमद्वैतमिति तत्राह । मरण इति ॥ श्लोकस्य तात्पर्य्यमाह । पुनरपीति ॥ आत्मनि सर्व्वो व्यवहारोऽविद्याकृतो वास्तवो नेत्युक्तोऽर्थः । आत्मनो हि गगनोपमस्य गत्यादेर्वस्तुतोऽसम्भवादविद्याकृतस्तस्मिन् गत्यादिरित्यर्थः ॥ ६ ॥

सङ्घाताः स्वप्नवत्सर्व्वे आत्ममायाविसर्जिताः ।
आधिक्ये सर्व्वसाम्ये वा नोपपत्तिर्हि विद्यते॥१०॥

---

घटादिस्थानीयास्तु देहादिसङ्घाताः स्वप्नदृश्यदेहादिवन्मायाविकृतदेहादिवच्चात्ममायाविसर्ज्जिता आत्मनो मायाऽविद्या तया प्रत्युपस्थापिता न परमार्थतः सन्तीत्यर्थः। यद्याधिक्यमधिकभावस्तिर्य्यग्देहाद्यपेक्षया देवादिकार्य्यकरणसङ्घातानां यदि वा सर्व्वेषां समतैव नैषामुपपत्तिसम्भवः सद्भावप्रतिपादको हेतुर्विद्यते। नास्ति हि यस्मात्तस्मादविद्याकृता एव परमार्थतः सन्तीत्यर्थः॥ १० ॥

---

ननु सङ्घातवद्व्यवहितानामप्युपाधीनां सत्यत्वात्तत्प्रयुक्तभेदस्यापि तथात्वादद्वैतानुपपत्तितादवस्थ्यमिति चेत्तत्राह । सङ्घाता इति ॥ देवादिदेहानां पूज्यतमत्वे नाधिक्याभ्युपगमात्सत्यत्वसिद्धिरित्याशङ्क्य देहभेदेषु चिदाधिक्ये मूढदृष्ट्या कल्पितेऽपि विवेकदृष्ट्या सर्व्वदेहाः पञ्चभूतात्मकत्वाविशेषादशेषसाम्ये वा स्वीकृते नास्ति सङ्घातेषु सत्यत्वे काचिदुपपत्तिरित्याह । आधिक्य इति ॥ पूर्व्वार्द्धाक्षराणि योजयति॥ घटादीति॥ मणिमन्त्रादिरूपां मायामिन्द्रजालप्रयोजकभूतां व्यावर्त्तयति । अविद्येति॥ विमता देहा न सत्या देहत्वात्प्रतिपन्नवदित्यर्थः॥ ब्रह्मादिदेहानामुत्कृष्टत्वान्नाविद्याकृतत्वमित्याशङ्क्य द्वितीयार्द्धं व्याचष्टे । यदीत्यादिना ॥ १० ॥

रसादयो हि ये कोशा व्याख्यातास्तैत्तिरीयके ।
तेषामात्मा परो जीवः खं यथा संप्रकाशितः ११॥

---

उत्पत्त्यादिवर्जितस्याद्वयस्यास्यात्मतत्त्वस्य श्रुतिप्रमाणकत्वप्रदर्शनार्थं वाक्यान्युपन्यस्यन्ते। रसादयोऽन्नरसमयः प्राणमयः इत्येवमादयः कोशा इव कोशा असेरिवोत्तरोत्तरस्यापेक्षया बहिर्भावात्पूर्व्वस्य व्याख्याता विस्पष्टमाख्यातास्तैत्तिरीयकशाखोपनिषद्वल्ल्यां तेषां कोशानामात्मा येनात्मना पञ्चापि कोशा आत्मवन्तोऽन्तरतमेन। स हि सर्व्वेषां जीवननिमित्तत्वाज्जीवः। कोऽसावित्याह। पर एवात्मा यः पूर्व्वं सत्यं ज्ञानमनन्तं ब्रह्मेति प्रकृतः। यस्मादात्मनः स्वप्नमायादिवदाकाशादिक्रमेण रसादयः कोशलक्षणाः सङ्घाता आत्ममायाविसर्ज्जिता इत्युक्तम्। स आत्माऽस्माभिर्यथा खं तथेति संप्रकाशितः। आत्मा ह्याकाश-

---

जीवस्याद्वितीयब्रह्मत्वमुपपत्त्यवष्टम्भेनोपपादितम्। इदानीन्तत्रैव तैत्तिरीयश्रुतेस्तात्पर्य्यमाह। रसादयो हीति॥ श्लोकस्य तात्पर्य्यमाह। उत्पत्त्यादीति॥ अक्षरार्थं कथयति। रसादय इति॥ आदिशब्देन मनोमयविज्ञानमयानन्दमया गृह्यन्ते। खड्गादेर्यथा कोशास्तदपेक्षया बहिर्भवन्ति तद्वदेते पञ्च कोशा व्यपदिश्यन्ते॥ तत्र हेतुमाह। उत्तरोत्तरस्येति॥ पूर्व्वपूर्व्वस्यान्नमयादेरुत्तरोत्तरप्राणमयाद्यपेक्षया बहिर्भावात् ब्रह्म सर्व्वान्तरं प्रतिष्ठाभूतमपेक्ष्यानन्दमयस्यापि बहिर्भावाविशेषादविशिष्टं पञ्चानामपि कोशत्वमित्यर्थः॥ अवशिष्टान्यक्षराणि व्याचष्टे। व्याख्याता इत्यादिना॥ तत्र जीवशब्दप्रवृत्तिं व्युत्पादयति। स हीति॥ विशिष्टं जीवशब्दार्थमाकाङ्क्षाद्वारा व्यावर्त्तयति। कोऽसा-

द्वयोर्द्वयोर्मधुज्ञाने परं ब्रह्म प्रकाशितम् ।

---

वदित्यादिश्लोकैः । न तार्किकपरिकल्पितात्मवत्पुरुषबुद्धि-
प्रमाणगम्य इत्यभिप्रायः ॥ ११ ॥

किञ्चाधिदैवमध्यात्मञ्च तेजोमयोऽमृतमयः पुरुषः
पृथिव्याद्यन्तर्गतो यो विज्ञाता पर एवात्मा ब्रह्म सर्व्वमिति
द्वयोर्द्वयोरद्वैतक्षयात् परं ब्रह्म प्रकाशितम् । क इत्याह । ब्रह्म-
विद्याख्यं मध्वमृतं अमृतत्वं मोदनहेतुत्वाद्विज्ञायते यस्मि-

---

न्नित्यादिना ॥ प्रकरणविच्छेदनार्थं प्रकरणमनुसन्धत्ते । यस्मादिति ॥
प्रकृतस्य परस्यात्मनः श्रौतत्वे फलितमाह । नेत्यादिना ॥ ११ ॥

मनुष्योऽहं प्राणोऽहं प्रमाताऽहं कर्त्ताऽहं भोक्ताऽहमिति पञ्चानां
विशिष्टानां यदेकं स्वरूपमनुगतं प्रत्यक्चैतन्यं तद्ब्रह्मैवेति जीवपरयो-
रैक्ये तैत्तिरीयश्रुतेस्तात्पर्य्यमुक्त्वा तत्रैव बृहदारण्यकश्रुतेरपि तात्पर्य्य-
माह । द्वयोरिति ॥ मधुब्राह्मणे सर्व्वेषु पर्य्यायेषु अधिदैवाध्यात्मविभ-
क्तयोः स्थानयोरयमेव स इति परं ब्रह्म प्रत्यक्प्रकाशितम् । अतोऽस्मिन्
बृहदारण्यकश्रुतेरपि ब्रह्मात्मैक्ये तात्पर्य्यमित्यर्थः ॥ तत्र दृष्टान्तमाह ॥
पृथिव्यामिति ॥ न केवलमैक्ये तैत्तिरीयश्रुतिरेव तात्पर्य्यं किन्तु बृह-
दारण्यकश्रुतेरपीत्याह । किञ्चेति ॥ अधिदैवं पृथिव्यादावध्यात्मञ्च
शरीरे तेजोमयो ज्योतिर्मयश्चैतन्यप्रधानोऽमृतमयोऽमरणधर्म्मा पुरुषः
पूर्णः पृथिव्यादौ शरीरे चान्तर्गतो यो विज्ञाता स पर एवात्मा । तेन
स विज्ञाता सर्व्वं पूर्णमपरिच्छिन्नं ब्रह्मैवेति परं ब्रह्म प्रकाशितमिति
सम्बन्धः । अपवादावस्थायामध्यारोपासम्भवात् द्वयोर्द्वयोरिति कथमु-
च्यते तत्राह । अद्वैतक्षयादिति ॥ द्वैतक्षयपर्य्यन्तं ब्रह्म प्रकाशितम् ।
द्वयोर्द्वयोरिति पुनरनुवादमात्रमित्यर्थः । मधुज्ञाने मध्वेव प्रकाशितं
न ब्रह्म इत्याशङ्क्य मधुज्ञानशब्दार्थं व्युत्पादयति । क इत्यादिना ॥ मन्दस्य

**पृथिव्यामुदरे चैव यथाऽऽकाशः प्रकाशितः ॥१२॥**
**जीवात्मनोरनन्यत्वमभेदेन प्रशस्यते ।**

---

न्निति मधुज्ञानं मधुब्राह्मणं तस्मिन्नित्यर्थः । किमिवेत्याह ॥ पृथिव्यामुदरे चैव यथैक आकाशोऽनुमानेन प्रकाशितो लोके तद्वदित्यर्थः ॥ १२ ॥

यद्युक्तितः श्रुतितश्च निर्द्धारितं जीवस्य परस्य चात्मनोरनन्यत्वमभेदेन प्रशस्यते स्तूयते शास्त्रेण व्यासादिभिश्च । यच्च सर्व्वप्राणिसाधारणं स्वाभाविकं शास्त्रबहिष्कृतैः कुतार्किकैर्विरचितं नानात्वदर्शनं निन्द्यते । न तु तद्द्वितीयमस्ति । द्वितीयाद्वै भयं भवति । उदरमन्तरं कुरुते ।

---

क्वचिदाश्रितत्वं घटवदनुमीयते । तच्च शब्दाधिकरणं सामान्यतः सिद्धं पारिशेष्यादाकाशमिति सिद्धमिति । तच्च कल्पनालाघवादेकमेवेति गम्यते । तथा च बहिरन्तश्चैकमेवाकाशमनुमानप्रामाण्यादधिगतम् ॥ तथाधिदैवमध्यात्मञ्च ब्रह्म प्रत्यग्भूतं सिद्धमित्युत्तरार्द्धं व्याचष्टे । किमेवेत्यादिना ॥ १२ ॥

एतच्चैकत्वे श्रुतीनां तात्पर्य्यमित्याह । जीवात्मनोरिति ॥ अभेदेन ब्रह्मविद्ब्रह्मैव भवतीत्यादिना ब्रह्मभावफलवादेनेत्यर्थः । यत् प्रशस्यते तद्विधेयमित्यादिन्यायात् । एकत्वदर्शने फलवादोपपत्त्युपलम्भादेकत्वं प्रशस्तत्वाद्विवक्षितमिति भावः । यच्चानेकत्वं सर्व्वप्राणिसाधारणं तन्निन्द्यमानं दृश्यते । यन्निन्द्यते तन्निषिध्यत इति न्यायान्नानात्वं शास्त्रार्थो न भवतीत्याह । नानात्वमिति ॥ तदुभयमेकत्वप्रशंसनं नानात्वनिन्दनञ्चैकत्वमेव शास्त्रीयमित्यभ्युपगमे सति युक्तमिति फलितमाह । तदेवं हीति ॥ श्लोकाक्षराणि व्याचष्टे । यदिति ॥ अनन्यत्वाभावशङ्कां व्यावर्त्त्य करणत्वं दर्शयति ॥ अभेदेनेति ॥ तत्प्रशस्यते शास्त्रेणेति तत्पदमादाय व्याख्येयम् । शास्त्रेणाभेदवेदनेन फलवादेनेत्यर्थः । व्याव-

# नानात्वं निन्द्यते यच्च तदेवं हि समञ्जसम्॥१३॥

अथ तस्य भयं भवति। इदं सर्व्वम्। यदयमात्मा। मृत्योः स मृत्युमाप्नोतीत्यादिवाक्यैश्चाख्यैव ब्रह्मविद्भिः। यच्चैतच्च-देवं हि समञ्जसं सम्यग्बोधं न्याय्यमित्यर्थः। यास्तु तार्किकापरिकल्पिताः कुदृष्टयस्ता अमूर्त्तो निरूप्यमाणा न घटनां प्राप्नुवन्तीत्यभिप्रायः॥ १३॥

---

परापरादिभिश्च वेदार्थं व्यासाचार्य्यैरेकत्वं सूच्यते॥ वासुदेवः सर्व्वमिति स महात्मा सुदुर्लभः। अहं हरिः सर्व्वमिदं जनार्दनो नान्यत्ततः कारण-कार्य्यजातमित्यादिवाक्यैरित्याह। व्यासादिभिश्चेति॥ द्वितीयार्द्धं विभजते। यच्चेति॥ निन्द्यत इति वचनद्वयेनोपक्रमाद्दृष्टव्यम्। अविद्या-मोहितात्मानः पुरुषा भिन्नदर्शिनः। विभेन न कृतं पापं चौरेणात्मापहारिणेत्यादिवाक्यैर्व्यासादयोऽपि द्वैतदर्शनं निन्दन्तीत्याह। अन्यै-श्चेति॥ एवमनेकत्वदर्शनस्य निन्दितत्वेन निषिद्धत्वाच्चानेकत्वं शास्त्रीय-मित्युक्ता चतुर्थपादार्थमाह। यच्चैतदिति॥ विषयभेदेन प्रशंसनं निन्दन-ञ्चेत्यर्थः। एवं हीति॥ द्वैतस्याशास्त्रीयत्वमद्वैतस्यैव तत्त्वात् सर्व्वगम्यत्व-मित्यङ्गीकारे सतीत्यर्थः। भेददृष्टीनामपि न्याय्यत्वाविशेषाद्द्वैतदर्शन-निन्दनस्य कुतो न्याय्यत्वमित्याशङ्क्याह। यास्त्विति॥ या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः। सर्व्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृता इति मनुवचनादित्यर्थः। न्यायविरोधादपि भेदवादानामसमञ्ज-सत्वमित्याह। निरूप्यमाणा इति॥ वैशेषिकवैनाशिकादिकल्पना भेदानु-सारिण्यां भेदश्च परस्पराश्रयतादिदोषदूषितो न प्रमीयते। तेन भेद-वादानामुत्प्रेक्षामूलानामसमञ्जसतेत्यर्थः॥ १३॥

# जीवात्मनोः पृथक्त्वं यत्प्रागुत्पत्तेः प्रकीर्त्तितम्।

---

ननु श्रुत्यापि जीवपरमात्मनोः पृथक्त्वं यत्प्रागुत्पत्तेरुत्पत्त्यर्थौपनिषद्वाक्येभ्यः। पूर्व्वं प्रकीर्त्तितं कर्म्मकाण्डे। अनेकशः कामभेदत इदंकामोऽदःकाम इति। परश्च सद्दाधारपृथिवीद्यामित्यादिमन्त्रवर्णैः तत्र कथं कर्म्मज्ञानकाण्डवाक्यविरोधे ज्ञानकाण्डवाक्यार्थस्यैवैकत्वस्य सामञ्जस्यमवधार्य्यत इति। अत्रोच्यते॥ यतो वा इमानि भूतानि जायन्ते। यथाऽग्नेः क्षुद्रा विस्फुलिङ्गाः। तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः। तदैक्षत। तत्तेजोऽसृजतेत्याद्युत्पत्त्यर्थौपनिषद्वाक्येभ्यः प्राक् पृथक्त्वं कर्म्मकाण्डे प्रकीर्त्तितं यत्तन्न परमार्थं किन्तर्हि गौणम्।

---

भेदवादानामसत्त्वे ज्ञानात्ममूलत्वं श्रुतिमूलत्वादित्याशङ्का परिहरति। जीवात्मेति॥ उत्पत्तिर्व्युत्पत्तिः सम्यक् ज्ञानं तदर्थौपनिषदः प्रवृत्त्यपेक्षया प्राक्प्रवृत्तकर्म्मकाण्डेन यत्परापरयोर्नानात्वमुक्तं तदोदनं पचतीति भविष्यत्प्रवृत्त्या तण्डुलेष्वोदनत्ववत् गौणमेव न मुख्यभेदार्थत्वं श्रुतेर्युज्यते। भेदस्यापूर्व्वत्वपुरुषार्थत्वयोरभावादित्यर्थः॥ श्लोकव्याख्यानात्माशङ्कामाह। नन्विति॥ न केवलमस्माभिरुत्प्रेक्षितमिदं किन्तु श्रुत्यापि दर्शितमित्यपरोऽर्थः। भेदपरायाः श्रुतेस्तात्पर्य्यविकल्पमभ्याधं सूचयति। अनेकश इति॥ कर्म्मकाण्डे तत्तत्कामनाभेदेन नियोज्य भेदसिद्धावपि कथं जीवपरयोर्भेदः सिध्यति परस्य तत्रानुक्तत्वादित्याशङ्क्याह॥ परश्चेति॥ हिरण्यगर्भः समवर्त्तताग्र इति मन्त्रे प्रकृतो हिरण्यगर्भः सर्व्वनाम्ना परामृश्यते। स इमां पृथिवीं द्यामपि धृतवान्। अन्यथा गुरुत्वात्तयोरवस्थानायोगात्। न च हिरण्यगर्भातिरिक्तमीश्वरं परे बुध्यन्ते मन्त्रवर्णैः। परश्च प्रकीर्त्तित इति सम्बन्धः। कर्म्मकाण्डार्थं ज्ञानकाण्डे-

भविष्यद्वृत्त्या गौणं तन्मुख्यत्वं हि न युज्यते॥१४॥

महाकाशघटाकाशादिभेदवत्। यथौदनं पचतीति भविष्यद्वृत्त्या तद्वत्। न हि भेदवाक्यानां कदाचिदपि मुख्यभेदार्थत्वमुपपद्यते। स्वाभाविकाविद्यावत् प्राणिभेददृष्ट्यनुवादित्वाद्भेदवाक्यानाम्। इह चोपनिषत्सूत्पत्तिप्रलयादिवाक्यैर्जीवपरमात्मनोरेकत्वमेव प्रतिपिपादयिषितम्। तत्त्वमसि अन्योऽसावन्योऽहमस्मीति न स वेदेत्यादिभिः। अत उपनिषत्स्वेकत्वं श्रुत्या प्रतिपादयिषितं भविष्यतीति भाविनामेकत्वदृष्टिमाश्रित्य लोके भेददृष्ट्यनुवादो गौण एवेत्यभिप्रायः। अथवा तदैक्षत। तत्तेजोऽसृजतेत्याद्युत्पत्तेः प्रागेकमेवाद्वितीयमित्ये-

---

नापबाध्य प्रागवस्थायामेवैकत्वस्य सामञ्जस्यमवधार्य्यतामित्याशङ्क्य बाध्यबाधकभावनिर्द्धारणे कारणमवधारणाभावमित्याह। तन्नेति॥ लोकाचारैरुत्तरमाह। अन्येत्यादिना॥ पृथक्त्वस्य गौणत्वे प्राग्युक्तमेव दृष्टान्तमाह। महाकाशेति॥ तत्रैव लोकप्रसिद्धमुदाहरणमाह। यथेति॥ मुख्यत्वं हीत्यादिना व्याचष्टे। न हीति॥ भेदस्यापूर्वत्वाद्यभावाच्च वाक्यानां तत्परत्वं तत्परस्तत्परयोश्च तत् परं च यत् बलवदिति न्यायादद्वैतवाक्यस्यैव सामञ्जस्यमित्यर्थः॥ अद्वैतवाक्यानामपि कथमद्वैते तात्पर्य्यमित्याशङ्क्यापूर्व्वार्थत्वादुपपत्तिमत्त्वाच्चेत्याह। इह चेति॥ अद्वैतं तावन्मानान्तरागोचरत्वादपूर्व्वमेवाद्वितीयमिति प्रागवस्थायां ब्रह्माद्वितीयं श्रुतम्। तदेवेदं स्रष्टा। तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेरनुप्रविष्टो जीवोऽभिधीयते। तेन जीवस्य ब्रह्मता सम्भवतीत्युपपत्त्यापि श्रुतेरद्वैतार्थत्वं गम्यते। सृष्ट्यादिश्रुतीनामद्वैते तात्पर्यं न सृष्ट्यादावित्यनन्तरमेव वक्ष्यते। तस्मादद्वैते श्रुतेस्तात्पर्य्यात्तदर्थस्यैव तात्त्विकतेत्यर्थः। न केवलमुपपत्तेरेवाद्वैते श्रुतेस्तात्पर्यं किन्तु नञत्वोऽभ्या-

लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा ।

कत्वं प्रकीर्त्तितम् । तदेव च तत्सत्यं स आत्मा तत्त्वमसीत्यै-कत्वं भविष्यतीति तां भविष्यद्वृत्तिमपेक्ष्य यज्जीवात्मनोः पृथक्त्वं यत्र क्वचिद्वाक्ये गम्यमानं तद्गौणम् । यथौदनं पचतीति तद्वत् ॥ १४ ॥

ननु यद्युत्पत्तेः प्रागजं सर्व्वमेकमेवाद्वितीयं तथाप्युत्-पत्तेरूर्द्धं जातमिदं सर्वं जीवाश्च भिन्ना इति । नैवम् । अन्यार्थत्वादुत्पत्तिश्रुतीनाम् । पूर्वमपि परिहृत एवायं दोषः । स्वप्नवदात्ममायाविसर्जिताः सङ्घाताः घटाकाशोत्-पत्तिभेदादिवज्जीवानामुत्पत्तिभेदादिरिति । इत एवोत्-

स्यादपीत्याह । तत्त्वमिति ॥ भेददृष्टेरपवादाच्च श्रुतेरद्वैते तात्पर्यं प्रति-भातीत्याह ॥ अन्योऽसाविति ॥ आदिशब्देनाद्वैतवादीनि द्वैतनिषेधानि च वचनान्तराणि च गृह्यन्ते । एकत्वमेव प्रतिपिपादयिषितमिति पूर्वेण सम्बन्धः ॥ एकत्वे श्रुतेस्तात्पर्य्ये सिद्धे तृतीयपादावष्टम्भेन फलितमाह । अत इति ॥ श्लोकस्य साध्याहारं व्याख्यानान्तरमाह । अथ वेत्या-दिना ॥ १४ ॥

सृष्ट्यादिश्रुतिषु यद्यपि सर्वशाद्देव सृष्ट्यादिभेददृष्टेरद्वैतानुपपत्ति-रित्याशङ्क्याह । मृल्लोहेति ॥ उत्पत्त्यादिश्रुतीनां स्वार्थनिष्ठत्वमुपेत्य व्यावर्त्त्य श्लोद्यमुत्थापयति । नन्विति ॥ तासां स्वार्थनिष्ठत्वाभावान्नैरव-काशश्चोद्यमिति परिहरति । नैवमिति ॥ परिहृतत्वाच्च भेदश्चोद्यं सावकाशमित्याह । पूर्व्वमपीति ॥ यदि प्रकृतोत्पत्त्यादिश्रुतिभ्यः सर्वासां-दुपक्रमोपसंहारैकरूप्यं तात्पर्य्यलिङ्गमाश्रित्याङ्गीकृत्य तथा सृष्ट्यादिश्रुतेः स्वार्थपरत्वं परिहृतं तर्हि पुनरुपन्यासो वृथा स्यादित्याशङ्क्याह । इत एवेति ॥ उत्पत्त्यादिश्रुतीनां मिथ्यासृष्टिपरत्वं पूर्व्वमुक्तम् । इह तु तासां ब्रह्मात्मैक्ये तात्पर्य्यप्रतिपादनेच्छया पुनरुपन्यासः क्रियत इत्युत्तर-

उपायः सोऽवताराय नास्ति भेदः कथञ्चन ॥१५॥

पत्तिभेदादिश्रुतिभ्य आत्मन्येव पुनस्तत्पत्तिश्रुतीनामैदंपार्य-
प्रतिपिपादयिषयोपन्यासः। मृल्लोहविस्फुलिङ्गादिदृ-
ष्टान्तोपन्यासैः सृष्टिर्या चोदिता प्रकाशिता अन्यथा च स
सर्वः सृष्टिप्रकारो जीवपरमात्मैकत्वबुद्ध्यवतारायोपायोऽस्मा-
कम्। यथा प्राणसंवादे वागाद्यासुरपाप्मवेधाद्याख्यायिका
कल्पिता प्राणवैशिष्ट्यबोधावताराय तदप्यसिद्धमिति चेत्।
न। शाखाभेदेष्वन्यथा च प्राणादिसंवादश्रवणात्। यदि हि
वादः परमार्थ एवाभूदेकरूप एव संवादः सर्वशाखास्व-
श्रोष्यद्विरुद्धानेकप्रकारेण नाश्रोष्यत्। श्रूयते तु तस्मान्न

---

माह। इह पुनरिति॥ पादत्रयगताक्षराणि योजयति। मृदित्या-
दिना॥ यः शब्दस्तथा प्रतीयते न स श्रुत्यर्थो भवति किन्तु तात्पर्यमस्य-
स्यैव श्रुत्यर्थतेत्यत्र दृष्टान्तमाह। यथेति॥ वागादीनां प्राणानामहं
श्रेयानिति मिथः सम्भूय संवादस्तत्र याऽऽख्यायिका श्रूयते नासौ श्रुत्यर्थो
भवति। वागादीनामचेतनत्वात्। तथा सृष्ट्यादिश्रुतिरपि न स्वार्थे
तात्पर्यवतीत्यर्थः॥ उदाहरणान्तरं सूचयति। वागादीति॥ देवासुर-
संग्रामे देवास्तावदसुरानभिभवितुमुपचक्रमिरे। वागादींश्चोद्गातृत्वेन
वव्रिरे। तांश्च वागादीन् कल्याणासङ्गेन पाप्मना असुरा विविधु-
रित्याद्याख्यायिका च न यथाश्रुतार्था। वागादीनां वागभावेनोद्गाना-
सामर्थ्यात्। किन्त्वसुरधर्षितत्वात्प्राणोत्क्रान्तौ देहपातप्रसिद्धेश्च प्राणः
श्रेष्ठो भवतीति प्राणवैशिष्ट्यनिश्चये बुद्ध्यवतारशेषत्वेन सा कल्पिता।
तथैव प्रकृतेऽपि सृष्ट्यादिश्रुतेः स्वार्थे तात्पर्याभावात्तत्कार्यस्य तद्व्यति-
रेकेणाभावात्तदेवास्तीत्यद्वैतबुद्ध्यवतारोपायत्वेन सृष्ट्यादिप्रक्रिया कल्पि-
तेत्यर्थः। देवताशब्दप्रयोगाच्चेतनत्वं वागादीनामिति मुख्यार्थत्वं संवा-
दादिश्रवणस्य। अतोऽसिद्धमुदाहरणमिति शङ्कते। तदपीति॥ संवाद-

तादर्थ्यं संवादश्रुतीनाम्। तथोत्पत्तिवाक्यानि प्रत्येतव्यानि। कल्पसर्गभेदात्संवादश्रुतीनाञ्च प्रतिसर्गमन्यथात्वमिति चेन्न। निष्प्रयोजनत्वाद्यथोक्तबुद्ध्यवतारप्रयोजनव्यतिरेकेण। न ह्यन्यत्प्रयोजनवत्त्वं संवादोत्पत्तिश्रुतीनां शक्यं कल्पयितुम्। तथात्वप्रतिपत्तये ध्यानार्थमिति चेन्न। कलहोत्पत्तिप्रलयानां प्रतिपत्तेरनिष्टत्वात्। तस्मादुत्पत्त्यादि-

---

विसंवादयोरश्रुतेः श्रुतेऽर्थे प्रामाण्यमर्थवादानामित्यङ्गीकारादविरोधापेक्षमेवार्थवादप्रामाण्यम्। इह तु परस्परव्याहतिदर्शनादप्रामाण्यमिति परिहरति। न प्राणाभेदेष्विति॥ प्राणादीत्यादिशब्देन मुख्यप्राणातिरिक्ता वागादयो गृह्यन्ते। उक्तमेव समाधानं व्यतिरेकमुखेन विवृणोति। यदि हीति॥ क्वचिद्विवदमानानां प्राणानां स्वयमेव निर्णेतुमशक्तानां प्रजापतिमुपगतानां यस्मिन्नुत्क्रान्ते शरीरमिदं पापिष्ठतरमिव तिष्ठति स वः श्रेष्ठो भवतीति तेनोक्तानां प्रवासः श्रूयते। क्वचित्तु स्वातन्त्र्येण। यस्मिन्नुत्क्रान्ते शरीरमिदं पतति स नः श्रेयानित्यालोच्य प्रवासो व्यपदिश्यते। क्वचित्पुनर्वाक्चक्षुःश्रोत्रमनांसीति मुख्यप्राणातिरिक्ताश्चत्वारः श्रूयन्ते। क्वचित्त्वगादयोऽपीत्येवं विरुद्धानेकप्रकारेण संवादश्रवणमस्तीत्याह। श्रूयते त्विति॥ प्राणसंवादश्रुतीनां मिथो विरोधान्नास्ति स्वार्थे प्रामाण्यमित्युपसंहरति। तस्मादिति॥ उक्तदृष्टान्तानुरोधादुत्पत्तिवाक्यान्यपि न विवक्षितार्थानि। क्वचिदाकाशादिक्रमेण सृष्टिः क्वचिदग्न्यादिक्रमेण क्वचित्प्राणादिक्रमेण क्वचिदक्रमेणेत्येवं परस्परपराहतिदर्शनादित्याह। तथेति॥ प्रतिकल्पं सृष्टिभेदस्येष्टत्वादुक्तश्रुतीनामपि प्रतिसर्गमन्यथात्वाद्व्यवस्थया अर्थवत्त्वं स्यादिति शङ्कते। कल्पेति॥ सिद्धे प्रामाण्ये व्यवस्था कल्प्यते। तदेव नाद्यापि सिद्धमित्युत्तरमाह। नेत्यादिना॥ तासां प्रयोजनवत्त्वं त्वयापि स्वीकर्तव्यमित्याशङ्क्याह। यथोक्तेति॥ प्रयोजनान्तराभावं प्रकटयति। न हीति॥ प्राणादिभावप्राप्तये ध्यानार्थं प्राणादिसङ्कीर्तनमिति शङ्कते। तथात्वेति॥ तं यथा यथोपासते तदेव भवतीति श्रुतेः। न्यायसाम्यात्कल-

आश्रमास्त्रिविधा हीनमध्यमोत्कृष्टदृष्टयः ।

---

श्रुतय आत्मैकत्वबुद्ध्यवतारायैव नान्यार्थाः कल्पयितुं युक्ताः। अतो नास्त्युत्पत्त्यादिकृतो भेदः कथञ्चन ॥ १५ ॥

यदि पर एवात्मा नित्यशुद्धबुद्धमुक्तस्वभाव एकः परमार्थः सदेकमेवाद्वितीयमित्यादिश्रुतिभ्योऽसदन्यत्किमर्थेयमुपासनोपदिष्टा। आत्मा वा अरे द्रष्टव्यः। य आत्माऽपहतपाप्मा स क्रतुं कुर्व्वीत। आत्मेत्येवोपासीतेत्यादिश्रुतिभ्यः। कर्म्माणि चाग्निहोत्रादीनि। शृणु तत्र कार-

---

णादिध्यानात्तत्प्राप्तिः फलं स्यात्। तच्चानिष्टमिति परिहरति। नेत्यादिना॥ प्राणसंवादश्रुतीनां प्राणवैशिष्ट्यावबोधावतारार्थत्वमुपपाद्य दार्ष्टान्तिकमुपसंहरति। तथादिति॥ उत्पत्त्यादिश्रुतीनामुत्पत्त्यादिपरत्वाभावे फलितञ्चतुर्थपादावष्टम्भेन स्पष्टयति। अत इति॥ १५॥

उत्पत्त्यादिश्रुतिविरोधमद्वैते परिहृत्योपासनविध्यनुपपत्तिविरोधं परिहरति। आश्रमा इति॥ आश्रमिणो वर्णिनश्च कार्य्यब्रह्मोपासका हीनदृष्टयः। कारणब्रह्मोपासका मध्यमदृष्टयः। अद्वितीयब्रह्मदर्शनशीलास्तूत्तमदृष्टयः। एवमेतेषु त्रिविधेषु मध्ये तेषां मन्दानां मध्यमानाञ्च उत्तमदृष्टिप्रवेशार्थं दयालुना वेदेनोपासनोपदिष्टा। तथा चोपासनानुष्ठानद्वारेणोत्तमामेकत्वदृष्टिं क्रमेण प्राप्ता उत्तमेष्वेवान्तर्भविष्यन्तीत्यर्थः॥ श्लोकव्यावर्त्त्यामाशङ्कामाह। यदीति॥ तस्यैव परमार्थतः सत्त्वे प्रमाणमाह। एकमेवेति॥ द्वैतप्रतीतेर्मिथ्यात्वाद्द्वैतविषयत्वे नाविरोधमाह। असदिति॥ अद्वैतस्यैव वस्तुत्वे ध्यानविधिविरोधमाह। किमर्थेति॥ उपासनोपदेशमेव विशदयति। आत्मेति॥ तत्र हि निदिध्यासितव्य इत्युपासनोपदिश्यते। य आत्मेत्यादौ तु स विजिज्ञासितव्य इति ध्यानविधिः। स क्रतुमित्यत्र सशब्देन शमादिमानधिकारी परामृश्यते। अद्वैतस्यैव वस्तुत्वे कर्म्मविधिविरोधोऽपि प्रसरतीत्याह।

उपासनोपदिष्टेयं तदर्थमनुकम्पया ॥ १६ ॥

णाम् । आश्रमा आश्रमिणोऽधिकृताः । वर्णिनश्च मार्गगाः । आश्रमशब्दस्य प्रदर्शनार्थत्वात्त्रिविधाः । कथम् । हीनमध्यमोत्कृष्टदृष्टयः । हीना निकृष्टा मध्यमा उत्कृष्टा च दृष्टिर्दर्शनसामर्थ्यं येषां ते मन्दमध्यमोत्तमबुद्धिसामर्थ्योपेता इत्यर्थः । उपासनोपदिष्टेयं तदर्थं मन्दमध्यमदृष्ट्याश्रमाद्यर्थं कर्म्माणि च । न चात्मैक एवाद्वितीय इति निश्चितोत्तमदृष्ट्यर्थं दयालुना वेदेनानुकम्पया सन्मार्गगाः सन्तः कथमिमामुत्तमामेकत्वदृष्टिं प्राप्नुयुरिति । यन्मनसा न मनुते येनाहुर्मनो मतं तदेव ब्रह्म त्वं विद्धि ।

---

कर्म्माणि चेति किमर्थान्युपदिष्टानीति सम्बन्धः । अद्वैताधिकारिणोऽधिकार्य्यन्तरं प्रति विधिद्वयं सावकाशमिति परिहरति । इत्थिति ॥ तत्रेत्युपासनोपदेशः कर्म्मोपदेशश्च गृह्यते ॥ तदेव कारणमन्तरयोजनया प्रकटयति । आश्रमा इति ॥ आश्रमशब्देनाश्रमिणो गृह्यन्तां वर्णिनस्तु कथं गृह्येरन्नित्याशङ्क्याह । आश्रमेति ॥ शूद्रान् व्यावर्त्य त्रैवर्णिकानामेव ग्रहणार्थं मार्गगा इति विशेषणम् ॥ त्रैविध्यमेवाकाङ्क्षाद्वारा स्फोरयति । कथमित्यादिना । कार्य्यब्रह्मविषयत्वान्निकृष्टत्वम् । मध्यमत्वं कारणब्रह्मविषयत्वात् । उत्कृष्टत्वमद्वैतविषयत्वादिति द्रष्टव्यम् । एवं पूर्व्वार्द्धं व्याख्यायोत्तरार्द्धं व्याकरोति । उपासनेति ॥ कर्म्मोपदेशस्यापि तदर्थत्वमाह । कर्म्माणि चेति ॥ व्यावर्त्त्यां शङ्कां दर्शयति । न चेति ॥ वेदेनोपासनाद्युपदेशे मन्दानां मध्यमानाञ्च कथमनुग्रहः सिध्यतीत्याशङ्क्याह । सन्मार्गगा इति ॥ प्राप्नुयुरित्युपासनोपदिष्टा । कर्म्माणि चेति पूर्व्वेण सम्बन्धः । उपास्यं ब्रह्मैव न भवतीति प्रतिषेधात् मन्दमध्यमदृष्टिविषयत्वमुपासनस्य प्रतिभातीत्याह । यन्मनसेति ॥ अद्वैतदृष्टेर्नान्तु वर्णा-

स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिता दृढम्।

---

नेदं यदिदमुपासते तत्त्वमसि आत्मैवेदं सर्वमित्यादिश्रुतिभ्यः ॥ १६ ॥

शास्त्रोपपत्तिभ्यामवधारितत्वात् अद्वयात्मदर्शनं सम्यग्दर्शनं तद्बाह्यत्वान्मिथ्यादर्शनमन्यत्। इतश्च मिथ्यादर्शनं द्वैतिनां रागद्वेषादिदोषास्पदत्वात् कथं सिद्धान्तव्यवस्थासु स्वसिद्धान्तरचनानियमेषु कपिलकणादबुद्धार्हदादिदृष्ट्यनुसारिणो द्वैतिनो निश्चिताः। एवमेवैष परमार्थो नान्यथेति तत्र तत्रानुरक्ताः प्रतिपक्षं चात्मनः पश्यन्तस्तं द्विषन्त इत्येवं रागद्वेषोपेताः स्वसिद्धान्तदर्शननिमित्तमेव परस्पर-

---

त्मभेदाभिमानाभावादेव नोपासनं कर्म वा सम्भवतीत्याह। तत्त्वमसीति ॥ १६ ॥

अद्वैतदर्शनस्योपासनादिविधिविरोधाभावेऽपि मतान्तरैर्विरोधेऽस्तीत्याशङ्क्य तेषां भ्रान्तिमूलत्वान्नैवमित्याह। स्वसिद्धान्तेति ॥ श्लोकस्य तात्पर्यं वक्तुं भूमिकां करोति। शास्त्रेति ॥ तद्बाह्यत्वादित्यत्र तच्छब्देन शास्त्रोपपत्ती गृह्येते। द्वैतदर्शनस्य मिथ्यादर्शनत्वे हेत्वन्तरपरत्वमवतारितस्य श्लोकस्य दर्शयति। इतश्चेति ॥ इतःशब्दार्थमेव दर्शयति। द्वैतिनामिति ॥ आदिशब्देन मदमानादयो गृहीताः। स्वीयं स्वीयं सिद्धान्तं व्यवस्थापयितुं तत्त्वज्ञानमधिकृत्य प्रवृत्तानां वादिनां कुतो दोषास्पदत्वमित्याक्षिपति। कथमिति ॥ श्लोकाक्षरयोजनया परिहरति। स्वसिद्धान्तेत्यादिना ॥ निश्चयमेव स्फोरयति। एवमेवेति ॥ रागास्पदत्वेऽपि तेषां द्वेषास्पदत्वं कथमित्याशङ्क्याह। प्रतिपक्षमिति ॥ उत्तरार्धं विभजते। स्वसिद्धान्तेति ॥ यदि वादिनां प्रत्येकं स्वसिद्धान्तेनोपसङ्गृहीतं दर्शनं तन्निर्धारणार्थमन्योन्यं वादिनो विरोधमाचरन्तो दृश्यन्ते। न च तैरद्वैतदर्शनं विरुध्यमानमध्यवसीयते। यथा स्वकीय-

परस्परं विरुध्यन्ते तैरयं न विरुध्यते ॥ १७ ॥
अद्वैतं परमार्थो हि द्वैतं तद्भेद उच्यते ।

---

मन्योन्यं विरुध्यन्ते । तैरन्योन्यविरोधिभिरस्मदीयोऽयं वैदिकः सर्वानन्यत्वादात्मैकत्वदर्शनपक्षो न विरुध्यते । यथा स्वहस्तपादादिभिः । एवं रागद्वेषानास्पदत्वादात्मैकत्वबुद्धिरेव सम्यग्दर्शनमित्यभिप्रायः ॥ १७ ॥

केन हेतुना तैर्न विरुध्यत इत्युच्यते । अद्वैतं परमार्थो हि यस्माद्द्वैतं नानात्वमस्याद्वैतस्य भेदस्तस्य कार्य्यमित्यर्थः । एकमेवाद्वितीयम् । तत्तेजोऽसृजतेति श्रुतेः । उप-

---

करचरणादिभिराघाते कदाचिदाचरितेऽपि द्वेषो न जायते । परबुद्ध्यभावात्तथा द्वैताभिमानिभिरुपद्रवे कृते कृतेऽपि नाद्वैतदर्शिनस्तेषु द्वेषो जायते । सर्व्वानन्यत्वात्परबुद्ध्यभावादित्यर्थः । अद्वैतदर्शनस्य सम्यग्दर्शनत्वं प्रतिज्ञातम् । कथं प्रदर्शितया प्रक्रियया प्रतिपन्नमित्याशङ्क्याह । एवमिति ॥ १७ ॥

द्वैतपक्षैरद्वैतपक्षस्य विषयद्वारके विरोधेऽधिगम्यमाने कथमविरोधमात्रो युक्तिरित्याशङ्क्य समतपक्षोपलोचनया तावदविरोधमाह । अद्वैतमिति ॥ मिथ्याभूतेन द्वैतेनाद्वैतस्याविरोधेऽपि परमार्थभूतेन तेन विरोधः स्यादित्याशङ्क्य तथाविधं द्वैतमेव नास्तीति मत्वाह । तेषामिति ॥ द्वैतिनां परमार्थत्वेनापरमार्थत्वेन च द्वैतमेव व्यवहारगोचरीभूतम् । तत्र सम्प्रतिपन्नद्वैतवन्मिथ्यात्वेवं स्थिते न द्वैतेनाद्वैतस्य विरोधः शक्यशङ्को भवतीत्यर्थः ॥ श्लोकप्रतिषेध्यं प्रश्नं करोति । केनेति ॥ श्लोकाक्षराणामर्थमाचक्षाणो हेतुमाह । उच्यत इति ॥ द्वैतस्याद्वैतकार्य्यत्वे प्रमाणमाह । एकमेवेति ॥ श्रुतिप्रामाण्याद्द्वैतस्याद्वैतकार्य्यत्वावगमात्कार्य्यस्य च कारणात् भेदेन सत्त्वनिषेधात्तत्त्वमित्यवधारणाद्द्वैतदर्शनं द्वैतदर्शनेन विरुद्धमित्यर्थः । अद्वैतदर्शनं द्वैतदर्श-

तेषामुभयथा द्वैतं तेनायं न विरुध्यते ॥ १८ ॥

---

पत्तेश्च। स्वचित्तस्पन्दनाभावे समाधौ मूर्च्छायां सुषुप्तौ चाभावात्। अतस्तद्द्वैतं उच्यते द्वैतम्। द्वैतिनान्तु तेषां परमार्थतश्चोभयथापि द्वैतमेव। यदि च तेषां भ्रान्तानां द्वैतदृष्टिरस्माकमद्वैतदृष्टिरभ्रान्तानां तेनायं हेतुनास्मत्पक्षो न विरुध्यते तैः। इन्द्रो मायाभिः। न तु तद्द्वितीयमस्तीतिश्रुतेः। यथा मत्तगजारूढ उन्मत्तं भूमिष्ठं प्रति गजारूढोऽहं वाहय मां प्रतीति ब्रुवाणमपि तं प्रति न वाहयत्यविरोधबुद्ध्या तद्वत्। ततः परमार्थतो ब्रह्म विदात्मैव द्वैतिनाम्। तेनायं हेतुनास्मत्पक्षो न विरुध्यते तैः ॥ १८ ॥

---

नैरविरुद्धमित्यत्रैव युक्तिमाह। उपपत्तेश्चेति। तामेवोपपत्तिं सङ्क्षिप्य दर्शयति। स्वचित्तेति॥ अनुभवाद्यवस्थायां स्वकीयचित्तस्पन्दनाभावे मिथ्याज्ञानोपरमे सति द्वैतदर्शनाभावादद्वैतं सिद्धम्। ततश्च स्वप्रपञ्चाप्रच्छेदानामुत्पत्तिदर्शनादित्युपपत्तेर्द्वैतमद्वैतकार्य्यं न च कारणं तत्कार्य्यप्रतिभासैर्विरुध्यते। कार्य्यस्य वाचारम्भणमात्रत्वात् कारणातिरेकेणाभावादित्यर्थः॥ तेषामित्यादिभागं विभजते। द्वैतिनान्त्विति॥ परमार्थद्वैताङ्गेनाद्वैतविरोधम, यद्या द्विधा व्यवहारेऽपि विमतस्य द्वैतस्य द्वैतत्वादेव सम्प्रतिपन्नवन्न मिथ्यात्वसिद्धेर्न तेन विरोधोऽद्वैतस्येति भ्रमानः सन्नाह। यदि चेति॥ भ्रान्तिमूलद्वैतदर्शनैरद्वैतदर्शनं प्रमाणमूलमविरुद्धमित्येतदृष्टान्तेनोपपादयति। यथेत्यादिना। कार्य्यकारणभूतयोर्द्वैताद्वैतयोरविरोधे सिद्धे फलितमाह। तत इति॥ अद्वैतिनां द्वैतिनाञ्च मातिश्चिकपक्षपर्य्यालोचनातो द्वैतपक्षैरद्वैतपक्षैरद्वैतपक्षो विरुद्धो न भवतीति फलितमुपसंहरति। तेनेति॥ १८॥

मायया भिद्यते ह्येतन्नान्यथाजं कथञ्चन ।
तत्त्वतो भिद्यमाने हि मर्त्यतामम्टतं व्रजेत् ॥१९॥

---

द्वैतमद्वैतभेद इत्युक्तं द्वैतमप्यद्वैतवत्परमार्थसदिति स्यात् कस्यचिदाशङ्केत्यत आह । यत्परमार्थसदद्वैतं मायया भिद्यते ह्येतत्तैमिरिकानेकचन्द्रवद्रज्जुः सर्पधारादिभिर्भेदैरिव न परमार्थतो निरवयवत्वादात्मनः । सावयवं ह्यवयवान्यथात्वेन भिद्यते । यथा मृद्घटादिभेदैः । तस्मान्निरवयवमजं नान्यथा कथञ्चन केनचिदपि प्रकारेण न भिद्यत इत्यभिप्रायः । तत्त्वतो भिद्यमाने ह्यम्टतमजमद्वयं स्वभावतः सन्मर्त्यतां व्रजेत् । यथाऽग्निः शीतताम् । तच्चानिष्टं स्वभाववैपरीत्यगमनम् । सर्वप्रमाणविरोधात् । अजमव्ययमात्मतत्त्वं माययैव भिद्यते न परमार्थतः । तस्मान्न परमार्थसद्द्वैतम् ॥ १९ ॥

---

अद्वैतमेव द्वैतात्मना परिणमते चेत् द्वैतमपि तात्त्विकं स्यादित्याशङ्क्याह । मं ययेति ॥ विवर्तवादानङ्गीकारे दोषमाह । तत्त्वत इति ॥ पूर्वार्द्धव्याचिख्यासया(?)शङ्कामादर्शयति । द्वैतमिति ॥ तत्र पूर्वार्द्धोत्तराध्यवतार्य व्याकरोति । अत आहेति ॥ विमतो भेदो मिथ्याभेदत्वाच्चन्द्रादिभेदवदित्यर्थः ॥ विमतं तत्त्वतो भेदरहितम् ॥ निरवयवत्वान्नित्यत्वादजत्वाच्च व्यतिरेकेण घटादिवदित्याह । नेत्यादिना ॥ निरवयवत्वेऽपि वस्तुनः स्फुटनधर्मत्वमाशङ्क्याह । सावयवं हीति ॥ उक्तमनुमानं निगमयति । तस्मादिति ॥ अन्यथा परमार्थत्वेनेत्यर्थः । पुनर्नञनुकर्षणमन्यथार्थं कार्यत्वधर्मत्वांशत्वादिरत्र प्रकारोऽभिप्रेतः ॥ विपक्षे दोषं वदन् द्वितीयार्द्धं विवृणोति । तत्त्वत इति प्रसङ्गस्येष्टत्वमाशङ्क्य निराचष्टे । तच्चेति ॥ विवर्तवादमुपसंहरति । अजमिति ॥ स्थिते विवर्तवादे फलितमाह । तस्मादिति ॥ १९ ॥

अजातस्यैव भावस्य जातिमिच्छन्ति वादिनः ।
अजातो ह्यमृतो भावो मर्त्यतां कथमेष्यति ॥२०॥
न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा ।
प्रकृतेरन्यथाभावो न कथञ्चिद्भविष्यति ॥ २१ ॥

---

ये तु पुनः केचिदुपनिषद्व्याख्यातारो ब्रह्मवादिनो वावदूका अजातस्यैवात्मतत्त्वस्यामृतस्य स्वभावतो जातिमुत्पत्तिमिच्छन्ति परमार्थत एव । तेषां जातं चेत्तदेव मर्त्यतामेष्यत्यवश्यम् । स चाजातो ह्यमृतभावः स्वभावतः सन्नात्मा कथं मर्त्यतामेष्यति न कथञ्चन मर्त्यत्वं स्वभाववैपरीत्यमेष्यतीत्यर्थः ॥ २० ॥

यस्मान्न भवत्यमृतं मर्त्यं लोकेनापि मर्त्यममृतं तथा ततः प्रकृते स्वभावस्यान्यथाभावः स्वतः प्रच्युतिर्न कथञ्चिद्भविष्यति । अग्नेरिवौष्ण्यस्य ॥ २१ ॥

---

स्वपक्षसिद्धा स्वयूथ्यपक्षमनुभाष्य दूषयति । अजातस्येति ॥ अनुवादविभागं विभजते । ये त्विति ॥ स्वभावतः एवाजातस्य स्वभावत एवामृतस्य चात्मतत्त्वस्य परमार्थत एव जातिमुत्पत्तिं ये स्वयूथ्याः स्वीकुर्वन्तीत्यर्थः । जातस्य हि ध्रुवो मृत्युरिति न्यायेन दूषयति । तेषामिति ॥ अजातो हीत्याद्यक्षराण्युक्तेऽर्थे योजयति । स चेति ॥ २० ॥

पदार्थानां स्वभाववैपरीत्यगमनमनुपपन्नमित्युक्तं प्रपञ्चयति । न भवतीति ॥ तत्र पूर्वार्द्धं हेतुत्वेन व्याचष्टे । तस्मादिति ॥ उत्तरार्द्धं हेतुमत्त्वेन योजयति । तत इति ॥ यथाग्नेः स्वभावभूतस्योष्ण्यस्यान्यथात्वं नैव गमनमयुक्तं तथाऽन्यत्रापि स्वभावस्यान्यथात्वमनुचितं स्वरूपनाशप्रसङ्गादित्यर्थः ॥ २१ ॥

स्वभावेनामृतो यस्य भावो गच्छति मर्त्यताम् ।
कृतकेनामृतस्तस्य कथं स्थास्यति निश्चलः ॥ २२ ॥

यस्य पुनर्वादिनः स्वभावेनामृतो भावो मर्त्यतां गच्छति परमार्थतो जायते तस्य प्रागुत्पत्तेः स्वभावः स्वभावतोऽमृत इति प्रतिज्ञा मृषैव । कथं तर्हि कृतके-नामृतस्तस्य स्वभावः कृतकेनामृतः स कथं स्थास्यति निश्च-लोऽमृतस्वभावतया न कथञ्चित्स्थास्यति आत्मा जातिवा-दिनः सर्व्वदाऽजं नाम नास्त्येव सर्व्वमेतन्मर्त्यम् । अतो-ऽनिर्मोक्षप्रसङ्ग इत्यभिप्रायः ॥ २२ ॥

ननु ब्रह्म कारणरूपेण प्रागुत्पत्तेरमृतमपि कार्य्याकारेणोत्पत्त्यु-त्तरकालं मर्त्यतां गमिष्यति । ततो रूपभेदादुभयमविरुद्धमिति तत्राह ॥ स्वभावेनेति ॥ पूर्व्वार्द्धं साध्याहारं योजयति । यस्येति॥ प्रागवस्थायामपि कारणस्यैव कार्य्याकारेण जन्मयोग्यतया मर्त्यतावगमान्मृषैव प्रतिज्ञा स्यादित्यर्थः । कथं तर्हि तस्य प्रतिज्ञा युक्तेत्याशङ्क्य कृतकेन मर्त्यविध-येनामृतस्तस्य वादिनः स कारणात्मा भावो भवतीति प्रतिज्ञा युक्ते-त्याह कथमित्यादिना ॥ भवतु प्रलयावस्थायाममृतावस्थापरिणामे-णामृतत्वं ततो वा किं स्यादित्याशङ्क्याह । कृतकेनेति ॥ कृतकत्वस्य यत्कृतकं तदनित्यमिति विनाशित्वेन व्याप्तत्वादित्यर्थः । किञ्चास्यामव-स्थायां कार्य्यमात्रं वस्तुत्वजं ब्रह्माप्नोति ज्ञानाभावान्मोक्षो न स्यादि-त्याह । आत्मेति ॥ २२ ॥

भूततोऽभूततो वापि सृज्यमाने समा श्रुतिः।

---

नन्वजातिवादिनः सृष्टिप्रतिपादिका श्रुतिर्न सङ्गच्छते प्रामाण्यम्। बाढं विद्यते सृष्टिप्रतिपादिका श्रुतिः। सा त्वन्यपरा। उपायः सोऽवतारायेत्यवोचाम। इदानीमुक्तेऽपि परिहारे पुनश्चोद्यपरिहारौ विवक्षितार्थं प्रति सृष्टिश्रुत्यक्षराणामानुलोम्यविरोधाशङ्कामात्रपरिहारार्थौ। भूततः परमार्थतः सृज्यमाने वस्तुनि अभू-

---

परिणामवादस्य सृष्टिश्रुत्यनुसारेण स्वीकार्यत्वमाशङ्क्य निरस्यति भूतत इति॥ परिणामवादे विवर्तवादे च सृष्टिश्रुतेरविशेषाद्-द्वैतानुरोधिश्रुतियुक्तिवशाद्विवर्तवादस्यैव स्वीकर्तव्यतेति भावः। सृष्टिश्रुतेरद्वैतानुगुणत्वे प्रमाणयुक्त्यनुगृहीतमद्वैतमेवाभ्युपगन्तव्यमिति फलितमाह। निश्चितमिति श्लोकव्यावर्त्यां शङ्कां दर्शयति। नन्विति॥ यद्यात्मा कार्याकारेण न जायते तर्हि सृष्टिश्रुतिरश्लिष्टा स्यादित्यर्थः। सृष्ट्यनुवादिनी श्रुतिरस्तीत्यङ्गीकरोति। बाढमिति॥ तस्या मिथ्यासृष्ट्यनुवादित्वेन कथमुपपत्तिरित्याशङ्क्याह। सा त्विति॥ कथमद्वैतपरत्वेन सृष्टिश्रुतेरुपपत्तिरित्याशङ्क्याह। उपाय इति॥ यदि सृष्टिश्रुतेरद्वैतपरत्वेन तद्विरोधसमाधी अधस्तादेवोक्तौ तर्हि पुनश्चोद्यं तत्परिहारश्च युक्तौ पुनरुक्तेरित्याशङ्क्याह। इदानीमिति॥ मिथ्यासृष्टिवादे श्रुतिपदानामसृजताऽभवदित्यादीनामक्षरमात्रविरोधाशङ्कायां तावन्मात्रं परिहर्तुं पुनश्चोद्यपरिहारावित्यर्थः॥ श्लोकस्य तात्पर्यमुक्त्वा पूर्वार्द्धाक्षराणि व्याकरोति। भूतत इति॥ मायायोगेन यथा सृष्टत्वादिवत् तत्तेजोऽसृजतेति श्रुतिः। सच्च त्यच्चाभवदिति श्रुतिस्तु देवदत्तो व्याघ्रोऽभवदिति। तन्न। न च सत्यत्वं विशेषणमत्रोपलभ्यते। तेन मायामय्यां सृष्टाविदायामपि सृष्टिश्रुतिः श्लिष्टेत्यर्थः॥ गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्यय इति न्यायमाश्रित्य शङ्कते। नन्विति॥ अभिनिवेशवत

निश्चितं युक्तियुक्तञ्च यत्तद्भवति नेतरत् ॥ २३ ॥

ततो मायया वा मायां विनैव सृज्यमाने वस्तुनि समातुल्या सृष्टिश्रुतिः। ननु गौणमुख्ययोर्मुख्ये शब्दार्थप्रतिपत्तिर्युक्ता। न। अन्यथा सृष्टेरप्रसिद्धत्वान्निष्प्रयोजनत्वाच्चेत्यवोचाम। अविद्यासृष्टिविषयैव सर्व्वा गौणी मुख्या च सृष्टिः न परमार्थतः। सबाह्याभ्यन्तरो ह्यज इति श्रुतेः। तस्माच्छ्रुत्या निश्चितं यदेकमेवाद्वितीयमजममृतमिति युक्तियुक्तञ्च। युक्त्या च सम्पन्नं तदेवेत्यवोचाम पूर्व्वैर्ग्रन्थैः। तदेव श्रुत्यर्थो भवति नेतरत्कदाचिदपि ॥ २३ ॥

इत्यत्र माणवकेऽग्निशब्दप्रयोगोऽयमग्निमानयेत्यादिप्रयोगे प्रथमं वह्निप्रतीतेर्मुख्यमेव प्रथमं प्रतिभातीति मुख्ये पदव्युत्पत्तेर्मुख्यार्थतया सत्या सृष्टिरेष्टव्येत्यर्थः ॥ मुख्यसृष्ट्यङ्गीकारेऽपि सत्या सृष्टिर्न सिध्यति ॥ अयुक्तत्वे सत्यायाः सृष्टेः सृष्टिशब्दार्थत्वेनाप्रसिद्धत्वादिति परिहरति। नेत्यादिना ॥ लौकिकानां मुख्यसृष्टेः सत्यसृष्टित्वेऽपि फलाभावाच्च तत्र श्रुतितात्पर्य्यमित्याह। निष्प्रयोजनत्वाच्चेति ॥ अन्यथा सृष्टेरप्रसिद्धत्वमेव स्पष्टयति। अविद्येति ॥ गौणी स्वप्ने रथादिसृष्टिः। मुख्या जागरे घटादिसृष्टिः सर्व्वाप्यविद्यावस्थायामेव तस्यां सत्यामेव भावाच्च तत्त्वदृष्ट्या कापि सृष्टिः सम्भवति॥ तथा भूतस्यान्यथाभूतस्य स्वतः परतो वा वस्तुनोऽन्यथाभावसम्भवात्तदतिरेकेण च सृष्टेरयोगादित्यर्थः। वस्तुस्वरूपालोचनया वास्तव्याः सृष्टेरश्लिष्टत्वे श्रुतिमनुकूलयति। सबाह्येति ॥ सृष्टेरविद्याविद्यमानत्वेऽपि किं वस्तु विवक्षितमित्याशङ्क्योत्तरार्द्धं विभजते। तस्मादिति ॥ निरवयवत्वं विभुत्वमित्यादियुक्तिः। तेनाद्वैतमेव श्रुतितात्पर्य्यगम्यं न द्वैतमिति फलितमाह। तदेवेति ॥ २३ ॥

**नेह नानेति चाम्नायादिन्द्रो मायाभिरित्यपि।**

कथं श्रुतिनिश्चय इत्याह। यदि हि भूत एव सृष्टिः स्यात्ततः सत्यमेव नाना वस्त्विति तदभावप्रदर्शनार्थमाम्नायो न स्यात्। अस्ति च नेह नानास्ति किञ्चनेत्यादिराम्नायो द्वैतभावप्रतिषेधार्थः। तस्मादात्मैकत्वप्रतिपत्त्यर्था कल्पिता सृष्टिरभूतैव प्राणसंवादवत्। इन्द्रो मायाभिरित्यभूतार्थप्रतिपादकेन मायाशब्देन व्यपदेशात्। ननु प्रज्ञावचनो मायाशब्दः। सत्यम्। इन्द्रियप्रज्ञाया अविद्यात्वेन मायात्वाभ्युपगमाददोषः। मायाभिरिन्द्रियप्रज्ञाभिर-

---

सृष्टेर्द्वैतस्फुटीकरणद्वारेणाद्वैतमेव श्रुत्यर्थतया निर्द्धारयितुं श्रौतनिश्चयमेव विवृणोति। नेहेति॥ आकाङ्क्षां प्रदर्श्य श्लोकाक्षराणि व्याकरोति। कथमित्यादिना॥ तत्राद्यपादे व्यतिरेकं दर्शयित्वा पुनरन्वयाख्यानेन व्याचष्टे। यदि हीति॥ द्वैतभावश्चेत् प्रतिषिध्यते कथं तर्हि सृष्टिरुपदिश्यते तत्राह। तस्मादिति॥ यथा प्राणवैशिष्ट्यदृष्ट्यर्थं प्राणसंवादः श्रुतिषु कल्प्यते तथा सृष्टिरेकत्वप्रतिपत्त्यर्थत्वेन कल्पिता। वास्तव्याः सृष्टेरयोगस्योपदिष्टत्वादित्यर्थः। कल्पिता सृष्टिरित्यत्र हेत्वन्तरं दर्शयन् द्वितीयं पादमवतार्य तात्पर्यमाह। इन्द्र इति॥ मायाशब्देन सृष्टेर्व्यपदेशादसौ कल्पिता युक्तेति शेषः। अभिधानग्रन्थे प्रज्ञानामसु पाठान्मायाशब्दो मिथ्यार्थो न भवतीति शङ्कते। नन्विति॥ मायाशब्दस्य प्रज्ञानामसु क्वाचित्कं पाठमङ्गीकरोति। सत्यमिति॥ कथं तर्हि मिथ्यार्थत्वं तत्राह। इन्द्रियेति॥ न हि मायाशब्दिता प्रज्ञा प्रज्ञचैतन्यम्। भूयश्चान्ते विश्वमायानिवृत्तिरित्यादौ निवृत्तिश्रवणात्। किन्त्वसाविन्द्रियजन्या तस्याश्चाविद्यान्वयव्यतिरेकानुविधायितया विद्यात्वेन मिथ्यात्वान्मायाशब्दस्य मिथ्यार्थत्वेनानुपपत्तिरित्यर्थः। तात्पर्यार्थमुक्त्वा तत्रैवाक्षराणुगुण्यमाह। मायाभिरिति॥

अजायमानो बहुधा मायया जायते तु सः ॥ २४ ॥

विद्यारूपाभिरित्यर्थः। अजायमानो बहुधा विजायत इति श्रुतेः। तस्मान्माययैव जायते तु सः। तुशब्दोऽवधारणार्थः। माययैवेति। न ह्यजायमानत्वं बहुधा जन्म चैकत्र सम्भवति। अग्नाविव शैत्यमौष्ण्यञ्च। फलवत्त्वाच्चात्मैकत्वदर्शनमेव श्रुतिनिश्चितोऽर्थः। तत्र को मोहः कः शोकः एकत्वमनुपश्यत इत्यादिमन्त्रवर्णात्। मृत्योः स मृत्युमाप्नोतीति निन्दितत्वाच्च सृष्ट्यादिभेददृष्टेः॥ २४ ॥

पुरुरूपः सन्नीयत इति सम्बन्धः। मायामयी सृष्टिरित्यत्र हेत्वन्तरपरत्वेन तृतीयपादमवतारयति। अजायमान इति॥ अजायमानस्य बहुधा विजायमानत्वं विरुद्धमित्याशङ्क्य चतुर्थपादमुत्थापयति। तस्मादिति॥ अश्रुतस्य कथमेवकारस्यावापः स्यादित्याशङ्क्याह। तुशब्द इति॥ अवधारणरूपमर्थमेवाभिनयति। माययैवेति॥ कस्मादित्थमवधार्यते। वास्तवे जन्मनि का वस्तुक्षतिरित्याशङ्क्याह। न ह्येति॥ आत्मैकत्वज्ञानमेव सृष्टिश्रुतितात्पर्य्यमस्यं सृष्टिस्तु तच्छेषत्वादविवक्षितेत्यत्र हेत्वन्तरमाह। फलवत्त्वाच्चेति॥ तस्य फलवत्त्वे प्रमाणमाह। तत्रेति॥ एकत्वमाचार्य्योपदेशमनुपश्यतः साक्षात्कुर्वतस्तत्त्वैकत्वसाक्षात्कारे सति शोकमोहोपलक्षितः संसारो न भवतीत्यर्थः। न केवलं विफलत्वात् द्वैतदृष्टिरविवक्षिता किन्तु निन्दितत्वेन निषिद्धत्वादनर्थकरत्वाच्चेत्याह। मृत्योरिति॥ २४॥

सम्भूतेरपवादाच्च सम्भवः प्रतिषिध्यते ।

---

अन्धतमः प्रविशन्ति ये सम्भूतिमुपासत इति श्रुतेः सम्भूतेरुपास्यत्वापवादात्सम्भवः प्रतिषिध्यते । न हि परमार्थतः सम्भूतायां सम्भूतौ तदपवाद उपपद्यते । ननु विनाशेन सम्भूतेः समुच्चयविध्यर्थः सम्भूत्यपवादः । यथाऽन्धन्तमः प्रविशन्ति येऽविद्यामुपासते इति । सत्यमेव देवतादर्शनस्य सम्भूतिविषयस्य विनाशशब्दवाच्यस्य कर्म्मणः समुच्चयविधानार्थः सम्भूत्यपवादः । तथापि विनाशाख्यस्य कर्म्मणः स्वाभाविकाज्ञानप्रवृत्तिरूपस्य मृत्योरतितरणार्थत्ववद्देवतादर्शनकर्म्मसमुच्चयस्य पुरुषसंस्कारार्थस्य कर्म्मफलरागप्रवृत्ति-

---

भेददृष्टेर्मिथ्यात्वे हेत्वन्तरमाह । सम्भूतेरिति ॥ सम्यग्भूतिरैश्वर्यं यस्याः सा सम्भूतिर्देवता हिरण्यगर्भाख्या । तस्याश्च कार्य्यमध्ये श्रेष्ठाया निन्दितत्वात् प्रधानमल्लनिबर्हणन्यायेन सम्भवशब्दितं कार्य्यमेव निषिध्यते । तथा च सिद्धं तस्या अवस्तुत्वमित्यर्थः । कारणप्रतिषेधेन तदवस्तुत्वसिद्धेश्च यथोक्तार्थसिद्धिरित्याह । को ह्येनमिति ॥ पूर्व्वार्द्धं व्याकरोति । अन्धमिति ॥ सम्भूत्युपासनाया मन्त्रार्द्धमात्रेण निन्दां विधाय ततो भूय इवेत्यादिनोत्तरार्द्धेन सम्भूतेरुक्ताया देवताया हेयत्वमुपपाद्यते । ततश्च प्रधानभूतदेवतोपास्यत्वापवादात्ततोऽर्व्वाक्तनं सर्व्वमेव सम्भवशब्दितं कार्य्यमात्रं निषिध्यते । तथा च तदवस्तुत्वसिद्धिरित्यर्थः । सम्भूतेरपवादेऽपि तस्मिन्मिथ्यात्वनियमाभावाच्च कार्य्यमात्रस्य मिथ्यात्वं शक्यं प्रतिज्ञातुमित्याशङ्क्याह । न हीति ॥ सम्भूतिनिन्दा तदवस्तुत्वस्थापनार्था न भवति । किन्तु विनाशेन कर्म्मणा देवतोपासनस्य समुच्चयविधानस्य फलवत्त्वादिति शङ्कते । नन्विति ॥ अपवादस्य समुच्चयविध्यर्थत्वे दृष्टान्तमाह । यथेति ॥ अत्र स्वस्वविद्याशब्दितकर्म्मापवादो विद्या-

कोन्वेनं जनयेदिति कारणं प्रतिषिध्यते ॥ २५ ॥

---

रूपस्य साध्यसाधनैषणाद्वयलक्षणस्य मृत्योरतितरणार्थत्वम्। एवं ह्येषणाद्वयलक्षणादविद्याया मृत्योरतितीर्षस्य विरक्तस्योपनिषच्छास्त्रार्थालोचनपरस्य नान्तरीयकी परमात्मैकत्वविद्योत्पत्तिरिति पूर्व्वभाविनीमविद्यामपेक्ष्य पश्चाद्भाविनी ब्रह्मविद्याऽमृतत्वसाधना एकेन पुरुषेण सम्बध्यमाना अविद्यया समुच्चीयत इत्युच्यते। अतोऽन्यार्थत्वादमृतत्वसाधनं ब्रह्मविद्यामपेक्ष्य निन्दार्थ एव भवति सम्भूत्यपवादः। यद्यप्यशुद्धिवियोगहेतुरतन्निष्ठत्वात्। अत एव सम्भूतेरपवादात्सम्भूतेरापेक्षिकमेव सत्त्वमिति। परमार्थसदा-

---

कर्म्मणोः समुच्चयविध्यर्थः स्थितो विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सहेति श्रवणादित्यर्थः। उक्तश्लोकमनुजानाति। सत्यमिति॥ तर्हि सम्भूत्यपवादस्तदवस्तुत्वस्यापको न भवतीत्युक्तं स्थितमेवेत्याशङ्क्य समुच्चयस्याविद्यावस्थायामवस्थितफलवत्त्वाद्यदवस्तुत्वं सम्भूत्यादेर्निन्दाधीनमुक्तं तत्तदवस्थमेवेति मन्वानः सन्नाह। तथापीति॥ यथाग्निहोत्रादेः शास्त्रीयस्य कर्म्मणोऽशास्त्रीयप्रवृत्तिरूपमृत्युतरणार्थत्वं तथा साधनाद्येषणारूपमृत्युतरणार्थत्वं समुच्चयस्यापि वाच्यम्। तथा च सम्भूत्यादेरवस्तुत्वमविरुद्धमित्यर्थः। मृत्युतरणार्थत्वे संस्कारार्थत्वं कथमित्याशङ्क्याह। एवं हीति॥ कामचारकामवादकामभक्षणादिलक्षणस्वाभाविकप्रवृत्तिरूपाशुद्धिवियोगः संस्कारो यथा नित्याग्निहोत्रादि फलं तथा निष्कामेनानुष्ठितसमुच्चयफलं कामाद्यशुद्धिव्यावृत्तिरित्यर्थः॥ अविद्यया मृत्युं तीर्त्वेति मन्त्रे मृत्युतरणहेतुरविद्येति श्रवणात्। सम्भूत्यामृतमश्नुत इति च सम्भूतेरमृतत्वफलाभिधानात्कथं समुच्चयफलं मृत्योरतितरणमित्याशङ्क्याह। अत इति॥ यतो न समुच्चयान्मुख्यममृतत्वं घटते

नैकत्वमपेक्ष्याव ताख्यः सम्भवः प्रतिषिध्यते । एवं मायानिर्मितस्यैव जीवस्याविद्यया प्रत्युपस्थापितस्याविद्यानाशे स्वभावरूपत्वात्परमार्थतः को न्वेनं जनयेत् । न हि रज्ज्वामविद्यारोपितं सर्पं पुनर्विवेकतो नष्टं जनयेत् कश्चित् । तथा न कश्चिदेनं जनयेदिति को न्वित्याक्षेपार्थत्वात्कारणं प्रतिषिध्यते । अविद्योद्भूतस्य नष्टस्य जनयितृ कारणं न किञ्चिदस्तीत्यभिप्रायः । नाऽयं कुतश्चिन्न बभूव कश्चिदिति श्रुतेः ॥ २५ ॥

---

तस्य । विद्ययाऽमृतमश्नुत इति वक्ष्यमाणत्वात् । अतः समुच्चयपक्षेऽप्यविद्या विद्यया मृत्युं तीर्त्वेत्यत्र निर्दिश्यते । अपेक्षितमृत्युतरणहेतुत्वसम्भवादित्यर्थः । यद्यपि विद्याशब्देन समुच्चयो विवक्ष्यते । कथं तर्हि विद्यां चाविद्यां चेत्यनेन विद्याविद्ययोः समुच्चयो निर्दिश्यते । न हि देवतादर्शनकर्मसमुच्चयस्य अन्नविद्यायाः समुच्चयः सम्भवतीत्याशङ्क्याह । एवमिति ॥ नान्तरीयकत्वमवश्यम्भावित्वं प्रतिबन्धकाभावे कार्योत्पत्तेरित्यर्थः ॥ एवं मन्त्रार्थे स्थिते प्रकृते फलितमाह । अत इति ॥ मन्त्रार्थत्वं समुच्चयस्याधुनिक्षेपहेतुत्वं तच्चेदिदं किमित्यपवादस्तत्राह । यद्यपीति ॥ तथाप्यतत्त्वज्ञत्वात् परमार्थापूतत्वफलत्वाभावात्तदपवादसिद्धिरित्यर्थः । अपवादफलं दर्शयन्नाद्यभागविभजनमुपसंहरति । अत एवेति ॥ को न्वेनं जनयेत् पुनरिति सूत्रार्थमाचक्षाणो द्वितीयार्द्धं विभजते । एवं मायेत्यादिना ॥ उक्तमर्थं दृष्टान्तेन स्पष्टयति । न हीति ॥ न कश्चिदेवं जनयेदिति कारणं प्रतिषिध्यत इति सम्बन्धः । प्रश्नार्थे किंशब्दे दृश्यमाने कथं कारणप्रतिषेधसिद्धिरित्याशङ्क्याह । को न्विति ॥ अक्षरार्थमुक्त्वा द्वितीयार्द्धस्य तात्पर्यमाह । अविद्येति ॥ ततश्चेदुद्भूतो जीवः कथं तस्य जनयितृ कारणं नेष्यते व्याघातादित्याशङ्क्याह । नष्टस्येति ॥ जीवस्य जनयितृकारणाभावे प्रमाणमाह । नायमिति ॥ तस्याविद्यामन्तरेण स्वतो जन्माभावं सूचयति । न बभूवेति ॥ २५ ॥

स एष नेति नेतीति व्याख्यातं निह्नुते यतः।

सर्व्वविशेषप्रतिषेधेनाथातोऽदेशो नेति नेतीति प्रतिपादितस्यात्मनो दुर्बोधत्वं मन्यमाना श्रुतिः पुनः पुनरुपायान्तरत्वेन तस्यैव प्रतिपिपादयिषया यद्यद्व्याख्यातं तत्सर्वं निह्नुते। ग्राह्यं जनिमद्बुद्धिविषयमपलपत्यर्थात्स एष नेति नेतीत्यात्मनोऽदृश्यतां दर्शयन्ती श्रुतिरुपायस्योपेयनिष्ठतामजानत उपायत्वेन व्याख्यातस्योपेयवदूग्राह्यता-

इतोऽपि द्वैतं वस्तु न भवतीत्याह। स एष इति॥ देवा वेत्यादिना व्याख्यातं मूर्त्तामूर्त्तादि सर्व्वमेव त्वाख्यमग्राह्यं नेति नेतीति वीप्सया यतो निषेधति श्रुतिरतः स एष इत्युपक्रम्य प्रतिपादितस्यात्मतत्त्वस्य कूटस्थस्याविषयत्वेन प्रथमोपपत्तिरित्यर्थः। नेति नेतीति वीप्सातात्पर्य्यमाह। सर्व्वेति॥ रूपद्वयोपन्यासानन्तरं तन्निषेधमन्तरेण निर्व्विशेषवस्तुप्रतिपत्तेरयोगात्तत्प्रतिपत्त्या च पुरुषार्थपरिसमाप्तिसम्भवादादेशो निर्व्विशेषस्यात्मतत्त्वोपदेशस्तावत् प्रस्तूयते। एवं प्रस्तुत्य नेति नेतीति वीप्सया सर्व्वस्य मूर्त्तामूर्त्तादिविशेषस्यारोपितस्य निषेधो दर्शितस्तेन चात्मा जिज्ञासितो विशिष्टो निर्द्दिष्ट इत्यर्थः। स चेदेवं मूर्त्तामूर्त्ताधिकारे प्रतिपादितस्तर्हि किमिति प्रदेशान्तरे पुनः पुनरेवं प्रतिपाद्यते पुनरुक्तेरित्याशङ्क्य व्याख्यातमित्यादि व्याचष्टे। प्रतिपादितस्येति॥ यद्यपि मूर्त्तामूर्त्तप्रकरणे प्रतिपादितमात्मतत्त्वं तथापि तस्य परमसूक्ष्मत्वात् दुर्ज्ञानत्वं मन्यते श्रुतिः। सा पुनरुपायविशेषसद्भावाभिप्रायेण तस्यैव पुनः पुनः प्रतिपादनेच्छया यद्यदारोपितं तत्तदशेषमपह्नुत्यावशिष्टमात्मस्वरूपं निवेदयतीत्यर्थः॥ सर्व्वमित्यादि स्पष्टीकुर्व्वाणः स एष इति व्याचष्टे। ग्राह्यमिति॥ स एष इत्याद्या श्रुतिरदृश्यतामात्मनो विशेषं निषेधमुखेन दर्शयन्ती यत् दृश्यं कार्य्यं मनसां वाचाञ्च गोचरीभूतं तदशेषमर्थादपलपति। सा हि परमार्थतत्त्वदृश्यमिति श्रुवाणा

सर्वमग्राह्यभावेन हेतुनाऽजं प्रकाशते ॥ २६ ॥
सतो हि मायया जन्म युज्यते न तु तत्त्वतः ।

---

मा भूदित्यग्राह्यभावेन हेतुना कारणेन निह्नुत इत्यर्थः । ततश्चैवमुपायस्योपेयनिष्ठतामेव जानत उपेयस्य च नित्यैकरूपत्वमिति तस्य सबाह्याभ्यन्तरमजमात्मतत्त्वं प्रकाशते स्वयमेव ॥ २६ ॥

एवं हि श्रुतिवाक्यशतैः सबाह्याभ्यन्तरमजमात्मतत्त्वमद्वयं न ततोऽन्यदस्तीति निश्चितमेव । तद्युक्त्या चा-

---

द्वयस्य वस्तुत्वेनोपपद्यते तथा चानुपपत्तेर्द्वयवर्गस्यावस्तुत्वं सिद्धमित्यर्थः ॥ ननु किमिति श्रुतिर्व्याख्यातं विशेषजातं निह्नुते पञ्चप्रपञ्चमन्यथा-पातादित्याशङ्क्याग्राह्यभावेनेत्यादि व्याकरोति । उपायस्येति ॥ इदं वा नेत्यादिना व्याख्यातस्य रूपप्रपञ्चस्याद्वितीय ब्रह्मात्ममात्रपर्यवसायि-तामप्रतिपाद्यमानस्य ब्रह्मवदेवोपायत्वे नाभिमतस्यापि प्रपञ्चस्य वस्तुत्वेन ग्राह्यत्वाशङ्का या सा माभूदित्यशेषराहित्येनाद्वितीयब्रह्मस्वरूपनिर्द्धार-णार्थमारोपितं प्रपञ्चं प्रतिषेधति श्रुतिरित्यर्थः । उपायस्य कल्पितत्वेन वस्तुत्वाभावादुपेयस्य च सदेकरूपत्वात् कथं तथाविधवस्तुप्रतिपत्तिरित्याश-ङ्क्याजमित्यादि व्याचष्टे । ततश्चेति समारोपितस्य सर्वस्य निषेधादेव स्वातन्त्र्ये च वस्तुत्वाभावनिश्चयादारोपितसर्पादेरधिष्ठानातिरेकेणासत्त्व-दुपायस्य मूर्त्तादेरपेक्षादद्वितीयब्रह्ममात्रतामेव प्रतिपद्यमानस्य ब्रह्मणश्च सदेकरूपत्वकूटस्थनित्यदृष्टिस्वभावत्वादि जानतस्तस्योत्तमस्याधिकारिणः स्वयमेवान्यापेक्षामन्तरेणात्मतत्त्वसतत्त्वं विशेषणं प्रकाशि भवति । कल्पि-तस्य चोपायत्वं प्रतिबिम्बादिवदविरुद्धमित्यर्थः ॥ २६ ॥

आत्मतत्त्वमजमद्वितीयं परमार्थभूतम् । द्वैतन्तु मायाकल्पितमसदिति प्रतिपादितम् । तत्रैव हेत्वन्तरमाह । सतो हीति ॥ सदात्मतत्त्वं सदा सदेकरूपं तस्य मायया जगदाकारेण जन्मयत्नम् । मायया दुर्नि-

तत्त्वतो जायते यस्य जातं तस्य हि जायते ॥२७॥

---

धुनैतदेव पुनर्निर्द्धार्य्यत इत्याह। तत्रैतत् स्यात्सदा ग्राह्य-मेव चेदसदेवात्मतत्त्वमिति। तन्न। कार्य्यग्रहणात्। यथा सतो मायाविनो मायया जन्मकार्य्यं एवं जगतो जन्म-कार्य्यं गृह्यमाणं मायाविनमिव परमार्थं सन्तमात्मानं जग-ज्जन्म मायास्पदमेव गमयति। यस्मात्सतो हि विद्यमाना-त्कारणात् मायानिर्म्मितस्य हस्त्यादिकार्य्यस्येव जगज्जन्म युज्यते नासतः कारणात्। न तु तत्त्वत एवात्मनो जन्म युज्यते। अथवा सतो विद्यमानस्य वस्तुनो रज्ज्वादेः सर्पा-दिवन्मायया जन्म युज्यते न तु तत्त्वतो यथा तथाऽग्राह्य-

---

रूपार्थसमर्थनपरं यस्मात्परमार्थतत्त्वेकरूपमनेकरूपतया नोत्पत्तुं पारयति विरोधादित्यर्थः॥ विपक्षे दोषमाह। तत्त्वत इति॥ यस्य वादिनो मते ब्रह्मैव परमार्थतो जगदात्मना जायते तस्याजस्य जायमानत्वप्रतिज्ञाया व्याहतत्वाज्जातस्यैव जायमानत्वे स्यादनवस्थेत्यर्थः। घट्टैतमावेद-यन्त्या द्वैतनिषेधकं श्रुत्या दृश्यत्वजडत्वादियुक्त्या च तथाविधया निर्द्धा-रितमर्थं श्लोकाक्षरार्थकथनार्थमनुवदति॥ एवमिति॥ उक्तमेव वस्तु युक्त्यन्तरेण पुनर्निर्द्धारयितुमुत्तरग्रन्थप्रवृत्तिरित्याह। अधुनेति॥ पूर्वार्द्धं शङ्कोत्तरत्वेन व्याख्यातुं शङ्कयति। तत्रेति॥ श्लोकः सम्यक्या परामृश्यते। यत्तु कदाचिदपि गृह्यते तदत्यन्तासदेव शशविषा-णादिवद्देष्टव्यम्। प्रमाणाभावे प्रमेयासिद्धेरित्यर्थः। कार्य्यलिङ्गकानु मानवशादात्मतत्त्वस्याकारणत्वेन सत्त्वनिर्णययात्॥ नारम्भचोद्यमिति दूषयति। तन्नेति॥ सङ्गृहीतमर्थं दृष्टान्तेन विवृणोति। यथेति॥ विमतं सदधिष्ठानं कार्य्यत्वात् रूप्यातिपन्नवदित्यर्थः॥ उक्तेऽर्थे पूर्वा-र्द्धाक्षराणि योजयति। यस्मादिति॥ तस्मात्कारणस्य सत्त्वमविवादमिति

असतो मायया जन्म तत्त्वतो नैव युज्यते ।
वन्ध्यापुत्रो न तत्त्वेन मायया वापि जायते ॥२८॥

---

तस्यापि सत एवात्मनो रज्जुसर्पवज्जगद्रूपेण मायया जन्म युज्यते । न तु तत्त्वत एवाजस्यात्मनो जन्म । यस्य पुनः परमार्थसदजमात्मतत्त्वं जगद्रूपेण जायते वादिनो न हि तस्याजं जायत इति शक्यं वक्तुं विरोधात् । ततस्तस्यार्थाज्जातं जायत इत्यापन्नम् । ततश्चानवस्थापाताज्जायमानत्वेन । तस्मादजमेकमेवात्मतत्त्वमिति सिद्धम् ॥ २७ ॥

असद्वादिनामसतो भावस्य मायया तत्त्वतो वा न कथञ्चन जन्म युज्यते । अदृष्टत्वात् । न हि वन्ध्यापुत्रो मायया

---

र्थः । नासत इति तस्य निःस्वभावत्वात्कारणत्वायोगादित्यर्थः । न त्विति ॥ तथाभूतस्यान्यथाभूतस्य च जन्मायोगादित्यर्थः । सत इति पञ्चम्यन्तं पदं गृहीत्वा निमित्तकारणपरतया व्याख्यातं सम्प्रति सत इति षष्ठ्यन्तं पदमादायोपादानपरतया व्याख्यां करोति । यथेति ॥ यथा रज्जोः सर्पधाराद्याकारेण मायाकृतं जन्म तथैवाप्यात्मनापि सद्रूपस्यात्मतत्त्वस्य जगदात्मना जन्म मायाप्रयुक्तं प्रतिपत्तव्यम् । जन्मरहितस्य वस्तुतो जन्मव्याघातादित्यर्थः ॥ उत्तरार्द्धं विभजते । यस्येत्यादिना ॥ मायिकं जन्म न तात्त्विकमिति स्थिते फलितमाह । तस्मादिति ॥ २७ ॥

सत्पूर्वकं कार्यमिति न व्याप्तिः । असद्वादिभिरसतः सज्जन्माभ्युपगमादित्याशङ्क्याह । असत इति ॥ तत्त्वतोऽतत्त्वतो वा नासतः सदाकारेण जन्मेत्यर्थः ॥ तत्र दृष्टान्तमाह । वन्ध्येति ॥ पूर्वार्द्धं व्याकरोति । असद्वादिनामिति ॥ असतो निःस्वरूपस्य स्वरूपाभावादेव तत्त्वतोऽतत्त्वतो वा कार्याकारेण न युक्तं जन्मेत्यत्र हेतुमाह । अदृष्टत्वादिति ॥ उत्तरार्द्धं व्याकुर्वन्नदृष्टत्वमेव दृष्टान्तेन स्पष्टयति । न हीति ॥ सद्वादो मायया सम्भवति । असद्वादस्तु तयापि नेति विशेषं दर्शयति ।

यथा स्वप्ने द्वयाभासं स्पन्दते मायया मनः।
तथा जाग्रद्द्वयाभासं स्पन्दते मायया मनः ॥२९॥

---

तस्वतो वा जायते तस्मादसद्वादो दूरत एवानुपपन्न इत्यर्थः ॥ २८ ॥

कथं पुनः सतो माययैव जन्मेत्युच्यते। यथा रज्ज्वां विकल्पितः सर्पो रज्जुरूपेणावेक्ष्यमाणः सन् एवं मनः परमार्थविज्ञप्त्यात्मरूपेणावेक्ष्यमाणं सत् ग्राह्यग्राहकरूपेण द्वयाभासं स्पन्दते स्वप्ने मायया रज्ज्वामिव सर्पः। तथा तद्वदेव जाग्रज्जागरिते स्पन्दते मायया मनः स्पन्दत इवेत्यर्थः ॥ २९ ॥

---

तस्मादिति ॥ कार्य्यकारणनिरूपणमत्रेति परामृश्यते ॥ २८ ॥

सत एव मायया जन्मेत्युक्तमुपपादयति। यथेति ॥ सत एव मायया जन्मेत्ययुक्तम् ॥ अवस्थाद्वयेपि द्वैतस्य मनःस्पन्दितत्वस्वीकारादिति लोकव्यवहारस्योच्छेदमुत्थापयति। कथमिति ॥ अधिष्ठानरूपेण मनोऽपि सदिति सदृष्टान्तमुत्तरमाह उच्यत इति ॥ मनसः सन्मात्रत्वेऽपि कथमनेकधा स्पन्दनमित्याशङ्क्य स्वप्नदृष्टान्तं व्याचष्टे। यथेति ॥ दार्ष्टान्तिकमाह। तथेत्यादिना ॥ मायाधीनं मनःस्पन्दनमवस्तुभूतमिति द्योतयितुमिवेत्युक्तं मनो ब्रह्म चेति कारणद्वयम् ॥ २९ ॥

अद्वयञ्च द्वयाभासं मनः स्वप्ने न संशयः।
अद्वयञ्च द्वयाभासं तथा जाग्रन्न संशयः॥ ३०॥
मनोदृश्यमिदं द्वैतं यत् किञ्चित् सचराचरम्।

---

रज्जुरूपेण सर्प इव परमार्थत आत्मरूपेणाद्वयं सत्तद्द्वयाभासं मनः स्वप्ने न संशयः। न हि स्वप्ने हस्त्यादि ग्राह्यं ग्राहकं चक्षुरादिद्वयं विज्ञानव्यतिरेकेणास्ति। जाग्रदपि तथैवेत्यर्थः। परमार्थसद्विज्ञानमात्राविशेषात्॥ ३०॥

रज्जुसर्पवद्विकल्पनारूपं द्वैतरूपेण मन एव युक्तम्। तत्र किं प्रमाणमित्यन्वयव्यतिरेकलक्षणमनुमानमाह। कथं तेन हि मनसा विकल्प्यमानेन दृश्यं मनोदृश्यमिदं द्वैतं सर्वं मन इति प्रतिज्ञा। तद्भावे भावात्तदभावेऽभावात्।

---

तर्हि द्वैतस्य स्वीकृतमित्याशङ्क्य दृष्टान्तेन निराचष्टे। अद्वयञ्चेति दृष्टान्तभागं विभजते। रज्ज्विति॥ दृष्टान्ते चैतन्यातिरिक्तस्य ग्राह्यग्राहकभेदस्य मनःस्पन्दितस्यासत्त्वं साधयति। न हीति॥ तथैव जागरितेऽपि परमार्थात्मस्वरूपेण द्वयं सन्मनो ग्राह्यग्राहकद्वैताकारत्वावभासते। तथा च परमार्थसतोविज्ञानमात्रस्यावस्थाद्वयेऽपि विशेषाभावात्तस्मिन्नेवाधिष्ठाने मायाकल्पितं मनः स्पन्दते। द्वयाकारस्तित्वस्वीकारात्॥ न कारणद्वयं शङ्कितव्यमित्याह॥ जाग्रदपीति॥ ३०॥

मनोमात्रं द्वैतमित्यत्र प्रमाणमाह। मनो दृश्यमिति॥ इत्तमनूद्य श्लोकतात्पर्यमाह। रज्ज्विति॥ तथा रज्जुः सर्परूपेण विकल्प्यते तथा मनो द्वैतरूपेण विकल्पमात्रकम्। तस्माविद्याकल्पितमित्युक्तेऽर्थे प्रमाणगवेषणायां विशिष्टमनुमानमुपन्यस्यतीत्यर्थः॥ तदेव प्रश्नपूर्व्वकं प्रकटयन् प्रथमार्द्धाक्षराणि व्याचष्टे। कथमित्यादिना॥ विमतं मनोमात्रं तत्र। भावे नियतभावत्वात्।

**मनसो ह्यमनीभावे द्वैतं नैवोपलभ्यते ॥ ३१ ॥**
**आत्मसत्यानुबोधेन न सङ्कल्पयते यदा ।**

---

मनसो ह्यमनीभावे निरुद्धे विवेकदर्शनाभ्यासवैराग्याभ्यां रज्ज्वामिव सर्पे लयङ्गते वा सुषुप्ते द्वैतं नैवोपलभ्यत इत्यभावात्सिद्धं द्वैतस्यासत्त्वमित्यर्थः ॥ ३१ ॥

कथं पुनरयममनीभाव इति । उच्यते । आत्मैव सत्यमात्मसत्यं मृत्तिकावत् । वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति श्रुतेः । तस्य शास्त्राचार्योपदेशमन्ववबोध आत्मसत्यानुबोधः । तेन सङ्कल्प्याभावात्तया न सङ्क-

---

यथा मृद्भावे नियतभावो मृन्मात्रो घटादिरित्यनुमानमाचरयति । द्वैतमिति ॥ उक्तमेव व्यतिरेकं स्फोरयन् द्वितीयार्द्धं विभजते । मनसो हीति ॥ समाधिस्वापयोर्द्वैतस्यानुपलम्भोऽपि नासत्त्वमित्याशङ्क्य मानाधीना मेयसिद्धिरित्यभिप्रेत्याह । इत्यभावादिति ॥ ३१ ॥

मनसो यदमनस्त्वमुक्तं तदुपपादयति ॥ आत्मेति ॥ समाधिस्वापयोरनुभवेऽपि मनसः स्वरूपेण नित्यत्वान्नामनस्त्वमित्याक्षिपति । कथमिति ॥ सङ्कल्पो हि मनसो व्यावहारिकं रूपम् । सङ्कल्पश्च सङ्कल्प्यापेक्षत्वात् । तदभावे न भवति । सर्वात्मैवेत्यवगमे त्वसङ्कल्प्याभावान्मनसो मनस्त्वं न वर्त्तते तथापि स्फुरति चेदात्मैवेति न विवेकिदृष्ट्या मनो नामास्तीति श्लोकाक्षरैरुत्तरमाह । उच्यत इति ॥ तस्यैव सत्यत्वे दृष्टान्तमाह । मृत्तिकावदिति ॥ यथा घटशरावादिष्वसत्येषु मृत्तिकामात्रमनुस्यूतं सत्यमिष्यते तथैवानात्मसु असत्येष्वात्ममात्रं सत्यमेष्टव्यम् । तस्य सत्यमित्यवधारणादेव कारणस्य दृष्टान्तनिविष्टस्य दार्ष्टान्तिकेऽनुषङ्गादित्यर्थः ॥ उक्ते दृष्टान्ते प्रमाणमाह । वाचारम्भणमिति ॥ अवशिष्टान्यक्षराणि व्याचष्टे । तस्येत्यादिना ॥ तेन तत्त्वज्ञानेनात्मातिरिक्तार्थाभावे निश्चिते सङ्कल्पविषया-

अमनस्तां तदा याति ग्राह्याभावे तदग्रहम् ॥३२॥
अकल्पकमजं ज्ञानं ज्ञेयाभिन्नं प्रचक्षते ।
ब्रह्म ज्ञेयमजं नित्यमजेनाजं विबुध्यते ॥ ३३ ॥

---

शाम्यते । दाह्याभावे ज्वलनमिवाग्नेः । यदा यस्मिन् काले तदा तस्मिन् काले । अमनस्तामऽमनोभावम् । याति ग्राह्याभावे । तन्मनोऽग्रहं ग्रहणविकल्पनावर्ज्जितमित्यर्थः ॥ ३२॥

यद्यसदिदं द्वैतं केन समञ्जसमात्मतत्त्वं विबुध्यत इति । उच्यते । अकल्पकं सर्व्वकल्पनावर्ज्जितं अत एवाजं ज्ञानं ज्ञप्तिमात्रं ज्ञेयेन परमार्थसता ब्रह्मणा भिन्नं प्रचक्षते कथयन्ति ब्रह्मविदः । न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽग्न्युष्णवत् । विज्ञानमानन्दं ब्रह्म । सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुतिभ्यः । तस्यैव विशेषणं ब्रह्म ज्ञेयं यस्य स्वस्थं तदिदं ब्रह्म ज्ञेयं औष्ण्यस्येवाग्निवदभिन्नम् । तेनात्मस्वरूपेण

---

भावनिर्द्धारणाय सङ्कल्प्याभावे दृष्टान्तमाह । दाह्येति ॥ यथाग्नेर्दाह्याभावे ज्वलनं न भवति तथा सङ्कल्प्याभावे सङ्कल्पो निरवकाशः स्यादित्यर्थः ॥ सङ्कल्प्याभावे किं मनसो भवति तदाह । यदेति ॥ २२ ॥

मनसश्चेदमनस्त्वं व्यावर्त्तते तर्हि कथमात्मनोऽवबोधो व्यञ्जकाभावादित्याशङ्क्याह । अकल्पकमिति ॥ श्लोकव्यावर्त्यां शङ्कामाह । यदीति ॥ मनोमुख्यस्य द्वैतस्यासत्त्वे व्यञ्जकाभावान्नात्मबोधः सम्भवति । मनसैवानुद्रष्टव्यमिति श्रुतेः । मनसश्चासत्त्वाङ्गीकारादित्यर्थः । स्वरूपभूतेन ज्ञानेनैवात्मनोऽवबोधसम्भवान्नातिरिक्तं मनस्यपेक्ष्यमुत्तरमाह । उच्यत इति ॥ ज्ञेयाभिन्नं ज्ञानमित्यत्र श्रुतीरुदाहरति । न हीति ॥ यथाग्नौ तदात्मकमौष्ण्यं न परिलुप्यते तथेत्युदाहरति । अग्न्युष्णवदिति ॥ अज्ञानं ब्रह्मे-

# निगृहीतस्य मनसो निर्विकल्पस्य धीमतः ।

ज्ञेनज्ञानेनात्मं ज्ञेयमात्मतत्त्वं स्वयमेव विबुध्यते अवगच्छति नित्यप्रकाशस्वरूप इव सविता । नित्यविज्ञानैकरसघनत्वान्न ज्ञानान्तरमपेक्ष्यत इत्यर्थः ॥ ३२ ॥

आत्मसत्यानुरोधेन सङ्कल्पमकुर्व्वत् बाह्यविषयाभावे निरिन्धनाग्निवत्प्रशान्तं निगृहीतं निरुद्धं मनो भवतीत्युक्तम्। एवञ्च मनसो ह्यमनीभावे द्वैताभावश्चोक्तः । तस्यैवं निगृहीतस्य निरुद्धस्य मनसो निर्विकल्पस्य सर्व्वकल्पनावर्जितस्य धीमतो विवेकवतः प्रचरणं प्रचारो यः स तु प्रचारविशेषो

---

त्यादि श्रुतिसंप्रदायार्थमादिपदम् ॥ ज्ञेयाभिन्नमित्युक्तं स्फुटयति । तत्त्वेति ॥ आत्मनः स्वयमेवावगतिरूपत्वाज्ज्ञानान्तरापेक्षेति तमर्थं दृष्टान्तेन स्फुटयति । नित्येति ॥ ३२ ॥

मोक्षमाणस्य ज्ञानफलं स्वर्गवत् न परोक्षं किन्तु दृष्टिवत्प्रत्यक्षम् ॥ अतश्च प्रकृतज्ञानफलस्य मनोनिरोधस्य प्रत्यक्षत्वार्थं प्रसङ्गं करोति । निगृहीतस्येति ॥ न तस्य विज्ञेयत्वं सुषुप्ते प्रविष्टत्वादित्याशङ्क्याह । सुषुप्त इति ॥ श्लोकाक्षराणि व्याकर्त्तुं इत्थं कीर्त्तयति । आत्मेति ॥ तस्य सत्यस्य प्रागुक्तेनानुबोधेन सम्यक्ज्ञानेन बाह्यस्य विषयस्य सङ्कल्पस्याभावे निराबन्धनस्य प्रचारासम्भवे च मनः सङ्कल्पमकुर्व्वत्प्रशान्तं निरुद्धञ्च भवतीत्यन्वयः ॥ निर्विषयं मनः शाम्यतीत्यत्र दृष्टान्तमाह । निरिन्धनेति ॥ निरुद्धे मनसि मनस्त्वव्यावृत्तौ मनःस्पन्दितस्य द्वैतस्याभावमुक्तं स्मारयति । एवञ्चेति ॥ एवं श्लोकमनूद्य पादत्रयस्यार्थमाह । तस्येति ॥ एवं विषयाभावेनेति यावत् ॥ आत्मसत्यानुबोधो विवेकशब्दार्थः । प्रत्यगात्मत्वेन पर्य्यवसानं प्रचारस्तस्य विद्वत्प्रत्यक्षत्वं विवक्षित्वा योगिभिरित्युक्तम् ॥ चतुर्थपादव्यावर्त्तामाशङ्कामाह । नन्विति ॥ निरुद्धस्यापि मनसः प्रचार

प्रचारः स तु विज्ञेयः सुषुप्तेऽन्यो न तत्समः ॥३४॥

---

ज्ञेयो योगिभिः । ननु सर्व्वप्रत्ययाभावे यादृशः सुषुप्तिस्थस्य मनसः प्रचारस्तादृश एव निरुद्धस्यापि प्रत्ययाभावाविशेषात्किं तत्र विज्ञेयमिति । अत्रोच्यते । नैवम् । यस्मात्सुषुप्तेऽन्यः प्रचारोऽविद्यामोहतमोग्रस्तस्यान्तर्लीनानेकानर्थप्रवृत्तिबीजवासनावतो मनस आत्मसत्यानुबोधहुताशविप्लुष्टाविद्याद्यनर्थप्रवृत्तिबीजस्य निरुद्धस्यान्य एव प्रशान्तसर्व्वक्लेशरजसः स्वतन्त्रः प्रचारः । अतो न तत्समः। तस्माद्युक्तः स विज्ञातुमित्यभिप्रायः ॥ ३४ ॥

---

इति सम्बन्धः । विशेषप्रत्ययाभावस्य निरोधे स्वापे च विशेषाभावादिति हेत्वर्थः । तत्र प्रचारे प्रसिद्धे सतीति यावत् । चतुर्थपादमुत्तरत्वेनावतारयति । अत्रेति ॥ निरुद्धस्य मनसः सुषुप्तस्येव प्रचारस्य समानत्वात् न तत्र ज्ञातव्यमस्तीत्युक्तं प्रत्याह । नैवमिति ॥ विद्याभावव्यावृत्त्यर्थं मोहविशेषणं चित्तभ्रमं व्यावर्त्तयितुं तमोविशेषणं अन्तर्लीना गुप्ता अनेकानर्थफलानां प्रवृत्तीनां बीजभूता वासना यस्मिन्मनसि तस्येति सुषुप्तस्य विशेषणम् । आत्मनः सत्यस्यानुबोधो यो व्याख्यातः स एव हुताशो-ऽग्निस्तेन विप्लुष्टान्यविद्यादीन्यनेकानर्थपर्य्यन्तप्रवृत्तीनां बीजानि यस्य तस्येति निरुद्धस्य विशेषणं प्रकर्षेण शान्तं सर्व्वक्लेशात्मकं रजो यस्येति तस्यैव विशेषणान्तरम् ॥ स्वतन्त्रो ब्रह्मस्वरूपावस्थानात्मक इत्यर्थः । यथोक्तस्य प्रचारस्य सुषुप्तप्रचारविलक्षणस्य दुर्ज्ञानत्वे स्थिते फलितमाह । तस्मादिति ॥ ३४ ॥

लीयते हि सुषुप्ते तन्निगृहीतं न लीयते ।
तदेव निर्भयं ब्रह्म ज्ञानालोकं समन्ततः ॥ ३५ ॥

प्रचारभेदे हेतुमाह । लीयते हि । यस्मात्सर्वाभिरविद्यादिप्रत्ययबीजवासनाभिः सह तमोरूपमविशेषरूपं बीजभावमापद्यते तद्विवेकविज्ञानपूर्व्वकं निरुद्धं निगृहीतं सत् न लीयते तमोबीजभावं नापद्यते तस्माद्युक्तः प्रचारभेदः सुषुप्तस्य समाहितस्य मनसः । यदा ग्राह्यग्राहकाविद्याकृतमलद्वयवर्ज्जितं तदा परमद्वयं ब्रह्मैव तत्संवृत्तमित्यतस्तदेव निर्भयम् । द्वैतग्रहणस्य भयनिमित्तस्याभावात् । शान्तमभयं ब्रह्म । यद्विद्वान्न बिभेति कुतश्चन । तदेव विशेष्यते ज्ञप्तिर्ज्ञानमात्मस्वभावचैतन्यं तदेव ज्ञानमालोकः प्रकाशो

मनसः सुषुप्तस्य समाहितस्य च प्रचारभेदोऽस्तीत्युक्तं तत्र हेतुमाह । लीयते हीति ॥ समाहितस्य मनसो द्वैतवर्जितस्य स्वरूपं कथयति । तदेवेति ॥ पूर्व्वार्द्धस्य तात्पर्य्यमाह । प्रचारेति ॥ मनसः सुषुप्तस्य समाहितस्य चेति वक्तव्यम् । यस्मादित्यस्य तस्मादित्युत्तरेण सम्बन्धः । अविद्यादीत्यादिशब्देनाक्षिप्ता रागादयो गृह्यन्ते ॥ सुषुप्ते मनसो वासनाभिः सह लयप्रकारं कथयति । तमोरूपमिति । आपद्यत इति सम्बन्धः ॥ जाग्रद्रूपमवस्थान्तरेऽपि तुल्यमित्यतो विशिनष्टि । अविशेषेत्यादिना ॥ एवमाद्यं पादं व्याख्याय द्वितीयं पादं व्याचष्टे । तदिति ॥ पूर्व्वविभागविभजनेन फलितमाह । तस्मादिति ॥ तदेव निर्भयं ब्रह्मेत्यस्यार्थमाह । यदेति ॥ समाहितं मनो ग्राहकमित्यविद्याकृतं मलद्वयं तेन वर्जितं यदा तदेति सम्बन्धः । मनसो ब्रह्मत्वे निर्भयत्वं तस्य फलितमाह । इत्यत इति ॥ तत्र हेतुमतः शब्देन सूचितमाह । द्वैतेति ॥ यदुपशान्तं ब्रह्माभयमित्युक्तं तस्याभयत्वे प्रमाणं सूचयति । यद्विद्वानिति ॥ ननु यथोक्तं

अजमनिद्रमस्वप्नमनामकमरूपकम्।

---

यस्य तद्ब्रह्म भामालोकं विज्ञानैकरसघनमित्यर्थः। समन्ततः समन्तात्सर्व्वतो व्योमवन्नैरन्तर्य्येण व्यापकमित्यर्थः॥ ३५॥

जन्मनिमित्ताभावात्सबाह्याभ्यन्तरमजम्। अविद्यानिमित्तं हि जन्म रज्जुसर्पवदित्यवोचाम। सा चाविद्याऽऽत्मसत्यानुबोधेन निरुद्धा। यतोऽजं अत एवानिद्रम्। अविद्यालक्षणाऽनादिमाया निद्रा। स्वापात्प्रबुद्धोऽद्वयस्वरूपेणात्मना अतोऽस्वप्नम्। अप्रबोधकृते ह्यस्य नामरूपे प्रबोधाच्चते रज्जुसर्पवद्विनष्टे। न नाम्नाऽभिधीयते ब्रह्म रूप्यते वा न केनचित्प्र-

---

ब्रह्म प्रकाशते न वा प्रकाशते। प्रकाशते चेदुपायापेक्षायामद्वैतव्याघातः। न चेत् प्रकाशते पुरुषार्थत्वासिद्धिरिति तत्राह। तदेवेति॥ तस्य ब्रह्मत्वसिद्धये परिच्छिन्नत्वं व्यवच्छिनत्ति। समन्तत इति॥ ३५॥

प्रकृतमेव प्रकारान्तरेण निरूपयति। अजमित्यादिना॥ न च तस्मिन्निरुपाधिके ब्रह्मणि ज्ञाते कर्त्तव्यशेषः सम्भवतीत्याह। नेति॥ अजत्वमुपपादयति। जन्मेति॥ किं तज्जन्मनिमित्तं यदभावादजत्वमुपपाद्यते तदाह। विद्येति॥ कुतस्तर्हि तन्निवृत्त्या अजत्वसिद्धिस्तत्राह। सा चेति॥ निमित्तनिवृत्त्या अजत्वसिद्धेर्युक्तमनिद्रत्वम्॥ निद्राशब्देनाविद्याभिलापादित्याह। अत एवेति॥ विशेषणान्तरं साधयति। अविद्यालक्षणेति॥ उत्तरविशेषणद्वयं विवृणोति। अप्रबोधेति॥ ब्रह्मणो नामरूपवत्त्वाभावे प्रमाणमाह। यत इति॥ विशेषणान्तरमाह। किञ्चेति॥ सदाभासरूपत्वे हेतुमाह। अग्रहणेति॥ जीवे ह्युपाधिस्थेऽहं रूपग्रहणानुदये तिरोभावः कर्त्ताहमित्यन्यथाग्रहणोदये चाविर्भावो भवति तदभावाद्भासरूपमेव सदा ब्रह्मेत्यर्थः। नन्वाचार्य्योपदेशात् पूर्व्वं ब्रह्मण्यग्रहणं तदुपदेशादूर्ध्वं तद्ग्रहणमिति प्रसिद्धे ब्रह्मण्यपि ग्रहणाग्रहणे स्यातामित्याशङ्क्याह॥ ग्रहणेति॥ यथा रविमपेक्ष्य रात्र्यहनी न स्तः

सकृद्विभातं सर्व्वज्ञं नोपचारः कथञ्चन ॥ ३६ ॥

---

कारेणेत्यनामकमरूपकञ्च तत्। यतो वाचो निवर्त्तन्त इत्यादिश्रुतेः। किञ्च सकृद्विभातं सदैव विभातं सदा भारूपमग्रहणान्यथाग्रहणाविर्भावतिरोभाववर्जितत्वात्। ग्रहणाग्रहणे हि रात्र्यहनी तमश्चाविद्यालक्षणं सदाऽप्रभातत्वे कारणं तदभावात् नित्यचैतन्यभारूपत्वाच्च युक्तं सकृद्विभातमिति। अत एव सर्व्वञ्च तत् ज्ञस्वरूपञ्चेति सर्व्वज्ञम्। नेह ब्रह्मण्येवंविधे उपचरणमुपचारः कर्त्तव्यः। यथाऽन्येषामात्मस्वरूपव्यतिरेकेण समाधानाद्युपचारः। नित्यशुद्धबुद्धमुक्तस्वभावाद्ब्रह्मणः कथञ्चन न कथञ्चिदपि कर्त्तव्यसम्भवोऽविद्यानाशे इत्यर्थः ॥ ३६ ॥

---

किन्तूदयास्तमयकल्पनया कल्प्यते तथा ब्रह्मस्वभावालोचनया ग्रहणाग्रहणे न विद्येते किन्तूपाधिद्वारा कल्प्येते। तेन ब्रह्मणः सदाभारूपत्वमविरुद्धमित्यर्थः। इतश्च निरुपाधिकं ब्रह्म सदा विभातमेषितव्यमित्याह। तमश्चेति॥ अप्रभातत्व इति छेदः। तदभावो ब्रह्मद्रष्टा तमःसम्बन्धाभावः। उक्तमेव हेतूक्तस्य विशेषणान्तरं विशदयति। अत एवेति॥ विदुषो निरुद्धमनसो ब्रह्मस्वरूपावस्थानमुक्तम्। ये तु विदुषाऽपि समाध्यादि कर्त्तव्यमाचक्षते तान् प्रत्याह। नेहेति॥ एवंविधत्वनिरुपाधिकत्वमुपचारः समाध्यादिः। निरुपाधिके ब्रह्मणि विदुषो न कर्त्तव्यशेषोऽस्तीत्येतमर्थं वैधर्म्योदाहरणेन साधयति। यथेत्यादिना॥ अन्येषामनात्मविदामिति यावत्। अविद्यादशायामेव सर्व्वो व्यवहारो विद्यादशायान्त्वविद्याया असत्त्वान्न कोऽपि व्यवहारः। बाधितानुवृत्त्या तु व्यवहाराभाससिद्धिरित्यर्थः ॥ ३६ ॥

सर्व्वाभिलापविगतः सर्वचिन्तासमुत्थितः ।
सुप्रशान्तः सकृज्ज्योतिः समाधिरचलोऽभयः ॥३७॥

---

अनामकत्वाद्युक्तार्थसिद्धये हेतुमाह । अभिलप्यतेऽनेनेति अभिलापो वाक्करणं सर्व्वप्रकारस्याभिधानस्य तस्माद्विगतः । वागत्रोपलक्षणार्था सर्व्वबाह्यकरणवर्जित इत्येतत् । तथा सर्व्वचिन्तासमुत्थितः । चिन्त्यतेऽनयेति चिन्ता बुद्धिस्तस्याः समुत्थितोऽन्तःकरणविवर्जित इत्यर्थः । अप्राणो ह्यमनाः शुभ्र इति श्रुतेः । अक्षरात्परतः परः । यस्मात्सर्व्वविषयवर्जितः अतः सुप्रशान्तः । सकृज्ज्योतिः सदैव ज्योतिरात्मचैतन्यस्वरूपेण समाधिः समाधिनिमित्तप्रज्ञावगम्यत्वात् । समाधीयतेऽस्मिन्निति वा समाधिः । अचलोऽविक्रियः । अत एवाभयो विक्रियाभावात् ॥ ३७ ॥

---

विद्वानेव ब्रह्मेत्यङ्गीकृत्य प्रकृतं ब्रह्म पुंलिङ्गत्वेन निर्दिशति । सर्व्वेति ॥ श्लोकस्य तात्पर्य्यमाह । अनामेति ॥ अत्रेति प्रकृतपदोपादाने तर्हि सर्व्वकरणवर्जितत्वस्यात्मैव सिद्धत्वादुत्तरविशेषणमनर्थकमित्याशङ्क्याह । सर्व्वबाह्येति ॥ बाह्यकरणसम्बन्धराहित्यवदन्तःकरणसम्बन्धराहित्यं दर्शयति । तथेति ॥ उभयविधकरणसम्बन्धवैधुर्य्ये चात्मनः शुद्धत्वे प्रमाणमाह । अप्राण इति ॥ कारणसम्बन्धराहित्यमाह । अक्षरादिति ॥ तत्र परत्वं कार्य्यापेक्षया द्रष्टव्यम् । उक्तं हेतूकृत्य विशेषणान्तरं विशदयति । यस्मादिति ॥ अस्मिन् परस्मिन्नात्मनि समाधीयते निक्षिप्यते जीवस्तदुपाधिश्चेति समाधिः परमात्मा । समाधिनिमित्तया प्रज्ञया तस्यावगम्यत्वाद् वा समाधित्वमवगन्तव्यम् ॥ अत एवेत्युक्तं स्फुटयति । विक्रियेति ॥ २७ ॥

ग्रहो न तत्र नोत्सर्गश्चिन्ता यत्र न विद्यते ।

---

यस्माद्ब्रह्मैव समाधिरचलोऽभय इत्युक्तं अतो न तत्र तस्मिन् ब्रह्मणि ग्रहो ग्रहणं उपादानं नोत्सर्ग उत्सर्जनं हानं वा विद्यते । यत्र हि विक्रिया तद्विषयत्वं वा तत्र हानोपादाने स्यातां न तत् द्वयमिह ब्रह्मणि सम्भवति । विकारहेतोरन्यस्याभावान्निरवयवत्वाच्च । अतो न तत्र हानोपादाने इत्यर्थः ॥ चिन्ता यत्र न विद्यते । सर्व्वप्रकारैव चिन्ता न सम्भवति । यत्रामनस्त्वं कुतस्तत्र हानोपादाने इत्यर्थः । यदैवात्मसत्यानुबोधो जातस्तदैवात्मसंस्थं विषयाभावादग्न्युष्णवदात्मन्येव स्थितं ज्ञानम् । अजाति जातिवर्जितम् । समतां गतं परं साम्यमापन्नम्भवति यदादौ प्रतिज्ञातमतो वक्ष्याम्यकार्पण्यमजाति समतां गतमिति । इदं

---

प्रकृते ब्रह्मण्यविक्रिये विधिनिषेधाधीनयोर्वैदिकयोर्वा लौकिकयोर्वा हानोपादानयोरनवकाशत्वमित्याह । ग्रहो नेति ॥ मनोविषयत्वाभावाच्च ब्रह्मणि तयोरवकाशो नास्तीत्याह । चिन्तेति ॥ यथोक्ते ब्रह्मणि ज्ञाते फलितमाह । आत्मेति ॥ प्रकरणादौ प्रतिज्ञातमुपसंहरति । अजातीति ॥ किमिति । लौकिकौ वैदिकौ वा ग्रहोत्सर्गौ ब्रह्मणि न भवतस्तत्राह । यस्मादिति ॥ उक्तमेवार्थमुपपादयति । यत्र हीति ॥ ब्रह्मणि विक्रियाभावे हेतुमाह । विकारेति ॥ तस्य विक्रियाविषयत्वाभावे हेतुं कथयति । निरवयवत्वाच्चेति ॥ विक्रियायास्तद्विषयत्वस्य चाभावे फलितमाह । अत इति ॥ द्वितीयं पादमवतार्य्य व्याचष्टे । चिन्तेत्यादिना ॥ तृतीयं पादं विभजते । यदैवेति ॥ चतुर्थपादं व्याकरोति । अजातीति ॥ नन्विदं प्रकरणादावुक्तं किमर्थं पुनरिहोच्यते तत्राह । यदादाविति ॥ ननु ग्रहो न तत्रेत्यादौ पूर्व्वत्र तत्त्वज्ञानमुक्तं न त्वका-

आत्मसंस्थन्तदा ज्ञानमजाति समतां गतम् ॥३८॥
अस्पर्शयोगो वै नाम दुर्दर्शः सर्वयोगिभिः।

---

तदुपपन्नितः शाश्वतस्योक्तमुपसंह्रियते। अजाति समतां गतमित्येतस्मादात्मसत्यानुबोधात् कार्पण्यविषयमन्यत्। यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात् प्रैति स कृपण इति श्रुतेः। प्राप्यैतत् सर्व्वः कृतकृत्यो ब्राह्मणो भवतीत्यभिप्रायः ॥ ३८ ॥

यद्यपीदमित्थं परमार्थतत्त्वं अस्पर्शयोगो नामायं सर्व्वसम्बन्धाख्यस्पर्शवर्जितत्वादस्पर्शयोगो नाम वै स्मर्य्यते प्रसिद्ध उपनिषत्सु। दुःखेन दृश्यत इति दुर्दर्शः सर्व्वैर्योगिभिर्वे-

---

र्णयं तत्कथमकार्पण्यं वक्ष्यामीत्युपक्रान्तस्यात्रोपसंहारः सम्भवतीत्याशङ्क्य तत्त्वज्ञानस्यैवाकार्पण्यरूपत्वादुक्तोपसंहारसिद्धिरित्याह। एतस्मादिति॥ तत्त्वज्ञानातिरिक्तं ज्ञानं कार्पण्यविषयमित्यत्र लिङ्गं दर्शयति। यो वा इति॥ तत्त्वज्ञानराहित्ये कृपणत्वमुक्त्वा तद्भावे फलितमाह। प्राप्येति ॥ ३८ ॥

परमार्थब्रह्मस्वरूपावस्थानफलश्चेदद्वैतदर्शनं किमिति तर्हि सर्व्वैरेव नाद्रियते तत्राह। अस्पर्शेति॥ परमार्थतत्त्वं कर्म्मनिष्ठानां बहिर्मुखानां दुर्दर्शनमित्यत्र हेतुमाह। योगिन इति॥ यदुक्तं तत्त्वज्ञानं स्वरूपावस्थानफलकमिति तदङ्गीकरोति। यद्यपीति॥ परमार्थतत्त्वं ब्रह्मेदं प्रत्यग्भूतम्। इत्थं प्रागुक्तपरिपाट्या कूटस्थसच्चिदानन्दात्मकं यद्यपि तत्त्वज्ञानात् प्राप्यते तथापि मूढास्तुष्टास्तन्निष्ठा न भवन्तीति शेषः॥ यस्य तत्त्वानुभवस्य स्वरूपावस्थानं फलमुक्तं तमिदानीं विशिनष्टि। अस्पर्शेति॥ तत्र वर्णाश्रमादिधर्म्मेण पापादिमलेन च स्पर्शो न भवत्यस्मादित्यद्वैतानुभवोऽस्पर्शः। स एष योगो जीवस्य

योगिनो बिभ्यति ह्यस्मादभये भयदर्शिनः ॥ ३९ ॥
मनसो निग्रहायत्तमभयं सर्व्वयोगिनाम् ।

---

दान्तविज्ञानरहितैः सर्व्वयोगिभिरात्मसत्यानुबोधाया-सलभ्य एवेत्यर्थः । योगिनो बिभ्यति ह्यस्मात्सर्व्वे मलवर्जि-तादप्यात्मनाशरूपमिमं योगं मन्यमाना भयं कुर्व्वन्ति अभयेऽस्मिन् भयदर्शिनो भयनिमित्तात्मनाशदर्शनशीला अविवेकिन इत्यर्थः ॥ ३९ ॥

येषां पुनर्ब्रह्मस्वरूपव्यतिरेकेण रज्जुसर्पवत्कल्पित-मेव मन इन्द्रियादि च न परमार्थतो विद्यते तेषां ब्रह्म-स्वरूपाणामभयं मोक्षाख्या चाक्षया शान्तिः स्वभावत एव सिद्धा नान्यायत्ता नोपचारः कथञ्चनेत्यवोचाम । ये त्वतो

---

अस्पर्शभावेन योजनादित्याह । सर्व्वेति ॥ नामेति निपातस्य पर्य्यायं गृहीत्वा विवक्षितमर्थमाह नामेत्यादिना । उपनिषत्सु न लिप्यते कर्म्मणा पापकेनेत्याद्यासु । दुःखं श्रवणमननादिलक्षणम् ॥ योगिशब्दस्य ज्ञानि-विषयत्वं व्यावर्त्तयति । वेदान्तेति ॥ कैस्तर्हि यथोक्तस्यानुभवस्य लभ्य-त्वमित्याशङ्क्याह । आत्मेति ॥ उत्तरार्द्धं विभजते । योगिन इति ॥ कर्म्मिणो हि श्रोत्रिया आत्मनाशाद्य ऽस्माकं भविष्यन्तीति मत्वा तत्त्वज्ञाना-द्विभ्यतीत्यर्थः ॥ अभयनिमित्तमेव तत्त्वज्ञानं मिथ्याज्ञानवशात् भयनिमित्तं पश्यन्तीत्याह । सर्व्वेति ॥ भयदर्शित्वं विशदयति । अभयेति ॥ ३९ ॥

उत्तमदृष्टीनामद्वैतदर्शनं अद्वैतदृष्टिफलस्य मनोनिरोधस्तुल्या मन्दहृष्टीनां मनोनिरोधाधीनमात्म दर्शनमुपन्यस्यति । मनस इति ॥ अभयमित्यस्य भयनिवृत्तिसाधनात्मदर्शनमुच्यते । सर्व्वयोगिनां सर्व्वेषां योगिनां कर्म्मानुष्ठाननिष्ठानां बुद्धिशुद्धिमतामित्यर्थः । मनोनिरो-

# दुःखक्षयः प्रबोधश्चाऽप्यक्षया शान्तिरेव च ॥ ४० ॥

ऽन्ये योगिनो मार्गगा हीनमध्यमदृष्टयो मनोऽन्यदात्मव्यतिरिक्तमात्मसम्बन्धि पश्यन्ति तेषामात्मसत्यानुबोधरहितानां मनसो निग्रहायत्तमभयं सर्वेषां योगिनाम्। किञ्च दुःखक्षयोऽपि। न ह्यात्मसम्बन्धिनि मनसि प्रचलिते दुःखक्षयोऽस्त्यविवेकिनाम्। किञ्चात्मप्रबोधोऽपि मनोनिग्रहायत्त एव। तथाऽक्षयापि मोक्षाख्या शान्तिस्तेषां मनो निग्रहायत्तैव ॥ ४० ॥

---

धाधीनं प्रागुक्तमनूद्य तत्फलं कैवल्यं कथयति। दुःखेति॥ श्लोकस्य विषयं परिशिनष्टि। येषामिति॥ अभयं भयराहित्यं मोक्षाख्यमात्मकमित्यर्थः॥ उक्तलक्षणा शान्तिर्निरतिशयानन्दाभिव्यक्तिः स्वभावतो विद्यास्वरूपसामर्थ्यादित्यर्थः। विदुषां जीवन्मुक्तानां मुक्तेः सिद्धत्वात् न साधनापेक्षेत्याह। नाम्यायत्तेति॥ तत्र वाक्योपक्रममनुकूलयति नेत्यादिना॥ उत्तमेभ्यो ज्ञानवद्भ्योऽधिकारिभ्यो व्यतिरिक्तानधिकारिणोऽवतारयति। ये त्विति॥ योगिनः सुकृतानुष्ठायिनस्तदनुष्ठानादेव सन्मार्गगामिनस्तेषामपि तत्त्वज्ञानं कथञ्चिदुपजातं चेदलं मनोनिग्रहेणेत्याशङ्क्याह। तेषामिति॥ अभयं तदेव तत्त्वज्ञानम्॥ दुःखनिवृत्तिरपि मनोनिग्रहमपेक्ष्य भवतीत्याह। किञ्चेति॥ तदेव व्यतिरेकमुखेन स्फोरयति। न हीति॥ इतश्च मनो निग्रहीतव्यमित्याह। किञ्चेति॥ अभयमित्यत्र सूचितं स्पष्टं विवृणोति आत्मेति॥ इतश्च मनोनिग्रहोऽर्थवानित्याह। तथेति॥ तेषां साधकानां मुमुक्षूणामिति यावत् ॥४०॥

उत्सेक उदधेर्यद्वत् कुशाग्रेणैकबिन्दुना ।
मनसो निग्रहस्तद्वद्भवेदपरिखेदतः ॥ ४१ ॥
उपायेन निगृह्णीयाद्विक्षिप्तं कामभोगयोः ।
सुप्रसन्नं लये चैव यथा कामो लयस्तथा ॥ ४२ ॥

---

मनोनिग्रहोऽपि तेषां उदधेः कुशाग्रेणैकबिन्दुना उत्सेचनेन शोषणव्यवसायवत् व्यवसायवतामनवसन्नान्तःकरणानामनिर्व्वेदादपरिखेदतो भवतीत्यर्थः ॥ ४१ ॥

किमपरिखिन्नव्यवसायमात्रमेव मनोनिग्रह उपायो नेत्युच्यते । अपरिखिन्नव्यवसायवान् सन् वक्ष्यमाणेनोपायेन कामभोगविषयेषु विक्षिप्तं मनो निगृह्णीयात् निरुन्ध्यात् आत्मन्येवेत्यर्थः । किञ्च लीयतेऽस्मिन्निति सुषुप्तो लयस्तस्मिन् लये च सुप्रसन्नं आयासवर्जितमपि इत्येतत् निगृह्णीयादित्यनुवर्त्तते । सुप्रसन्नञ्चेत् । कस्मान्निगृह्यत

---

कथं मुमुक्षूणां जिज्ञासूनां मनोनिग्रहः सिध्येदित्याशङ्क्याह । उत्सेक इति ॥ दृष्टान्तदार्ष्टान्तिकभूतश्लोकनिविष्टाक्षराणि व्याचष्टे । मनोनिग्रहोऽपीति ॥ तेषां व्यवसायवतां उद्योगभागिनामनुद्वेगवतामिति सम्बन्धः । चक्षुषो निमीलने तमो दृश्यते । तस्य च उन्मीलने घटाद्येवोपलभ्यते । न कदाचिदपि अक्लोत्युद्वेगपरिवर्जनात् । प्रागुदीरितानां मनोनिग्रहः सम्भवति तदाह । अपरिखेदत इति ॥ ४१ ॥

समाधिं कुर्व्वतस्तत्त्वसाक्षात्कारप्रतिबन्धकाः । लयविक्षेपसुखरागाः तेभ्योः मनसो वक्ष्यमाणोपायेन निग्रहं कुर्य्यात् । अन्यथा समाधिसाफल्यानुपपत्तेरित्याह । उपायेनेति ॥ प्रागुक्तादुपायादेव मनोनिग्रहपरिग्रहे श्रवणादिविध्यानर्थक्यमिति मन्वानः पृच्छति किमिति ॥ पूर्व्वोक्तोपायवतः श्रवणाद्यनुष्ठितो मनोनिग्रहद्वारा तत्त्वज्ञानसिद्धिरित्युत्तरमाह ।

**दुःखं सर्वमनुस्मृत्य कामभोगान्निवर्त्तयेत् ।**
**अजं सर्वमनुस्मृत्य जातं नैव तु पश्यति ॥ ४३ ॥**

---

इति । उच्यते । यस्माद्यथा कामोऽनर्थहेतुस्तथा लयो ऽपि । अतः कामविषयस्य मनसो निग्रहवल्लयादपि निरोद्धव्यमित्यर्थः ॥ ४२ ॥

कः स उपाय इति । उच्यते । सर्व्वं द्वैतं अविद्याविजृम्भितं दुःखमेवेत्यनुस्मृत्य कामभोगात् कामनिमित्तो भोग इच्छाविषयः । तस्मात् विप्रसृतं मनो निवर्त्तयेत् वैराग्यभावनया इत्यर्थः। अजं ब्रह्म सर्व्वमित्येतत् शास्त्राचार्य्योपदेशतोऽनुस्मृत्य तद्विपरीतं द्वैतजातं नैव तु पश्यति । अभावात् ॥ ४३ ॥

---

नेत्युच्यत इति ॥ तृतीयपादं व्याचष्टे । किञ्चेति ॥ लीयते स्यात्मद्वयमिति शेषः । चतुर्थपादमाकाङ्क्षाद्वारा विवृणोति । सुप्रसन्नमित्यादिना ॥ ४२ ॥

उपायेन निगृह्णीयादित्युक्तम् । तमेवोपायं वैराग्यरूपमुपदिशति । दुःखमिति ॥ ज्ञानाभ्यासाख्यमुपायान्तरमुपन्यस्यति । अजमिति ॥ अक्षरव्याख्यानार्थमाकाङ्क्षां निक्षिपति । कः स इति ॥ तत्र पूर्व्वार्द्धं व्याकरोति । उच्यत इत्यादिना ॥ वैराग्यभावना तत्र तत्र द्वैतविषये दोषानुसन्धानेन वैतृष्ण्यभावना । तथा कामभोगात् मनो निरोद्धव्यमित्यर्थः । द्वितीयार्द्धं ज्ञानाभ्यासविषयं व्याकरोति । अजमित्यादिना ॥ ४३ ॥

लये सम्बोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः।
सकषायं विजानीयात् समप्राप्तं न चालयेत्॥४४॥

---

एवमनेन ज्ञानाभ्यासवैराग्यद्वयोपायेन लये सुषुप्ते लीनं सम्बोधयेन्मनः। आत्मविवेकदर्शनेन योजयेत्। चित्तं मन इत्यनर्थान्तरम्। विक्षिप्तञ्च कामभोगेषु शमयेत् पुनः। एवं पुनः पुनरभ्यस्यतो लयात् सम्बोधितं विषयेभ्यश्च व्यावर्त्तितं नापि साम्यापन्नं अन्तरालावस्थं सकषायं सरागं बीजसंयुक्तं मन इति विजानीयात्। ततोऽपि यत्नतः साम्यमापादयेत्। यदा तु समप्राप्तं भवति सम-

---

ज्ञानाभ्यासवैराग्याभ्यां लयाद्विक्षेपाच्च व्यावर्त्तितं मनो रागप्रतिबद्धं श्रवणमनननिदिध्यासनाभ्यासप्रसूतसम्प्रज्ञातसमाधिपर्य्यन्तेन ततोऽपि प्रतिबन्धाद्व्यावर्त्तनीयमित्याह। लय इति॥ श्लोकाक्षराणि व्याकरोति। एवमित्यादिना॥ ज्ञानाभ्यासः श्रवणाद्यावृत्तिर्विषयेषु क्षयिष्णुत्वादिदोषदर्शनेन वैतृष्ण्यं वैराग्यं लयो निद्रा सम्बोधनमेवाभिनयति। आत्मेति॥ मनसि प्रकृते किमिति चित्तमुच्यते तत्राह। चित्तमिति॥ विक्षिप्तं विप्रसृतं शमयेत् व्यावर्त्तयेत् इति यावत्। पुनरित्यस्य विवक्षितमर्थमाह। एवमिति॥ उभयतो व्यावर्त्तितं मनस्तर्हि निर्विशेषब्रह्मरूपतां गतमित्याशङ्क्याह। नापीति॥ अन्तरालावस्थमनसः स्वरूपं तृतीयपादावष्टम्भेन स्फुटयति। सकषायमिति॥ रागस्य बीजत्वं पराचीनविषयप्रवृत्तिं प्रति प्रतिपत्तव्यम्॥ यथोक्तं मनो ज्ञात्वा किं कर्त्तव्यमित्यपेक्षायामाह। ततोऽपीति॥ अन्तरालावस्था पञ्चम्या परामृश्यते। लयावस्थादि दृष्टान्तयितुमपिशब्दः। यत्नतः सम्प्रज्ञातसमाधेरिति यावत्। साम्यमसम्प्रज्ञातसमाधिमित्यर्थः॥ चतुर्थपादस्यार्थमाह। यदा त्विति॥ समाधिद्वयद्वारेण समं निर्विशेषं परिपूर्णं ब्रह्मरूपं

# नास्वादयेत् सुखं तत्र निःसङ्गः प्रज्ञया भवेत् ।

---

प्राप्त्यभिमुखी भवतीत्यर्थः । ततस्तत् न विचालयेत् विषयाभिमुखं न कुर्य्यादित्यर्थः ॥ ४४ ॥

समाधिस्थितो योगिनो यत् सुखं जायते तन्नास्वादयेत् तत्र न रज्येतेत्यर्थः । कथं तर्हि निःसङ्गः निस्पृहः प्रज्ञया विवेकबुद्ध्या यदुपलभ्यते सुखं तदविद्यापरिकल्पितं मृषैवेति विभावयेत । ततोऽपि सुखरागान्निगृह्णीयात् इत्यर्थः । यदा पुनः सुखरागान्निवृत्तं निश्चल-

---

प्राप्य मनस्तन्मात्रतया समासन्नं दप्राप्तप्रतिषेधः स्यादित्याशङ्क्याह । समप्राप्नोति ॥ ततो निर्विशेषवस्तुप्राप्त्याऽऽभिमुख्यादनन्तरमित्यर्थः । किं तन्मनसश्चालनं यत्प्रतिषिध्यते तत्राह । विषयेति ॥ ४४ ॥

समाधिस्थायां यत्सुखमुत्पद्यते तद्विषयाभिलाषादपि मनो निरोद्धव्यमित्याह । नास्वादयेति ॥ तत्रेति समाध्यवस्थोच्यते । किन्तु तस्यामवस्थायां सुखं यदुपलभ्यते तदज्ञानविजृम्भितं मिथ्यैवेति प्रज्ञया विवेकविज्ञानेन निस्पृहः सन् भावयेदित्याह । निःसङ्ग इति ॥ किञ्च यश्चित्तं प्राचीनवैराग्याद्युपायेन निश्चलं प्रत्यगात्मप्रवणं प्रसाधितं तद्यदि स्वभावानुसारेण वहिर्निर्गन्तुमिच्छेत्तदा सम्प्रज्ञातसमाधेरसम्प्रज्ञातसमाधिपर्य्यन्तात् प्रयत्नात् तदात्मन्येवैकीकृत्य तन्नात्मतामापद्य परिशुद्धपरिपूर्णब्रह्मात्मकः स्वयं तिष्ठेत् इत्याह । निश्चरदिति ॥ प्रथमपादाक्षराणि योजयति । समाधिस्थित इति ॥ तस्य समाध्यवस्थायामिति शेषः ॥ द्वितीयपादमाकाङ्क्षाद्वारा विवृणोति । कथमित्यादिना ॥ निस्पृहो यथोक्ते सुखे ऽनुरागरहितः सन्नित्यर्थः । विवेकरूपा बुद्धिरामन्त्रकस्य रज्जुसर्पवत् कल्पिततत्त्वमित्येवमात्मिका तया भावयेदिति सम्बन्धः ॥ भावनाप्रकारमभिनयति । यदित्यादिना ॥ प्रथमार्द्धस्याक्षरार्थमुक्त्वा तात्पर्यार्थं निगमयति । ततोऽपीति ॥ उत्तरार्द्धं विभजते । यथेत्यादिना ॥ पूर्व्वोक्तसमा-

निश्चलं निश्चरत् चित्तं एकीकुर्य्यात् प्रयत्नतः॥४५॥
यदा न लीयते चित्तं न च विक्षिप्यते पुनः।
अनिङ्गनमनाभासं निष्पन्नं ब्रह्म तत्तथा ॥ ४६ ॥

---

स्वभावं सन्निश्चरद्बहिर्निर्गच्छद्भवति चित्तं ततस्ततो नियम्योक्तोपायेन आत्मन्येवैकीकुर्य्यात् प्रयत्नतः। चित्स्वरूपसत्तामात्रमेवापादयेदित्यर्थः ॥ ४५ ॥

यथोक्तेन उपायेन निगृहीतं चित्तं यदा सुषुप्ते न लीयते न च पुनर्विषयेषु विक्षिप्यते अनिङ्गनमचलं निवातप्रदीपकल्पम्। अनाभासं न केनचित्कल्पितेन विषयभावेनावभासते इति। यदैवं लक्षणं चित्तं तदा निष्पन्नं ब्रह्म ब्रह्मस्वरूपेण निष्पन्नं चित्तं भवतीत्यर्थः ॥ ४६ ॥

---

ध्यनुरोधादात्मन्येव निश्चलस्वभावं यच्चित्तं यथोक्तं सुखरागनिमित्तं तदुपायरागनिमित्तं वा निश्चरत् भवतीति सम्बन्धः। तच्च चित्तं बाह्यविषयाभिमुख्यादुक्तोपायेन ज्ञानाभ्यासादिना व्यावर्त्त्यात्मन्येव परस्मिन् ब्रह्मणि प्रयत्नतः सम्प्रज्ञातसमाधिवशादेकीकुर्य्यात्। असंप्रज्ञातसमाधियुक्तं परिपूर्णं ब्रह्मैवापादयेदित्यर्थः॥ तदेव स्पष्टयति। चित्स्वरूपेति ॥४५॥

कदा पुनरिदं चित्तं ब्रह्ममात्रमापद्यते तत्राह। यदेति॥ त्रिविधप्रतिबन्धविधुरं विषयाकाररहितं यदा चित्तमवतिष्ठते तदा ब्रह्म सम्पन्नं भवतीत्यर्थः॥ अक्षराणि व्याचष्टे। यथोक्तेनेत्यादिना॥ उपायो ज्ञानाभ्यासादिः। निगृहीतं विषयेभ्यो विमुखीकृतं न लीयते न निद्रापारवश्येन कारणात्मतां गतमित्यर्थः। अचलं रागादिवासनाशून्यमित्यर्थः। अचलत्वे दृष्टान्तो निवातेति॥ किन्तु ब्रह्माकारेणेत्येवं भूतं चित्तं यदा सम्पद्यते तदेति योजना॥ निष्पन्नं ब्रह्मेत्यत्रमेव स्फुटयति। ब्रह्मस्वरूपेणेति॥४६॥

स्वस्थं शान्तं सनिर्व्वाणं अकथ्यं सुखमुत्तमम्।
अजमजेन ज्ञेयेन सर्वज्ञं परिचक्षते ॥ ४७ ॥

---

यथोक्तं परमार्थसुखमात्मसत्यानुबोधलक्षणं स्वस्थं स्वात्मनि स्थितम्। शान्तं सर्व्वानर्थोपशमरूपम्। सनिर्व्वाणं निर्वृतिर्निर्व्वाणं कैवल्यं सह निर्व्वाणेन वर्त्तते। तच्चाकथ्यं न शक्यते कथयितुम्। अत्यन्तासाधारणविषयत्वात्। सुखमुत्तमं निरतिशयं हि तत् योगिप्रत्यक्षमेव। न जातमित्यजम्। यथा विषयं अजेनानुत्पन्नेन ज्ञेयेनाव्यतिरिक्तं सत् स्वेन सर्वज्ञरूपेण सर्वज्ञं ब्रह्मैव सुखं परिचक्षते कथयन्ति ब्रह्मविदः ॥ ४७ ॥

---

असम्प्रज्ञातसमाध्यवस्थायां येन रूपेण चित्तमभिनिष्पद्यते तद्ब्रह्म। स्वरूपं विशिनष्टि। स्वस्थमिति॥ ज्ञेयेनाव्यतिरिक्तमित्यादि शेषः। तत्र विदुषां सम्मतिमुदाहरति। सर्व्वज्ञमिति॥ यथोक्तमित्यसम्प्रज्ञातसमाधिलक्षणं ब्रह्मेत्यर्थः। तस्य परमपुरुषार्थरूपतामाह। सुखमिति॥ वैषयिकसुखं व्यवच्छेत्तुं परमार्थेति विशेषणम्॥ किन्तत्र प्रमाणमित्याशङ्क्याह। आत्मेति॥ तस्य सत्यस्यावगमात्मार्थानुरोधिना बोधेन लक्ष्यते प्राप्यते ब्रह्मेति तथोच्यते॥ तस्य स्वमहिमप्रतिष्ठत्वमाह। स्वात्मनीति॥ सर्व्वस्य त्रिविधस्यानर्थस्योपशमेनोपलक्षितत्वादपि पुरुषार्थत्वसिद्धिरित्याह। सर्व्वेति॥ निरतिशयानन्दाऽभिव्यक्तिनिरवशेषानर्थोच्छित्तिश्चेत्येवं लक्षणं मोक्षमाचष्टे॥ तत्कथमिदं ब्रह्मेत्याशङ्क्याह। सनिर्व्वाणमिति॥ तस्य क्षीरगुडादिमाधुर्य्यमदस्येव स्वानुभवमात्राधिगम्यत्वादवाच्यत्वमाह। तच्चेति। यदुक्तं परमार्थसुखमिति तदिदानीमुपपादयति। सुखमिति॥ तर्हि सर्व्वेषामेव तत् भूयादित्याशङ्क्याह। योगीति॥ ज्ञानस्याऽजातत्वे वैधर्म्यदृष्टान्तमाह। यथेति॥ ४७ ॥

**न कश्चिज्जायते जीवः सम्भवोऽस्य न विद्यते ।**
**एतत्तदुत्तमं सत्यं यत्र किञ्चिन्न जायते ॥ ४८ ॥**

---

सर्व्वोऽप्ययं मनोनिग्रहादिर्मृल्लोहादिवत् सृष्ट्युपासना चोक्ता परमार्थस्वरूपप्रतिपत्त्युपायत्वेन न परमार्थसत्येति। परमार्थसत्यं तु न कश्चित् जायते जीवः कर्त्ता भोक्ता च नोत्पद्यते केनचिदपि प्रकारेण। अतः स्वभावतोऽजस्याऽस्यैकस्यात्मनः सम्भवः कारणं न विद्यते नास्ति। यस्मान्न विद्यतेऽस्य कारणं तस्मान्न कश्चिज्जायते जीव इत्येतत्। पूर्व्वेषूपायत्वेनोक्तानां सत्यानामेतदुत्तमं सत्यं यस्मिन् सत्यस्वरूपे ब्रह्मण्यणुमात्रमपि किञ्चिन्न जायते इति ॥ ४८ ॥

---

उक्तानामुपायानां परमार्थसत्यत्वे सत्यद्वैतहानिः। अन्यथा तद्-प्रमितिरित्याशङ्क्याह। न कश्चिदिति॥ तत्र हेतुमाह। सम्भवोऽस्येति॥ श्लोकाक्षराणि व्याकर्त्तुं भूमिकां व्याकरोति। सर्व्वोऽपीति॥ व्याव-हारिकसत्यत्वमेवोपायानां न परमार्थसत्यत्वमित्यङ्गीकृत्य पारमार्थिक-सत्यस्य प्रतिपत्त्युपायत्वेनैवोक्तेत्याह। मृदिति॥ यदुक्तं मनोनिग्रहा-दीनां परमार्थत्वे द्वैतहानिरिति तत्राह। नेत्यादिना॥ तेषामपर-मार्थत्वे कथमद्वैतप्रतिपत्तिरित्यपि न व्यवहारिकसत्यानामपि तत् प्रमितिहेतुत्वस्य प्रतिबिम्बवदुपपत्तेरिति भावः। उपायानां व्यवहारिक-सत्यत्वेनैव पारमार्थिकं सत्यत्वं किं न स्यादिति तत्राह परमार्थेति॥ तदेव स्पष्टयति। कर्त्तेति॥ स्वभावतोऽजत्वं हेतूकर्त्तव्यम्। तत्रैव हेत्व-न्तरमाह। अत इति॥ हेत्वन्तरमेव स्पष्टयति। यस्मादिति॥ उत्तरार्द्धं व्याचष्टे। पूर्व्वेष्विति॥ पूर्व्वेषु पञ्चेष्विति शेषः। इति शब्दो द्वैतप्रक-रणपरिसमाप्तिं द्योतयति॥ ४८॥

इति गौडपादीयकारिकायामद्वैताख्यं तृतीयं प्रकरणम् ॥ ३ ॥ ॐ तत्सत् ॥

---

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीशङ्करभगवतः कृतौ गौडपादीयभाष्ये आगमशास्त्रविवरणेऽद्वैताख्यतृतीयप्रकरणभाष्यम् ॥ ३ ॥ ॐ तत्सत् ॥

---

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्य-भगवदानन्दज्ञानविरचितायां गौडपादभाष्यटीकायां तृतीयं प्रकरणं समाप्तम् ॥ ३ ॥ ॐ तत्सत् ॥ हरिः ॐ ॥

---

ज्ञानेनाकाशकल्पेन धर्म्मान् यो गगनोपमान् ।

---

ओँकारनिर्णयद्वारेण आगमतः प्रतिज्ञातस्याद्वैतस्य बाह्यविषयभेदवैतथ्याच्च प्रसिद्धस्य पुनरद्वैते शास्त्रयुक्तिभ्यां साक्षान्निर्धारितस्यैतदुत्तमं सत्यमित्युपसंहारः कृतः अन्ते तस्यैतस्यागमार्थस्याद्वैतदर्शनस्य प्रतिपक्षभूता द्वैतिनो वैनाशिकाश्च तेषां चान्योऽन्यविरोधाद्रागद्वेषादिक्लेशास्पदं दर्शनमिति मिथ्यादर्शनत्वं सूचितम्। क्लेशानास्पदत्वात् सम्यग्दर्शनमित्यद्वैतदर्शनस्तुतये। तदिह विस्तरेणान्योन्यविरुद्धतया असम्यग्दर्शनत्वं प्रदर्श्य तत्प्रतिषेधेनाद्वैतदर्शनसिद्धिरुपसंहर्त्तव्या। आवीतन्यायेनेत्यलातशान्तिरारभ्यते तत्राद्वैतदर्शनं सम्प्रदायकर्त्तुरद्वैतस्वरूपेणैव नम-

---

आद्यन्तमध्यमङ्गला ग्रन्थाः प्रचारिणो भवन्तीत्यभिप्रेत्यादावोङ्कारोच्चारणवदन्ते परदेवताप्रणामवत् मध्येऽपि परदेवतारूपमुपदेष्टारं प्रणमति। ज्ञानेति॥ पूर्वोत्तरप्रकरणसम्बन्धसिद्ध्यर्थं पूर्वप्रकरणत्रये वृत्तमर्थं क्रमादनुद्रवति। ओँकारेति॥ अद्वैत इत्यद्वैतोपलक्षितं तृतीयं प्रकरणमुच्यते। चतुर्थं प्रकरणमवतारयितुमुपयुक्तमर्थान्तरमनुवदति। तस्येति॥ द्वैतिनो भेदवादिनो वैनाशिकव्यतिरिक्ता गृह्यन्ते वैनाशिका नैरात्म्यवादिनः रागद्वेषादीत्यादिशब्देनातिरिक्तक्लेशोपादानम्। पक्षान्तराणां मिथ्यादर्शनत्वसूचनं कुत्रोपयुज्यते। तत्राह। क्लेशेति॥ पातनिकामेवं कृत्वा समनन्तरप्रकरणप्रवृत्तिं प्रतिजानीते। तदिहेति॥ तदसम्यग्दर्शनत्वमिति सम्बन्धः। आवीतन्यायो व्यतिरेकन्यायः। यथा यत्कृतकं तदनित्यमित्यन्वयादनित्यत्वेऽवगतेऽपि यन्नानित्यं न तत्कृतकमिति व्यतिरेकोऽपि व्यभिचारशङ्कानिराशितत्वेन व्याप्तिनिश्चयार्थमिष्यते। तथा तर्कतः सम्भावितस्यावगमेनावगतस्यापि

ज्ञेयाभिन्नेन सम्बुद्धस्तं वन्दे द्विपदाम्बरम् ॥ १ ॥

---

स्कारार्थोऽयमाद्यश्लोकः। आचार्य्यपूजा ह्यभिप्रेतार्थसिद्ध्यर्थेष्यते शास्त्रारम्भे। आकाशेनेषदसमाप्तमाकाशकल्पमाकाशतुल्यमेतत्। तेनाकाशकल्पेन ज्ञानेन किं धर्म्मानात्मनः किंविशिष्टान् गगनोपमान् गगनमुपमा येषान्ते गगनोपमाः तानात्मनो धर्म्मान्। ज्ञानस्यैव पुनर्व्विशेषणम्। ज्ञेयैर्धर्म्मैरात्मभिरभिन्नमग्न्युष्णप्रकाशवत्सवितृप्रकाशवच्च ज्ञानं तेन ज्ञेयाभिन्नेन ज्ञानेनाकाशकल्पेन ज्ञेयात्मस्वरूपाव्यतिरिक्तेन गगनोपमान् धर्म्मान् यः सम्बुद्धः सम्बुद्धवानित्ययमेवेश्वरो यो नारायणाख्यस्तं वन्दे अभिवादये द्विपदां वरं द्विपदोपलक्षितानां पुरुषाणां वरं प्रधानं पुरुषोत्तममित्य-

---

प्रतिपक्षभूतवादान्तरापाकरणप्रपञ्चमन्तरेण पारिशेष्यसिद्धमद्वैतदर्शनस्येति तत्प्रतिषेधेन तत्सिद्धिरुपसंहर्त्तव्येत्यलातशान्तिदृष्टान्तोपलक्षितमारभ्यते प्रकरणमित्यर्थः। विशेषेण स्पष्टमितो वीतः न भवतीत्यवीतः। अवीत एवावीतः। तेन न्यायेन व्यतिरेकेणेति यावत्॥ प्रकरणस्य तात्पर्य्यमेवं दर्शयित्वा प्रथमश्लोकस्य तात्पर्य्यमाह। तत्रेति॥ तत्र चतुर्थप्रकरणं सप्तम्या परामृश्यते॥ किमित्यद्वैतरूपे शास्त्रे आचार्य्यो नमस्क्रियते तत्राह। आचार्य्येति॥ अभिप्रेतार्थः शास्त्रस्याविघ्नपरिसमाप्तिस्तदर्थं विप्रतिपक्षादिव्यावृत्तिश्च। आकाशस्य जडत्वाधिक्यात् ज्ञानं स्वप्रकाशमाकाशेनेषदसमाप्तं वक्तव्यम्। विभुत्वादावुपमा द्रष्टव्या। बहुवचनन्तूपाधिकल्पितभेदाभिप्रायम्। तेषामपि चिन्मात्रत्वं विवक्षितोक्तं ज्ञानस्यैवेति॥ ज्ञेयेत्यादि पुनरनुवादेनान्वयमन्वाचष्टे। आचार्य्यो हि पुरा बदरिकाश्रमे नरनारायणाधिष्ठिते नारायणं भगवन्तमभिप्रेत्य तपो मह-

अस्पर्शयोगो वै नाम सर्वसत्त्वसुखो हितः ।

भिप्रायः । उपदेष्टृनमस्कारमुखेन प्रामाण्यं यस्मात्प्रभेदरहितं परमार्थतत्त्वदर्शनमिह प्रकरणे प्रतिपिपादयिषितं प्रतिपक्षप्रतिषेधद्वारेण प्रतिज्ञातं भवति ॥ १ ॥

अधुनाऽद्वैतदर्शनयोगस्य नमस्कारस्तत्स्तुतये स्पर्शनं स्पर्शसम्बन्धो न विद्यते यस्य योगस्य केनचित्कदाचिदपि सोऽस्पर्शयोगो ब्रह्मस्वभाव एव वै नामेति । ब्रह्मविदामस्पर्शयोग इत्येवं प्रसिद्ध इत्यर्थः । स च सर्वसत्त्वसुखो भवति । कश्चिदत्यन्तसुखसाधनविशिष्टोऽपि दुःखरूपः यथातपः अयन्तु न तथा किन्तर्हि सर्व्वसत्त्वानां सुखः । तथेह भवति कश्चिद्विषयोपभोगः सुखो न हितः । अयन्तु सुखो हितश्च ।

दतश्चत । ततो भगवानतिप्रसन्नस्तस्मै विद्यां प्रादादिति प्रसिद्धं परमगुरुत्वं परमेश्वरे इति भावः ॥ ननु प्रकरणे प्रारभ्यमाणे प्रतिपद्ये प्रमेये वक्तव्ये किमित्युपदेष्टा नमस्क्रियते तत्राह । उपदेष्टृति ॥ १ ॥

इदानीमद्वैतदर्शनयोगस्तुतये तन्नमस्कारं प्रस्तौति । अस्पर्शेति ॥ श्लोकस्य तात्पर्य्यमाह । अधुनेति ॥ तस्य च स्तुतिः तत्साधनेषु प्रवृत्तावुपयुज्यते । तस्मात्यक्षराणि व्याकुर्व्वन् अस्पर्शयोगशब्दं व्याकरोति । स्पर्शनमिति ॥ योगस्याऽन्यसम्बन्धप्रसङ्गाभावात् कथमस्पर्शत्वमित्याशङ्क्याह ब्रह्मेति ॥ निपातयोरर्थं कथयति । वै नामेति ॥ सर्व्वेषां सत्त्वानां देहभृतां सुखयतीति व्युत्पत्त्या सुखहेतुत्वं ब्रह्मस्वभावस्य सुखविशेषणेन दर्शयति । सचेति ॥ सुखहेतावपि ब्रह्मस्वभावे विवक्षितं विशेषं दर्शयति । भवतीति ॥ हितविशेषणस्य तात्पर्य्यमाह । तथेह भवतीत्यादिना ॥ तस्य तद्धितत्वे हेतुमाह । नित्यमिति ॥ तस्यैव विशेषणान्तरमाह । किञ्चेति ॥

अविवादोऽविरुद्धश्च देशितस्तं नमाम्यहम् ॥ २ ॥
भूतस्य जातिमिच्छन्ति वादिनः केचिदेव हि ।
अभूतस्यापरे धीरा विवदन्तः परस्परम् ॥ ३ ॥

---

नित्यमप्रचलितस्वभावत्वात् । किञ्चाऽविवादः विरुद्धवदनं विवादः पक्षप्रतिपक्षपरिग्रहेण यस्मिन्न विद्यते सोऽविवादः । कस्मात् यतोऽविरुद्धश्च य ईदृशो योगो देशित उपदिष्टः शास्त्रेण तं नमाम्यहं प्रणमामीत्यर्थः ॥ २ ॥

कथं द्वैतिनः परस्परं विरुध्यन्त इति । उच्यते । भूतस्य विद्यमानस्य वस्तुनो जातिमुत्पत्तिमिच्छन्ति वादिनः केचिदेव हि साङ्ख्या न सर्व एव द्वैतिनः । यस्मादभूतस्याऽविद्यमानस्याऽपरे वैशेषिका नैयायिकाश्च धीरा धीमन्तः प्राज्ञाभिमानिन इत्यर्थः । विवदन्तोऽन्योऽन्यमिच्छन्ति जेतुमित्यभिप्रायः ॥ ३ ॥

---

तत्र हेतुं प्रश्नपूर्व्वकमाह । कस्मादिति ॥ आत्मप्रकाशत्वात् ब्रह्मस्वभावस्याविरुद्धत्वम् । न हि कस्यचिदात्मप्रकाशो विरुद्धो भवतीत्यर्थः । यथोक्तयोगज्ञानमार्गस्य सम्प्रदायागतत्वमाह । य ईदृश इति ॥ तन्नमस्कारव्याजेन तस्य स्तुतिस्तदुपायेषु श्रोतृप्रवृत्त्यर्थमत्र विवक्षितेत्याह । तन्नमामीति ॥ २ ॥

अद्वैतदर्शनस्याविरुद्धत्वेनाविवादत्वं विशदीकर्त्तुं द्वैतिनां विवादं तावदुदाहरति । भूतस्येति ॥ एवं विरुद्धं वदन्तो मिथो जेतुमिच्छन्तीत्याह । विवदन्त इति ॥ प्रश्नपूर्व्वकं श्लोकाक्षराणि योजयति । कथमित्यादिना ॥ एवकारार्थे हेतुमाह । यस्मादिति ॥ प्राज्ञाभिमानिनो जातिमिच्छन्तीति पूर्व्वेण सम्बन्धः । चतुर्थं पादं साध्याहारं व्याकरोति । विवदन्त इति ॥ ३ ॥

भूतं न जायते किञ्चिदभूतं नैव जायते ।
विवदन्तोऽद्वया ह्येवमजातिं ख्यापयन्ति ते ॥ ४ ॥
ख्याप्यमानामजातिं तैरनुमोदामहे वयम् ।
विवदामो न तैः सार्द्धमविवादं निबोधत ॥ ५ ॥

---

तैरेवं विरुद्धवदनेनाऽन्योन्यपक्षप्रतिषेधं कुर्व्वद्भिः किं ख्यापितं भवतीति । उच्यते । भूतं विद्यमानं वस्तु न जायते किञ्चिद्विद्यमानत्वादेव आत्मवदित्येवं वदन्न सद्वादी सांख्यपक्षं प्रतिषेधति । सज्जन्म तथा अभूतमविद्यमानमविद्यमानत्वान्नैव जायते शशविषाणवदित्येवं वदन् साङ्ख्योऽप्यसद्वादिपक्षमसज्जन्म प्रतिषेधति । विवदन्तो विरुद्धं वदन्तोऽद्वया अद्वैतिनोऽप्येतेऽन्योन्यस्य पक्षौ सदसतोर्जन्मनी प्रतिषेधन्तोऽजातिमनुत्पत्तिमर्थात् ख्यापयन्ति प्रकाशयन्ति ते ॥४॥

तैरेवं ख्याप्यमानामजातिमेवमस्त्वित्यनुमोदामहे केवलं न तै सार्द्धं विवदामः पक्षप्रतिपक्षग्रहणेन । यथा तेऽन्योन्यमित्यभिप्रायः । अतस्तमविवादं विवादरहितं परमार्थदर्शनमनुज्ञातमस्माभिर्निर्बोधत हे शिष्याः ॥ ५ ॥

---

पक्षद्वयनिषेधमुखेन सिद्धमर्थं कथयति । भूतमित्यादिना ॥ श्लोकाक्षरव्याख्यानार्थमाकाङ्क्षामिक्षिपति । तैरिति ॥ तत्राद्यं पादमवतार्य्य व्याकरोति । उच्यत इति ॥ द्वितीयपादं विभजते । तथेति ॥ द्वितीयार्द्धं विभजते । विवदन्त इत्यादिना ॥ सदसदतिरिक्त वस्त्वभावाद्वस्तुत उत्पत्तेरनुपपत्तिरित्याह । अर्थादिति ॥ ४ ॥

तर्हि प्रतिवादिभिरुक्तत्वादजातिरपि भवता प्रत्याख्येयेत्याशङ्क्याह । ख्याप्यमानामिति ॥ प्रतिवादिभिः सह विवादाभावे फलितमाह । अविवादमिति ॥ अक्षराणि व्याचष्टे । तैरित्यादिना ॥ अद्वैतवादिनो द्वैत-

अजातस्यैव धर्मस्य जातिमिच्छन्ति वादिनः ।
अजातो ह्यमृतो धर्मो मर्त्यतां कथमेष्यति ॥६॥
न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा ।
प्रकृतेरन्यथाभावो न कथञ्चिद्भविष्यति ॥ ७ ॥
स्वभावेनामृतो यस्य धर्मो गच्छति मर्त्यताम् ।
कृतकेनामृतस्तस्य कथं स्थास्यति निश्चलः ॥८॥

---

सदसद्वादिनः सर्वे यान्ति पुरस्तात्कृत भाष्यश्लोकाः ॥ ६ ॥
उक्तार्थानां श्लोकानामिहोपन्यासः परवादिपक्षाणामन्योन्यविरोधख्यापितानुमोदनप्रदर्शनार्थः ॥ ७ ॥ ८ ॥

---

वादिभिर्विवादाभावे वैधर्म्यदृष्टान्तमाह । यथा न इति ॥ चतुर्थपादार्थमाह । अत इति ॥ ५ ॥

जातस्यैव जन्मनाऽनर्थक्यादनवस्थानाच्चाऽजातस्यैव पदार्थस्य जन्म सद्वादिनोऽसद्वादिनश्च सर्वेऽपि स्वीकुर्वन्तीति परपक्षमनुवदति । जातस्येति ॥ तत्र शिष्टाभीष्टदोषं प्रदर्श्याऽभ्यनुजानाति । अजातो हीति ॥ के ते वादिनो यैरेवमिष्यते तत्राह । सदसदिति ॥ अवशिष्टानि श्लोकाक्षराणि व्याख्यातत्वान्न पुनर्व्याख्यानमपेक्षन्तीत्याह । पुरस्तादिति ॥६॥

परिणामिब्रह्मवादे यदब्रह्मवादिभिर्दूषणमुच्यते तदप्यनुमतमेवेति मत्वाह । न भवतीति ॥ अमृतं हि ब्रह्म न तद्रूपे स्थितं मर्त्यभवितुमर्हति । स्थितरूपविरोधात् । न च मर्त्यं कार्यं स्वरूपस्थिते प्रध्वंसावस्थायाममृतं ब्रह्म सम्पद्यते । नष्टेऽपि स्वरूपे तस्यैवाभावान्नान्यथात्वमित्यभिप्रेत्याह । प्रकृतेरिति ॥ किञ्च यस्य परिणामवादिनः स्वभावेनामृतः सन् परमात्माख्यो धर्मशब्दितो भावो मर्त्यतां कार्यभावापत्त्या गच्छति । तस्य कृते केन तत्तत्क्रियाऽनुष्ठानेनाऽमृतो जातो मुक्तो वक्तव्यः । स च कथं निश्चलः स्थातुं पारयति । यत्कृतकं तदनित्यमिति न्यायविरोधादित्याह । स्वभावेनेति ॥ पुनरुक्तिमाशङ्क्य प्रत्यादिशति । उक्तार्थानामिति ॥ ७ ॥ ८ ॥

सांसिद्धिकी स्वाभाविकी सहजा अकृता च या ।
प्रकृतिः सेति विज्ञेया स्वभावं न जहाति या ॥९॥

---

यस्माल्लौकिक्यपि प्रकृतिर्न विपर्य्येति काऽसावित्याह सम्यक्सिद्धिः संसिद्धिस्तत्र भवा सांसिद्धिकी यथा योगिनां सिद्धानामणिमाद्यैश्वर्य्यप्राप्तिः ॥ प्रकृतिः सा भूतभविष्यत्कालयोरपि योगिनां न विपर्य्येति तथैव सा । तथा स्वाभाविकी द्रव्यस्वभावत एव सिद्धा । यथाऽग्न्यादीनामुष्णप्रकाशादिलक्षणा सापि न कालान्तरे व्यभिचरति देशान्तरे च तथा सहजा आत्मना सहैव जाता यथा पक्ष्यादीनामाकाशगमनादिलक्षणा । अन्यापि या काचिदकृता केनचिन्न कृता यथाऽपां निम्नदेशगमनादिलक्षणा । अन्यापि या काचित्स्वभावं न जहाति सा सर्व्वा प्रकृतिरिति विज्ञेया । लोके मिथ्याकल्पितेषु लौकिकेष्वपि वस्तुषु प्रकृतिर्नान्यथा भवति किमुताऽजस्वभावेषु पर-

---

प्रकृतेरन्यथाभावो न कथञ्चिदित्युक्तं तत्र प्रकृतिशब्दार्थं कथयति । सांसिद्धिकीति ॥ श्लोकाक्षराणि व्याकुर्व्वन् प्रकृतेरन्यथात्वाभावे हेतुमाह । यस्मादिति ॥ तस्मादजाम्नतस्वभावा प्रकृतिर्न विपर्य्येतीति किमु वक्तव्यमिति योजना । कैमुतिकन्यायद्योतनार्थोऽपिशब्दः । विवक्षितं हेतुं स्फुटयितुं प्रश्नपूर्व्वकं विभजते । काऽसावित्यादिना ॥ साङ्गयोगमनुष्ठाय परिसमापनं संसिद्धिः । सिद्धानामणिमाद्यैश्वर्यप्राप्तौ सामग्रीसम्पन्नानां या काचित् स्वभावान्न जहाति घटस्य घटत्वं पटस्य पटत्वमित्यादिकेति शेषः ॥ प्रासङ्गिकं प्रकृतिशब्दार्थमुक्त्वा प्रकृतेरन्यथा-

**जरामरणनिर्मुक्ताः सर्व्वे धर्म्माः स्वभावतः।**
**जरामरणमिच्छन्तश्च्यवन्ते तन्मनीषया॥ १०॥**

---

मार्थ्यवस्तुष्वतत्त्वलक्षणा प्रकृतिर्नान्यथा भवतीत्यभिप्रायः॥ ९॥

किं विषया पुनः सा प्रकृतिर्यस्या अन्यथाभावो वादिभिः कल्प्यते कल्पनायां वा को दोष इत्याह। जरामरणनिर्मुक्ताः। जरणादिसर्व्वविक्रियावर्जिता इत्यर्थः। के सर्व्वे धर्म्मा सर्व्वे आत्मान इत्येतत्स्वभावतः प्रकृतितः। एवं स्वभावाः सन्तो धर्म्मा जरामरणमिच्छन्त इवेच्छन्तो रज्ज्वामिव सर्पमात्मनि कल्पयन्तश्च्यवन्ते स्वभावतश्चलन्तीत्यर्थः। तन्मनीषया जन्ममरणचिन्तया तद्भावभावितत्वदोषेणेत्यर्थः॥ १०॥

---

त्वाभावे प्रागुक्ते सिद्धान्ते यत्फलति तदिदानीं किं पुनर्न्यायेन कथयति। मिथ्येति॥ ९॥

प्रासङ्गिकीमेव जीवानां प्रकृतिं दर्शयितुं प्रक्रमते। जरेति॥ आत्मानो हि सर्व्वविक्रियारहिताः स्वभावतोभवन्तीत्यर्थः। तेषामुक्तप्रकृतेरन्यथात्वे का क्षतिरित्याशङ्क्याह। जरामरणमिति॥ सर्व्वविक्रियाशून्ये स्वात्मनि विक्रियाकल्पनायां तद्वासनया स्वभावहानिः स्यादित्यर्थः॥ श्लोकाक्षराणि व्याकर्त्तुमाकाङ्क्षां दर्शयति। किंविषयेति॥ आश्रयविषयो विषयशब्दः॥ अप्रकृतं प्रकृतेराश्रयनिरूपणमित्याशङ्क्याह। यस्या इति॥ प्रश्नान्तरं प्रकरोति। कल्पनायामिति॥ तत्र पूर्व्वार्द्धमुत्तरत्वेन व्याकरोति। आहेत्यादिना॥ उत्तरार्द्धं विभजते। एवंस्वभावा इति॥ १०॥

**कारणं यस्य वै कार्य्यं कारणं तस्य जायते।**
**जायमानं कथमजं भिन्नं नित्यं कथञ्च तत् ॥११॥**

---

कथं सज्जातिवादिभिः साङ्ख्यैरनुपपन्नमुच्यत इत्याह वैशेषिकः। कारणं मृद्वदुपादानलक्षणं यस्य वादिनो वै कार्य्यं कारणमेव कार्य्याकारेण परिणमते यस्य वादिन इत्यर्थः। तस्याऽजमेव सत्प्रधानादि कारणं महदादि कार्य्यरूपेण जायत इत्यर्थः। महदाद्याकारेण चेज्जायमानं प्रधानं कथमजमुच्यते तैर्विप्रतिषिद्धञ्चेदं जायतेऽजञ्चेति। नित्यञ्च तैरुच्यते। प्रधानं भिन्नं विदीर्णं स्फुटितमेकदेशेन सत्कथं नित्यं भवेदित्यर्थः। न हि सावयवं घटादि एकदेशस्फुटनधर्म्मि नित्यं दृष्टं लोक इत्यर्थः। विदीर्णञ्च स्यादेकदेशेनाजं नित्यञ्चेति। एतद्विप्रतिषिद्धं तैरभिधीयत इत्यभिप्रायः ॥ ११ ॥

---

प्रासङ्गिकं परित्यज्य साङ्ख्यपक्षे वैशेषिकादिभिरुच्यमानं दूषणमभ्यनुज्ञातमनुभाषते। कारणमिति ॥ कारणस्य जायमानत्वे का हानिरित्याशङ्क्याह। जायमानमिति ॥ सावयवत्वाच्च प्रधानस्य नित्यत्वानुपपत्तिरित्याह। भिन्नमिति ॥ श्लोकस्य तात्पर्य्यमाह। कथमिति ॥ तत्र प्रथमपादाक्षराणि योजयति। कारणमित्यादिना ॥ तदेव स्पष्टयति। कारणमेवेति ॥ द्वितीयपादं विभजते। तस्येति ॥ प्रधानादीत्यादिशब्देन तदवयवाः सत्त्वादयो गृह्यन्ते। महदादीत्यादिशब्देनाहङ्कारादिग्रहणम् ॥ तृतीयपादं व्याकरोति। महदादीति ॥ विप्रतिषेधं विशदयति। जायत इति ॥ चतुर्थपादार्थमाह। नित्यञ्चेति ॥ विमतमनित्यं सावयवत्वाद् घटादिवदित्यभिप्रेत्य दृष्टान्तं साधयति। न हीति ॥ साङ्ख्यश्रुतिविरुद्धमनुमानमित्याशङ्क्याह। विदीर्णञ्चेति ॥ ११ ॥

कारणाद्यद्यनन्यत्वमतः कार्य्यमजं यदि ।
जायमानाद्धि वै कार्य्यात् कारणं ते कथं ध्रुवम् ॥१२॥

---

उक्तस्यैवार्थस्य स्पष्टीकरणार्थमाह । कारणादजात्कार्य्यस्य यद्यनन्यत्वमिष्टं त्वया ततः कार्य्यमजमिति प्राप्तम् । इदञ्चान्यद्विप्रतिषिद्धं कार्य्यमजञ्चेति तव । किञ्चाऽन्यत्कार्य्यकारणयोरनन्यत्वे जायमानाद्धि वै कार्य्यात्कारणमनन्यन्नित्यं ध्रुवञ्च ते कथं भवेत् । न हि कुक्कुट्या एकदेशः पच्यते एकदेशः प्रसवाय कल्प्यते ॥ १२ ॥

---

किञ्च । कार्य्यकारणयोरभेदे किं कारणाभिन्नं कार्य्यं किंवा कार्य्याभिन्नं कारणमिति विकल्पमाद्यमनुवदति । कारणादिति ॥ अतोऽस्मिन् पक्षे कार्य्यमजं स्यात् ॥ तथाविधकारणाभिन्नत्वादिति दूषयति । अत इति ॥ द्वितीयमनुवदति । यदीति ॥ जायमानात्कार्य्यात् कारणमभिन्नं यदीति योजना । न तर्हि कारणं ध्रुवं भवितुमर्हति कार्य्याभिन्नत्वात्तस्य चाध्रुवत्वादिति दूषयति । कारणमिति ॥ श्लोकस्य तात्पर्य्यमाह । उक्तस्येति ॥ कार्य्यकारणयोरभेदवादे विप्रतिषेधो दर्शितः । तस्यैव स्फुटीकरणार्थमयं श्लोक इत्यर्थः ॥ पूर्व्वार्द्धाक्षरोत्थमर्थमाह । कारणादिति ॥ प्राप्तेरनिष्टपर्य्यवसायित्वमाह । इदञ्चेति ॥ प्रधानस्याजत्वं जायमानत्वञ्च विप्रतिषिद्धमित्युक्तम् ॥ अन्यदित्युक्तमेव व्यनक्ति । कार्य्यमिति ॥ अभेदेऽपि मायावादे नैष दोषः कारणस्य कार्य्यादनन्यत्वानभ्युपगमात् ॥ कार्य्यस्यैव कारणमात्रत्वाङ्गीकारादिति मत्वाह । तवेति ॥ द्वितीयार्द्धं विभजते । किञ्चान्यदिति ॥ अभेदवादेऽपि कार्य्यस्यानित्यत्वं कारणस्य नित्यत्वमिति व्यवस्था किमिति न भवतीत्याशङ्क्याह । न हीति ॥ १२ ॥

अजाद्वै जायते यस्य दृष्टान्तस्तस्य नास्ति वै ।
जाताच्च जायमानस्य न व्यवस्था प्रसज्यते ॥१३॥
हेतोरादिः फलं येषामादिर्हेतुः फलस्य च ।

---

किञ्चाऽन्यदजादनुत्पन्नाद्वस्तुनो जायते तस्य वादिनः कार्य्यम् । दृष्टान्तस्तस्य नास्ति वै दृष्टान्ताभावेऽर्थादजान्न किञ्चिज्जायत इति सिद्धम्भवतीत्यर्थः । यदा पुनर्जाता-ज्जायमानस्य वस्तुनोऽभ्युपगमः तदप्यन्यस्माज्जातात्तद-प्यन्यस्मादिति न व्यवस्था प्रसज्यते । अनवस्थानं स्यादि-त्यर्थः ॥ १३ ॥

यत त्वस्य सर्व्वमात्मैवाऽभूदिति परमार्थतो द्वैता-भावः श्रुत्योक्तस्तमाश्रित्याह । हेतोर्धर्म्मादेरादिः कारणं

---

किञ्च यस्य प्रधानवादिनो मते प्रधानादजाभिन्नं कार्य्यं जायते महदादीत्यभ्युपगम्यते । तस्य पक्षे तस्मिन्नर्थे दृष्टान्तो वक्तव्यः तद-वष्टम्भेनैव तेनार्थव्यवस्थापनात् । न चात्रोभयसम्प्रतिपन्नो दृष्टान्तो दृष्टोऽस्तीत्याह । अजादीति ॥ यद्यजाभिन्नाद्वस्तुनो जायमानमभ्युप-गन्तुं न शक्यते तर्हि जातादेव जायमानमभ्युपगम्यतामित्याशङ्क्याह । जाताच्चेति । साङ्ख्यसमये दोषान्तरप्रदर्शनपरत्वं श्लोकस्य प्रतिजानीते । किञ्चान्यदिति । तत्र पूर्व्वार्द्धाक्षराणि योजयति । अजादिति ॥ दृष्टान्ता-भावेऽपि प्रमाणान्तरादर्थप्रतिपत्तिर्भविष्यतीत्याशङ्क्याह । दृष्टान्तेति ॥ परस्य खल्वनुमानाधीनमर्थपरिज्ञानम् । न च दृष्टान्ताभावेऽनुमानमव-कल्पते तस्मान्न साङ्ख्यसमयः सम्भवतीत्यर्थः ॥ द्वितीयार्द्धं व्याचष्टे । यदा पुनरित्यादिना ॥ १३ ॥

द्वैतवादिभिरन्योन्यपक्षप्रतिक्षेपमुखेन स्थापितं वस्तुनोऽजन्यत्वमद्वैत-वादिनाऽभ्यनुज्ञातमिदानीं द्वैतनिरसनमपि श्रौतं विद्वदनुभवानुसारि चैतेनाभ्यनुज्ञातमेवेत्याह । हेतोरिति ॥ हेतु फलात्मकः संसारोऽनादि-

हेतोः फलस्य चानादिः कथं तैरुपवर्ण्यते ॥ १४॥
हेतोरादिः फलं येषामादिर्हेतुः फलस्य च ।
तथा जन्म भवेत्तेषां पुत्राज्जन्म पितुर्यथा ॥ १५ ॥

---

देहादिसङ्घातः फलं येषां वादिनाम् । तथादिः कारणम् हेतुर्धर्म्मादिः । फलस्य च देहादिसङ्घातस्य । एवं हेतुफलयोरितरकार्य्यकारणत्वेनादिमत्त्वं ब्रुवद्भिरेवं हेतोः फलस्य चानादित्वं कथं तैरुपवर्ण्यते विप्रतिषिद्धमित्यर्थः । न हि नित्यस्य कूटस्थस्यात्मनो हेतुफलात्मकता सम्भवति ॥ १४ ॥

कथं तैर्विरुद्धमभ्युपगम्यत इति । उच्यते । हेतुजन्यादेव फलाद्धेतोर्जन्माभ्युपगच्छतां तेषामीदृशो विरोध उक्तो भवति यथा पुत्राज्जन्म पितुः ॥ १५ ॥

---

रिति वदद्भिस्तस्यानादित्वस्वभावो नैव वक्तुं शक्यते। हेतुफलयोरादिमत्त्वस्य कण्ठोक्तत्वादतो हेतुफलात्मकं द्वैतमनिरूपितरूपमवस्तुभूतमित्यर्थः॥ श्लोकस्य तात्पर्य्यमाह। यत्र त्विति॥ तमाश्रित्य कार्य्यकारणात्मकस्य द्वैतस्य दुर्निरूपत्वमाहेति योजना॥ हेतुफलयोरात्मपरिणामत्वादादिमत्त्वस्तुपादानरूपेण चानादित्वमित्याशङ्क्यात्मनो निरंशस्य कूटस्थस्य नित्यस्य परिणामानुपपत्तेर्नैवमित्याह। न हीति॥ १४॥

हेतुफलयोरन्योन्यमादिमत्त्वं ब्रुवता तदात्मकस्य संसारस्यानादित्वं विप्रतिषिद्धमित्युपपादितम्। सम्प्रति कार्य्यकारणभावोऽपि तयोर्न सम्भवतीत्याह। हेतोरित्यादिना। हेतुफलयोरन्योन्यं कारणत्वमभ्युपगच्छद्भिरभ्युपगम्यते विरुद्धमिति॥ एतत् प्रश्नपूर्व्वकं प्रकटयति। कथमित्यादिना॥ ईदृशत्वमेव विशदयति। यथेति॥ १५॥

सम्भवे हेतुफलयोरेषितव्यः क्रमस्त्वया ।
युगपत्सम्भवे यस्मादसम्बन्धो विषाणवत् ॥ १६ ॥
फलादुत्पद्यमानः सन्न ते हेतुः प्रसिद्ध्यति ।

---

यथोक्तो विरोधो न युक्तोऽभ्युपगन्तुमिति चेन्नम्यसे सम्भवे हेतुफलयोरुत्पत्तौ क्रम एषितव्यस्त्वयाऽभ्येष्टव्यः । हेतुः पूर्व्वं पश्चात्फलञ्चेति । इतरथा युगपत्सम्भवे यस्माद्धेतुफलयोः कार्य्यकारणत्वेनासम्बन्धः । यथा युगपत्सम्भवतो सव्येतरगोविषाणयोः ॥ १६ ॥

कथमसम्बन्ध इत्याह । जन्यात् स्वतोऽलब्धात्मकात् फलादुत्पद्यमानः सन् शशविषाणादिरिवासतो न हेतुः

---

प्रतीतितो हेतुफलयोरुत्पत्तेरुपगन्तव्यत्वान्न युक्तं तन्निराकरणमित्याशङ्क्याह । सम्भवे इति ॥ तयोरुदये प्रातीतिके नियतपूर्व्वभावो हेतुर्नियतोत्तरभावि फलमित्यभ्युपगमे हेतुमाह । युगपदिति ॥ यथोक्तो विरोधो हेतुफलभावस्यासम्भवः सन् युक्तोऽभ्युपगन्तुं प्रतीतिविरोधादिति व्यावर्त्त्यांशङ्कामनुवदति । यथेति ॥ तन्त्रोत्तरत्वेन श्लोकाक्षराणि योजयति । सम्भव इति ॥ प्रतीत्या क्रमस्वीकारवदुपपत्तेश्चेत्याह । इतरथेति ॥ तामेवोपपत्तिं स्फोरयति । युगपदिति ॥ ययोर्युगपत्सम्भवस्तयोर्न कार्य्यकारणत्वं यथा विषाणयोरिति व्याप्तेर्व्यक्तत्वात् क्रमस्यावश्यकतेत्यर्थः ॥ १६ ॥

उक्तव्याप्तेरनुग्राहकं तर्कमुपन्यस्यति । फलादिति ॥ हेतुफलयोर्मिथो हेतुफलत्वं ब्रुवतो मते हेत्वधीनतयाऽलब्धात्मकात् फलादुत्पद्यमानो हेतुर्न ततो लब्धात्मको भवत्यलब्धात्मकस्याऽसत्त्वान्न फलमुत्पादयितुं शक्नोति अतो हेतुफलभावस्यैवासिद्धिरित्यर्थः ॥ हेतुफलयोरक्रमवतोर्न कार्य्यकारणभावेन सम्बन्धः सिध्यतीत्येतदाऽऽकाङ्क्षापूर्व्वकं साधयति । कथ-

अप्रसिद्धः कथं हेतुः फलमुत्पादयिष्यति ॥ १७ ॥
यदि हेतोः फलात्सिद्धिः फलसिद्धिश्च हेतुतः ।
कतरत्पूर्व्वं निष्पन्नं यस्य सिद्धिरपेक्षया ॥ १८ ॥

---

सिध्यति जन्म न लभ्यते । अलब्धात्मकोऽप्रसिद्धः सन् शशविषाणादिकल्प एव कथं फलमुत्पादयिष्यति । नहीतरेतरापेक्षसिद्ध्योः शशविषाणकल्पयोः कार्य्यकारणभावेन सम्बन्धः क्वचिद्दृष्टः अन्यथा वेत्यभिप्रायः ॥ १७ ॥

असम्बन्धतादोषेणापोदितेऽपि हेतुफलयोः कार्य्यकारणभावे यदि हेतुफलयोरन्योन्यसिद्धिरभ्युपगम्यत एव त्वया कतरत्पूर्व्वं निष्पन्नं हेतुफलयोर्यस्य पश्चाद्भाविनः सिद्धिः स्यात् पूर्व्वसिद्धापेक्षया तद्ब्रूहीत्यर्थः ॥ १८ ॥

---

मित्यादिना ॥ हेतुस्वरूपाज्जन्यं फलं तदधीनत्वेन लब्धात्मकं स्वतश्चालब्धात्मकम् । तत उत्पद्यमानः सन्नेव हेतुर्न सिध्यति । न खलु शशविषाणादेरसतः सकाशात्किञ्चिल्लब्धात्मकमुपलभ्यते । हेतुश्चेदप्रसिद्धोऽलब्धात्मकोऽभ्युपगतः स तर्हि यथाविधोऽसद्रूपः सन् फलमुत्पादयितुमुत्सहते ॥ न हि सांख्यादिमते फलमसतः सकाशादुपलब्धचरमित्यर्थः । तथापि कथं हेतुफलयोरसम्बन्धः सिध्यतीत्याशङ्क्याह । न हीति । अन्यथा वेत्याधाराधेयभावादि ॥ कथं न हेतुफलयोर्यौगपद्ये सत्यन्यतरस्यापि न पूर्व्वभावे सत्येतयोः शशविषाणयोरिवान्योन्यापेक्षया जन्यजनकत्वं नोपपद्यते शशविषाणादिष्वपि प्रसङ्गादित्युक्तम् ॥ १७ ॥

इदानीं पुण्यो वै पुण्येन कर्म्मणा भवतीत्यादिश्रुतेर्धर्म्मादिषु हेतुफलभावमाशङ्क्य श्रुतेरसम्भावितार्थे प्रामाण्यायोगादवश्यं पौर्व्वापर्य्यं वक्तव्यमित्याह । यदीति ॥ श्लोकाक्षराणि योजयति । असम्बन्धेत्यादिना ॥ १८ ॥

**अशक्तिरपरिज्ञानं क्रमकोपोऽथ वा पुनः।**
**एवं हि सर्व्वथा बुद्धैरजातिः परिदीपिता ॥१९॥**

---

अथैतन्न शक्यते वक्तुमिति मन्यसे सेयमशक्तिरपरिज्ञानम्। तत्त्वाविवेको मूढतेत्यर्थः। अथ वा योऽयं त्वयोक्तः क्रमः हेतोः फलस्य सिद्धिः फलाच्च हेतोः सिद्धिरितीतरेतरानन्तर्य्यलक्षणस्तस्य कोपो विपर्य्यासोऽन्यथाभावः स्यादित्यभिप्रायः। एवं हेतुफलयोः कार्य्यकारणभावानुपपत्तेरजातिः सर्व्वस्यानुत्पत्तिः परिदीपिता प्रकाशितान्योन्यापक्षदोषं ब्रुवद्भिर्वादिभिर्बुद्धैः पण्डितैरित्यर्थः ॥ १८ ॥

---

हेतुफलयोरिदं पूर्व्वमिदं पश्चादिति न ज्ञायते। परस्पराश्रयात्। अतश्चेदं पूर्व्वं निष्पन्नमिति वक्तुमशक्यमित्याह। अशक्तिरिति॥ उत्तरावसरे चेदुत्तरापरिज्ञानं तर्हि कथमशक्तिसूचकं तन्निग्रहस्थानमप्रतिभाभिधानीयमापततीत्यर्थः। किञ्च यदि क्रमस्य नियतपूर्व्वापरभावात्मनोऽपरिज्ञानं तदा पूर्व्वं कारणमुत्तरं कार्य्यमिति प्रतिज्ञा हीयेत। तथा च प्रतिज्ञाहानिर्निग्रहस्थानमापद्येतेत्याह। क्रमेति॥ अन्योन्यपक्षप्रतिक्षेपहेतुत्वेन सतोऽसतश्च जन्मनी प्रत्याख्याते। क्रमाक्रमाभ्यामुत्पत्तेरनुपपत्तेरजातिरेवास्मदभिप्रेता वादिभिरादर्शिता भवतीत्युपसंहरति एवं हीति॥ तत्राद्यं पादं व्याकरोति। अथेत्यादिना॥ क्रमपक्षे पूर्वनिष्पन्नमेतच्छब्देन परामृश्यते॥ द्वितीयपादं योजयति। अथ वेत्यादिना॥ द्वितीयार्द्धं विवृणोति। एवमिति॥ १९ ॥

वीजाङ्कुराख्यो दृष्टान्तः सदा साध्यसमो हि सः।

ननु हेतुफलयोः कार्य्यकारणभाव इत्ययमभिहितं शब्दमात्रमाश्रित्य कर्म्मेदं त्वयोक्तं पुत्राज्जन्म पितुर्यथा विषाणवच्चासम्बन्ध इत्यादि। न ह्यस्माभिरसिद्धात् हेतोः फलसिद्धिः असिद्धाद्वा फलाद्धेतुसिद्धिरभ्युपगता किन्तर्हि वीजाङ्कुरवत्कार्य्यकारणभावोऽभ्युपगम्यत इति। अत्रो-च्यते। वीजाङ्कुराख्यो यो दृष्टान्तः स साध्येन तुल्यो ममे-त्यभिप्रायः। न तु प्रत्यक्षः कार्य्यकारणभावो वीजा-ङ्कुरयोरनादिः न पूर्व्वस्य पूर्व्वस्याऽपरवादादिमत्त्वा-ऽभ्युपगमात्। यथेदानीमुत्पन्नोऽपरोऽङ्कुरो वीजादिमान् वीजस्याऽपरमन्यस्मादङ्कुरादिति क्रमेणोत्पन्नत्वादादिमत्।

वीजाङ्कुरयोरिव हेतुफलयोरन्योन्यं कार्य्यकारणभावाभ्युपगमा-न्नान्योन्याश्रयत्वमित्याशङ्क्याह। वीजेति॥ दृष्टान्तस्य साध्यसमत्वेऽपि साधकत्वमस्तीत्याशङ्क्याह। न हीति॥ श्लोकापेक्षं चोद्यमुद्भावयति। नन्विति। शब्दमात्रं विवक्षितार्थशून्यम्॥ शब्दमाश्रित्य छलप्रयोगमेवो-दाहरति। पुत्रादिति॥ आदिशब्देन फलादुत्पद्यमानः सन् न ते हेतुः प्रसिध्यतीत्यादि गृह्यते॥ कार्य्यकारणभावो हेतुफलयोरित्यत्रानभिप्रेत-मर्थं कथयति। न हीति॥ तत्रैव प्रश्नपूर्व्वकमभिप्रेतमर्थमुदाहरति। किन्तर्हीति॥ दृष्टान्तासम्प्रतिपत्त्या परिहरति। अत्रेति॥ मायावादि-मते क्वचिदपि कार्य्यकारणभावस्य वस्तुभूतस्यासम्प्रतिपत्तेर्ममेत्युक्तम्। प्रत्यक्षावष्टम्भेन दृष्टान्तं साधयन्नाशङ्कते। नन्विति॥ किं वीजाङ्कुर-व्यक्त्योरिदं कार्य्यकारणत्वमिष्यते किं वा वीजाङ्कुरसन्तानयोरिति विक-ल्पाद्यं दूषयति। न पूर्व्वस्येति॥ तदेव प्रपञ्चयति। यथेत्यादिना॥ वीजव्यक्तेरङ्कुरव्यक्तेश्चोक्तप्रकारेणानादित्वस्याऽन्योन्यकारणत्वस्य चानु-

न हि साध्यसमो हेतुः सिद्धौ साध्यस्य युज्यते ॥२०॥

---

एवं पूर्वपूर्वोऽङ्कुरो बीजस्य पूर्वं पूर्वमादिमदेवेति प्रत्येकं सर्वस्य बीजाङ्कुरजातस्यादिमत्त्वात्कस्यचिदप्यनादित्वानुपपत्तिः। एवं हेतुफलानाम्। अथ बीजाङ्कुरसन्ततेरनादिमत्त्वमिति चेत्। न। एकत्वानुपपत्तेः। न हि बीजाङ्कुरव्यतिरेकेण बीजाङ्कुरसन्ततिर्नामैकाभ्युपगम्यते हेतुफलसन्ततिर्वा तदनादित्ववादिभिः। तस्मात्सूक्तं हेतोः फलस्य चानादिः कथं तैरुपवर्ण्यत इति। तथाचान्यदप्यनुपपन्नं कृतमित्यभिप्रायः। न च लोके साध्यसमो हेतुः साध्यसिद्धौ सिद्धिनिमित्तं प्रयुज्यते प्रमाणकुशलैरित्यर्थः। हेतुरिति

---

पपत्तिरिति शेषः॥ कल्पान्तरमुत्थापयति। अथेति॥ बीजसन्ततेरङ्कुरसन्ततेश्चानादित्वमन्योन्यकारणत्वस्याऽविरुद्धं सिध्यति। बीजजातीयादङ्कुरजातीयमङ्कुरजातीयाद्बीजजातीयमुत्पद्यमानमुपलभ्यते। तथैव हेतुजातीयात् फलजातीयं फलजातीयाच्च हेतुजातीयमविरुद्धमित्यर्थः। दृष्टान्ते दार्ष्टान्तिके च सन्ततेरेकस्या व्यक्तेर्व्यतिरेकेणासम्भवान्मैवमिति दूषयति। नेत्यादिना॥ तदेव प्रपञ्चयति। न हीति॥ तदनादित्ववादिभिस्तासु व्यक्तिषु मिथो हेतुत्वमनादित्वं तद्वदनुयोगैरिति यावत्॥ अन्योन्याश्रयत्वादनवस्थानाद्वा हेतुफलयोर्मिथो हेतुफलभावस्य वक्तुमशक्यत्वात् दृष्टान्तदार्ष्टान्तिकयोरनुपपत्तिः सिद्धेत्युपसंहरति। तस्मादिति॥ दृष्टान्तस्यासम्प्रतिपन्नत्वे स्थिते कार्यकारणत्वस्य क्वचिदपि सम्प्रतिपत्त्यभावात्पुत्राज्जन्म पितुर्यदेत्यादि न युक्तमुक्तमिति फलितमाह। तथा चेति॥ एवं श्लोकस्य पूर्वार्द्धं व्याख्यायोत्तरार्द्धं व्याचष्टे। न चेति॥ किमिति हेतुशब्दस्य मुख्यमर्थं त्यक्त्वा गौणोऽर्थो गृह्यते। प्रकरणसामर्थ्या-

पूर्व्वापरापरिज्ञानमजातेः परिदीपकम् ।
जायमानाद्धि वै धर्म्मात्कथं पूर्वं न गृह्यते ॥ २१ ॥

---

दृष्टान्तोऽत्राभिप्रेतो गमकत्वात् । प्रकृतो हि दृष्टान्तो न हेतुरिति ॥ २० ॥

कथं बुद्धैरजातिः परिदीपितेत्याह । यदेतद्धेतुफलयोः पूर्व्वापरापरिज्ञानं तच्चैतदजातेः परिदीपकं अवबोधकमित्यर्थः । जायमानो हि च धर्म्मो गृह्यते । कथं तस्मात्पूर्वं कारणं न गृह्यते । अवश्यं हि जायमानस्य ग्रहीत्रा तज्जनकं ग्रहीतव्यम् । जन्यजनकयोः सम्बन्धस्यानपेतत्वात् । तस्मादजातिपरिदीपकं तदित्यर्थः ॥ २१ ॥

---

दित्याह । प्रकृतो हीति ॥ हेतुफलभावानुपपत्तिमुपपादितामुपसंहर्त्तुमितिशब्दः ॥ २० ॥

यत्पुनरन्योन्यपक्षं प्रतिक्षिपद्भिरजातिर्वस्तुतो ज्ञापिता परीक्षकैरित्युपक्षिप्तं तत्र कथमजातिर्व्वस्तुतो ज्ञापितेत्याशङ्क्याह । पूर्व्वापरेति ॥ कार्य्यस्य गृह्यमाणत्वादजातिरसिद्धेत्याशङ्क्य कारणस्यापि तर्हि ग्राह्यत्वादितरेतराश्रयादजातिरविघ्नेन सिध्यतीत्याह । जायमानादिति ॥ तत्र पूर्व्वार्द्धं प्रश्नद्वारा विवृणोति । कथमित्यादिना ॥ नियते पौर्व्वापर्य्ये निर्द्धारिते जातिः सिध्यति । तदभावे तदसिद्धिरित्यर्थः । द्वितीयार्द्धं विभजते । जायमानो हीति ॥ कार्य्यग्रहणे कारणं ग्रहीतव्यमिति कुतो नियम्यते तत्राह । अवश्यं हीति ॥ कार्य्यकारणयोर्नियतसम्बन्धवतोरितरेतराश्रयात् दुर्ग्रहत्वादजातिरेव वस्तुतो ज्ञापितेत्युपसंहरति ॥ तस्मादिति ॥ कार्य्यकारणयोर्दुर्ज्ञानत्वं तच्छब्देन परामृश्यते ॥ २१ ।

स्वतो वा परतो वापि न किञ्चिद्वस्तु जायते।

इतश्च न जायते किञ्चित्। यत् जायमानं वस्तु स्वतः परत उभयतो वा सत् असत् सदसद्वा जायते न तस्य केनचिदपि प्रकारेण जन्म सम्भवति। न तावत्स्वयमेवाऽपरिनिष्पन्नात्स्वरूपात् स्वयमेव जायते यथा घटस्तस्मादेव घटात्। नापि परतः अन्यस्मादन्यो यथा घटात्पटः पटात् पटान्तरं तथा नोभयतः। विरोधात्। यथा घटपटाभ्यां घटः पटो वा जायते। ननु घटो घटो जायते पितुश्च पुत्रः सत्यं अस्ति जायत इति प्रत्ययः शब्दश्च मूढानां तावेव शब्दप्रत्ययौ विवेकिभिः परीक्ष्येते किं सत्यमेव तौ उत अपेति यावता परीक्ष्यमाणे। शब्दप्र-

वस्तुनो वस्तुतो जन्म नास्तीति विकल्पपूर्व्वकं साधयति। स्वतो वेत्यादिना॥ कस्य चिदपि वस्तुनो जन्म नास्तीत्यस्मिन्नर्थे हेत्वन्तरपरत्वं श्लोकस्य दर्शयति। इतश्चेति॥ इतःशब्दार्थमेव स्फोरयितुं जायमानमनूद्य कोठा विकल्पयति। यज्जायमानमिति॥ सर्व्वेष्वपि पक्षेषु दोषसम्भावनां सूचयति। न तस्येति॥ तत्राद्यं दूषयति। न तावदिति॥ स्वयमेव जायमानं कार्यं स्वस्मादेव स्वरूपान्न तावज्जायते स्वयमेव स्वापेक्षामन्तरेण स्वकारणाधीनतया परिनिष्पन्नत्वात्। अन्यथा स्वसिद्धेः। स्वसिद्धेरित्यात्माश्रयात्। न हि घटादेव घटो जायमानो दृष्टोऽस्तीत्यर्थः॥ द्वितीयं प्रत्याह। नापीति॥ न खल्वन्यत्वं जनकत्वे प्रयोजकम्। घटादपि घटोत्पत्तिप्रसङ्गात्। न चोत्पादकत्वयोग्यत्वविशेषितमन्यत्वं तथेति वाच्यम्। उत्पत्तिमन्तरेण तद्योग्यत्वस्य दुरवगमत्वादित्यर्थः। तृतीयं निरस्यति। तथेति॥ निरोधमेव दृष्टान्तद्वारा स्फुटयति। यथेति। नहि घटपटाभ्यां घटः पटो वा जायमानो दृश्यते। तथा जायमानं स्वस्मादन्यस्माच्च भवतीत्यनुपपन्नमित्यर्थः। अन्यत्वे सत्यपि जन्यजनकभाव

सदसत्त्वादसत्त्वाद्वाऽपि न किञ्चिद्वस्तु जायते ॥ २२ ॥

---

त्ययविषयं वस्तु घटपुत्रादिलक्षणं शब्दमात्रमेव तत्। वाचारम्भणमिति श्रुतेः। सन्नेव जायते सत्त्वात् स्थितिपक्षादिवत्। यच्चासत्तयापि न जायते न विद्यते असत्त्वादेव शशविषाणवत्। अथ सदसत्तयापि जायते विरुद्धस्यैकस्यासम्भवात्। अतो न किञ्चिद्वस्तु जायत इति सिद्धम्। येषां पुनर्जनिरेव जायत इति क्रियाकारकफलैकत्वमभ्युपगम्यते क्षणिकत्वञ्च वस्तुनः। ते दूरत एव न्यायापेताः। इदमित्थमित्यवधारणक्षणान्तरानवस्थानात् अननुभूतस्य स्मृत्यनुपपत्तेश्च ॥ २२ ॥

---

प्रत्ययत्वाज्जातौ शक्यते प्रतिषेद्धुमिति शङ्कते। नन्विति॥ किं प्रत्ययानुसारिणौ शब्दप्रत्ययावविवेकिनामिष्येते किं वा विवेकिनामिति विकल्पमाद्यमङ्गीकरोति। सत्यमिति॥ द्वितीयं प्रत्याह। तावेवेति॥ सर्वैवेति परीक्षकाणां सतीति सम्बन्धः। तत्र जन्मशब्दधीविषयं वस्तु शब्दमात्रमेव। वाचारम्भणत्वश्रुतेः परमार्थतो वास्तवता विद्यते॥ तस्मादसत्त्वाज्जन्मत्वमेव शब्दप्रत्यययोरैक्यमिति योजना॥ चतुर्थं विविनक्ति। सन्नेविति॥ पञ्चमं निराकरोति। यदीति॥ षष्ठं प्रत्यादिशति। अथेत्यादिना॥ सर्वां विकल्पानां निरासे फलितं निगमयति। अतो नेति॥ क्रियाकारकफलानामात्मपक्षे अजजन्मानुपपत्तिदोषमुक्त्वा पक्षान्तरमनूद्य दूषयति। येषाम्पुनरिति॥ बौद्धानां न्यायावष्टम्भेन वस्तु व्यवस्थापयतां कुतो न्यायबाह्यत्वमित्याशङ्क्याह। इदमिति॥ इदमा वस्तु परामृष्टम्। इत्थमिति क्षणिकत्वं विवक्षितम्। एवमवधारणावच्छिन्ने क्षणे वस्त्ववच्छेदकक्षणातिरिक्ते वस्तुनोऽवस्थानाभावान्न तस्यानुभवः सिध्यतीत्यर्थः। न च तस्मिन्ननुभूतेऽर्थे स्मृतिरुत्पद्यते। तथा च वस्तुनि प्रत्ययद्वयासिद्धौ व्यवहारासिद्धिरित्याह। ननु भूतस्येति॥ २२॥

हेतुर्न जायतेऽनादेः फलञ्चापि स्वभावतः ।
आदिर्न विद्यते यस्य तस्य ह्यादिर्न विद्यते ॥२३॥

---

किञ्च हेतुफलयोरनादित्वमभ्युपगच्छता त्वया बला-द्धेतुफलयोरजन्मैवाभ्युपगतं स्यात् कथं यानादेराद्रि-हितात्फलाद्धेतुर्न जायते । न ह्यनुत्पन्नादनादेः फलाद्धेतो-र्जन्मेष्यते त्वया फलञ्च । आदिरहितादनादेर्हेतोरजात्-स्वभावत एव निर्निमित्तं जायत इति नाभ्युपगम्यते । तस्मादनादित्वमभ्युपगच्छता त्वया हेतुफलयोरजन्मैवाभ्युप-गम्यते । यस्मादादिः कारणं न विद्यते यस्य लोके तस्य

---

वस्तुनो वस्तुतो जन्मराहित्ये हेत्वन्तरमाह । हेतुर्नेति नानादेः फलाद्धेतुर्जायते न हि फलस्यानादित्वे ततो हेतुजन्म युक्तं सदा तज्ज-न्मप्रसङ्गादित्यर्थः । फलमपि न हेतोरनादेर्जायते दोषसाम्यादित्याह । फलञ्चेति ॥ नापि स्वभावतो निमित्तमन्तरेण फलं हेतुर्वा जायते । तत्र हेतुमाह । आदिरिति ॥ कारणरहितस्य जन्मानुपलब्धेरित्यर्थः ॥ वस्तुनो वस्तुतो जन्माभावे हेत्वन्तरपरत्वं श्लोकस्य सूचयति । किञ्चेति ॥ हेत्वन्तरमेव दर्शयितुं प्रथमं प्रतिज्ञां करोति । हेत्विति ॥ फलाद्धेतुर्जायते ततश्च फलमित्यभ्युपगमात् कथमजन्माभ्युपगमतमिति पृच्छति । कथमिति ॥ तत्राद्यपादाक्षरयोजनया परिहरति । अनादेरिति ॥ तदेवोपपादयति । न हीति ॥ फलं कार्य्यकारणसङ्घातः । हेतुर्धर्म्मादिः ॥ फलञ्चापीतिभागं विभजते । फलञ्चेति ॥ अजाज्जायत इति नाभ्युपगम्यत इति सम्बन्धः ॥ स्वभावत इतिपदं योजयति । स्वभावत एवेति ॥ फलितं निगमयति । तस्मादिति ॥ च हेतुफलयोर्जन्मवतोरनादित्वमभ्युपगन्तुं शक्यम् । अभ्यु-पगमे च जन्मैव तयोराकस्मिकं स्यादित्यर्थः । स्वभाववादनिराकरणं

प्रज्ञप्तेः सनिमित्तत्वमन्यथा द्वयनाशतः।

---

ख्यादिः पूर्व्वोक्ता ख्यातिर्न विद्यते। कारणवत एव ख्यादिरभ्युपगम्यते नाकारणवतः॥ २२॥

उक्तस्यैवाऽर्थस्य दृढीकरणचिकीर्षया पुनराक्षिपति। प्रज्ञानं प्रज्ञप्तिः शब्दादिप्रतीतिस्तस्याः सनिमित्तत्वम्। निमित्तं कारणं विषय इत्येतस्य निमित्तत्वं सविषयत्वं स्वात्मव्यतिरिक्तविषयतेत्येतत्प्रतिजानीमहे। न हि निर्विषया प्रज्ञप्तिः शब्दादिप्रतीतिः स्यात्। तस्याः सनिमित्तत्वात्। अन्यथा निर्विषयत्वे शब्दस्पर्शनीलपीतलोहितादिप्रत्ययवैचित्र्यद्वयस्य नाशतः नाशोऽभावः प्रसज्येतेत्यर्थः। न च प्रत्ययवैचित्र्यस्य द्वयस्याभावोऽस्ति प्रत्यक्षत्वात् अतः प्रत्ययवैचित्र्यस्य द्वयस्य दर्शनात्। परेषां तन्त्रं परतन्त्रमित्य-

---

प्रतिज्ञातमुत्तरार्द्धविटङ्केन प्रतिपादयति। यस्मादिति॥ २१॥

वस्तुनो वस्तुतो जन्मायोगादजं विज्ञानमात्रं तत्त्वमित्युक्तम्। इदानीं बाह्यार्थवादमुत्थापयति। प्रज्ञप्तेरिति॥ ज्ञानस्य निर्व्विषयत्वे प्रत्ययवैचित्र्यानुपपत्तिं प्रमाणयति। अन्यथेति॥ अग्निदाहादिप्रयुक्तदुःखोपलब्ध्यनुपपत्तेश्चास्ति बाह्यार्थ इत्याह। सङ्क्लेशस्येति॥ परतन्त्रं परकीयं शास्त्रं तस्यास्तिता तद्विषयस्य बाह्यार्थस्य विद्यमानतेति यावत्॥ श्लोकस्य तात्पर्यमाह। उक्तस्यैवेति॥ वस्तुनो नास्ति वस्तुतो जन्मेत्युक्तार्थस्यैव दृढीकरणं पूर्व्वोत्तरपक्षाभ्यां चिकीर्ष्यते तथा पुनराक्षेपमुखेन बाह्यार्थवादिनां प्रस्थानमुत्थापयतीत्यर्थः॥ प्रज्ञास्वरूपभूतां प्रज्ञप्तिं प्रतिषेधति। शब्दादीति॥ साकारवादं व्युदस्यति। स्वात्मेति॥ प्रज्ञप्तेर्विषयनिरपेक्षत्वाभाव स्वातिरिक्तविषयतेत्याशङ्क्याह। न

संक्लेशस्योपलब्धेश्च परतन्त्रास्तिता मता ॥ २४ ॥

---

न्यथास्तं तस्य परतन्त्राश्रयस्य बाह्यार्थस्य ज्ञानव्यतिरिक्तस्याऽस्तिता मताऽभिप्रेता। न हि प्रज्ञप्तेः प्रकाशमात्रस्वरूपाया नीलपीतादिबाह्यालम्बनवैचित्र्यमन्तरेण स्वभावभेदेनैव वैचित्र्यं सम्भवति। स्फटिकस्येव नीलाद्युपाध्याश्रयैर्विना वैचित्र्यं न घटत इत्यभिप्रायः। इतश्च परतन्त्राश्रयस्य बाह्यार्थस्य ज्ञानव्यतिरिक्तस्यास्तिता। संक्लेशनं संक्लेशो दुःखमित्यर्थः। उपलभ्यते ह्यग्निदाहादिनिमित्तं दुःखं यद्यग्न्यादिबाह्यं दाहादिनिमित्तं विज्ञानव्यतिरिक्तं न स्यात् ततो दाहादिदुःखं नोपलभ्येत। उपलभ्यते तु अतस्तेन मन्यामहे अस्ति बाह्योऽर्थ इति। न हि विज्ञानमात्रे संक्लेशो युक्तः। अन्यत्रादर्शनादित्यभिप्रायः ॥ २४ ॥

---

हीति ॥ अनिमित्तत्वं अविषयत्वेन स्फुरणम्। तमेव हेतुं द्वितीयपादयोजनया विघटयति। अन्यथेति ॥ प्रसङ्गस्येष्टत्वं प्रत्याचष्टे। न चेति ॥ प्रत्ययवैचित्र्यानुपपत्तिप्रयुक्तं फलं चतुर्थपादव्याख्यानेन कथयति। अत इति ॥ ननु प्रज्ञप्तेः स्वभावभेदेनैव बाह्यालम्बनं वैचित्र्यमन्तरेण स्वगतं वैचित्र्यं घटिष्यते तत्राह। न हीति ॥ औपाधिकं तर्हि प्रत्ययवैचित्र्यमित्याशङ्क्य बाह्यार्थातिरिक्तोपाध्यनधिगमान्नैवमित्याह। स्फटिकस्येति ॥ तृतीयपादं हेत्वन्तरपरत्वेनावतारयति। इतश्चेति ॥ तस्योपलब्धिमुपपादयति। उपलभ्यते हीति ॥ तदुपलम्भेऽपि कुतो बाह्यार्थसिद्धिरित्याशङ्क्याह। यदीति। उपलब्धिरेव तर्हि दुःखस्य माभूदिति चेन्न। स्वानुभवविरोधादित्याह। उपलभ्यते त्विति ॥ विशिष्टदुःखोपलब्ध्यनुपपत्तिसिद्धं फलमाह। अत इति ॥ विज्ञानातिरिक्तबाह्यार्थाभावेऽपि क्लेशोपलब्धिरविरुद्धेत्याशङ्क्याह। न हीति ॥ अन्यत्र दाहच्छेदादिव्यतिरिक्ते चन्दनपङ्कलेपादाविति यावत् ॥ २४ ॥

प्रज्ञप्तेः सनिमित्तत्वमिष्यते युक्तिदर्शनात्।

---

अत्रोच्यते बाढं एवं प्रज्ञप्तेः सनिमित्तत्वं द्वयसंक्लेशोपलब्धियुक्तिदर्शनादिष्यते त्वया। स्थिरीभव तावत्त्वं युक्तिदर्शनं वस्तुतस्तथात्वाभ्युपगमे कारणमित्यत्र ब्रूहि किन्तत इति। उच्यते। निमित्तस्य प्रज्ञप्त्यालम्बनाभिमतस्य घटादेरनिमित्तत्वमनालम्बनत्वं वैचित्र्याहेतुत्वमिष्यतेऽस्माभिः कथं भूतदर्शनात् परमार्थदर्शनादित्येतत्। न हि घटो यथाभूतमृद्रूपदर्शने सति तद्व्यतिरेकेणास्ति। यथाऽश्वान्महिषः पटो वा तन्तु व्यतिरेकेण। तन्तवश्चांशु-

---

द्वाभ्यामर्थापत्तिभ्यां बाह्यार्थवादे प्राप्ते विज्ञानवादस्तद्भावयति। प्रज्ञप्तेरिति॥ अस्तु का नाम वस्तुगतिरित्याशङ्क्याह। निमित्तस्येति॥ मतान्तरे प्राप्ते तन्निराकरणमुच्यते। विज्ञानवादिनेति। श्लोकस्य तात्पर्यमाह। अत्रेति॥ तत्र पूर्व्वार्द्धं विभजते। बाढमित्यादिना॥ द्वैतिनस्तव तर्कप्रधानत्वान्न प्रतीतिमात्रशरणता युक्तेति मत्वाह। स्थिरीभवेति॥ वस्तुनो बाह्यस्यार्थस्य तथात्वं प्रज्ञप्तिविषयत्वं तस्याभ्युपगमे कारणं प्रागुक्तयुक्तिदर्शनमित्येतस्मिन्नर्थे त्वं स्थिरीभवेति योजना। विचारदृष्टिमेवावष्टभ्याऽहं वर्त्ते किं ततो दूषणं ब्रूहीति पृच्छति॥ ब्रूहीति तत्रोत्तरार्द्धं सिद्धान्ती व्याकुर्व्वन्नुत्तरमाह। उच्यत इत्यादिना॥ घटादेर्वैचित्र्यहेतुत्वे प्रश्नपूर्व्वकं हेतुमाह। कथमित्यादिना॥ परमार्थदर्शनं प्रपञ्चयति। न हीति॥ तत्र वैधर्म्यदृष्टान्तमाह। यथेति॥ घटे दर्शितं न्यायं पटेऽपि दर्शयति। पटो वेति॥ तन्तुष्वपि न्यायसाम्यमुदाहरति। तन्तव इति। परमार्थदर्शनफलमुपसंहरति। इत्येवमिति॥ घटादीनां स्वकारणव्यतिरेकेणासत्ताच्च प्रत्ययवैचित्र्यहेतुत्वं अतो घटादिप्रत्ययवत् प्रत्ययान्तराण्यपि प्रत्ययत्वाविशेषाद्बाह्यालम्बनवर्जितानि मन्तव्यानी-

# निमित्तस्यानिमित्तत्वमिष्यते भूतदर्शनात् ॥ २५ ॥

---

व्यतिरेकेणेत्येवमुत्तरोत्तरभूतदर्शने आश्रयप्रत्ययनिरो-
धान्नैव निमित्तमुपलभामह इत्यर्थः। अथवा भूतदर्श-
नाद्बाह्यार्थस्यानिमित्तत्वमिष्यते। रज्ज्वादाविव सर्पादेरि-
त्यर्थः। भ्रान्तिदर्शनविषयत्वाच्च निमित्तस्यानिमित्तत्वं
भवेत्। तदभावेऽभानात्। न हि सुषुप्तसमाहितमुक्तानां
भ्रान्तिदर्शनाभावे आत्मव्यतिरिक्तो बाह्योऽर्थ उपलभ्यते।
न ह्युन्मत्तावगतवस्त्वनुन्मत्तैरपि तथा भूतं गम्यते। एतेन
द्वयदर्शनं संक्लेशोपलब्धिश्च प्रत्युक्ता ॥ २५ ॥

---

त्यर्थः। भूतदर्शनं यौक्तिकं तत्त्वदर्शनं ततो निमित्तस्यानिमित्तत्वमिति
व्याख्यातम्। इदानीमभूतदर्शनादिति पदच्छेदेन व्याख्यानान्तरमाह।
अथ वेति॥ यथा रज्ज्वादावधिष्ठाने सर्पादेरारोपितस्य दर्शनान्न तस्य
वस्तुतो दर्शनं प्रत्यालम्बनत्वमिष्टम्। तथैवाधिष्ठानज्ञानापेक्षया परमार्थतो
दर्शनाद्बाह्यस्यार्थस्य ज्ञानप्रत्यालम्बनत्वं वास्तवमभ्युपगन्तुमशक्य-
मित्यर्थः। किञ्च। विमतो बाह्योऽर्थो न तत्त्वतो ज्ञानं प्रत्यालम्बनं भ्रान्ति-
विषयत्वात् रज्ज्वां सर्पादिवदित्याह। भ्रान्तीति॥ हेतुं साधयति।
तदभाव इति॥ भ्रान्त्यभावे बाह्योऽर्थो न भातीत्युक्तं हेतुं प्रपञ्चयति।
न हीति॥ देहाभिमानवतो बाह्यार्थप्रतिभानध्रौव्याददद्वैतदर्शिनोऽपि
तत्प्रतिभानमप्रत्यूहं प्राप्नोतीत्याशङ्क्याह। न ह्युन्मत्तेति॥ बाह्यार्थ-
समर्थनार्थमुक्तमर्थापत्तिद्वयं कथं निरसनीयमित्याशङ्क्याह। एतेनेति॥ तत्त्व-
दर्शिनां स्फुरणातिरिक्तवस्त्वनुपलम्भप्रदर्शनेन वैचित्र्यदर्शनं दुःखोप-
लब्धिश्च प्रत्युक्ता। तेनानुपपद्यमानार्थापत्तिद्वयस्यानुत्थानम्। व्यवहार-
दृष्ट्या तु पूर्वभ्रमसमारोपितस्य भवदेव संवेदने वैचित्र्यं दुःखं व्यवहा-
राङ्गमित्यन्यथाप्युपपत्तिरित्यर्थः ॥ २५ ॥

**चित्तं न संस्पृशत्यर्थं नार्थाभासं तथैव च ।**
**अभूतो हि यतश्चार्थो नार्थाभासस्ततः पृथक् ॥२६॥**

---

यस्मान्नास्ति बाह्यं निमित्तमतश्चित्तं न स्पृशत्यर्थं बाह्यालम्बनविषयम् । नाप्यर्थाभासं चित्तत्वात्स्वप्नचित्तवत् । अभूतो हि जागरितेऽपि स्वप्नार्थवदेव बाह्यः शब्दाद्यर्थो यत उक्तहेतुत्वान्नाप्यर्थाभासश्चित्तात्पृथक् चित्तमेव हि घटाद्यर्थवदवभासते यथा स्वप्ने ॥ २६ ॥

---

ज्ञानस्य सालम्बनत्वप्रसिद्धेरुक्तदृष्ट्या ज्ञेयाभावे ज्ञानमपि न स्यादित्याशङ्क्याह । चित्तमिति ॥ न हि स्फुरणं सकर्मकं तस्य सकर्मकत्वप्रसिद्ध्यभावात् । जानातेस्तु सकर्मकत्वं क्रियाफलत्वकल्पनया स्वीकृतमिति भावः । चित्तस्यार्थस्पर्शित्वाभावेऽपि तदाभासस्पर्शित्वं स्यादित्याशङ्क्याह । नार्थेति ॥ तत्र हेतुमाह । अभूत इति ॥ प्रथमपादं व्याचष्टे । यस्मादिति ॥ विमतं चित्तमर्थाभासमपि न स्पृशति चित्तत्वात् सम्प्रतिपन्नवदिति द्वितीयं पादं विभजते । नापीति ॥ न हि दृष्टान्ते तस्यार्थाभासस्पर्शित्वं तस्यैव तदात्मना भानादित्यर्थः ॥ तृतीयपादं व्याकरोति । अभूतो हीति ॥ विमतोऽर्थः सन्न भवति दृश्यत्वात् सम्प्रतिपन्नवदित्यनुमानान्न ज्ञानस्यालम्बनमित्यर्थः ॥ विमतोऽर्थः स्वविषयज्ञानजनको न भवति भ्रान्तिविषयत्वात् सम्प्रतिपन्नवदित्युक्तमनुमानं स्मारयति । उक्तेति ॥ अर्थजन्यत्वाभावे विज्ञानस्यार्थाभासजन्यत्वं स्यादित्याशङ्क्य चतुर्थपादार्थमाह । नापीति ॥ २६ ॥

निमित्तं न सदा चित्तं संस्पृशत्यध्वसु चिषु।
अनिमित्तो विपर्य्यासः कथं तस्य भविष्यति ॥२७॥

ननु विपर्य्याससर्हि असति घटादौ घटाद्याभासता चित्तस्य तथा च सत्यविपर्य्यासः क्वचिद्वक्तव्य इति। अत्रोच्यते। निमित्तं विषयमतीतानागतवर्त्तमानाध्वसु त्रिष्वपि सदा चित्तं न स्पृशेदेव हि। यदि हि क्वचित्संस्पृशेत्सोऽविपर्य्यासः परमार्थत इति। अतस्तदपेक्षयाऽसति घटे घटाभासता विपर्य्यासः स्यात् न तु तदस्ति कदाचिदपि चित्तस्यार्थसंस्पर्शनम्। तस्मादनिमित्तो विपर्य्यासः कथं तस्य चित्तस्य भविष्यति न कथञ्चिद्विपर्य्यासोऽस्तीत्यभिप्रायः। अयमेव हि स्वभावश्चित्तस्य। यदुतासति निमित्ते घटादौ तद्वदवभासनम् ॥ २७ ॥

ज्ञानस्य सालम्बनत्वाभावे तस्य तथात्वप्रथा भ्रान्तिर्भवेत्। भ्रान्तिश्चाभ्रान्तिप्रतियोगिनीत्यन्यथाख्यातिमतमाशङ्क्याह। निमित्तमिति॥ कालत्रयेऽपि ज्ञानस्य वस्तुतोऽर्थस्पर्शित्वाभावे तद्भासनाभावात् तज्जन्या नान्यथा ख्यातिः सिद्ध्यति। भ्रान्तिस्तु विधान्तरेणापि भविष्यतीत्याह। अनिमित्त इति॥ श्लोकव्यावर्त्त्यामाशङ्कां दर्शयति। नन्विति॥ यदि घटादिर्बाह्योऽर्थो न गृह्यते तर्हि तस्मिन्नसत्येव तदाभासत्वाज्ज्ञानस्य विपर्य्यासः। अतस्मिंस्तद्बुद्धेस्तथात्वात्। विपर्य्यासे च स्वीकृते क्वचिदप्यविपर्य्यासो वक्तव्यः। भ्रान्तेरभ्रान्तिपूर्व्वत्वस्यान्यथा ख्यातिवादिभिरिष्टत्वादित्यर्थः। तत्र पूर्व्वार्द्धयोजनया परिहरति। अत्रेति॥ उक्तमेवार्थमुत्तरार्द्धयोजनार्थं साधयति। यदीति॥ अभ्रान्तेरभावादसम्भवे भ्रान्तेरसति घटादौ घटाद्याभासता ज्ञानस्य कथं निर्व्वहतीत्याशङ्क्याह। अयमेवेति॥ स्वभावशब्देनाविद्योच्यते। न हि भ्रान्तिरभ्रान्तिपूर्व्विकेति नियमः। सविभ्रमायां भ्रमायामविद्यात्वाभ्युपगमादित्यर्थः ॥ २७ ॥

तस्मान्न जायते चित्तं चित्तदृश्यं न जायते ।

---

प्रज्ञप्तेः सनिमित्तत्वमित्याद्येतदन्तं विज्ञानवादिनो बौद्धस्य वचनं बाह्यार्थवादिपक्षप्रतिषेधपरमाचार्येणानुमोदितम् । तदेव हेतुं कृत्वा तत्पक्षप्रतिषेधाय तदिदमुच्यते तस्मादित्यादि । यस्मादसत्येव घटादौ घटाद्याभासता चित्तस्य विज्ञानवादिनाऽभ्युपगता तदनुमोदितमस्माभिरपि भूतदर्शनात् तस्मात्तस्यापि चित्तस्य जायमानावभासताऽसत्येव जन्मनि युक्ता भवितुमित्यतो न जायते चित्तम् । यथा चित्तदृश्यं न जायते अतस्तस्य चित्तस्य ये जातिं पश्यन्ति विज्ञानवादिनः क्षणिकत्वदुःखत्वशून्यत्वानात्मत्वादि च । तेनैव चित्तेन चित्तस्वरूपं द्रष्टुमशक्यं

---

बाह्यार्थवादिपक्षमेवं विज्ञानवादिमुखेन प्रतिक्षिप्य विज्ञानवादमिदानीमपवदति । तस्मादिति ॥ प्रतिक्षणं विज्ञानस्य जन्म दृश्यते विज्ञानवादिभिरित्याशङ्क्याह । तस्येति ॥ वृत्तसङ्कीर्तनपूर्वकं श्लोकस्य तात्पर्यमाह । प्रज्ञप्तेरिति ॥ न च बाह्यार्थवादिनो बाह्योऽर्थो विज्ञानवदस्तीति पक्षप्रतिषेधमुखेनाप्रवृत्तं तत्पुनराचार्येण भवत्वेवमित्यभ्यनुज्ञातम् ॥ बाह्यार्थवाददूषणस्य स्वमतेऽपि सम्मतत्वादित्याह । बाह्योऽर्थ इति ॥ बाह्यार्थवाददूषणानुमोदनप्रयोजनमाह । तदेवेति ॥ असत्येव घटादौ घटाद्याभासत्वं विज्ञानस्य यदुक्तं तदेव हेतुत्वेनोपादाय विज्ञानवादनिषेधार्थं बाह्यार्थपक्षदूषणमनुमोदितमित्यर्थः ॥ सम्प्रति विज्ञानवाददूषणमवतारयति । तदिदमिति ॥ तस्मादित्यादि व्याचष्टे । यस्मादिति ॥ भूतदर्शनात् घटादेर्मृदादिमात्रं भूतं वस्तुतत्त्वं तस्यापि विज्ञप्तिमात्रं तत्त्वं तस्य यावत्सतो दर्शनादिति यावत् ॥ द्वितीयपादं दृष्टान्तत्वेन विभजते । यथेति ॥ विमतं विज्ञानजन्म न तात्त्विकं दृश्यत्वान्नीलपीता-

तस्य पश्यन्ति ये जातिं खे वै पश्यन्ति ते पदम्॥२८
अजातं जायते यस्मादजातिः प्रकृतिस्ततः।

पश्यन्तः खे वै पश्यन्ति ते पदं पक्ष्यादीनाम्। अत इतरेभ्योऽपि द्वैतिभ्योऽत्यन्तसाहसिका इत्यर्थः। येऽपि शून्यवादिनः पश्यन्त एव सर्व्वशून्यतां स्वदर्शनस्यापि शून्यतां प्रतिजानते ते ततोऽपि साहसिकतराः खं मुष्टिनाऽपि-जिघृक्षन्ति॥ २८॥

उक्तैर्हेतुभिरजमेकं ब्रह्मेति सिद्धं यत्पुनरादौ प्रतिज्ञातं तत्फलोपसंहारार्थोऽयं श्लोकः। अजातं यच्चित्तं ब्रह्मैव जायत इति वादिभिः परिकल्प्यते तदजातं जायते

दिवदित्यर्थः। विपक्षे दोषमाह। अत इति॥ तत्त्वतो विज्ञानस्य जन्मायोगादेव तस्य तात्त्विकं जन्म पश्यन्ति ते पक्ष्यादीनां खेऽपि पदं पश्यन्तीत्यन्वयः। अभावत्वादीत्यादिशब्देनान्योन्यविलक्षणत्वमन्योन्यसादृश्यञ्च गृह्यते॥ तत्र हेतुं सूचयति। तेनैवेति॥ लक्षणैरनुपपत्तेः सादृश्यताभन्तरेण च तद्धर्मादृश्यतासम्भवादित्यर्थः॥ विज्ञानवादे फलितं विशेषं दर्शयति। अत इति॥ शून्यवादिनं प्रति विशेषं कथयति। येऽपीति॥ पश्यन्त एवेत्यविलुप्तदृक्स्वरूपता द्योत्यते॥ दृग्बलादेव सर्व्वाभावः सिध्यति। दृगभाववस्तु कथं सिध्येत्। न च तावत् दृगेव तदभावं साधयेत्। तयोरेककालत्वानुपपत्तेरित्यर्थः। किञ्च सर्व्वशून्यतां वदन्तः शून्यता दर्शनस्य स्वात्मदर्शनस्य च शून्यतां वदन्ति॥ तथा च स्वपक्षासिद्धिरित्यभिप्रेत्याह। स्वदर्शनस्येति॥ ततोऽपीति विज्ञानवादिभ्योऽपीत्यर्थः॥ २८॥

यदि विज्ञानस्य बाह्यालम्बनत्वं क्षणिकत्वं शून्यत्वञ्च न सम्भवति किन्तर्हि तस्यैकरूपं भवतीत्याशङ्क्याह। अजातमिति॥ तस्याच प्रकृतेरन्यथात्वं पुरस्तादेव निरस्तमित्याह। प्रकृतेरिति॥ श्लोकस्य तात्पर्यमाह। उक्तैरिति॥ कूटस्थमद्वितीयं ब्रह्मेति यत्पूर्व्वत्र प्रतिज्ञातं तज्जन्मनो दुर्निरूपत्वादुक्तहेतुभिः सिद्धम्॥ तस्यैव सिद्धस्यार्थस्य फलमुप-

**प्रकृतेरन्यथाभावो न कथञ्चिद्भविष्यति॥ २९ ॥**
**अनादेरन्तवत्त्वञ्च संसारस्य न सेत्स्यति।**

यस्मादजातिः प्रकृतिस्तस्य ततस्तस्मादजातरूपायाः प्रकृतेरन्यथाभावो जन्म न कथञ्चिद्भविष्यति॥ २९॥

अयञ्चापर आत्मनः संसारमोक्षयोः परमार्थसद्भाववादिनां दोष उच्यते। अनादेरतीतकोटिरहितस्य संसारस्यान्तवत्त्वं समाप्तिर्न सेत्स्यति युक्तितः सिद्धिं नोपयास्यति। न ह्यनादिः सन्नन्तवान् कश्चित्पदार्थो दृष्टो लोके। वीजाङ्कुरसम्बन्धनैरन्तर्य्यविच्छेदो दृष्ट इति चेत्। न। एकवस्त्वभावेनापोदितत्वात्। तथाऽनन्ततापि विज्ञानप्राप्तिकाल-

संक्षेपमेव श्लोक इत्यर्थः॥ पूर्व्वार्द्धं योजयति। अजातमिति॥ यदि चित्तस्य रूपमजातमभीष्टं तर्हि तद्ब्रह्मैव तस्य कौटस्थैकस्वाभाव्यात्तत्पुनर्वस्तुतो न जातमेव मायया जन्मवदिति कल्प्यते चेत्तस्याजातिरेवाजातत्वात्प्रकृतिर्भवतीत्यर्थः॥ द्वितीयार्द्धं योजयति। अजातरूपाया इति। तस्याश्चेदन्यथात्वं स्वरूपहानिरापतेदित्यर्थः॥ २९॥

कूटस्थं तत्त्वं तार्किकमिथ्यात्वेऽमन्तरमाह। अनादेरिति॥ विमतः संसारो नान्तवान् अनादिभावत्वादात्मवदित्यर्थः। किञ्च मोक्षोऽनन्तो न भावत्वे सत्यादिमत्त्वाद् घटवदित्याह। अनन्तेति॥ श्लोकस्य तात्पर्य्यमाह। अयञ्चेति॥ तत्र पूर्व्वार्द्धं व्याकरोति। अनादेरिति॥ अतीतकोटिरहितस्य पूर्व्वं नासीदित्यवच्छेदवर्जितस्येत्यर्थः॥ योऽनादिभावः सोऽन्तवान्नेति व्याप्तिरात्मनि व्यक्तेत्याह। न हीति॥ वीजाङ्कुरयोर्हेतुफलभावेन सम्बन्धस्तस्य नैरन्तर्य्यं सन्तानस्तस्यानादिभावत्वेऽपि विच्छेदस्यान्तस्य दृष्टत्वादनैकान्तिकतेति शङ्कते। वीजेति॥ भावत्वविशेषणाभावस्य तत्रावस्तुत्वान्न व्यभिचारश्चेति दूषयति। नैकेति। द्वितीयार्द्धं व्याचष्टे। तथेति॥ यत्रादिमत्त्वं तत्र नानन्तत्वमिति व्याप्तिभूमिमाह।

अनन्तता चादिमतो मोक्षस्य न भविष्यति ॥३०॥
आदावन्ते च यन्नास्ति वर्त्तमानेऽपि तत्तथा ।
वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः ॥३१॥
सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते ।
तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृता ॥३२॥

---

प्रभवस्य मोक्षस्यादिमतो न भविष्यति। घटादिष्वदर्श-नात्। घटादिविनाशवदवस्तुत्वाददोष इति चेत्। तथा च मोक्षस्य परमार्थसद्भावप्रतिज्ञाहानिः। असत्त्वादेव शशविषाणस्येवादिमत्त्वाभावश्च ॥ ३० ॥

वैतथ्ये कृतव्याख्यानौ श्लोकाविह संसारमोक्षाभावप्रस-ङ्गेन पठितौ ॥ ३१ ॥ ३२ ॥

---

घटादिष्विति ॥ यथा कृतकोऽपि घटादिध्वंसो नित्यस्तथा बन्धध्वंसो-ऽपि भविष्यतीत्यनैकान्तिकत्वमाशङ्कते। घटादीति ॥ मोक्षस्याभावत्वे सति परमार्थसत्त्वप्रतिज्ञा भज्येतेति दूषयति ॥ तथा चेति ॥ किञ्च प्रागसतः सत्ता समवायरूपं कार्य्यत्वं तदपि मोक्षस्याऽसत्त्वे न सिद्ध्यती-त्याह। असत्त्वादेवेति ॥ ३० ॥

अस्तु तर्हि मोक्षस्याद्यन्तवत्त्वं तत्राह। आदाविति ॥ यदिमरु-रोदकादि दृश्यते तथा वस्तुतो नास्त्येवेति यावत्। वितथैस्तैरेव मरी-च्युदकादिभिः साधर्म्यमाद्यन्तवत्त्वम्। विमता मोक्षादयो न परमार्थसन्तो भवितुमर्हन्ति आद्यन्तवत्त्वान्मरीच्युदकादिवदित्यर्थः ॥ कथं तर्हि मोक्षादीनामपि तथात्वप्रथेत्याशङ्क्याह। अवितथा इति ॥ लक्षिता मूढैर-विचारकैरिति शेषः। जलरोदकादीनां स्नानपानादिप्रयोजनाभाव-सम्भान्मोक्षस्वर्गादीनान्तु सुखादिप्राप्तिप्रयोजनप्रतिलम्भान्न मोक्षादिवै-तथ्यमित्याशङ्क्याह। सप्रयोजनतेति ॥ तेषां मोक्षादीनामिति यावत्। पुनरुक्तिशङ्कां वारयति। वैतथ्य इति ॥ ३१ ॥ ३२ ॥

सर्व्वे धर्म्मा मृषा स्वप्ने कायस्यान्तर्निदर्शनात् ।
संवृतेऽस्मिन् प्रदेशे वै भूतानां दर्शनं कुतः ॥३३॥
न युक्तं दर्शनं गत्वा कालस्यानियमाद्गतौ ।
प्रतिबुद्धश्च वै सर्व्वस्तस्मिन् देशे न विद्यते ॥ ३४ ॥

---

निमित्तस्यानिमित्तत्वमिष्यते भूतदर्शनादित्ययमर्थः प्रपञ्च्यते एतैः श्लोकैः ॥ ३३ ॥

जागरिते गत्यागमनकालौ नियतौ देशः प्रमाणतो यस्तस्यानियमात् नियमस्याभावात् स्वप्ने न देशान्तरगमनमित्यर्थः ॥ ३४ ॥

---

किञ्च येन हेतुना स्वप्नस्य मिथ्यात्वमिष्टं तस्य जागरितेऽपि तुल्यत्वाज्जन्मादिरहितं संविन्मात्रं तत्त्वमेष्टव्यमिति विवक्षित्वाह । सर्व्वेति ॥ यदि देहान्तर्दर्शनान्मिथ्यात्वं स्वप्नस्येष्टं तर्हि वैराजदेहे सर्व्वस्य जागरितस्य दर्शनात् मिथ्यात्वं दुर्व्वारमित्यर्थः । किञ्च योग्यदेशवैधुर्य्यान्मिथ्यात्वं स्वप्नस्य यद्यभीष्टं तर्हि संवृते प्रदेशे प्रत्यग्भूते ब्रह्मस्वरूपे करणे भूतानां विद्यमानानां दर्शनं न कुतोऽपि स्यात् ब्रह्मणोऽनवकाशत्वादित्याह । संवृत इति ॥ अवतारितश्लोकसहितानामुत्तरश्लोकानां भाष्याभासमित्यव्याख्यातानां तात्पर्य्यमाह । निमित्तस्येति ॥ ३३ ॥

उक्तमेवार्थं प्रपञ्चयति । न युक्तमित्यादिना ॥ स्वप्ने देशान्तरगतौ नियतकालाभावाच्च गत्वा दर्शनमिष्टं तथा मरणादूर्द्ध्वमर्चिरादिमार्गेण गत्वा ब्रह्मदर्शनमयुक्तं कालानवच्छिन्नत्वादित्यर्थः । किञ्च यद्देशस्थः स्वप्नं पश्यति प्रतिबुद्धस्तस्मिन्देशे नास्तीति मिथ्यात्वमभीष्टम् । यथा यस्मिन् देशे स्थितः संसारमनुभवति ब्रह्मभावं प्रतिपन्नस्तस्मिन्देहदेशे नास्ति परिपूर्णब्रह्मरूपेणावस्थानादतो जागरितस्यापि मिथ्यात्वमेष्टव्यमित्याह । प्रतिबुद्धश्चेति । श्लोकस्य तात्पर्य्यार्थं कथयति । जागरित इति ॥ ३४ ॥

मित्राद्यैः सह सम्मन्त्र्य सम्बुद्धो न प्रपद्यते।
गृहीतञ्चापि यत्किञ्चित् प्रतिबुद्धो न पश्यति॥३५॥
स्वप्ने चावस्तुकः कायः पृथगन्यस्य दर्शनात्।
यथा कायस्तथा सर्व्वं चित्तदृश्यमवस्तुकम् ॥३६॥

---

मित्राद्यैः सह सम्मन्त्र्य तदेव मन्त्रणं प्रतिबुद्धो न प्रपद्यते। गृहीतञ्च यत्किञ्चित् हिरण्यादि न प्राप्नोति। गतश्च न देशान्तरं गच्छति स्वप्ने ॥ ३५ ॥

स्वप्ने च अटन् दृश्यते यः कायः सोऽवस्तुकस्ततोऽन्यस्य स्वापदेशस्थस्य पृथक्कायान्तरस्य दर्शनात्। यथा स्वप्नदृश्यः कायोऽसंस्तथा सर्व्वं चित्तदृश्यमवस्तुकं जागरि-

---

किञ्च यथा स्वप्ने विसंवादादप्रामाण्यमिष्टं तथा जागरितेऽपि परं श्रेयोऽस्माभिः साधनीयमिति स ब्रह्मवादिभिः सह समालोच्याविद्या-निद्रातः प्रतिबुद्धो नैव श्रेयःसाध्यत्वमालोचितं प्रतिपद्यते। सर्व्वस्य नित्यशुद्धत्वनिश्चयात्। अतो मुमुक्षुत्वं श्रवणादिकर्त्तव्यता च भ्रान्त्यैवेत्याह। मित्राद्यैरिति॥ किञ्च स्वप्नवदेव गृहीतमुपदेशादि विद्वान्न पश्यति तत्साध्यफलाभावादित्याह। गृहीतञ्चेति॥ अथवा लोकदृष्ट्या यत्किञ्चिद्गृहीतं वस्त्रान्नोदकादि तद्विद्वान्नैव किञ्चित्करोमीति प्रतिबुद्धो-ऽन्यप्रत्ययबाधाच्च स्वसम्बन्धित्वेनाधिगच्छति। तेन तदाभासमात्रमेवेत्याह। मित्राद्यैरित्यादिना॥ उक्तमर्थं विवक्षित्वा श्लोकाक्षराणि योजयति। गृहीतञ्चेति॥ ३५ ॥

किञ्च स्वप्नावस्थायां येन देहेन नद्यादिषु पर्य्यटति स मिथ्या पृथग्-भूतस्य निश्चलस्य देहस्य दर्शनात्। तथा जागरिते यो न परिव्राजकादि-शरीरेण लोकस्य पूज्यो द्वेष्यो वा दृश्यते स मिथ्या कथ्यते। पृथगेव कूटस्थ-ब्रह्मात्मशरीरस्यानुभवादित्याह। स्वप्न चेति॥ किञ्च यथा स्वप्ने देहो मिथ्या तथा चित्तदृश्यं जड़ं सर्व्वमवस्तुकं मिथ्याभूतमेवितव्यमि-

**ग्रहणाज्जागरितवत्तद्धेतुः स्वप्न इष्यते ।**
**तद्धेतुत्वात्तु तस्यैव सज्जागरितमिष्यते ॥ ३७ ॥**

---

तेऽपि चित्तदृश्यत्वादित्यर्थः । स्वप्नसमत्वादसज्जागरितमपीति प्रकरणार्थः ॥ ३६ ॥

इतश्चासत्त्वं जाग्रद्वस्तुनो जागरितवज्जागरितस्यैव ग्रहणाद् ग्राह्यग्राहकरूपेण स्वप्नस्य तज्जागरितं हेतुरस्य स्वप्नस्तद्धेतुर्जागरितकार्य्यमिष्यते । तद्धेतुत्वाज्जागरितकार्य्यत्वात्तस्यैव स्वप्नदृश एव सज्जागरितं न त्वन्येषाम्। यथा स्वप्न इत्यभिप्रायः। यथा स्वप्नः स्वप्नदृश एव सन् साधारणविद्यमानवस्तुवदवभासते तथा तत्कारणत्वात्साधारणविद्यमानवस्तुवदवभासनं न तु साधारणं विद्यमानवस्तु स्वप्नवदेवेत्यभिप्रायः ॥ ३७ ॥

---

त्याह। यथेति ॥ पूर्व्वार्द्धं मतान्तराणि योजयति। स्वप्ने इति ॥ उत्तरार्द्धगतानि व्याकरोति। यथेत्यादिना ॥ प्रकरणार्थमुपसंहरति। स्वप्नेति ॥ ३६ ॥

यथा जागरितं तथा स्वप्नो व्यवह्रियते। यथा स्वप्नस्य जागरितकार्य्यत्वाद्यः स्वप्नद्रष्टा तस्यैव जागरितं सदिति स्वप्नवत्तन्मिथ्यात्वमित्याह। ग्रहणादिति ॥ किञ्च जागरितस्य विद्यमानत्वमनेकसाधारणत्वं वस्तुनो नास्ति स्वप्नकारणत्वात् किन्तु तथा भासमानत्वमित्याह। तद्धेतुत्वादिति ॥ जागरितस्य वस्तुतोऽसत्त्वे हेत्वन्तरपरत्वं श्लोकस्य दर्शयति। इतश्चेति। इतः षष्ठ्यार्थमेव स्फोरयन् पूर्व्वार्द्धं योजयति। जागरितवदिति ॥ उत्तरार्द्धं योजयति। तद्धेतुत्वादिति ॥ सति प्रमातरि बाध्यत्वं स्वप्नस्य मिथ्यात्वं जागरितस्य पुनस्तदनुपलम्भात् परमार्थतः सत्त्वम्। कार्य्यस्य मिथ्यात्वे कारणस्यापि मिथ्यात्वमिति मानाभावात् ॥ न हि सर्व्वसाधारणं विद्यमानञ्च जागरितं मिथ्या भवितुं युक्तमित्याशङ्क्याह यथेत्यादिना ॥ ३७ ॥

उत्पादस्याप्रसिद्धत्वादजं सर्व्वमुदाहृतम् ।
न च भूतादभूतस्य सम्भवोऽस्ति कथञ्चन ॥ ३८ ॥
असज्जागरिते दृष्ट्वा स्वप्ने पश्यति तन्मयः ।

---

ननु स्वप्नकारणत्वे जागरितवस्तुनो न स्वप्नवदवस्तुत्वम् । अत्यन्तचलो हि स्वप्नो जागरितन्तु स्थिरं लक्ष्यते । सत्यमेवाविवेकिनां स्यात् विवेकिनान्तु न कस्यचित् वस्तुन उत्पादः प्रसिद्धोऽतोऽप्रसिद्धत्वादुत्पादस्यात्मैव सर्व्वमित्यजं सर्व्वमुदाहृतं वेदान्तेषु सबाह्याभ्यन्तरो ह्यज इति । यदपि मन्यसे जागरितात्सतोऽसत्स्वप्नो जायत इति तदसत् । न भूताद्विद्यमानादभूतस्यासतः सम्भवोऽस्ति लोके । न ह्यसतः शशविषाणादेः सम्भवो दृष्टः कथञ्चिदपि ॥ ३८ ॥

ननु उक्तं त्वयैव स्वप्नो जागरितकार्य्यमिति तत्कथमुत्पादो प्रसिद्ध इत्युच्यते । शृणु तत्र यथा कार्य्यका-

---

कार्य्यकारणभावेऽपि स्वप्नजागरितयोर्न मिथ्यात्वमविशिष्टमत्यन्तवैषम्यादित्याशङ्क्याह । उत्पादस्येति ॥ यत्तु कार्य्यकारणत्वं सत्त्वासत्त्वयोरेव स्वप्नजागरितयोरित्युक्तं तत् दुरुक्तमित्याह । न चेति ॥ लोकव्यावस्थामाशङ्क्यामाह । नन्विति ॥ किमिदं वैलक्षण्यमविवेकिनां प्रतिभाति किंवा विवेकिनामिति विकल्पमाद्यमङ्गीकरोति । सत्यमिति ॥ द्वितीयं प्रत्याह । विवेकिनान्त्विति ॥ द्वितीयभागमाकाङ्क्षाद्वारा विभजते । यदपीत्यादिना ॥ सम्भवो नासतोऽस्तीत्येतत् दृष्टान्तेन साधयति । न हीति ॥ कथञ्चिदपि सतोऽसतो वेत्यर्थः ॥ ३८ ॥

यदुक्तमुत्पादस्याऽप्रसिद्धत्वं तदयुक्तम् । स्वप्नजागरितयोस्तत्कार्य्यकारणत्वाङ्गीकरणादित्याशङ्क्याह । असदिति ॥ जागरिते दृष्टस्य स्वप्ने

प्रज्ञप्तेः सनिमित्तत्वमिष्यते युक्तिदर्शनात्।

---

अत्रोच्यते बाढमेवं प्रज्ञप्तेः सनिमित्तत्वं द्वयसंक्लेशोपलब्धियुक्तिदर्शनादिष्यते त्वया। स्थिरीभव तावत्त्वं युक्तिदर्शनं वस्तुनस्तथात्वाभ्युपगमे कारणमित्यत्र ब्रूहि किन्तत इति। उच्यते। निमित्तस्य प्रज्ञप्त्यालम्बनाभिमतस्य तव घटादेरनिमित्तत्वमनालम्बनत्वं वैचित्र्याहेतुत्वमिष्यतेऽस्माभिः कथं भूतदर्शनात् परमार्थदर्शनादित्येतत्। न हि घटो यथाभूतमृद्रूपदर्शने सति तद्व्यतिरेकेणास्ति। यथाऽश्वान्महिषः पटो वा तन्तुव्यतिरेकेण। तन्तवश्चांशु-

---

द्वाभ्यामर्थापत्तिभ्यां बाह्यार्थवादे प्राप्ते विज्ञानवादस्तद्भावयति। प्रज्ञप्तेरिति॥ अस्तु का नाम वस्तुगतिरित्याशङ्क्याह। निमित्तस्येति॥ मतान्तरे प्राप्ते तन्निराकरणमुच्यते। विज्ञानवादिनेति। श्लोकस्य तात्पर्यमाह। अत्रेति॥ तत्र पूर्वार्धं विभजते। बाढमित्यादिना॥ द्वैतिनस्तव तर्कप्रधानत्वान्न प्रतीतिमात्रशरणता युक्तेति मत्वाह। स्थिरीभवेति॥ वस्तुनो बाह्यस्यार्थस्य तथात्वं प्रज्ञप्तिविषयत्वं तस्याभ्युपगमे कारणं प्रागुक्तयुक्तिदर्शनमित्येतस्मिन्नर्थे त्वं स्थिरीभवेति योजना। विचारदृष्टिमेवावष्टभ्याऽहं वर्ते किं ततो दूषणं ब्रूहीति पृच्छति॥ ब्रूहीति तत्रोत्तरार्धं सिद्धान्ती व्याकुर्वन्नुत्तरमाह। उच्यत इत्यादिना॥ घटादेर्वैचित्र्याहेतुत्वे प्रश्नपूर्वकं हेतुमाह। कथमित्यादिना॥ परमार्थदर्शनं प्रपञ्चयति। न हीति॥ तत्र वैधर्म्यदृष्टान्तमाह। यथेति॥ घटे दर्शितं न्यायं पटेऽपि दर्शयति। पटो वेति॥ तन्तुष्वपि न्यायसाम्यमुदाहरति। तन्तव इति। परमार्थदर्शनफलमुपसंहरति। इत्येवमिति॥ घटादीनां स्वकारणव्यतिरेकेणासत्त्वाच्च प्रत्ययवैचित्र्याहेतुत्वं अतो घटादिप्रत्ययवत् प्रत्ययान्तराण्यपि प्रत्ययत्वाविशेषाद्बाह्यालम्बनवर्जितानि मन्तव्यानी-

# निमित्तस्यानिमित्तत्वमिष्यते भूतदर्शनात् ॥ २५ ॥

व्यतिरेकेणेत्येवमुत्तरोत्तरभूतदर्शने आशब्दप्रत्ययनिरोधाच्चैव निमित्तमुपलभामह इत्यर्थः। अथवा भूतदर्शनाद्बाह्यार्थस्यानिमित्तत्वमिष्यते। रज्ज्वादाविव सर्पादेरित्यर्थः। भ्रान्तिदर्शनविषयत्वाच्च निमित्तस्यानिमित्तत्वं भवेत्। तदभावेऽभानात्। न हि सुषुप्तसमाहितमुक्तानां भ्रान्तिदर्शनाभावे आत्मव्यतिरिक्तो बाह्योऽर्थ उपलभ्यते। न ह्युन्मत्तावगतवस्तुमुत्पत्तेरपि तथा भूतं गम्यते। एतेन द्वयदर्शनं संक्लेशोपलब्धिश्च प्रयुक्ता ॥ २५ ॥

त्यर्थः। भूतदर्शनं यौक्तिकं तत्त्वदर्शनं ततो निमित्तस्यानिमित्तत्वमिति व्याख्यातम्। इदानीमभूतदर्शनादिति पदच्छेदेन व्याख्यानान्तरमाह। अथ वेति॥ यथा रज्ज्वादावधिष्ठाने सर्पादेरारोपितस्य दर्शनाच्च तस्य वस्तुतो दर्शनं प्रत्यालम्बनत्वमिष्टम्। तथैवाधिष्ठानस्यानापेक्षया परमार्थतो दर्शनाद् बाह्यस्यार्थस्य ज्ञानप्रत्यालम्बनत्वं वास्तवमभ्युपगन्तुमशक्यमित्यर्थः। किञ्च। विमतो बाह्यार्थो न तत्त्वतो ज्ञानं प्रत्यालम्बनं भ्रान्तिविषयत्वात् रज्ज्वां सर्पादिवदित्याह। भ्रान्तीति॥ हेतुं साधयति। तदभाव इति॥ भ्रान्त्यभावे बाह्यार्थो न भातीत्युक्तं हेतुं प्रपञ्चयति। न हीति॥ देहाभिमानवतो बाह्यार्थप्रतिभानध्रौव्याद्द्वैतदर्शिनोऽपि तत्प्रतिभानमप्रत्यूहं प्राप्नोतीत्याशङ्क्याह। न ह्युन्मत्तेति॥ बाह्यार्थसमर्थनार्थमुक्तमर्थापत्तिद्वयं कथं निरसनीयमित्याशङ्क्याह। एतेनेति॥ तत्त्वदर्शिनां स्फुरणातिरिक्तवस्त्वनुपलम्भप्रदर्शनेन वैचित्र्यदर्शनं दुःखोपलब्धिश्च प्रत्युक्ता। तेनानुपपद्यमानार्थापत्तिद्वयस्यानुत्थानम्। व्यवहारदृष्ट्या तु पूर्वभ्रमसमारोपितस्य प्रवहदेव संवेदने वैचित्र्यं दुःखं व्यवहाराङ्गमित्यन्यथाप्युपपत्तिरित्यर्थः ॥ २५ ॥

चित्तं न संस्पृशत्यर्थं नार्थाभासं तथैव च ।
अभूतो हि यतश्चार्थो नार्थाभासस्ततः पृथक् ॥२६॥

---

यस्मान्नास्ति बाह्यं निमित्तं अतश्चित्तं न स्पृशत्यर्थं बाह्यालम्बनविषयम् । नाप्यर्थाभासं चित्तत्वात्स्वप्नचित्तवत् । अभूतो हि जागरितेऽपि स्वप्नार्थवदेव बाह्यः शब्दाद्यर्थो यत उक्तहेतुत्वान्न नाप्यर्थाभासश्चित्तात्पृथक् चित्तमेव हि घटाद्यर्थवदवभासते यथा स्वप्ने ॥ २६ ॥

---

ज्ञानस्य सालम्बनत्वप्रसिद्धेरुक्तदृष्ट्या ज्ञेयाभावे ज्ञानमपि न स्यादित्याशङ्क्याह । चित्तमिति ॥ न हि स्फुरणं सकर्मकं तस्य सकर्मकत्वप्रसिद्ध्यभावात् । जानातेस्तु सकर्मकत्वं क्रियाफलत्वकल्पनया स्वीकृतमिति भावः । चित्तस्यार्थस्पर्शित्वाभावेऽपि तदाभासस्पर्शित्वं स्यादित्याशङ्क्याह । नार्थेति ॥ तत्र हेतुमाह । अभूत इति ॥ प्रथमपादं व्याचष्टे । यस्मादिति ॥ विमतं चित्तमर्थाभासमपि न स्पृशति चित्तत्वात् सम्प्रतिपन्नवदिति द्वितीयं पादं विभजते । नापीति ॥ न हि दृष्टान्ते तस्यार्थाभासस्पर्शित्वं तस्यैव तदात्मना भानादित्यर्थः ॥ तृतीयपादं व्याकरोति । अभूतो हीति ॥ विमतोऽर्थः सन्न भवति अर्थत्वात् सम्प्रतिपन्नवदित्यनुमानाच्च ज्ञानस्यालम्बनमित्यर्थः ॥ विमतोऽर्थः स्वविषयज्ञानजनको न भवति भ्रान्तिविषयत्वात् सम्प्रतिपन्नवदित्युक्तमनुमानं स्मारयति । उक्तेति ॥ अर्थजन्यत्वाभावे विज्ञानस्यार्थाभासजन्यत्वं स्यादित्याशङ्क्य चतुर्थपादार्थमाह । नापीति ॥ २६ ॥

निमित्तं न सदा चित्तं संस्पृशत्यध्वसु त्रिषु ।
अनिमित्तो विपर्य्यासः कथं तस्य भविष्यति ॥२७॥

ननु विपर्य्यासस्तर्हि असति घटादौ घटाद्याभासता चित्तस्य तथा च सत्यविपर्य्यासः क्वचिद्वक्तव्य इति। अत्रोच्यते। निमित्तं विषयमतीतानागतवर्त्तमानाध्वसु त्रिष्वपि सदा चित्तं न स्पृशेदेव हि। यदि हि क्वचित्-संस्पृशेत्सोऽविपर्य्यासः परमार्थत इति। अतस्तदपेक्षयाऽसति घटे घटाभासता विपर्य्यासः स्यात् न तु तदस्ति कदाचिदपि चित्तस्यार्थसंस्पर्शनम्। तस्मादनिमित्तो विपर्य्यासः कथं तस्य चित्तस्य भविष्यति न कथञ्चिद्विपर्य्यासोऽस्तीत्यभिप्रायः। अयमेव हि स्वभावश्चित्तस्य। यदुतासति निमित्ते घटादौ तद्वदवभासनम् ॥ २७ ॥

ज्ञानस्य सालम्बनत्वाभावे तस्य तथात्वप्रथा भ्रान्तिर्भवेत्। भ्रान्तिश्चाभ्रान्तिप्रतियोगिनीत्यन्यथाख्यातिमतमाशङ्क्याह। निमित्तमिति॥ कालत्रयेऽपि ज्ञानस्य वस्तुतोऽर्थस्पर्शित्वाभावे तद्वासनाभावात् तत्कल्पनान्यथा ख्यातिः सिद्ध्यति। भ्रान्तिस्तु विधान्तरेणापि भविष्यतीत्याह। अनिमित्त इति॥ श्लोकव्यावर्त्त्यामाशङ्कां दर्शयति। नन्विति॥ यदि घटादिर्बाह्योऽर्थो न गृह्यते तर्हि तस्मिन्नसत्येव तदाभासत्वाज्ज्ञानस्य विपर्य्यासः। अतस्मिंस्तद्बुद्धेस्तथात्वात्। विपर्य्यासे च स्वीकृते क्वचिदप्यविपर्य्यासो वक्तव्यः। भ्रान्तेरभ्रान्तिपूर्व्वत्वस्यान्यथा ख्यातिवादिभिरिष्टत्वादित्यर्थः। तत्र पूर्व्वार्द्धयोजनया परिहरति। अत्रेति॥ उक्तमेवार्थमुत्तरार्द्धयोजनार्थं साधयति। यदीति॥ अभ्रान्तेरभावादसम्भवे भ्रान्तेरसति घटादौ घटाद्याभासता ज्ञानस्य कथं निर्व्वहतीत्याशङ्क्याह। अयमेवेति॥ स्वभावशब्देनाविद्योच्यते। न हि भ्रान्तिरभ्रान्तिपूर्व्विकेति नियमः। सविषयायां भ्रमायामविद्यात्वाभ्युपगमादित्यर्थः॥ २७ ॥

तस्मान्न जायते चित्तं चित्तदृश्यं न जायते ।

प्रज्ञप्तेः सनिमित्तत्वमित्याद्येतदन्तं विज्ञानवादिनो बौद्धस्य वचनं बाह्यार्थवादिपक्षप्रतिषेधपरमाचार्य्येणानुमोदितम्। तदेव हेतुं कृत्वा तत्पक्षप्रतिषेधाय तदिदमुच्यते तस्मादित्यादि। यस्मादसत्येव घटादौ घटाद्याभासता चित्तस्य विज्ञानवादिनाऽभ्युपगता तदनुमोदितमस्माभिरपि भूतदर्शनात् तस्मात्तस्यापि चित्तस्य जायमानावभासताऽसत्येव जन्मनि युक्ता भवितुमित्यतो न जायते चित्तम्। यथा चित्तदृश्यं न जायते अतस्तस्य चित्तस्य ये जातिं पश्यन्ति विज्ञानवादिनः क्षणिकत्वदुःखत्वशून्यत्वानात्मत्वादि च। तेनैव चित्तेन चित्तस्वरूपं द्रष्टुमशक्यं

बाह्यार्थवादिपक्षमेवं विज्ञानवादिमुखेन प्रतिक्षिप्य विज्ञानवादमिदानीमपवदति। तस्मादिति॥ प्रतिक्षणं विज्ञानस्य जन्म इष्यते विज्ञानवादिभिरित्याशङ्क्याह। तस्येति॥ वृत्तसङ्कीर्त्तनपूर्व्वकं श्लोकस्य तात्पर्य्यमाह। प्रज्ञप्तेरिति॥ यत्र बाह्यार्थवादिनो बाह्योऽर्थो विज्ञानवदस्तीति पक्षप्रतिषेधमुखेनाप्रवृत्तं तत्पुनराचार्य्येण भवत्वेवमित्यभ्यनुज्ञातम्॥ बाह्यार्थवाददूषणस्य स्वमतेऽपि सम्मतत्वादित्याह। बाह्येऽर्थे इति॥ बाह्यार्थवाददूषणानुमोदनप्रयोजनमाह। तदेवेति॥ असत्येव घटादौ घटाद्याभासत्वं विज्ञानस्य यदुक्तं तदेव हेतुत्वेनोपादाय विज्ञानवादनिषेधार्थं बाह्यार्थपक्षदूषणमनुमोदितमित्यर्थः॥ सम्प्रति विज्ञानवाददूषणमवतारयति। तदिदमिति॥ तस्मादित्यादि व्याचष्टे। यस्मादिति॥ भूतदर्शनात् घटादेर्मृदादिमात्रं भूतं वस्तुतत्त्वं तस्यापि विज्ञप्तिमात्रं तत्त्वं तस्य यास्ततो दर्शनादिति यावत्॥ द्वितीयपादं दृष्टान्तत्वेन विभजते। यथेति॥ विमतं विज्ञानजन्म न तात्त्विकं दृश्यत्वात्स्वोत्पत्तेः-

**तस्य पश्यन्ति ये जातिं खे वै पश्यन्ति ते पदम्॥२८**
**अजातं जायते यस्मादजातिः प्रकृतिस्ततः।**

---

पश्यन्तः खे वै पश्यन्ति ते पदं पक्ष्यादीनाम्। अत इतरेभ्योऽपि द्वैतिभ्योऽत्यन्तसाहसिका इत्यर्थः। येऽपि शून्यवादिनः पश्यन्त एव सर्व्वशून्यतां स्वदर्शनस्यापि शून्यतां प्रतिजानते ते ततोऽपि साहसिकतराः खं मुष्टिनाऽपिजिघृक्षन्ति॥ २८॥

उक्तैर्हेतुभिरजमेकं ब्रह्मेति सिद्धं यत्पुनरादौ प्रतिज्ञातं तत्फलोपसंहारार्थोऽयं श्लोकः। अजातं यच्चित्तं ब्रह्मैव जायत इति वादिभिः परिकल्प्यते तदजातं जायते

---

दिवदित्यर्थः। विपक्षे दोषमाह। अत इति॥ तत्त्वतो विज्ञानस्य जन्मायोगादेव तस्य तात्त्विकं जन्म पश्यन्ति ते पक्ष्यादीनां खेऽपि पदं पश्यन्तीत्यन्वयः। अमानित्वादीत्यादिशब्देनाग्न्यौष्ण्यविलक्षणत्वमन्योन्यसाहचर्य्यञ्च गृह्यते॥ तत्र हेतुं सूचयति। तेनैवेति॥ स्वरूपस्थितेरनुपपत्तेस्तद्द्वयतामन्तरेण च तद्धर्म्मद्वयतासम्भवादित्यर्थः॥ विज्ञानवादे फलितं विशेषं दर्शयति। अत इति॥ शून्यवादिनं प्रति विशेषं कथयति। येऽपीति॥ पश्यन्त एवेत्यविलुप्तदृक्स्वरूपता द्योत्यते॥ दृग्वशादेव सर्व्वाभावः सिध्यति। दृगभावस्तु कथं सिध्येत्। न च तावद् दृगेव तदभावं साधयेत्। तयोरेककालत्वानुपपत्तेरित्यर्थः। किञ्च सर्व्वशून्यतां वदन्तः शून्यतादर्शनस्य स्वात्मदर्शनस्य च शून्यतां वदन्ति॥ तथा च स्वपक्षासिद्धिरित्यभिप्रेत्याह। स्वदर्शनस्येति॥ ततोऽपीति विज्ञानवादिभ्योऽपीत्यर्थः॥ २८॥

यदि विज्ञानस्य बाह्यालम्बनत्वं क्षणिकत्वं शून्यत्वञ्च न सम्भवति किन्तर्हि तत्त्वमेकरूपं भवतीत्याशङ्क्याह। अजातमिति॥ तस्याश्च प्रकृतेरन्यथात्वं पुरस्तादेव निरस्तमित्याह। प्रकृतेरिति॥ श्लोकस्य तात्पर्य्यमाह। उक्तैरिति॥ कूटस्थमद्वितीयं ब्रह्मेति यत्पूर्व्वत्र प्रतिज्ञातं तज्जन्मनो दुर्निरूपत्वादुक्तहेतुभिः सिद्धम्॥ तस्यैव सिद्धस्यार्थस्य फलमुप-

प्रकृतेरन्यथाभावो न कथञ्चिद्भविष्यति ॥ २९ ॥
अनादेरन्तवत्त्वञ्च संसारस्य न सेत्स्यति ।

---

यस्मादजातिः प्रकृतिस्तस्य ततस्तस्मादजातरूपायाः प्रकृतेरन्यथाभावो जन्म न कथञ्चिद्भविष्यति ॥ २९ ॥

अयञ्चापर आत्मनः संसारमोक्षयोः परमार्थसद्भाववादिनां दोष उच्यते । अनादेरतीतकोटिरहितस्य संसारस्यान्तवत्त्वं समाप्तिर्न सेत्स्यति युक्तितः सिद्धिं नोपयास्यति । न ह्यनादिः सन्नन्तवान् कश्चित्पदार्थो दृष्टो लोके । बीजाङ्कुरसम्बन्धनैरन्तर्यविच्छेदो दृष्ट इति चेत् । न । एकवस्त्वभावेनापोदितत्वात् । तथाऽनन्तताऽपि विज्ञानप्राप्तिकाल-

---

संहर्तुमेव श्लोक इत्यर्थः ॥ पूर्वार्द्धं योजयति । अजातमिति ॥ यदि चित्तस्फुरणमजातमभीष्टं तर्हि तद्ब्रह्मैव तस्य कौटस्थ्यैकरस्याभाव्यात्तत्पुनर्वस्तुतो न जातमेव मायया जन्मवदिति कल्प्यते चेत्तस्याजातिरेवाजातत्वात्प्रकृतिर्भवतीत्यर्थः ॥ द्वितीयार्द्धं योजयति । अजातरूपाया इति । तस्याश्चेदन्यथात्वं स्वरूपहानिरापतेदित्यर्थः ॥ २९ ॥

कूटस्थं तत्त्वं तात्त्विकमित्यत्र हेत्वन्तरमाह । अनादेरिति ॥ विमतः संसारो नान्तवान् अनादिभावत्वादात्मवदित्यर्थः । किञ्च मोक्षोऽनन्तो न भावत्वे सत्यादिमत्त्वाद् घटवदित्याह । अनन्तेति ॥ श्लोकस्य तात्पर्यमाह । अयञ्चेति ॥ तत्र पूर्वार्द्धं व्याकरोति । अनादेरिति ॥ अतीतकोटिरहितस्य पूर्वं नासीदित्यवच्छेदवर्जितस्येत्यर्थः ॥ योऽनादिभावः सोऽन्तवान्नेति व्याप्तिरात्मनि व्यक्तेत्याह । न हीति ॥ बीजाङ्कुरयोर्हेतुफलभावेन सम्बन्धस्य नैरन्तर्यं सन्तानस्तस्यानादिभावत्वेऽपि विच्छेदस्यान्तस्य दृष्टत्वादनैकान्तिकतेति शङ्कते । बीजेति ॥ भावत्वविशेष्यांशस्य तत्रावर्त्तनान्न व्यभिचारशङ्केति दूषयति । नैकेति । द्वितीयार्द्धं व्याचष्टे । तथेति ॥ यत्रादिमत्त्वं तत्र नानन्तत्वमिति व्याप्तिभूमिमाह ।

अनन्तता चादिमतो मोक्षस्य न भविष्यति ॥३०॥
आदावन्ते च यन्नास्ति वर्त्तमानेऽपि तत्तथा ।
वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः ॥३१॥
सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते ।
तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृता ॥३२॥

---

प्रभवस्य मोक्षस्यादिमतो न भविष्यति । घटादिष्वदर्शनात् । घटादिविनाशवदवस्तुत्वाददोष इति चेत् । तथा च मोक्षस्य परमार्थसद्भावप्रतिज्ञाहानिः । असत्त्वादेव शशविषाणस्येवादिमत्त्वाभावश्च ॥ ३० ॥

वैतथ्ये कृतव्याख्यानौ श्लोकाविह संसारमोक्षाभावप्रसङ्गेन पठितौ ॥ ३१ ॥ ३२ ॥

---

घटादिष्विति ॥ यथा कृतकोऽपि घटादिध्वंसो नित्यस्तथा बन्धध्वंसोऽपि भविष्यतीत्यनैकान्तिकत्वमाशङ्कते । घटादीति ॥ मोक्षस्याभावत्वे सति परमार्थसत्त्वप्रतिज्ञा भज्येतेति दूषयति ॥ तथा चेति ॥ किञ्च प्रागसतः सत्ता समवायरूपं कार्यत्वं तदपि मोक्षस्याऽसत्त्वे न सिध्यतीत्याह । असत्त्वादेवेति ॥ ३० ॥

अस्तु तर्हि मोक्षस्याद्यन्तवत्त्वं तत्राह । आदाविति ॥ यदूषरोदकादि दृश्यते तथा वस्तुतो नास्त्येवेति यावत् । वितथैस्तैरेव मरीच्युदकादिभिः सादृश्यमाद्यन्तवत्त्वम् । विमता मोक्षादयो न परमार्थसन्तो भवितुमर्हन्ति आद्यन्तवत्त्वान्मरीच्युदकादिवदित्यर्थः ॥ कथं तर्हि मोक्षादीनामपि तथात्वप्रथेत्याशङ्क्याह । अवितथा इति ॥ लक्षिता मूढैरविचारकैरिति शेषः । ऊषरोदकादीनां स्नानपानादिप्रयोजनानुपलम्भान्मोक्षस्वर्गादीनान्तु सुखादिप्राप्तिप्रयोजनप्रतिलम्भान्न मोक्षादिवैतथ्यमित्याशङ्क्याह । सप्रयोजनतेति ॥ तेषां मोक्षादीनामिति यावत् । पुनरुक्तिशङ्कां वारयति । वैतथ्य इति ॥ ३१ ॥ ३२ ॥

स्वप्ने धर्म्मा वृथा स्वप्ने कायस्यान्तर्निदर्शनात् ।
संवृत्तेऽस्मिन् प्रदेशे वै भूतानां दर्शनं कुतः॥३३॥
न युक्तं दर्शनं गत्वा कालस्यानियमाद्गतौ ।
प्रतिबुद्धश्च वै सर्व्वस्तस्मिन् देशे न विद्यते ॥ ३४ ॥

---

निमित्तस्यानिमित्तत्वमिष्यते भूतदर्शनादित्ययमर्थः प्रपञ्च्यते एतैः श्लोकैः ॥ ३३ ॥

जागरिते गत्यागमनकालौ नियतौ देशः प्रमाणतो यत्तस्यानियमात् नियमस्याभावात् स्वप्ने न देशान्तर-गमनमित्यर्थः ॥ ३४ ॥

---

किञ्च येन हेतुना स्वप्नस्य मिथ्यात्वमिष्टं तस्य जागरितेऽपि तुल्यत्वाज्जन्मादिरहितं संविन्मात्रं तत्त्वमेष्टव्यमिति विवक्षित्वाह । सर्व्वेति ॥ यदि देहान्तर्दर्शनान्मिथ्यात्वं स्वप्नस्येष्टं तर्हि वैराजदेहे सर्व्वस्य जागरितस्य दर्शनात् मिथ्यात्वं दुर्व्वारमित्यर्थः । किञ्च योग्यदेशवैधुर्य्यान्मिथ्यात्वं स्वप्नस्य यद्यभीष्टं तर्हि संवृते प्रदेशे प्रत्यग्भूते ब्रह्मस्वरूपे करणे भूतानां विद्यमानानां दर्शनं न कुतोऽपि स्यात् ब्रह्मणोऽनवकाशत्वादित्याह । संवृत इति ॥ अवतारितश्लोकसहितानामुत्तरश्लोकानां आत्माभासमित्या(?)त्मकानां तात्पर्य्यमाह । निमित्तस्येति ॥ ३३ ॥

उक्तमेवार्थं प्रपञ्चयति । न युक्तमित्यादिना ॥ स्वप्ने देशान्तरगतौ नियतकालाभावाच्च गत्वा दर्शनमिष्टं तथा मरणादूर्द्ध्वमर्च्चिरादिमार्गेण गत्वा ब्रह्मदर्शनमयुक्तं कालानवच्छिन्नत्वादित्यर्थः । किञ्च यद्देशस्थः स्वप्नं पश्यति प्रतिबुद्धस्तस्मिन्देशे नास्तीति मिथ्यात्वमभीष्टम् । यथा यस्मिन्देशे स्थितः संसारमनुभवति ब्रह्मभावं प्रतिपन्नस्तस्मिन्देहदेशे नास्ति परिपूर्णब्रह्मरूपेणावस्थानादतो जागरितस्यापि मिथ्यात्वमेष्टव्यमित्याह । प्रतिबुद्धश्चेति । श्लोकस्य तात्पर्य्यार्थं कथयति । जागरित इति ॥ ३४ ॥

मित्राद्यैः सह सम्मन्त्र्य सम्बुद्धो न प्रपद्यते ।
गृहीतञ्चापि यत्किञ्चित् प्रतिबुद्धो न पश्यति ॥ ३५ ॥
स्वप्ने चावस्तुकः कायः पृथगन्यस्य दर्शनात् ।
यथा कायस्तथा सर्वं चित्तदृश्यमवस्तुकम् ॥ ३६ ॥

---

मित्राद्यैः सह सम्मन्त्र्य तदेव मन्त्रणं प्रतिबुद्धो न प्रपद्यते । गृहीतञ्च यत्किञ्चित् हिरण्यादि न प्राप्नोति । गतश्च न देशान्तरं गच्छति स्वप्ने ॥ ३५ ॥

स्वप्ने च अटन् दृश्यते यः कायः सोऽवस्तुकस्ततोऽन्यस्य स्वापदेशस्थस्य पृथक्कायान्तरस्य दर्शनात् । यथा स्वप्नदृश्यः कायोऽसंस्तथा सर्वं चित्तदृश्यमवस्तुकं जागरि-

---

किञ्च यथा स्वप्ने विसंवादादप्रामाण्यमिदं तथा जागरितेऽपि परं श्रेयोऽस्माभिः साधनीयमिति च ब्रह्मवादिभिः सह समालोच्याविद्यानिद्रातः प्रतिबुद्धो नैव श्रेयःसाध्यत्वमालोचितं प्रतिपद्यते । सर्वस्य नित्यसिद्धत्वनिश्चयात् । अतो सुतत्त्वं श्रवणादिकर्तव्यता च भ्रान्त्यैवेत्याह । मित्राद्यैरिति ॥ किञ्च स्वप्नवदेव गृहीतमुपदेशादि विद्वान्न पश्यति तत्साध्यफलाभावादित्याह । गृहीतञ्चेति ॥ अथवा लोकदृष्ट्या यत्किञ्चिद्गृहीतं वस्त्रामोदकादि तद्विद्वान्नैव किञ्चित्करोमीति प्रतिबुद्धो बाध्यप्रत्ययबाधाच्च स्वसम्बन्धित्वेनाधिगच्छति । तेन तदाभासमात्रमेवेत्याह । मित्राद्यैरित्यादिना ॥ उक्तमर्थं विवक्षित्वा श्लोकाक्षराणि योजयति । गृहीतञ्चेति ॥ ३५ ॥

किञ्च स्वप्नावस्थायां येन देहेन नद्यादिषु पर्यटति स मिथ्या पृथग्भूतस्य निश्चलस्य देहस्य दर्शनात् । यथा जागरिते यो न परिव्राजकादिशरीरेण लोकस्य पूज्यो द्वेष्यो वा दृश्यते स मिथ्या कथ्यते । पृथगेव कूटस्थब्रह्मात्मशरीरस्यानुभवादित्याह । स्वप्ने चेति ॥ किञ्च यथा स्वप्ने देहो मिथ्या तथा चित्तदृश्यं जडं सर्वमवस्तुकं मिथ्याभूतमेषितव्यमि-

ग्रहणाज्जागरितवत्तद्धेतुः स्वप्न इष्यते।
तद्धेतुत्वात्तु तस्यैव सज्जागरितमिष्यते॥ ३७॥

---

तेऽपि चित्तदृश्यत्वादित्यर्थः। स्वप्नसमत्वादसज्जागरितमपीति प्रकरणार्थः॥ ३६॥

इतश्चासत्त्वं जाग्रद्वस्तुनो जागरितवज्जागरितस्यैव ग्रहणाद् ग्राह्यग्राहकरूपेण स्वप्नस्य तज्जागरितं हेतुरस्य स्वप्नस्य हेतुर्जागरितकार्य्यमिष्यते। तद्धेतुत्वाज्जागरितकार्य्यत्वात्तस्यैव स्वप्नदृश एव सज्जागरितं न त्वन्येषाम्। यथा स्वप्न इत्यभिप्रायः। यथा स्वप्नः स्वप्नदृश एव सन् साधारणविद्यमानवस्तुवदवभासते तथा तत्कारणत्वात्साधारणविद्यमानवस्तुवदवभासनं न तु साधारणं विद्यमानवस्तु स्वप्नवदेवेत्यभिप्रायः॥ ३७॥

---

त्याह। यथेति॥ पूर्व्वार्द्धं गताभ्यक्षराणि योजयति। स्वप्ने इति॥ उत्तरार्द्धगतानि व्याकरोति। यथेत्यादिना॥ प्रकरणार्थमुपसंहरति। स्वप्नेति॥ ३६॥

यथा जागरितं तथा स्वप्नो व्यज्यते। यथा स्वप्नस्य जागरितकार्य्यत्वाद्यः स्वप्नद्रष्टा तस्यैव जागरितं सदिति स्वप्नवत्तन्मिथ्यात्वमित्याह। ग्रहणादिति॥ किञ्च जागरितस्य विद्यमानत्वमनेकसाधारणत्वं वस्तुनो नास्ति स्वप्नकारणत्वात् किन्तु तथा भासमानत्वमित्याह। तद्धेतुत्वादिति॥ जागरितस्य वस्तुतोऽसत्त्वे हेत्वन्तरपरत्वं श्लोकस्य दर्शयति। इतश्चेति॥ इतः शब्दार्थमेव स्फोरयन् पूर्व्वार्द्धं योजयति। जागरितवदिति॥ उत्तरार्द्धं योजयति। तद्धेतुत्वादिति॥ सति प्रमातरि बाध्यत्वं स्वप्नस्य मिथ्यात्वं जागरितस्य पुनस्तदनुपलम्भात् परमार्थतः सत्त्वम्। कार्य्यस्य मिथ्यात्वे कारणस्यापि मिथ्यात्वमिति मानाभावात्॥ न हि सर्व्वसाधारणं विद्यमानस्य जागरितं मिथ्या भवितुं युक्तमित्याशङ्क्याह यथेत्यादिना॥ ३७॥

उत्पादस्याप्रसिद्धत्वादजं सर्व्वमुदाहृतम्।
न च भूतादभूतस्य सम्भवोऽस्ति कथञ्चन॥ ३८॥
असज्जागरिते दृष्ट्वा स्वप्ने पश्यति तन्मयः।

---

ननु स्वप्नकारणत्वे जागरितवस्तुनो न स्वप्नवदवस्तुत्वम्। अत्यन्तचलो हि स्वप्नो जागरितन्तु स्थिरं लक्ष्यते। सत्यमेवाविवेकिनां स्यात् विवेकिनान्तु न कस्यचित् वस्तुन उत्पादः प्रसिद्धोऽतोऽप्रसिद्धत्वादुत्पादस्यात्मैव सर्व्वमित्यजं सर्व्वमुदाहृतं वेदान्तेषु सबाह्याभ्यन्तरो ह्यज इति। यदपि मन्यसे जागरितात्सतोऽसत्स्वप्नो जायत इति तदसत्। न भूताद्विद्यमानादभूतस्यासतः सम्भवोऽस्ति लोके। न ह्यसतः शशविषाणादेः सम्भवो दृष्टः कथञ्चिदपि॥ ३८॥

ननु उक्तं त्वयैव स्वप्नो जागरितकार्य्यमिति तत्कथमुत्पादो प्रसिद्ध इत्युच्यते। शृणु तत्र यथा कार्य्यका-

---

कार्य्यकारणभावेऽपि स्वप्नजागरितयोर्न मिथ्यात्वमविशिष्टमत्यन्तवैषम्यादित्याशङ्क्याह। उत्पादस्येति॥ यत्तु कार्य्यकारणत्वं सत्यासत्ययोरेव स्वप्नजागरितयोरित्युक्तं तत् दुरुक्तमित्याह। न चेति॥ श्लोकव्याख्यामाशङ्कामाह। नन्विति॥ किमिदं वैलक्षण्यमविवेकिनां प्रतिभाति किंवा विवेकिनामिति विकल्पाद्यमङ्गीकरोति। सत्यमिति॥ द्वितीयं प्रत्याह। विवेकिनान्त्विति॥ द्वितीयभागमाकाङ्क्षाद्वारा विभजते। यदपीत्यादिना॥ सम्भवो नासतोऽस्तीत्येतत् दृष्टान्तेन साधयति। न हीति॥ कथञ्चिदपि सतोऽसतो नेत्यर्थः॥ ३८॥

यदुक्तमुत्पादस्याऽप्रसिद्धत्वं तदयुक्तम्। स्वप्नजागरितयोस्तत्कार्य्यकारणत्वाङ्गीकरणादित्याशङ्क्याह। असदिति॥ जागरिते दृष्टस्य स्वप्ने

असत्स्वप्नेऽपि दृष्ट्वा च प्रतिबुद्धो न पश्यति ॥३९॥

रवभावोऽस्माभिरभिप्रेत इति असदविद्यमानं रज्जुसर्पवद्विकल्पितं वस्तु जागरिते दृष्ट्वा तद्भावभावितस्तन्मयः स्वप्ने जागरितवद्ग्राह्यग्राहकरूपेण विकल्पयन् पश्यति तथा सत्स्वप्नेऽपि दृष्ट्वा च प्रतिबुद्धो न पश्यति अविकल्पयन् च अस्मात्। तथा जागरितेऽपि दृष्ट्वा स्वप्ने न पश्यति कदाचिदित्यर्थः। तस्माज्जागरितं स्वप्नहेतुरुच्यते न तु परमार्थसदिति ज्ञात्वा ॥ ३९ ॥

दर्शनात् ॥ जागरितस्य स्वप्नम्प्रति कारणत्वं चेत्तर्हि स्वप्ने दृष्टस्य जागरितेऽपि दर्शनात्तस्य जागरितम्प्रति कारणत्वं किं न स्यादित्याशङ्क्याह। असत्स्वप्नेऽपीति ॥ श्लोकव्याख्यानमाशङ्काद्वारापयति। नन्विति ॥ पूर्वापरविरोधे चोदिते परिहारे कथ्यमाने मनःसमाधानं प्रार्थयते। स्वस्थिति ॥ तमेव प्रकारं प्रकटयन्नक्षराणि योजयति। असदिति ॥ तुच्छत्वं व्यवच्छिनत्ति। रज्ज्विति ॥ दर्शनस्याभासत्वं सूचयति। विकल्पितमिति ॥ यथा जाग्रद्दृष्टस्य विशेषस्य स्वप्ने दर्शनाज्जागरितवासनाधीनः स्वप्नो जागरितकार्यत्वेन व्यवह्रियते तथा स्वप्ने दृष्टस्य जागरितेऽपि दर्शनात्तत्कार्यत्वं जागरितस्य प्राप्तमित्याशङ्क्य द्वितीयार्धं व्याचष्टे। तथेति ॥ यत्तु स्वप्नजागरितयोरुक्तं कार्यकारणत्वं तदपि न नियतमिति निपातार्थं कथयति। कदाचिदिति ॥ तस्मात्प्रायशः स्वप्नस्य जाग्रद्वासनाधीनत्वादिति यावत् ॥ जागरितस्य परमार्थसत्त्वात्कार्यस्य स्वप्नस्यापि तादात्म्यात्सत्यत्वं विवक्षित्वा कार्यकारणत्वप्रथा कथं न भवतीति व्याशङ्क्य कथयति। न त्विति ॥ ३९ ॥

**नास्त्यसद्धेतुकमसत् सदसद्धेतुकन्तथा ।**
**सच्च सद्धेतुकं नास्ति सद्धेतुकमसत्कुतः ॥ ४० ॥**

परमार्थतस्तु न कस्यचित्केनचिदपि प्रकारेण कार्य्यकारणभाव उपपद्यते कथं नास्त्यसद्धेतुकमसच्छशविषाणादि हेतुः कारणं यस्यासत एव खपुष्पादेस्तदसद्धेतुकमसन्नविद्यते । तथा सदपि घटादिवस्तु । असद्धेतुकं शशविषाणादिकार्य्यं नास्ति । तथा सच्च विद्यमानं घटादिवस्त्वन्तरकार्य्यं नास्ति । सत्कार्य्यमसत्कुत एव सम्भवति । न चान्यः कार्य्यकारणभावः सम्भवति शक्यो वा कल्पयितुम् । अतो विवेकिनामसिद्ध एव कार्य्यकारणभावः कस्यचिदित्यभिप्रायः ॥ ४० ॥

व्यवहारदृष्ट्या कार्य्यकारणत्वं स्वप्नजागरितयोरुक्तम् । तत्त्वदृष्ट्या त्वप्रतिषिद्धमेव क्वचिदपि कार्य्यकारणत्वमिति वदन् वस्तुनोऽन्यस्माद्वस्त्वेव कार्य्यं भवतीति मतं व्यावर्त्तयति । नास्तीति ॥ शून्यवादिनस्तु सदेव कार्य्यं जायते शून्यत्वादिति मन्यन्ते तान् प्रत्याह सदिति ॥ तथेत्यनेन नास्तीत्येतदनुकृष्यते । सांख्यादयस्तु कार्य्यकारणयोर्द्वयोरपि सत्त्वं सङ्गिरन्ते तान् प्रत्युक्तम् । सच्चेति ॥ सद्ब्रह्म कारणं मिथ्याप्रपञ्चसृष्टेरित्येके वर्णयन्ति तान्निराचष्टे । सद्धेतुकमिति ॥ श्लोकस्य तात्पर्य्यमाह । परमार्थतस्त्विति ॥ प्रसिद्धं कार्य्यकारणत्वं यया कया च प्रक्रियया प्रतिपादयितुमुचितं अन्यथा प्रसिद्धिप्रकोपादित्याक्षिपति । कथमिति ॥ अनिर्व्वाच्यं मायामयं कार्य्यकारणत्वं प्रतीतिमात्रसिद्धमयौक्तिकमधिकृत्य प्रसिद्धिरविरुद्धेत्यभिसन्धायाद्यं पादं विभजते । नास्तीत्यादिना ॥ द्वितीयं पादं व्याचष्टे । तथेत्यादिना ॥ तृतीयं पादं व्याकरोति । तथा सच्चेति ॥ चतुर्थपादार्थमाह । असदिति ॥ अस्तु तर्हि प्रकारान्तरेण कार्य्यकारणभाव इत्याशङ्क्य योग्यानुपलब्धिविरुद्धत्वान्नैवमित्याह । न चेति ॥ ४ ॥

विपर्य्यासाद्यथा जाग्रदचिन्त्यान् भूतवत् स्पृशेत्।
तथा स्वप्ने विपर्य्यासाद्धर्म्मांस्तत्रैव पश्यति ॥४१ ॥
उपलम्भात् समाचारादस्ति वस्तुत्ववादिनाम्।

---

पुनरपि जाग्रत्स्वप्नयोरसतोरपि कार्य्यकारणभावाशङ्कामपनयन्नाह। विपर्य्यासादविवेकतो यथा जाग्रज्जागरितेऽचिन्त्यान् भावानशक्यचिन्तनीयान् रज्जुसर्पादीन् भूतवत्परमार्थवत्स्पृशेत् स्पृशन्निव विकल्पयेदित्यर्थः। कश्चिद्यथा तथा स्वप्ने विपर्य्यासाद्धस्त्यादीन् पश्यन्निव विकल्पयति तत्रैव पश्यति न तु जागरितादुत्पद्यमानानित्यर्थः॥ ४१॥

यापि बुद्धैरद्वैतवादिभिर्जातिर्देशितोपदिष्टा। उपलम्भनमुपलम्भस्तस्मादुपलब्धेरित्यर्थः। समाचाराद्वर्णाश्रमादिधर्म्मसमाचरणाच्चाभ्यां हेतुभ्यामस्ति वस्तुत्ववादिना-

---

स्वप्नजागरितयोर्वस्तुतो नास्ति कार्य्यकारणत्वमित्यत्रैव हेत्वन्तरमाह। विपर्य्यासादिति॥ श्लोकस्य तात्पर्य्यमाह। पुनरपीति॥ अक्षरार्थं कथयति। विपर्य्यासादित्यादिना॥ कश्चिदित्यस्य पूर्व्वेण क्रियापदेन सम्बन्धः। दृष्टान्तमनूद्य दार्ष्टान्तिकमाह। यथेत्यादिना॥ ४१॥

तत्त्वदृष्ट्या कार्य्यकारणत्वस्याप्रसिद्धत्वे कथं जन्मादिसूत्रप्रमुखैः सूत्रैर्जगत्कारणं ब्रह्म सूचितमित्याशङ्क्याह॥ उपलम्भादिति॥ अविवेकिनां विवेकोपायत्वेन कार्य्यकारणत्वमुपेत्य सूत्रकारप्रवृत्तिरित्यर्थः॥ श्लोकाक्षराणि व्याचष्टे यापीत्यादिना॥ अस्ति वस्तुभावो द्वैतस्येति शेषः। कार्य्यकारणभावमुपेत्य जन्मोपदिष्टामद्वैतवादिनां मन्दविवेकिषु विवेकद्वारोपायत्वेन कथं तदुपदेशः स्यादित्याशङ्क्याह। तामिति॥

जातिस्तु देशिता बुद्धैरजातेस्त्रसतां सदा॥४२॥
अजाते त्रसतान्तेषामुपलम्भाद्वियन्ति ये।

---

मस्ति वस्तुभाव इत्येवं वदनशीलानां दृढग्राहवतां श्रद्धधानानां मन्दविवेकिनामर्थोपायत्वेन सा देशिता जातिः तां गृह्णन्तु तावत्। वेदान्ताभ्यासिनान्तु स्वयमेवाजाद्वयात्मविषयो विवेको भविष्यतीति न तु परमार्थबुद्ध्या। ते हि श्रोत्रियाः। स्थूलबुद्धित्वादजातेः। अजातिवस्तुनः सदा त्रस्यन्त्यात्मनाशं मन्यमाना अविवेकिन इत्यर्थः॥ ४२॥

उपायः सोऽवतारायेत्युक्तम्। ये चैवमुपलम्भात् समाचाराच्चाऽजातेरजातिवस्तुनस्त्रसन्तोऽस्ति वस्त्वित्यद्वयात्मनो वियन्ति विरुद्धं यन्ति द्वैतं प्रतिपद्यन्त इत्यर्थः। तेषामजातेस्त्रसतां श्रद्दधानानां सन्मार्गावलम्बिनां जातिदोषा

---

यदा ब्रह्मणः सकाशादशेषं जगद्भवतीत्यभ्युपेतं तदा तदतिरेकेण जगतो अभावात् ब्रह्मैव सर्व्वमिति निश्चितम्। तद्विषयेषु च वेदान्तेषु पौर्व्वापर्य्येणालोचितेषु तदभ्यासिनां तेषां तदभ्यासप्रसादादेव कूटस्थाद्वितीयवस्तुविवेकदार्ढ्यं सेत्स्यतीत्यभिप्रेत्याद्वैतवादिभिर्जातिरुपदिष्टा न तु द्वैतस्य श्रुतितो न्यायतश्च निरूपयितुमशक्यस्य परमार्थत्वं गृहीत्वा जातिरुपदिष्टेत्यजातिरेव पारमार्थिकीत्यर्थः॥ चतुर्थं पादार्थमाह। ते हीति॥ ४२॥

तेषां विवेकोपायत्वेन जातिरुपदिष्टेत्यनोपक्रममनुकूलयति। उपाय इति॥ उदरमन्तरं कुरुते अथ तस्य भयं भवतीत्यादिश्रुतिभ्यः। ब्रह्मणि विकारदर्शिनां भयप्राप्तिः श्रूयते। तथा च श्रोत्रियाणामपि भेददर्शनाच्चानुपपन्नतेत्याशङ्क्याह। अजातेरिति॥ न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छतीति च स्मृतेस्तेषामात्मनिष्ठपतनाभावेऽपि निन्दानुपपत्त्या कश्चिदेव दोषः सम्भवतीत्याशङ्क्य सम्यग्दर्शनाप्राप्तिप्रयुक्तं

जातिदोषा न सेत्स्यन्ति दोषोऽप्यल्पो भविष्यति
॥ ४३ ॥
उपलम्भात्समाचारान्मायाहस्ती यथोच्यते ।
उपलम्भात् समाचारादस्ति वस्तु तथोच्यते ॥४४॥

---

जात्युपलम्भकृता दोषा न सेत्स्यन्ति सिद्धिं नोपयास्यन्ति । विवेकमार्गप्रवृत्तत्वात् । यद्यपि कश्चिद्दोषः स्यात् सोऽप्यल्प एव भविष्यति । सम्यग्दर्शनाप्रतिपत्तिहेतुक इत्यर्थः ॥ ४३ ॥

ननूपलम्भसमाचारयोः प्रमाणत्वादस्त्येव द्वैतं वस्त्विति । नोपलम्भसमाचारयोर्व्यभिचारात् । कथं व्यभिचार इत्युच्यते । उपलभ्यते हि मायाहस्ती हस्तीव हस्तिनमिवात्र समाचरन्ति बन्धनारोहणादिहस्तिसम्बन्धिभिर्धर्मैर्हस्तीति चोच्यते । असन्नपि यथा तथैवोपलम्भात्समाचाराद् द्वैतं भेदरूपमस्ति वस्त्वित्युच्यते । तस्मान्नोपलम्भसमाचारौ द्वैतवस्तुसद्भावे हेतू भवत इत्यभिप्रायः ॥ ४४ ॥

---

गर्भवासादिदोषमभ्यनुजानाति । दोषोऽपीति ॥ अन्वयमादर्शयन् पादत्रयगताक्षराणि योजयति । ये चेत्यादिना ॥ चतुर्थपादं व्याचष्टे । यद्यपीति ॥ कश्चिदिन्द्रानुपपत्तिसूचित इति यावत् ॥ ४३ ॥

यत्तु हेतुभ्यां द्वैतसाधितत्वमुक्तं तद्दूषयति । उपलम्भादिति ॥ श्लोकव्याख्यामाशङ्कामनूद्य दूषयति । नन्वित्यादिना ॥ व्यभिचारस्याभिव्रिमाशङ्क्य परिहरति । कथमित्यादिना ॥ उपलम्भसमाचारौ मायामये हस्तिनि वस्तुत्वाभावेऽपि भवतः । तथा द्वैतेऽपि न तयोरस्ति वस्तुत्वसाधकत्वमित्युपसंहरति । तस्मादिति ॥ ४४ ॥

जात्याभासं चलाभासं वस्त्वाभासं तथैव च ।
अजाचलमवस्तुत्वं विज्ञानं शान्तमद्वयम् ॥ ४५ ॥
एवं न जायते चित्तमेवंधर्म्मा अजाः स्मृताः ।

---

किम्पुनः परमार्थसद्वस्तु यदास्पदा जात्याद्यसद्बुद्धय इत्याह । जाति सज्जातिवदवभासत इति जात्याभासम् । तद्यथा देवदत्तो जायत इति । चलाभासं चलनमिवाभासत इति । यथा स एव देवदत्तो गच्छतीति । वस्त्वाभासं वस्तु द्रव्यं धर्म्मि तद्वदवभासत इति वस्त्वाभासम् । यथा स एव देवदत्तो गौरो दीर्घ इति । जायते देवदत्तः स्पन्दते दीर्घो गौर इत्येवमवभासते । परमार्थतस्त्वजमचलमवस्तुत्वमद्रव्यञ्च । किन्तदेवम्प्रकारं विज्ञानं विज्ञप्तिः । जात्यादिरहितत्वाच्छान्तम् । अत एवाद्वयञ्च तदित्यर्थः ॥ ४५ ॥

एवं यथोक्तेभ्यो हेतुभ्यो न जायते चित्तमेवंधर्म्मा आत्मानोऽजाः स्मृता ब्रह्मविद्भिः । धर्म्मा इति बहुवचनम् ।

---

भूतदर्शनावष्टम्भेन निमित्तस्यानिमित्तत्वमुक्तमेतदन्तश्लोकैर्विप्रपञ्चितम् । सम्प्रति भूतदर्शनमुपसंहरति । जात्याभासमिति ॥ श्लोकाक्षराण्याकाङ्क्षाद्वारा विवृणोति । किं पुनरित्यादिना ॥ गौरत्वदीर्घत्वोक्त्या देवदत्तस्य गुणवत्त्वेन द्रव्यत्वं स्फुटीक्रियते । पूर्व्वार्द्धार्थानुवादेनापरार्द्धं योजयति । जायत इत्यादिना ॥ विशेष्यं प्रश्नपूर्व्वकं विशदयति । किन्तदित्यादिना ॥ ४५ ॥

ब्रह्मणश्चिद्रूपस्याजत्वमुपपादितमुपसंहरति । एवं नेति ॥ चित्प्रतिबिम्बानां जीवानां बिम्बभूतब्रह्मानन्यत्वादजत्वमविशिष्टमित्याह । एवमिति ॥ उक्तब्रह्मात्मैकत्वज्ञानस्य फलमाह । एवमिति ॥ श्लोकाक्षराणि व्याकरोति ।, एवमित्यादिना ॥ कार्य्यकारणाभावस्य दुर्भणत्वादयो य-

एवमेव विजानन्तो न पतन्ति विपर्य्यये ॥ ४६ ॥
ऋजुवक्रादिकाभासमलातस्पन्दितं यथा ।
ग्रहणग्राहकाभासं विज्ञानस्पन्दितन्तथा ॥ ४७ ॥

---

देहे भेदानुविधायित्वाद्द्वयस्यैवोपचारतः । एवमेव यथोक्तं विज्ञानं जात्यादिरहितमद्वयमात्मतत्त्वं विजानन्तस्त्यक्तबाह्यैषणाः पुनर्न पतन्त्यविद्याध्वान्तसागरे । विपर्य्यये तत्र को मोहः कः शोक एकत्वमनुपश्यत इत्यादिमन्त्रवर्णात् ॥ ४६ ॥

यथोक्तं परमार्थदर्शनं प्रपञ्चयिष्यन्नाह । यथा हि लोके ऋजुवक्रादिप्रकाराभासमलातस्पन्दितमुल्काचलनं तथा ग्रहणग्राहकाभासं विषयाभासमित्यर्थः । किन्तद्विज्ञानस्पन्दितम् । स्पन्दितमिव स्पन्दितमविद्यया । न ह्यचलस्य

---

योक्ता द्वैतवर्जितस्यैतन्यं प्राप्नोति यावत् । एवमिति प्रतिबिम्बानां बिम्बमात्रत्वं जीवानामपि प्रतिबिम्बकल्पानां बिम्बभूतब्रह्ममात्रत्वादित्यर्थः । अद्वयस्य बहुवचनभाक्त्वमयुक्तमित्याशङ्क्याह । धर्म्मा इतीति ॥ उत्तरार्द्धं योजयति । एवमेवेति ॥ विज्ञानं विज्ञप्तिरूपं ब्रह्मेत्यर्थः । यथोक्तज्ञाने मुमुक्षूनधिकारिणो व्यपदिशति । त्यक्तेति ॥ उक्तज्ञानवतां संसारसम्बन्धाभावे प्रमाणमाह । तत्रेति ॥ ४६ ॥

विज्ञानमजमचलमेव आत्माभासन्त्वित्युक्तं तदिदानीं दृष्टान्तेन प्रपञ्चयति । ऋजुवक्रादिकेति ॥ अप्रच्युतपूर्व्वस्वरूपस्यासत्य नानाकारावभासो विवर्त्तस्तदत्र विज्ञानस्य स्पन्दितत्वं श्लोकस्य तात्पर्य्यमाह । यथोक्तमिति ॥ तत्र दृष्टान्तभागं व्याचष्टे । यथा हीति ॥ दार्ष्टान्तिकं योजयति । तथेति ॥ किमित्यविद्यामन्तरेण सत्यमेव स्पन्दनं विज्ञानस्य

**अस्पन्दमानमलातमनाभासमजं यथा ।**
**अस्पन्दमानं विज्ञानमनाभासमजं तथा ॥ ४८ ॥**
**अलाते स्पन्दमाने वै नाभासा अन्यतो भुवः ।**

---

विज्ञानस्य स्पन्दनमस्ति । अजाचलमिति ह्युक्तम् ॥ ४७ ॥

अस्पन्दमानं स्पन्दनवर्जितं तदेवालातमृज्वाद्याकारेणाजायमानम् । अनाभासमजं यथा तथाऽविद्यया स्पन्दमानमविद्योपरमे अस्पन्दमानं जात्याद्याकारेणाभासमजमचलम्भविष्यतीत्यर्थः ॥ ४८ ॥

किञ्च तस्मिन्नेवालाते स्पन्दमाने ऋजुवक्राद्याभासा अलातादन्यतः कुतश्चिदागत्यालाते नैव भवन्तीति नान्यतो

---

नेष्यते तत्राह । न हीति ॥ निरवयवस्य विभुनो विज्ञानस्य वस्तुतश्चलनविकल्पस्याविद्यमानमेव स्पन्दनमित्यत्र वाक्योपक्रमानुकूल्यं कथयति । अजेति ॥ ४७ ॥

विज्ञानं भ्रान्तमित्युक्तं दृष्टान्तेन स्पष्टयति । अस्पन्दमानमिति ॥ श्लोकाक्षराणि व्याकरोति । अस्पन्दमानमित्यादिना ॥ तथाविद्यये-त्यत्राऽविद्ययेति छेदः ॥ ४८ ॥

अलातदृष्टान्ते कथं ऋजुवक्रादीनामसत्त्वमित्याशङ्कायां निरूपणा-सहत्वादित्याह । अलात इति ॥ यदा खल्वलातं स्पन्दमानमवतिष्ठते तदा तस्मिन्नन्यतो देशान्तरादागत्याभासा भवन्तीति न शक्यं वक्तुमृजु-वक्राद्याभासानां देशान्तरादागमनस्यानवगमाद्यदा तदैवालातं निस्पन्दं स्पन्दनवर्जितं वर्त्तते तदा ततोऽन्यत्राभासा भवन्तीत्यपि न युक्तं वक्तु-मनुपलम्भाविशेषात् । न चाभासास्तस्मिन्नेवालाते लीयन्ते तदनुपादान-त्वात् । यदि हि स्पन्दननिमित्तमलातमुपादानं तदा निमित्ताभावमा-त्रान्नैमित्तिकाभावादर्थं नाहृजुवक्राद्याकारा स्पन्दनाभावेऽप्यलाते भवेयु-रित्यर्थः । इतश्च दृष्टान्ते दृष्टान्तानामाभासानां मिथ्यात्वमेष्टव्यमित्याह ।

Digitized by Google

नततोऽन्यत्र निस्पन्दान्नालातम्प्र विशन्ति ते ॥४९॥
न निर्गता अलातात्ते द्रव्यत्वाभावयोगतः ।
विज्ञानेऽपि तथैव स्युराभासस्याविशेषतः ॥ ५०॥

---

भुवः । न च तस्मान्निस्पन्दादलातादन्यत्र निर्गताः । न च निस्पन्दमलातमेव प्रविशन्ति ते ॥ ४९ ॥

किञ्च न निर्गता अलातात्ते । आभासा गृहादिव द्रव्यत्वाभावयोगतः । द्रव्यस्य भावो द्रव्यत्वं तदभावो द्रव्यत्वाभावः द्रव्यत्वाभावयोगतो द्रव्यत्वाभवयुक्तेर्वस्तुत्वाभावादित्यर्थः । वस्तुनो हि प्रवेशादि सम्भवति नावस्तुनः ॥ ५० ॥

---

किञ्चेति ॥ हेत्वन्तरमेव सूचयन् पूर्वार्द्धाक्षराणि व्याचष्टे । तस्मिन्नेवेति ॥ आभासानां देशान्तरादागमनस्यानुपलम्भो हेतुः कर्त्तव्यः । अनुपलब्धिमेव हेतूकृत्य तृतीयपादार्थमाह । न चेति ॥ चतुर्थपादार्थमाह । न च निस्पन्दमिति ॥ ४९ ॥

ऋजुवक्राद्याभासानां दृष्टान्ते निर्गमनप्रवेशयोरसम्भवं साधयति । नेत्यादिना ॥ दृष्टान्तनिविष्टाभासवद्दार्ष्टान्तिकेऽपि जन्माद्याभासा मिथ्यैव भवेयुरित्याह । विज्ञानेऽपीति ॥ ऋजुवक्राद्याकारेषु जन्माद्याकारेषु चाभासत्वस्य तुल्यत्वादिति हेतुमाह । आभासस्येति ॥ इतश्च दृष्टान्ते मिथ्यात्वमाभासानामेष्टव्यमित्याह । किञ्चेति ॥ तदेव पूर्वार्द्धयोजनया विशदयति । नेति ॥ ऋजुवक्राद्याभासानां वस्तुतोऽभावेऽपि किमिति प्रवेशाद्यसिद्धिरित्याशङ्क्याह । वस्तुनो हीति ॥ द्वितीयार्द्धं दार्ष्टान्तिकमाचष्टे । विज्ञानेऽपीति ॥ तुल्यत्वं सार्द्धेनोत्तरश्लोकेन साधयति । कथमित्यादिना ॥ ५० ॥

विज्ञाने स्पन्दमाने वै नाभासा अन्यतो भुवः ।
न ततोऽन्यत्रनिस्पन्दान्न विज्ञानं विशन्ति ते॥५१॥
न निर्गता विज्ञानात्ते द्रव्यत्वाभावयोगतः ।
कार्य्यकारणताभावाद्यतोऽचिन्त्याः सदैव ते॥५२॥

---

विज्ञानेऽपि जात्याद्याभासास्तथैव स्युराभासस्याविशेषतस्तुल्यत्वात् । कथं तुल्यत्वमित्याह । अलातेन समानं सर्व्वविज्ञानस्य सदा अचलत्वन्तु विज्ञानस्य विशेषः । जात्याद्याभासा विज्ञानेऽचले किं कृता इत्याह । कार्य्यकारणताभावात् जन्यजनकत्वानुपपत्तेरभावरूपत्वादचिन्त्यास्ते यतः सदैव । यथाऽसत्सु ऋज्वाद्याभासेषु ऋज्वादिबुद्धिर्दृष्टाऽलातमात्रे तथाऽसत्स्वेव जात्यादिषु विज्ञानमात्रे

---

न हि तस्मिन् विज्ञाने यथा कथञ्चिच्चलनवति ततोऽन्यस्मात्कस्माच्चिदागत्य जन्माद्याभासास्तत्र भवितुमर्हन्ति । तथा प्रमाभावात् न च तस्मात् विज्ञानादचलतयावस्थितादन्यत्राभासा भवितुमुत्सहन्ते । प्रतीत्याभासस्य तुल्यत्वान्नापि तदेव विज्ञानं प्रविशन्ति । तस्य केवलस्य तदुपादानत्वानुपगमात् । न च ते विज्ञाने प्रवेष्टुं समर्थास्ततो निर्गन्तुं वा पारयन्ति । तेषामवस्तुत्वादित्यर्थः । कथं तर्हि विज्ञाने प्रथा तेषामित्याशङ्क्य भ्रमैवेत्याह । कार्य्येति ॥ आभासानां विज्ञानस्य च कार्य्यकारणताया दुर्व्वचनत्वादाभासाः सर्व्वदैव निरूपयितुमशक्यत्वान्मायामयाः सन्तो मिथ्यैव भवन्तीत्यर्थः ॥ सार्द्धश्लोकतात्पर्य्यमाह । अलातेनेति ॥ तर्हि सक्रियत्वमपि विज्ञानस्य प्रसज्येतेत्याशङ्क्याह । सदेति ॥ यदि विज्ञानमचलमभीष्टं तर्हि तत्र जात्याद्याभासा हेत्वभावान्न स्युरित्याशङ्क्य भ्रान्तिमात्रेण परिहरति । जात्याद्याभासा इत्यादिना ॥ यतः सदैवा-

द्रव्यं द्रव्यस्य हेतुः स्यादन्यदन्यस्य चैव हि ।
द्रव्यत्वमन्यभावो वा धर्म्माणां नोपपद्यते ॥ ५३ ॥

---

आत्मादिबुद्धिर्यैवेति समुदायार्थः ॥ ५१ ॥ ५२ ॥

अजमेकमात्मतत्त्वमिति स्थितं तत्र यैरपि कार्य्यकारणभावः कल्प्यते तेषां द्रव्यं द्रव्यस्यान्यस्यान्यद्धेतुः कारणं स्यान्न तु तस्यैव तत्। नाप्यद्रव्यं कस्यचित्कारणं स्वतन्त्रं दृष्टं लोके। न च द्रव्यत्वं धर्म्माणामात्मनामुपपद्यतेऽन्यत्वं वा। कुतश्चिन्नाप्यकारणत्वं कार्य्यत्वं वा प्रतिपद्येत। अतोऽद्रव्यत्वादनन्यत्वाच्च न कस्यचित्कार्य्यं कारणं वात्मेत्यर्थः ॥ ५३ ॥

---

चिन्त्या अतो यथैवेति शेषः। सङ्क्षेपतस्तात्पर्य्यमाह। यथेत्यादिना ॥५१॥५२॥

यदुक्तं कार्य्यकारणताभावादिति तदिदानीमुपपादयितुमुपक्रमते। द्रव्यमिति। अवयवद्रव्यमवयविद्रव्यस्योपादानम्। अवयवगुणा अवयविगुणेषु समानजातीयेष्वसमवायिनो दृष्टाः। न चैवमात्मनो द्रव्यत्वं येन समवायित्वम्। न च तद्रूपाणां क्वचिदसमवायित्वं गुणगुणिभावस्यान्यत्वस्य तन्निष्ठं दुर्वचत्वादित्यर्थः। लोकाचारोपि योजयति। अजमित्यादिना॥ अवयवावयविविभागविरहितत्वमजत्वम्। एकत्वं गुणगुणिभावशून्यत्वम्॥ तत्रेत्यात्मतत्त्वं परामृश्यते। तत्र कार्य्यकारणभावं दूषयितुं सामान्यन्यायमाह। तेषामिति॥ अद्रव्यस्यापि रूपादेस्तन्त्वादिद्वारा पटगौरत्वादौ कारणत्वं दृष्टमित्यतो विशिनष्टि। स्वतन्त्रमिति॥ अस्तु तर्हि द्रव्यत्वेनान्यत्वेन वात्मनामपि कार्य्यत्वं नेत्याह। न चेति॥ न हि तत्र गुणवत्त्वेन द्रव्यत्वं निर्गुणत्वाच्चापि समवायित्वेन तथात्मनश्चोत्वावयवत्वप्रसङ्गात्। न च तत्र कुतश्चिदन्यत्वं सर्व्वस्य स्वात्मत्वेनैकरूपत्वप्रतिभानात्। अतो न तत्र कारणत्वं कार्य्यत्वं वा प्रतिपत्तुं शक्यमिति फलितमाह। अत इति ॥ ५३ ॥

एवं न चित्तजा धर्माश्चित्तं वापि न धर्मजम्।
एवं हेतुफलाजातिं प्रविशन्ति मनीषिणः॥५४॥
यावद्धेतुफलावेशस्तावद्धेतुफलोद्भवः।

---

एवं यथोक्तेभ्यो हेतुभ्य आत्मविज्ञानस्वरूपमेव चित्तमिति। न चित्तजा बाह्यधर्मा नापि वा बाह्यधर्मजं चित्तम्। विज्ञानस्वरूपाभासमात्रत्वात्सर्व्वधर्माणाम्। एवं न हेतोः फलं जायते नापि फलाद्धेतुरिति हेतुफलयोरजातिं हेतुफलाजातिं प्रविशन्ति अध्यवस्यन्ति। आत्मनि हेतुफलयोरभावमेव प्रतिपद्यन्ते ब्रह्मविद इत्यर्थः॥ ५४॥

ये पुनर्हेतुफलयोरभिनिविष्टास्तेषां किं स्यादित्युच्यते। धर्माधर्माख्यहेतोरहं कर्त्ता मम धर्माधर्मौ तत्फलं कालान्तरे क्वचित्प्राणिनिकाये जातो भोक्ष्य इति यावद्धे-

---

चिकीर्षितकुम्भसंवेदनसमनन्तरं कुम्भः सम्भवति। सम्भूतश्चासौ कर्म्मतया स्वसंविदं जनयतीति व्यवहारोऽपि नोपपद्यते। कस्य चिदपि विद्वद्दृष्ट्यनुरोधेनानन्यत्वादित्याह। एवमिति॥ यश्च धर्म्मादेः शरीरादेश्च कार्य्यकारणभावो विद्वद्दृष्ट्या पुरस्तान्निरस्तः सोऽप्यनन्यत्वाभावेन सिध्यतीत्याह। एवं हेत्विति॥ तत्र पूर्व्वार्द्धं योजयति। एवमित्यादिना॥ आत्मस्वरूपस्य निर्व्विकारत्वात् द्रव्यत्वमप्रसिद्धत्वमित्यादयो यथोक्ता हेतवः। बाह्या धर्म्मा घटादयो नात्मनः। न च धर्म्मशब्दितानां जीवानां चित्तशब्दितात् परस्मादात्मनो जन्मेति युक्तम्। तेषां प्रतिबिम्बकल्पानां बिम्बभूतब्रह्ममात्रत्वादित्यभिप्रेत्याह। विज्ञानेति॥ उत्तरार्द्धं योजयति। एवं नेति॥ ५४॥

न फलाद्धेतुर्जायते नापि फलं हेतोरिति तत्त्वदृष्ट्योपदिष्टम्। इदानीं हेतुफलान्तरभिनिवेशव्यावृत्त्यर्थं तदभिनिवेशभावाभावयोस्त-

क्षीणे हेतुफलावेशे नास्ति हेतुफलोद्भवः ॥ ५५॥
यावद्धेतुफलावेश संसारस्तावदायतः ।
क्षीणे हेतुफलावेशे संसारं न प्रपद्यते ॥ ५६ ॥

---

तुफलयोरावेशो हेतुफलाग्रह आत्मन्यध्यारोपणं तन्निमित्तमित्यर्थः । तावद्धेतुफलयोरुद्भवो धर्म्माधर्म्मयोस्तत्फलस्य चानुच्छेदेन प्रवृत्तिरित्यर्थः । यदा पुनर्म्मन्त्रौषधिवीर्य्येणेव ग्रहावेशो यथोक्ताद्वैतदर्शनेनाविद्योद्भूत हेतुफलावेशोपनीतो भवति तदा तस्मिन् क्षीणे नास्ति हेतुफलोद्भवः ॥ ५५ ॥

यदि हेतुफलोद्भवस्तदा को दोष इत्युच्यते यावत्सम्यग्दर्शनेन हेतुफलावेशो न निवर्त्ततेऽक्षीणः संसारस्तावदायतो दीर्घो भवतीत्यर्थः । क्षीणे पुनर्हेतुफलावेशे संसारं न प्रपद्यते कारणाभावात् ॥ ५६ ॥

---

दुद्भवानुद्भवौ दर्शयति । यावदिति ॥ श्लोकाक्षराण्याकाङ्क्षाप्रदर्शनपुरःसरं विवृणोति । ये पुनरित्यादिना ॥ ५५ ॥

अभिनिवेशवशवद्धेतुफलोद्भवे किं भवति तदाह । यावदिति ॥ अभिनिवेशनिवृत्त्या तदनुद्भवे वा किं स्यादित्याशङ्क्याह । क्षीणइति ॥ आकाङ्क्षापूर्व्वकं पूर्व्वार्द्धं योजयति । यदीति ॥ उत्तरार्द्धं व्याचष्टे । क्षीणे पुनरिति ॥ ५६ ॥

संवृत्या जायते सर्व्वं शाश्वतं नास्ति तेन वै ।
सद्भावेन ह्यजं सर्व्वमुच्छेदस्तेन नास्ति वै ॥ ५७॥

नन्वजादात्मनोऽन्यन्नास्त्येव तत्कथं हेतुफलयोः संसारस्य चोत्पत्तिविनाशावुच्येते त्वया। शृणु। संवृत्या संवरणं संवृतिरविद्याविषयो लौकिकव्यवहारस्तया संवृत्या जायते सर्व्वं तेनाविद्याविषये शाश्वतं नित्यं नास्ति वै। अत उत्पत्तिविनाशलक्षणः संसार आयत इत्युच्यते। परमार्थसद्भावेन त्वजं सर्व्वमात्मैव यस्मात्। अतो जात्यभावादुच्छेदः तेन नास्ति वै कस्यचिद्धेतुफलादेरित्यर्थः ॥ ५७ ॥

कूटस्थमद्वितीयमात्मतत्त्वमिच्छता कुतो जन्मनाशौ व्यवह्रियेते तत्राह। संवृत्येति॥ अविद्यया सर्व्वस्य जायमानत्वे सत्यविद्याविषये नित्यं नाम नास्त्येवेत्याह। शाश्वतमिति॥ परमार्थतस्तु सर्व्वमजं कूटस्थमास्थीयते तेन कल्पनां विना विनाशो नास्त्येव हेतुफलादेरित्याह। सद्भावेनेति॥ पूर्व्वापरविरोधमाशङ्कते। नन्विति॥ न तावदात्मनो जन्मविनाशौ तस्य कूटस्थत्वान्नापि ततोऽन्यस्य तौ युक्तौ तस्याद्वितीयत्वात्। तथा च हेत्वादेर्वस्तुनो जन्मनाशौ न त्वया वक्तव्याविल्यर्थः॥ उच्यमाने समाधाने मनःसमाधानमर्पयते। शृण्विति॥ तत्र पूर्व्वभागाक्षरार्थं कथयति। संवृत्येत्यादिना। अविद्याविषये नित्यस्य वस्तुनो अभावे फलितमाह। अत इति॥ द्वितीयार्द्धाक्षरार्थमाह। परमार्थेति॥ जात्यभावो जन्मादिविक्रियाभावः तमेवोच्छेदाभावे हेतुं कथयति। तेनेति॥ यथा पुरोवर्त्तिनि भुजगाभावमनुभवन् विवेकी नास्ति भुजङ्गो रज्जुरेषा कथं वृथैव बिभेषीति भ्रान्तमभिदधाति। भ्रान्तस्तु स्वकीयादपराधादेव भुजङ्गं परिकल्प्य भीतः सन् पलायते न च तत्र विवेकिनो वचनं मूढदृष्ट्या विरुध्यते। यथा परमार्थकूटस्थात्मदर्शनं व्यावहारिकजन्मादिवचनेनाविरुद्धमिति भावः॥ ५७॥

धर्म्मा य इति जायन्ते जायन्ते ते न तत्त्वतः ।
जन्ममायोपमन्तेषां सा च माया न विद्यते ॥ ५८
यथा मायामयाद्बीजाज्जायते तन्मयोऽङ्कुरः ।
नासौ नित्यो न चोच्छेदी तद्वद्धर्म्मेषु योजना ॥ ५९

---

येऽप्यात्मानोऽन्ये च धर्म्मा जायन्त इति कल्प्यन्ते त इत्येवंप्रकारा यथोक्ता संवृतिर्निर्द्दिश्यत इति । संवृत्यैव धर्म्मा जायन्ते न ते तत्त्वतः परमार्थतो जायन्ते । यत्पुनस्तत् संवृत्या जन्म तेषां धर्म्माणां यथोक्तानाम् । यथा मायया जन्म तथा तन्मायोपमं प्रत्येतव्यम् । माया नाम वस्तु तर्हि नैवं सा च माया न विद्यते मायेत्यविद्यमानस्याख्येत्यभिप्रायः ॥ ५८ ॥

कथं मायोपमन्तेषां धर्म्माणां जन्मेत्याह । यथा मायामयादाम्रादिबीजाज्जायते तन्मयो मायामयोऽङ्कुरो नासावङ्कुरो नित्यो न चोच्छेदी विनाशी वा । अभूतत्वादेव

---

संवृत्या जायते सर्व्वमित्युक्तं तदिदानीं प्रपञ्चयति । धर्म्मा इति ॥ तत्राद्यं पादं विभजते । येऽपीति ॥ प्रसिद्धावद्योतकत्वमितिशब्दस्य दर्शयति । त इत्येवंप्रकारा इति ॥ एवं प्रकारत्वमेव स्फोरयति । यथोक्तेति ॥ अनन्तरप्रकृता संवृतिरितिशब्देनोक्ता । तथा च संवृत्यैव ते धर्म्मा जायन्ते न तु तेषां तत्त्वतो जन्मास्तीत्यर्थः । न ते तत्त्वत इत्युक्तं प्रपञ्चयति । परमार्थ इति ॥ संवृत्यापि जन्म पारमार्थिकमेवेत्याशङ्क्य तृतीयपादं योजयति । यत्पुनरिति ॥ प्रत्येतव्यं जन्मेति शेषः । चतुर्थपादार्थमाकाङ्क्षाद्वारा स्फोरयति । मायेत्यादिना ॥ ५८ ॥

जन्म मायोपमं तेषामित्युक्तं तदपि दृष्टान्तावष्टम्भेन साधयति ।

नाजेषु सर्व्वधर्म्मेषु शाश्वताशाश्वताभिधा ।
यत्र वर्णा न वर्त्तन्ते विवेकस्तत्र नोच्यते ॥ ६० ॥
यथा स्वप्ने द्वयाभासं चित्तं चलति मायया ।
तथा जाग्रद्द्वयाभासं चित्तं चलति मायया॥६१॥

---

धर्म्मेषु जन्मनाशादियोजनायुक्तिः । न तु परमार्थतो धर्म्माणां जन्म नाशो वा युज्यत इत्यर्थः ॥ ५९ ॥

परमार्थतस्त्वात्मस्वजेषु नित्यैकरसविज्ञप्तिमात्रसत्ताकेषु शाश्वतोऽशाश्वत इति वा नाभिधा नाभिधानं प्रवर्त्तत इत्यर्थः । यत्र येषु वर्ण्यन्ते यैरर्थास्ते वर्णाः शब्दा न प्रवर्त्तन्तेऽभिधातुं प्रकाशयितुं न प्रवर्त्तन्त इत्यर्थः । इदमेवमिति विवेको विवेक्तृता तत्र नित्योऽनित्य इति नोच्यते । यतो वाचो निवर्त्तन्त इति श्रुतेः ॥ ६० ॥

यत्तु शब्दागोचरत्वं परमार्थतोऽद्वयस्य विज्ञानमात्रस्य

---

यथेत्यादिना ॥ श्लोकाक्षराशयाकाङ्क्षां दर्शयन् योजयति । कथमित्यादिना ॥ ५९ ॥

यदुक्तं सद्भावेन ह्यजं सर्व्वमिति तत्प्रपञ्चयति । नाजेष्विति ॥ आत्मनि नित्यानित्यकथा नावतरतीत्यत्र हेतुमाह । यत्रेति ॥ श्लोकस्य पूर्व्वार्द्धं व्याचष्टे । परमार्थतस्त्विति ॥ द्वितीयार्द्धं व्याकरोति । यत्रेत्यादिना ॥ तत्रेति प्रकृतेषु धर्म्मेष्विति यावत् । आत्मनि नित्यानित्यकथाभावे शब्दागोचरत्वं हेतुस्तत्र प्रमाणमाह । यत इति ॥ ६० ॥

आत्मनः शब्दागोचरत्वे कथमसौ व्याख्यातृभिः शब्दैरेव प्रतिपाद्यतामावरतीत्याशङ्क्य चित्तस्पन्दनमात्रमविचारसुन्दरं प्रतिपाद्यप्रतिपादकरूपं द्वैतमिति सदृष्टान्तमाह । यथेति । स्वप्ने प्रतिपाद्यप्रति-

अद्वयञ्च द्वयाभासं चित्तं स्वप्ने न संशयः ।
अद्वयञ्च द्वयाभासं तथा जाग्रन्न संशयः ॥६२॥
स्वप्नदृक् प्रचरन् स्वप्ने दिक्षु वै दशसु स्थितान् ।
अण्डजान् स्वेदजान् वापि जीवान् पश्यति
[यान् सदा ॥ ६३ ॥

---

तस्मान्मनःस्पन्दनमात्रं न परमार्थत इत्युक्तार्थौ श्लोकौ ॥ ६१ ॥ ६२ ॥

इतश्च वाग्गोचरस्याभावो द्वैतस्य स्वप्नान् पश्यतीति स्वप्नदृक् प्रचरन् पर्य्यटन् स्वप्ने स्वप्नस्थाने दिक्षु वै दशसु स्थितान् वर्त्तमानान् जीवान् प्राणिनोऽण्डजान् स्वेदजान् वा यान् सदा पश्यतीति । यद्येवं ततः किमुच्यते ॥ ६३ ॥

---

पादकद्वैतस्य चित्तस्पन्दितमात्रत्वेऽपि जागरिते कथं तथा स्यादित्याशङ्क्याह । अद्वयञ्चेति ॥ पौनरुक्त्यं श्लोकयोराशङ्क्य पक्षान्तरनिरासार्थत्वान्मैवमिति मन्वानः सन्नाह । यत्पुनरिति ॥ ६१ ॥ ६२ ॥

वाचो गोचरीभूतस्य द्वैतस्यासत्त्वे हेत्वन्तरमाचक्षाणो दृष्टान्तमाचष्टे । स्वप्नदृगिति ॥ यान् पश्यति ते न विद्यन्ते पृथगित्युत्तरत्र सम्बन्धः ॥ श्लोकस्य तात्पर्यमाह । इतश्चेति ॥ इतःशब्दार्थमेव स्फुटयन्नक्षराणि व्याचष्टे । स्वप्नानिति ॥ न ते विद्यन्त इति पूर्ववदन्वयः । स्वप्नदृशो विषयभूतानां भेदानां तत्र दृश्यमानत्वेऽपि द्वैतभेदमिथ्यात्वे किमायातमिति पृच्छति । यदीति ॥ उत्तरश्लोकेनोत्तरमाह । उच्यत इति ॥ ६३ ॥

स्वप्नदृक् चित्तदृश्यास्ते न विद्यन्ते ततः पृथक्।
तथा तद्दृश्यमेवेदं स्वप्नदृक् चित्तमिष्यते ॥ ६४ ॥
चरन् जागरिते जाग्रद्दिक्षु वै दशसु स्थितान्।
अण्डजान् स्वेदजान् वापि जीवान् पश्यति
[यान् सदा ॥ ६५ ॥
जाग्रच्चित्तेक्षणीयास्ते न विद्यन्ते ततः पृथक्।

---

स्वप्नदृश्चित्तं स्वप्नदृक्चित्तं तेन दृश्यास्ते जीवाः ततस्तस्मात्स्वप्नदृक्चित्तात्पृथक् न विद्यन्ते न सन्तीत्यर्थः। चित्तमेव तर्हि न जीवादिभेदाकारेण विकल्प्यते। तथा तदपि स्वप्नदृक्चित्तमिदं तद्दृश्यमेव तेन स्वप्नदृशा दृश्यन्तद्दृश्यम्। अतः स्वप्नदृग्व्यतिरेकेण चित्तं नाम नास्तीत्यर्थः ॥ ६४ ॥

जाग्रतो दृश्या जीवास्तच्चित्ताव्यतिरिक्ताश्चित्तेक्षणीयत्वात् स्वप्नदृक्चित्तेक्षणीयजीववत्। तच्च जीवेक्षणात्मकं

---

श्लोकाक्षराणि योजयन् कर्मधारयं व्यावर्त्तयति। स्वप्नेति॥ जीवादिभेदानां स्वप्ने दृश्यमानानामुक्तानां चित्तात्पृथगसत्त्वं साधयति। चित्तमेवेति॥ तर्हि द्रष्टा चित्तश्चेति द्वयं स्वप्ने स्वीकृतं नेत्याह। तथेति॥ तच्छब्दस्य चित्तविषयत्वं व्यवर्त्तयति। तेनेति॥ स्वप्नावस्थस्य चित्तस्य स्वप्नदृग्विषयत्वे फलितमाह। अत इति॥ ६४॥

दृष्टान्तनिविष्टमर्थं दार्ष्टान्तिके योजयति। चरन्नित्यादिना॥ जाग्रदवस्थो हि पुरुषो यान् जीवान् पश्यतीत्यत्र जीवशब्देन कार्यकारणसङ्घाता गृह्यन्ते चेतनानां दृश्यत्वाभावादिति द्रष्टव्यम्॥ श्लोकद्वये विवक्षितमनुमानद्वयमारचयति। जाग्रत इति॥ अक्षरव्याख्यानन्त

तथा तद्दृश्यमेवेदं जाग्रतश्चित्तमिष्यते ॥ ६६ ॥
उभे ह्यन्योन्यदृश्ये ते किन्तदस्तीति चोच्यते ।

---

चित्तं द्रष्टुरव्यतिरिक्तं द्रष्टृ दृश्यत्वात्स्वप्नचित्तवत् । उक्तार्थमन्यत् ॥ ६५ ॥ ६६ ॥

जीवचित्ते उभे चित्तचैत्ये ते अन्योन्यदृश्ये इतरेतरगम्ये । जीवादिविषयापेक्षं हि चित्तं नाम भवति । चित्तापेक्षं हि जीवादि दृश्यम् । अतस्तेऽन्योन्यदृश्ये । तस्मान्न किञ्चिदस्तीति चोच्यते चित्तं वा चित्तेक्षणीयं वा । किन्तदस्तीति विवेकिनोच्यते । न हि स्वप्ने हस्ती हस्तिचित्तं वा विद्यते तथेहापि विवेकिनामित्यभिप्रायः । कथं लक्षणा-

---

दृष्टान्तव्याख्यानेनैव स्पष्टत्वान्न पृथगपेक्षितमिति विवक्षित्वाह । उक्तार्थमिति ॥ ६५ ॥ ६६ ॥

दृश्यदर्शनव्यतिरेकग्राहकप्रमाणप्रतिहतं हेतुद्वयमित्याशङ्क्याह । उभे हीति ॥ दृश्यदर्शने परस्परापेक्षसिद्धिके दृश्ये सिद्धे तदवच्छिन्नं दर्शनं सिद्ध्यति तस्य च सिद्धौ तदवच्छिन्नं दृश्यं सिद्ध्यतीत्यन्योन्याश्रयान्न दृश्यं दर्शनं वा सिध्यतीत्यतो विभागाऽवगाहिप्रमाणाभावान्न तद्बाधो हेतुद्वयस्येत्यर्थः । किञ्च सम्भावनायां प्रमाणप्रवृत्तिर्वक्तव्या । न दृश्यदर्शनयोरन्यतरस्यापि नैरपेक्ष्येण सम्भावना भवति अन्योन्याश्रयदोषात् । तथा च परस्परपुरस्कारेण विद्येत यदुभयं कल्पितमेव स्यादिति मत्वाह । किन्तदिति ॥ तद्दृश्यं दर्शनं वा किमस्तीति पृष्टे विवेकिना नास्तीत्येवोच्यते प्रागुक्तदोषादित्यर्थः । किञ्च प्रामाणिकस्यैव प्रामाणिको भेदः सम्भवति । न च दृश्यदर्शनयोः स्वरूपे प्रमाणमस्तीत्याह । लक्षणेति ॥ कथं तर्हि प्रमाणप्रमेयविभागो वादिभिर्गृह्यते तद्भ्रान्तता-दोषेणेत्याह । तन्मतेनेति ॥ तत्र प्रथमं पादं विभजते । जीवेति । ते जीवचित्ते इति सम्बन्धः । अन्योन्यदृश्यत्वमितरेतरग्राह्यत्वं तदेव

लक्षणाशून्यमुभयं तन्मते नैव गृह्यते ॥ ६७ ॥
यथा स्वप्नमयो जीवो जायते म्रियतेऽपि च ।
तथा जीवा अमी सर्वे भवन्ति न भवन्ति च ॥६८॥

---

शून्यं लक्ष्यतेऽनयेति लक्षणा प्रमाणं प्रमाणशून्यमुभयं चित्तं चैत्यं द्वयं यतः तन्मते नैव तच्चित्ततयैव तत् गृह्यते । न हि घटमतिं प्रत्याख्याय घटो गृह्यते नापि घटं प्रत्याख्याय घटमतिः । न हि तत्र प्रमाणप्रमेयभेदः शक्यते कल्पयितुमित्यभिप्रायः ॥ ६७ ॥

मायामयो मायाविना यः कृतः निर्म्मितको मन्त्रौषध्यादिभिर्निष्पादितः । स्वप्नमायानिर्म्मितका अण्डजादयो

---

स्पष्टयति । जीवादिति ॥ द्वितीयपादं व्याचष्टे । तस्मादिति ॥ तदेव स्फुटयति । चित्तं वेति ॥ किन्तदस्तीति पृष्टे सति न किञ्चिदस्तीत्युच्यते विवेकिनेति योजना ॥ उक्तमेवार्थं दृष्टान्तेन विवृणोति । न हीति ॥ इहेति जागरितोक्तिः ॥ द्वितीयार्द्धं व्याचिख्यासुस्तया पृच्छति । कथमिति ॥ तदेवावतार्य्य व्याकरोति । लक्ष्यतेत्यादिना ॥ यतस्ततो न तद्भेदस्य प्रामाणिकत्वमिति शेषः । कथं तर्हि लौकिकानां परीक्षकाणाञ्च प्रमाणप्रमेयविभागप्रवृत्तिरित्याशङ्क्य चतुर्थपादार्थमाह । तन्मतेनेति ॥ तदेव प्रपञ्चयति । न हीति ॥ घटे किं प्रमाणमित्युक्ते ज्ञानमित्युत्तरमतिप्रसङ्गान्नापि घटज्ञानमन्योन्याश्रयप्रसङ्गादतो न घटतज्ज्ञानयोर्मानमेयभावः सम्भवतीत्यर्थः ॥ ६७ ॥

दृश्यमानानामण्डजादीनां दर्शनातिरिक्तानामसत्त्वानुमानस्य भेदग्राहकप्रमाणबाधं परिहृत्य दर्शनातिरेकेण तेषामसत्त्वे जन्मादिप्रत्यक्षबाधः स्यादित्याशङ्क्य परिहरति । यथेत्यादिना ॥ मायामयस्य निर्म्मितकस्य च जीवस्य विशेषं बुभुत्समानं प्रत्याह । मायेति ॥ संविदतिरेकेणाण्डजादीनां परमार्थतः सत्त्वाभावानुमानस्य न जन्मादिप्रतिभा-

यथा मायामयो जीवो जायते म्रियतेऽपि च ।
तथा जीवा अमी सर्वे भवन्ति न भवन्ति च ॥६९॥
यथा निर्म्मितको जीवो जायते म्रियतेऽपि वा ।
तथा जीवा अमी सर्वे भवन्ति न भवन्ति च॥७०॥
न कश्चिज्जायते जीवः सम्भवोऽस्य न विद्यते ।
एतत्तदुत्तमं सत्यं यत्र किञ्चिन्न जायते ॥ ७१ ॥
चित्तस्पन्दितमेवेदं ग्राह्यग्राहकवद्द्वयम् ।

---

जीवा यथा जायन्ते म्रियन्ते च तथा मनुष्यादिलक्षणा अविद्यमाना एव चित्तविकल्पनामात्रा इत्यर्थः ॥ ६८ ॥ ॥ ६९ ॥ ७० ॥

व्यवहारसत्यविषयजीवानां जन्ममरणादिः स्वप्नादिजीववदित्युक्तं उत्तमन्तु परमार्थसत्यं न कश्चिज्जायते जीव इति । उक्तार्थमन्यत् ॥ ७१ ॥

सर्व्वं ग्राह्यग्राहकवत् चित्तस्पन्दितमेव द्वयं चित्तं परमार्थत आत्मैवेति निर्व्विषयत्वेन निर्व्विषयत्वेन नित्यम-

---

सबाधः । सत्त्वाभावेऽपि स्वप्नादिषु जन्मादिविकल्पवाहुल्योपलम्भादिति श्लोकत्रयस्य तात्पर्य्यमाह । स्वप्नेत्यादिना ॥ ६८ ॥ ६९ ॥ ७० ॥

यस्तु जन्मादिसत्यमिति मन्यते तं प्रति प्रागुक्तं स्मारयति । न कश्चिदिति ॥ वृत्तानुवादपूर्व्वकं श्लोकतात्पर्य्यमाह । व्यवहारेति । अक्षराणि न व्याख्येयानि व्याख्यातत्वादित्याह । उक्तार्थमिति ॥ ७१ ॥

संवेदनस्य कल्पितद्वयोपहितरूपेण द्वयत्वात् द्रष्टव्यतिरेकेण सत्त्वमिति स्वप्नदृष्टान्तेनोक्तमिदानीं तत्त्वतः संवेदनस्य विषयसम्बन्धाभावा-

चित्तं निर्विषयं नित्यमसङ्गन्तेन कीर्त्तितम् ॥७२॥
योऽस्ति कल्पितसंवृत्या परमार्थेन नास्त्यसौ ।

---

सङ्गं कीर्त्तितम् । असङ्गो ह्ययं पुरुष इति श्रुतेः । सविषयस्य हि विषये सङ्गः । निर्विषयत्वाच्चित्तमसङ्ग इत्यर्थः ॥ ७२ ॥

नतु निर्व्विषयत्वेन चेदसङ्गत्वं चित्तस्य न निःसङ्गता भवति यस्माच्छास्ता शास्त्रं शिष्यश्चेत्येवमादिभिर्व्विषयस्य विद्यमानत्वात् । नैष दोषः । कस्मात् । यः पदार्थः शास्त्रादिर्विद्यते स कल्पितसंवृत्या । कल्पिता च या परमार्थप्रतिपत्त्युपायत्वेन संवृतिश्च सा तयाऽस्ति परमार्थेन नास्त्यसौ न

---

दात्मैव संवेदनमित्याह । चित्तेति ॥ अक्षरार्थं कथयति । सर्व्वमित्यादिना ॥ निर्व्विषयत्वेनासङ्गत्वे सिद्धे श्रुतिमपि संवादयति ॥ असङ्गो हीति ॥ श्रुतियुक्तिसिद्धमसङ्गत्वं साधयति । सविषयस्येति ॥ ७२ ॥

निर्व्विषयत्वेन चित्तस्यासङ्गत्वमसङ्गतं तदसङ्गतं शास्त्रादेर्व्विषयस्य सत्त्वादित्याशङ्क्याह । योऽस्तीति ॥ ननु परमार्थतो वैशेषिकाः षट्पदार्थान् द्रव्यादिसमवायान्तानातिष्ठन्ते तथा च चित्तस्य कथमसङ्गत्वं तत्राह । अपरेति ॥ वैशेषिकपारिभाषिकव्यवहारानुरोधेन पदार्थो यो द्रव्यादिः समवायान्तः स्यात् न परमार्थतोऽस्ति किन्तु संवृत्या प्रतिभाति तस्मादविरुद्धमसङ्गत्वमित्यर्थः ॥ व्यावर्त्त्यशङ्कामुत्थापयति । नन्विति ॥ तत्र यस्मादिति सामान्येनोक्तं हेतुं विशेषतो व्यनक्ति । शास्तेति । आदिशब्देन प्रमाता प्रमाणं प्रमेयमित्यादि गृह्यते ॥ असङ्गत्वाक्षेपं परिहरति । नैष दोष इति ॥ तत्र निर्व्विषयत्वहेतुं प्रश्नपूर्व्वकं पूर्व्वार्द्धयोजनया साधयति । कस्मादित्यादिना ॥ परमार्थतो द्वैतस्याऽसत्त्वे वाक्योपक्रममनुगुणमादर्शयति । शात इति ॥ द्वितीयार्द्धं योजयति । यथेति ॥ नहि द्रव्यस्य लक्षणं गन्धादिपञ्चकस्य च तयो

परतन्त्राभिसंवृत्या स्यान्नास्ति परमार्थतः ॥७३॥
अजः कल्पितसंवृत्या परमार्थेन नाप्यजः ।

---

विद्यते । ज्ञाते द्वैतं न विद्यत इत्युक्तम् । यश्च परतन्त्राभिसंवृत्या परशास्त्रव्यवहारेण स्यात् पदार्थः स परमार्थतो निरूप्यमाणो नास्त्येव । तेन युक्तमुक्तमसङ्गं तेन कीर्तितमिति ॥ ७३ ॥

ननु शास्त्रादीनां संवृतित्वे अज इतीयमपि कल्पना संवृतिः स्यात् । सत्यमेवं शास्त्रादिकल्पितसंवृत्यैवाज इत्युच्यते । परमार्थेन नाप्यजः । यस्मात् परतन्त्राभिनिष्पन्ना

---

व्यावर्त्तकप्रातिस्विकलक्षणप्रतिपत्तिमन्तरेण प्रकल्प्यते । तथा च तत्तल्लक्षणतत्प्रतिपत्तौ तदितरप्रतिपत्तिः । तत्प्रतिपत्तौ च तल्लक्षणतत्ज्ञानप्रतिपत्तिरिति परस्पराश्रयान्न किञ्चिदपि वस्तुतः सिद्धेदित्यर्थः । वस्तुतो निर्विषयस्यैव सिद्धत्वादसङ्गत्वश्रुतस्य प्रागुक्तं सङ्गतमेवेत्युपसंहरति । तेनेति ॥ ७३ ॥

शास्त्रादिभेदकल्पनायाः संवृतिसिद्धत्वे तदधीनात्मन्यजत्वकल्पनापि संवृतिसिद्धैव स्यादित्याशङ्क्याङ्गीकरोति । अज इति ॥ कल्पितमात्मन्यजत्वमित्यत्र हेतुमाह । परतन्त्रेति ॥ परिणामवादप्रसिद्धजन्मना भ्रान्त्यैवात्मा जायते जन्मनश्च विभ्रमत्वे तन्निषेधस्याजत्वस्यापि तथात्वं युक्तमित्यर्थः ॥ श्लोकव्यावर्त्यामाशङ्कामाह । नन्विति ॥ शास्त्रादिभेदस्य कल्पितत्वे तत्प्रयुक्तमात्मन्यजत्वमपि कल्पितं स्यादित्यर्थः ॥ किमजोऽयमात्मेति व्यवहारस्य कल्पितत्वं किंवा तदुपलक्षितस्य रूपस्येति विकल्प्याद्यमङ्गीकरोति । सत्यमिति ॥ अजोऽयमित्यभिधानस्य संवृतिप्रयुक्तत्वात्तद्व्यवहारस्य कल्पितत्वमिष्टमित्यर्थः ॥ कैवल्यावस्थायामजोऽयमित्यभिधानाभावमभ्युपेत्य व्यावर्त्यं दर्शयति । परमार्थेनेति ॥ आत्मन्यजत्व-

परतन्त्रोऽभिनिष्पत्त्या संवृत्या जायते तु सः ॥७४॥
अभूताभिनिवेशोऽस्ति द्वयं तत्र न विद्यते ।
द्वयाभावं स बुद्ध्वैव निर्निमित्तो न जायते ॥७५॥

---

परशास्त्रसिद्धिमपेक्ष्य योऽज इत्युक्तः स संवृत्या जायते । अतोऽज इतीयमपि कल्पना परमार्थविषयेनैव क्रमत इत्यर्थः ॥ ७४ ॥

यस्मादसद्विषयस्तस्मादसत्यभूते द्वैतेऽभिनिवेशोऽस्ति केवलमभिनिवेश आग्रहमात्रं द्वयं तत्र न विद्यते । मिथ्याऽभिनिवेशमात्रस्य जन्मनः कारणं यस्मात्तस्माद्द्वयाभावं बुद्ध्वा निर्निमित्तो निवृत्तमिथ्याद्वयाभिनिवेशो यः स न जायते ॥ ७५ ॥

---

व्यवहारस्य कल्पितत्वे द्वितीयार्धव्याख्यानेन हेतुमाह । यस्मादिति ॥ परेषां परिणामवादिनां शास्त्रे या परिणामप्रसिद्धिस्तामपेक्ष्य तन्निषेधेन योऽज इत्यात्मोक्तः स संवृत्यैव यतो जायते अतश्च प्रतियोगिनो जन्मनः संवृतिसिद्धत्वात्तन्निषेधरूपमजत्वमपि तादृगेवेत्यर्थः । अजत्वादिव्यवहारोपलक्षितस्वरूपस्याकल्पितत्वम् । तस्य कल्पनाधिष्ठानत्वात् । न च कल्पितस्य शास्त्रादेरकल्पितेन प्रमितिहेतुत्वं प्रति विवादे बिम्बादिप्रमितिहेतुत्वस्य सम्प्रतिपन्नत्वादिति द्रष्टव्यम् ॥ ७४ ॥

ननु ज्ञानस्य कल्पितशास्त्रादिजन्यत्वे मिथ्यात्वान्नापुनरावृत्तिफलसाधनत्वं तत्राह । अभूतेति ॥ यदि द्वितीयः संसारः सत्यः स्यात् तदा तन्निवृत्त्यर्थं साधनमपि वस्तुभूतमभिधीयते मिथ्याभिनिवेशमात्रस्य तु मिथ्योपायजन्येनापि ज्ञानेन वस्तुनिष्ठेन निवृत्तिः सिध्यतीति श्लोकार्थं कथयति । यस्मादित्यादिना ॥ ७५ ॥

**यदा न लभते हेतूनुत्तमाधममध्यमान्।**
**तदा न जायते चित्तं हेत्वभावे फलं कुतः ॥७६॥**

---

जात्याश्रमविहिता आशीर्वर्जितैरनुष्ठीयमानाद् धर्मा देवत्वादिप्राप्तिहेतव उत्तमाः केवलाश्च। धर्माधर्मव्यामिश्रा मनुष्यत्वादिप्राप्त्यर्था मध्यमाः। तिर्य्यगादिप्राप्तिनिमित्ता अधर्मलक्षणाः प्रवृत्तिविशेषाश्चाधमाः। तानुत्तममध्यमाधमानविद्यापरिकल्पितान् यदा एकमेवाद्वितीयमात्मतत्त्वं सर्व्वकल्पनावर्जितं जानन्न लभते न पश्यति यथा बालैर्दृश्यमानं गगने मलं विवेकी न पश्यति तद्वत्तदा न जायते नोत्पद्यते चित्तं देवाद्याकारैरुत्तमाधममध्यमफलरूपेण। न ह्यसति हेतौ फलमुत्पद्यते बीजाद्यभाव इव सस्यादिः॥ ७६ ॥

---

निर्निमित्तो न जायत इत्युक्तं तदेतत् प्रपञ्चयति। यदेति॥ उत्तमान् हेतून् विभजते। जातीति॥ आशीर्व्वर्जितैः फलतृष्णारहितैरधिकारिभिरिति यावत्। देवत्वादित्यादिशब्देनोत्कृष्टं जन्मरुच्यते। केवलत्वेन धर्म्मणां प्राधान्यम्। मनुष्यत्वादीत्यादिशब्देन मध्यमयोनयो गृह्यन्ते। तिर्य्यगादीत्यादिशब्देनाधमजन्म संगृह्यते॥ वाक्यीयज्ञाना-दज्ञाननिवृत्तौ तत्सिद्धयर्थं विधिनष्टि। आदिशेति॥ अविदुषां प्रतीयमाना हेतवो विदुषां न प्रतिभान्तीत्येतत् दृष्टान्तेन स्फुटयति। यथेति॥ उक्तेऽर्थे हेतुत्वेन चतुर्थपादं व्याचष्टे। न हीति॥ ७६॥

**अनिमित्तस्य चित्तस्य यानुत्पत्तिः समाऽद्वया ।**
**अजातस्यैव सर्वस्य चित्तदृश्यं हि तद्यतः ॥७७॥**

---

हेत्वभावे चित्तं नोत्पद्यत इति ह्युक्तम्। सा पुनरनुत्पत्तिश्चित्तस्य कीदृशीति। उच्यते। परमार्थदर्शनेन निरस्तधर्म्माधर्म्माख्योत्पत्तिनिमित्तस्यानिमित्तस्य चित्तस्येति या मोक्षाख्याऽनुत्पत्तिः सा सर्व्वदा सर्व्वावस्थासु समा निर्व्विशेषाऽद्वया च। पूर्व्वमप्यजातस्यैवाऽनुत्पन्नस्य चित्तस्य सर्व्वस्याद्वयस्येत्यर्थः। यस्मात्प्रागपि विज्ञानाच्चित्तदृश्यं तत द्वयं जन्म च तस्मादजातस्य सर्व्वस्य सर्व्वदा चित्तस्य समाऽद्वयैवाऽनुत्पत्तिर्न पुनः कदाचिद्भवति कदाचिद्वा न भवति सर्व्वदैकरूपैवेत्यर्थः ॥ ७७ ॥

---

तदा न जायते चित्तमिति कालपरिच्छेदप्रतीतेरागन्तुकत्वमाशङ्क्य परिहरति। अनिमित्तस्येति॥ चित्तस्य हि निमित्तवर्जितस्य नित्यसिद्धस्य या सर्व्वदाऽनुत्पत्तिः। सा निर्व्विशेषा द्वितीया चेत्यत्र हेतुमाह। अजातस्येति॥ सर्व्वस्य द्वैतस्य चित्तदृश्यत्वेन मिथ्यात्वान्नित्यसिद्धस्य परिपूर्णस्य चित्तात्मनः स्फुरणस्य जन्मायोगात्तदनुत्पत्तिरुक्तलक्षणा युक्तेत्यर्थः। उक्तमनूद्याकाङ्क्षापूर्व्वकं श्लोकमवतार्य्य व्याकरोति। हेत्वभाव इत्यादिना॥ यथा रज्ज्वकल्पनाकालेऽपि रज्जोरकल्पितत्वं स्वाभाविकं तथा जन्मकल्पनाकालेऽपि संविदो निर्व्विशेषाद्वितीयप्रज्ञता स्वाभाविकी॥ जन्मभ्रमनिवृत्त्यपेक्षया तु तदा न जायत इत्युक्तमित्याह। सर्व्वदेति॥ न केवलं मोक्षावस्थस्यैव चैतन्यस्याजत्वं किन्तु घटाद्युपरक्तस्यापीत्यभिप्रेत्याह। सर्व्वावस्थास्विति॥ सर्व्वस्यैव चित्तप्रतिबिम्बस्य बिम्बकल्पब्रह्मरूपत्वादिति हेतुमभिप्रेत्याह। अद्वया चेति॥ तृतीयपादार्थं कथयति॥ पूर्व्वमपीति॥ तत्र हेतुमाह। यस्मादिति तस्माद्रज्जुसर्पवत् द्वैतस्य जन्मनश्च दृश्यत्वाद्वस्तुतोऽसत्त्वादिति यावत् ॥७७॥

बुद्ध्वा ऽनिमित्ततां सत्यां हेतुं पृथगनाप्नुवन् ।
वीतशोकं तथा काममभयं पदमश्नुते ॥७८॥
अभूताभिनिवेशाद्धि सदृशे तत्प्रवर्त्तते ।

---

यथोक्तेन न्यायेन जन्मनिमित्तस्य द्वयाभावादनिमित्ततां च सत्यां परमार्थरूपां बुद्ध्वा हेतुं धर्मादिकारणं देवादियोनिप्राप्तये पृथगनाप्नुवन्ननुपाददानस्त्यक्तबाह्यैषणः सन् कामशोकादिवर्जितमविद्यादिरहितमभयम्पदमश्नुते पुनर्न जायत इत्यर्थः ॥ ७८ ॥

यस्मादभूताभिनिवेशादसति द्वयेऽद्वयाभिनिवेशोऽभूताभिनिवेशस्तस्मादविद्याव्यामोहरूपाद्धि सदृशे तद-

---

द्वयाभावं च बुद्ध्वैव निर्निमित्तो न जायत इत्युक्तं तदिदानीं प्रपञ्चयति । बुद्ध्वेति ॥ द्वैताभावोपलक्षितां सत्तामनाद्यनन्तां परमार्थभूतां प्रतिपद्य देवादियोनिप्राप्तौ धर्मादिहेतुमसाधारण्येनाऽननुतिष्ठन् यदा विद्वानवतिष्ठते तदा सर्वसंसारकारणरहितं पदमश्नुवानो न पुनः शरीरं गृह्णातीत्यर्थः शोकं व्याचष्टे । यथोक्तेति ॥ द्रष्टृत्वादिना हेतुना द्वैतस्य रज्जुसर्पादिवदेव कल्पितत्वं यथोक्तन्यायेन चैतन्यस्य जन्मनि यत् द्वयं निमित्तं तस्याभावस्तामभावोपलक्षितां सत्तां निमित्ताभावादेवानाद्यनन्तां तस्मादेव सत्यां बुद्ध्वेति योजना । पृथगिति देवतादिप्रकृष्टजन्मप्राप्तये धर्मं मनुष्यत्वप्राप्तये धर्माधर्मौ तिर्यगाद्यधमयोनिप्राप्तये चाधर्ममसाधारण्येनाननुतिष्ठन्निति यावत् ॥ प्रकृतस्य ज्ञानवतो धर्माद्यनुष्ठानायोगे हेतुं सूचयति । त्यक्तेति ॥ कार्यभूतसर्वानर्थराहित्यमुक्त्वा पुनरभयमित्यस्यार्थमाह । अविद्येति ॥ ७८ ॥

यथोक्तपदप्राप्तिः सदास्तीत्याशङ्क्याह । अभूतेति ॥ व्यभिचारित्वादिहेतुरद्वयात्मदर्शनेन वा साध्यसाधनात्मनो द्वैतस्य वस्तुनोऽभावं यदा प्रमाणाद्बुद्धवांस्तदा वस्त्वभावं पुरुषो बुद्ध्वैव निःसङ्गं चित्तं यथा पुनर्न

वस्त्वभावं स बुद्धैव निःसङ्गं विनिवर्त्तते ॥ ७९ ॥
निवृत्तस्याप्रवृत्तस्य निश्चला हि तदा स्थितिः ।
विषयः स हि बुद्धानां तत्साम्यमजमद्वयम् ॥८०॥

---

नुरूपे तच्चित्तं प्रवर्त्तते । तस्य द्वयस्य वस्तुनोऽभावं यदा बुद्धवांस्तदा तस्मान्निःसङ्गं निरपेक्षं सद्विनिवर्त्ततेऽभूताभिनिवेशविषयात् ॥ ७९ ॥

निवृत्तस्य द्वैतविषयाद्विषयान्तरे चाप्रवृत्तस्याभावदर्शनेन चित्तस्य निश्चला चलनवर्जिता स्वरूपैव तदा स्थितिर्य्यैषा ब्रह्मरूपा स्थितिश्चित्तस्याद्वयविज्ञानैकरसघनलक्षणा । स हि यस्माद्विषयगोचरः परमार्थदर्शिनां बुद्धानां तस्मात्तत्साम्यं परं निर्व्विशेषमजमद्वयञ्च ॥ ८० ॥

---

प्रवर्त्तते तथा तन्निवृत्तिमनुवदतो भवतीत्यर्थः ॥ चक्षराणि विभजते । यस्मादित्यादिना ॥ यस्मादभूताभिनिवेशात्तदनुरूपे चित्तं प्रवर्त्तते तस्मान्निःसङ्गं निवर्त्तते इति सम्बन्धः ॥ अभूताभिनिवेशमेव विशदयति । असतीति ॥ अभिनिवेशस्याऽविद्याव्यामोहरूपत्वमन्वयव्यतिरेकसिद्धमिति वक्तुं होत्युक्तम् । तदनुरूप इत्यत्र तच्छब्देनाभिनिवेशो गृह्यते तस्येत्यभिनिवेशविषयस्येत्यर्थः ॥ ७९ ॥

अभयं पदमस्मृत इत्यत्र हेतुमाह । निवृत्तस्येति ॥ विद्वदनुभवैकगम्यत्वादशेषकल्पनातीतत्वाच्च सिद्धं मोक्षस्याभयादिरूपत्वमित्याह । विषय इति ॥ अक्षरार्थं कथयति । निवृत्तस्येत्यादिना ॥ ८० ॥

**अजमनिद्रमस्वप्नं प्रभातम्भवति स्वयम्।**
**सकृद्विभातो ह्येवैष धर्म्मो धातुः स्वभावतः॥८१॥**
**सुखमाव्रियते नित्यं दुःखं विव्रियते सदा।**

---

पुनरपि कीदृग्वाऽसौ बुद्धानां विषय इत्याह। स्वयमेव तत्प्रभातं भवति नादित्याद्यपेक्षं स्वयं ज्योतिःस्वभावमित्यर्थः। सकृद्विभातः सदैव विभात इत्येतत्। एष एवं लक्षण आत्माख्यो धर्म्मो धातुः स्वभावतो वस्तुस्वभावत इत्यर्थः॥ ८१॥

एवमुच्यमानमपि परमार्थतत्त्वं कस्मात् लौकिकैर्न गृह्यते इत्युच्यते। यस्मात् यस्य कस्यचित् द्वयवस्तुनो धर्म्मस्य ग्रहणा ग्रहणावेशेन मिथ्याभिनिविष्टतया सुखमाव्रियते

---

यो मोक्षो विदुषां विषयो दर्शितस्तमेव पुनर्विशिनष्टि। अजमिति॥ स्वयम्प्रभातत्वे हेतुमाह। सकृदिति॥ कल्पितस्य सर्व्वस्य धारणाद्धर्म्मो नासौ कथमपि परतन्त्रो भवितुमर्हत्यनवस्थानादतः स्वयंज्योतिरित्याह। धर्म्म इति॥ किञ्च धीयते निधीयते सर्व्वं निःक्षिप्यते सुषुप्तादावस्मिन्निति धातुरात्मोच्यते। तथा च सर्व्वस्य ज्ञानसाधनस्योपसंहारेऽपि सुषुप्तौ साक्षितयाऽऽत्मनः सिद्धेः स्वयं ज्योतिष्ट्वमेष्टव्यमित्याह। धातुरिति॥ किञ्चात्मत्वादेवात्मनः स्वयं ज्योतिष्ट्वमन्यथा घटवदनात्मत्वप्रसङ्गादित्याह। स्वभावत इति। आकाङ्क्षापूर्व्वकं श्लोकमवतार्य्य तदक्षराणि योजयति। पुनरपीत्यादिना॥ धातुस्वभावत इत्येकपदं गृहीत्वाव्याचष्टे वस्त्विति॥ ८१॥

विवक्षितार्थस्तु पूर्व्वस्मान्नातिरिच्यते। आत्मा चेदुक्तलक्षणो विवक्षितस्तर्हि किमित्यसौ श्रुत्याचार्य्योपदिष्टस्तथैव सर्व्वैर्न गृह्यते तत्राह। सुखमिति॥ मिथ्याभिनिवेशादात्मतत्त्वस्वरूपसुखं सदैवाच्छाद्यते तस्मादेव वस्तुतोऽसदपि दुःखं सर्व्वदा प्रकटो-

यस्य कस्य च धर्मस्य ग्रहेण भगवानसौ ॥ ८२ ॥
अस्ति नास्त्यस्ति नास्तीति नास्तीति नास्ति
[वा पुनः ।

ऽनायासेनाच्छाद्यत इत्यर्थः । सहृदयोपलब्धिनिमित्तं स्वि तत्त्वावरणं न यत्नान्तरमपेक्षते । दुःखञ्च विव्रियते प्रकटीक्रियते । परमार्थज्ञानस्य दुर्लभत्वात् । भगवानसावात्माऽद्वयो देव इत्यर्थः । अतो वेदान्तैराचार्य्यैश्च बहुधा उच्यमानोऽपि नैव ज्ञातुं शक्य इत्यर्थः । आश्चर्य्यो वक्ता कुशलोऽस्य लब्धेति श्रुतेः ॥ ८२ ॥

अस्ति नास्तीत्यादि सूक्ष्मविषया अपि पण्डितानां ग्रहा भगवतः परमात्मन आवरणा एव किमुत मूढजनबुद्धि-

क्रियते तेनाऽसौ भगवान् आत्मा श्रुत्याचार्य्योपदिष्टोऽपि न विस्पष्टो भवतीत्यर्थः ॥ श्लोकव्यावर्त्त्यां शङ्कां दर्शयति । एवमिति ॥ स्वयं ज्योतिष्ट्वादि प्रागुपदिष्टप्रकारेणेति यावत् ॥ तत्र श्लोकमवतार्य्य व्याकरोति । उच्यत इत्यादिना ॥ हंते गृह्यमाणेऽपि कथमात्मस्वरूपस्य सुखस्वरूपस्यानायासेनाच्छाद्यमानत्वं तत्राह । द्वयेति ॥ इतश्चात्मतत्त्वं यथावन्न प्रतिभातीत्याह । दुःखञ्चेति ॥ यथावदात्मप्रथाभावे हेतुमाह । परमार्थेति ॥ देवो याथातथ्येन न भातीति शेषः ॥ सुखस्य विद्यमानस्यावरणमविद्यमानस्य दुःखस्य विवरणमिति स्थिते फलितमाह । अत इति ॥ श्रुत्याचार्य्योपदेशस्य तात्पर्य्यशून्यत्वं वारयति । बहुधा इति ॥ आत्मनि प्रवचनस्य परिज्ञानस्य दुर्लभत्वे प्रमाणमाह । आश्चर्य्य इति ॥ ८२ ॥

परीक्षकाभिनिवेशानामप्यात्मावरणत्वे सति लौकिकपुरुषाऽभिनिवेशानां तदावरणत्वं किमु वक्तव्यमिति साधयति । अस्तीत्यादिना ॥

चलस्थिरोभयाभावैराहरणोत्येव बालिशः ॥ ८३ ॥

---

तद्यथा इत्येवमर्थं प्रदर्शयन्नाह । अस्तीति । अस्त्यात्मेति वादी कश्चित्प्रतिपद्यते । नास्तीत्यपरो वैनाशिकः । अस्ति नास्तीत्यपरोऽर्द्धवैनाशिकः सदसद्वादी दिग्वासाः । नास्ति नास्तीत्यत्यन्तशून्यवादी । तत्रास्तिभावश्चलः घटाद्यनित्यविलक्षणत्वात् । नास्तिभावः स्थिरः सदा विशेषत्वात् । उभयश्चलस्थिरविषयत्वात् सदसद्भावोऽभावोऽत्यन्ताभावः । प्रकारचतुष्टयस्यापि तैरेतैश्चलस्थिरोभयाभावैः सदसदादिवादी सर्व्वोऽपि भगवन्तमाहरणोत्येव बालिशोऽविवेकी । यद्यपि पण्डितो बालिश एव परमार्थतत्त्वानवबोधात् किमु स्वाभावमूढो जन इत्यभिप्रायः ॥ ८३ ॥

---

श्लोकतात्पर्य्यमाह । अस्तीति ॥ प्रमाता देहादिव्यतिरिक्तोऽस्तीत्याद्यो वैशेषिकादिपक्षः । देहादिव्यतिरिक्तोऽपि नासौ बुद्धेर्व्यतिरिच्यते । क्षणिकस्य विज्ञानस्यैवात्मत्वादिति द्वितीयो विज्ञानवादिपक्षः । तृतीयो दिगम्बरपक्षः । चतुर्थे तु शून्यवादिपक्षे शून्यस्यात्यन्तिकत्वद्योतनार्था वीप्सा । द्वितीयार्द्धं विभजते । तत्रेत्यादिना ॥ अनित्येभ्यो घटादिभ्यः सुखाद्याकारपरिणामितया वैलक्षण्यादस्तिभावो योऽयं प्रमातोक्तः स चलः स विशेषः सन् परिणामीत्यर्थः । देहाद्यतिरिक्तोऽपि प्रमाता बुद्ध्यतिरिक्तो नास्तीति । यो नास्तिभावः स स्थिरो निर्व्विशेषत्वात्तद्भावस्येत्याह । नास्तिभाव इति । प्रकारचतुष्टयस्यास्तित्वस्य नास्तीत्यस्यास्तिनास्तित्वस्य नास्तिनास्तित्वस्य चेति यावत् । बालिशत्वे सिद्धे फले तं न्यायमुपसंहरति । किञ्चेति ॥ ८३ ॥

**कोट्यश्चतस्र एतास्तु ग्रहैर्यासां सदा वृतः ।**
**भगवानाभिरस्पृष्टो येन दृष्टः स सर्वदृक् ॥ ८४ ॥**

---

कीदृक् पुनः परमार्थतत्त्वं यदवबोधादबालिशः पण्डितो भवतीत्याह । कोट्यः प्रावादुकशास्त्रनिर्णयान्ता एता उक्ता अस्तिनास्तीत्याद्याश्चतस्रो यासां कोटीनां ग्रहै-र्ग्रहणैरुपलब्धिनिश्चयैः सदा सर्व्वदा आवृत आच्छादित-स्तेषामेव प्रावादुकानां यः स भगवान् आभिरस्तिनास्ती-त्यादिकोटिभिश्चतसृभिरस्पृष्टोऽस्त्यादिविकल्पनावर्जित इ-त्येतत् । येन मुनिना दृष्टो ज्ञातो वेदान्तेष्वौपनिषदः पुरुषः स सर्व्वदृक् सर्व्वज्ञः परमार्थपण्डित इत्यर्थः ॥ ८४ ॥

---

आत्मनो यदावरणमुक्तं तदुपसंहरति । कोट्य इति ॥ यासां कोटीनां परीक्षकपरिकल्पितनिर्णयनिरूपणीयानां ग्रहैरभिनिवेशवि-शेषैरात्मा सदा समावृतस्ताः खल्वेताश्चतस्रः कोट्यः सन्ति । तया चात्मनो न यथावदात्मप्रथनमित्यर्थः ॥ यदि सदात्मा समावृतो न तर्हि तस्य ज्ञानं ज्ञाने वा नास्ति नैराकाङ्क्ष्यं ज्ञातव्यान्तरपरिशेषादित्या-शङ्क्याह । भगवानिति ॥ आत्मा हि वस्तुतोऽस्तीत्यादिकल्पनाहितो येनोपनिषच्छ्रवणेन प्रतिपन्नः स सर्व्वज्ञो ज्ञातव्यान्तरमपश्यन् परमार्थ-पण्डितो निराकाङ्क्षो भवतीत्यर्थः ॥ श्लोकनिरस्यामाकाङ्क्षां दर्शयति । कीदृगिति ॥ किमिति परमार्थतत्त्वं जिज्ञास्यते । तज्ज्ञानात् पाण्डि-त्यसिद्ध्यर्थमित्याह ॥ यदवबोधादिति ॥ तत्र श्लोकमवतार्य्य व्याकरोति । आह्रेत्यादिना ॥ तेषामेव प्रावादुकानामुपलब्धिनिश्चयैरिति सम्बन्धः । यो भगवानुक्तविशेषणः स येनेति योजना ॥ ८४ ॥

प्राप्य सर्वज्ञतां कृत्स्नां ब्राह्मण्यं पदमद्वयम् ।
अनापन्नादिमध्यान्तं किमतः परमीहते ॥ ८५ ॥
विप्राणां विनयो ह्येष शमः प्राकृत उच्यते ।

---

प्राप्यैतां यथोक्तां कृत्स्नां समस्तां सर्व्वज्ञतां ब्राह्मण्यं पदं स ब्राह्मणः। एष नित्यो महिमेति श्रुतेः। अनापन्नादिमध्यान्तम। आदिमध्यान्ता उत्पत्तिस्थितिलयां अनापन्ना अप्राप्ता यस्याद्वयपदस्य न विद्यन्ते तदनापन्नादिमध्यान्तं ब्राह्मण्यं पदम्। तदेव प्राप्य लब्ध्वा किमतः परस्मादात्मलाभादूर्ध्वमीहते चेष्टते निष्प्रयोजनमित्यर्थः। नैव तस्य कृतेनार्थ इत्यादिगीतास्मृतेः ॥ ८५ ॥

विप्राणां ब्राह्मणानां विनयो विनीतत्वं स्वाभाविकं यदेतदात्मस्वरूपेणावस्थानम्। एष विनयः शमोऽप्येष एव

---

ज्ञानवतोऽपि यावज्जीवादिश्रुतिवशादग्निहोत्रादि कर्त्तव्यमित्याशङ्क्याह। प्राप्येति॥ यथोक्तां चतुःकोटिविनिर्मुक्तामिति यावत्। समस्तत्वं ज्ञातव्यशेषशून्यत्वं परिपूर्णस्वप्रकाशरूपत्वम्॥ तत्र ब्राह्मण्यपदप्रयोगे प्रमाणमाह। स ब्राह्मण इति॥ स विद्यानपरोक्षीकृतब्रह्मतत्त्वः सन् फलावस्थो मुख्यो ब्राह्मणो भवतीत्यर्थः। ब्राह्मणस्य ब्रह्मविदो विद्या फलावस्थस्यैव स्वभावो महिमेत्युक्तो निर्व्विकारो वृद्धिह्रासाभावादेकरूपो भवतीति वाक्यान्तरस्यार्थः॥ तदेव पदं विशिनष्टि। अनापन्नादिमध्यान्तमिति॥ तद्व्याकरोति। आदीति॥ अन्वयं दर्शयन्नवशिष्टं व्याचष्टे। तदेव प्राप्येति॥ ज्ञानवान् फलावस्थः सन् कृतकृत्यो न तस्य किञ्चिदस्ति कर्त्तव्यमित्यस्मिन्नर्थे भगवद्वाक्यं प्रमाणयति। नैव तस्येति॥ ८५॥

यावज्जीवादिश्रुतेरविद्वद्विषयत्वाद्विदुषो नाग्निहोत्रादि कर्त्तव्यमित्युक्तम्। इदानीं तस्यापि नियोगतोऽस्ति कर्त्तव्यमित्याशङ्क्याह। विप्रा-

दमः प्रकृतिदान्तत्वादेवं विद्वाञ्छमं व्रजेत् ॥ ८६ ॥
सवस्तु सोपलम्भञ्च द्वयं लौकिकमिष्यते ।

---

प्राकृतः स्वाभाविकोऽकृतक उच्यते । दमोऽप्येष एव प्रकृतिदान्तत्वात् स्वभावत एव चोपशान्तरूपत्वाद्ब्रह्मणः । एवं यथोक्तं स्वभावोपशान्तं ब्रह्म विद्वाञ्छमं उपशान्तिं स्वाभाविकीं ब्रह्मस्वरूपां व्रजेत् ब्रह्मस्वरूपेणाऽवतिष्ठत इत्यर्थः ॥ ८६ ॥

एवमन्योन्यविरुद्धत्वात्संसारकारणानि रागद्वेषदोषास्पदानि प्रावादुकानां दर्शनानि । अतो मिथ्यादर्शनानि तानीति तद्युक्तिभिरेव दर्शयित्वा चतुष्कोटिवर्जितत्वाद्रागादिदोषानास्पदं स्वभावशान्तमद्वैतदर्शनमेव सम्यग्दर्शनमित्युपसंहृतम् । अथेदानीं स्वप्रक्रियाप्रदर्शनार्थ आरम्भः

---

णामिति ॥ ब्रह्मविदां ब्राह्मणानामेष विनयः स्वभावतो न नियोगाधीनां कर्त्तव्यतामधिकरोति । शमोऽपि स्वाभाविको न नियोगेन क्रियते दमोऽपि स्वभावसिद्धत्वान्न नियोगमपेक्षते ॥ एवं कूटस्थमात्मतत्त्वं विद्वान् पुमानशेषविक्रियाशून्यब्रह्मस्वरूपेण तिष्ठतीत्यर्थः ॥ अक्षरार्थं कथयति । विप्राणामित्यादिना ॥ तमेव स्वाभाविकं विनयं विवृणोति । यदेतदिति ॥ ८६ ॥

एष एवेत्यात्मस्वभावो व्युह्यते । परमतनिराकरणमुखेनात्मतत्त्वमवधारितम् । अधुना स्वप्रक्रिययाऽवस्थात्रयोपन्यासमुखेनापि तदवधारयितुमवस्थाद्वयमुपन्यस्यति । सवस्त्विति ॥ वृत्तानुवादपूर्व्वकं प्रकरणशेषस्य तात्पर्य्यं दर्शयति । एवमिति ॥ मिथ्याध्यारोपदृष्टिमाश्रित्य जाग्रदादिपदार्थपरिशुद्धिपूर्व्वको बोधप्रकारः स्वप्रक्रिया तया तस्यैवात्मतत्त्वस्य प्रदर्शनपरो ग्रन्थशेष इत्यर्थः ॥ तत्र जागरितमुदाहरति । सवस्त्विति ॥ वस्तु प्रातिभासिकं व्यावहारिकञ्च स्थूलमर्थजात-

अवस्तु सोपलम्भञ्च द्वयं लौकिकमिष्यते ॥८७॥
अवस्त्वनुपलम्भञ्च लोकोत्तरमिति स्मृतम् ।

अवस्तु संवृतिः । सता वस्तुना सह वर्त्तत इति सवस्तु । तथा चोपलब्धिरुपलम्भः तेन सह वर्त्तत इति सोपलम्भः । सोपलम्भञ्च ग्राह्यादिसर्व्वव्यवहारास्पदं ग्राह्यग्राहकलक्षणं द्वयं लौकिकं लोकादनपेतं लौकिकं जागरितमित्येतत् । एवं-लक्षणं जागरितमिष्यते वेदान्तेषु । अवस्तु संवृतेरप्यभावात् । सोपलम्भं वस्तुवत् उपलम्भनमनुपलम्भोऽसत्यपि वस्तुनि तेन सह वर्त्तत इति सोपलम्भञ्च । शुद्धं केवलं प्रतिविविक्तं जागरितात् स्थूलात् लौकिकं सर्व्वप्राणिसाधारणत्वादिष्यते स्वप्न इत्यर्थः ॥ ८७ ॥

अवस्त्वनुपलम्भञ्च ग्राह्यग्रहणवर्जितमित्येतल्लोकोत्तरम् । अत एव लोकातीतम् । ग्राह्यग्रहणविषयो हि लोकः तद-

---

मादित्यादिदेवतानुग्रहीतैरिन्द्रियैरुपलभ्यते । तज्जागरितमित्यर्थः ॥ द्वयमित्यस्यार्थमाह । ग्राह्यादीति ॥ तत्र लोके लोकप्रसिद्धमित्येतदुच्यते । लौकिकमिति ॥ तद्व्याचष्टे । लोकादिति ॥ न केवलं जागरितमिदं लोके प्रसिद्धम् । किन्तु वेदान्तेऽपि परम्परया प्रामाण्यत्वेन प्रसिद्धमित्याह । एवं लक्षणमिति ॥ स्वप्नोपन्यासपरमुत्तरार्द्धं योजयति ॥ अवस्त्विति ॥ बाह्येन्द्रियप्रयुक्तो व्यवहारः संवृतिशब्दार्थः सोऽपि स्थूलार्थवन्न स्वप्नं भवति । तथा च बाह्येषु करणेषूपसंहृतेषु जागरितवासनानुसारेण मनस्यसदर्थाभासाकारावभासनं स्वप्नशब्दितमित्यर्थः ॥ शुद्धमित्यस्य केवलमितिपर्य्यायं गृहीत्वा विवक्षितमर्थमाह । प्रविविक्तमिति ॥ तस्यापि लोकप्रसिद्धत्वं लौकिकमित्यनेनोक्तं तद्विवृणोति । सर्व्वप्राणीति ॥ ८७ ॥

सम्प्रति सुषुप्तं दर्शयति । अवस्त्विति ॥ स्थूलं सूक्ष्मञ्च वस्तु विषय-

ज्ञानं ज्ञेयञ्च विज्ञेयं सदा बुद्धैः प्रकीर्त्तितम् ॥८८॥

---

भावात् सर्व्वप्रवृत्तिवीजं सुषुप्तमित्येतदेवं स्मृतं सोपायम्परमार्थतत्त्वं लौकिकम्। शुद्धं लौकिकं शुद्धं लौकिकं लोकोत्तरं क्रमेण येन ज्ञानेन ज्ञायते तज्ज्ञानं ज्ञेयमेतान्येव त्रीणि। एतद्व्यतिरेकेण ज्ञेयानुपपत्तेः। सर्व्वप्रावादुककल्पितवस्तुनोऽत्रैवान्तर्भावाद्विज्ञेयं परमार्थसत्यं तुर्य्याख्यमद्वयमजमात्मतत्त्वमित्यर्थः। सदा सर्व्वदैतल्लौकिकादिविज्ञेयान्तं बुद्धैः परमार्थदर्शिभिर्ब्रह्मविद्भिः प्रकीर्त्तितम् ॥८८॥

---

भूतं यत्र न विद्यते तत्तथा इन्द्रियार्थसम्प्रयोगजन्यो वा स्थूलार्थावगाही वासनात्मको वा यत्रोपलम्भो न सम्भवति तदशेषविज्ञानशून्यं सुषुप्तमिति विशिनष्टि। अनुपलम्भञ्चेति॥ नन्विदं कारणात्मना बुद्धेरवस्थानम्। न च कारणं लोके प्रसिद्धम्। कार्य्यस्यैवावस्थाद्वयात्मकस्य तथात्वादित्यभिप्रेत्याह। लोकोत्तरमिति॥ तस्य शास्त्रप्रसिद्धत्वं विवक्षित्वोक्तमित्याह। स्मृतमिति॥ ज्ञानज्ञेयात्मकमेवावस्थात्रयं तुरीयञ्च परमार्थतत्त्वं विद्वदनुभवसमधिगम्यमित्याह। ज्ञानमिति॥ श्लोकगतमद्वयमनूद्य विवक्षितमर्थं कथयति। अवस्थेति॥ ग्राह्यग्रहणविभागवर्जितत्वादेव कुतो लोकातीतत्वमित्याशङ्क्याह। ग्राह्येति॥ सुषुप्तञ्चेदं लौकिकं कथं तदवगम्यतामित्याशङ्क्याह। सर्व्वप्रवृत्तीति॥ अवस्थाद्वयवीजं सुषुप्तमित्येतत्प्रसिद्धं शास्त्रविदामित्याह। एवमिति॥ अवस्थात्रयमेवमुक्त्वा ज्ञानपदार्थं कथयति। सोपायमिति॥ ज्ञानमत्र मनोवृत्तिरूपं विवक्षितमवस्थात्रयातिरिक्तमपि परीक्षकपरिकल्पितं ज्ञेयं सम्भवतीत्याशङ्क्याह। सर्व्वेति॥ सर्व्वैरेव प्रावादुकैः शुष्कतर्कजल्पनशीलैः परिकल्पितस्य कार्य्यकारणादिरूपवस्तुनोऽवस्थात्रये नियमेनान्तर्भावाज्ज्ञेयान्तरं नास्तीत्यर्थः॥ ज्ञेयमेव विशेषेण ज्ञेयं विज्ञेयमुच्यते न तदपि नावस्थात्रयातिरिक्तमस्तीत्याशङ्क्याह। विज्ञेयमिति॥ उपायोपेयभूते श्लोकोक्तेऽर्थे विदुषामभिमतमादर्शयति। सदेति॥ ८८॥

ज्ञाने च त्रिविधे ज्ञेये क्रमेण विदिते स्वयम्।
सर्वज्ञता हि सर्वत्र भवतीह महाधियः॥ ८९॥

---

ज्ञाने च लौकिकादिविषये। ज्ञेये च लौकिकादौ त्रिविधे च। पूर्व्वं लौकिकं स्थूलम्। तदभावेन पश्चाच्छुद्धं लौकिकम्। तदभावे न लोकोत्तरमित्येवं क्रमेण स्थानत्रयाभावेन परमार्थसत्ये तुर्य्येऽद्वयेऽजेऽभये विदिते स्वयमेवात्मस्वरूपमेव सर्व्वज्ञता सर्व्वश्चासौ ज्ञश्च सर्व्वज्ञस्तद्भावः सर्व्वज्ञता इहास्मिँल्लोके भवति महाधियो महाबुद्धेः। सर्व्वलोकातिशयवस्तुविषयबुद्धित्वादेवंविदः सर्व्वत्र सर्व्वदा भवति। सकृद्विदिते स्वरूपे व्यभिचाराभावादित्यर्थः।

---

आत्मनि विज्ञाते सर्व्वमिदं विज्ञातम्भवतीति श्रुत्या यत्प्रतिज्ञातं तदुक्तवस्तुज्ञाने फलतीति कथयति। ज्ञाने चेति॥ ज्ञानज्ञेयवेदने विवक्षितं क्रममनुक्रामति। पूर्व्वमित्यादिना॥ यत्पुनरवस्थात्रयातीतं तुरीयन्तत्परिज्ञाने विवक्षितं क्रमं दर्शयति। स्थानेति॥ तुर्य्ये विदिते सतीति सम्बन्धः। तस्य स्थानत्रयात्मद्वैताभावोपलक्षितत्वमाह। अद्वय इति॥ जन्मादिसर्वविक्रियारहितत्वेन कौटस्थ्यं कथयति। अज इति॥ कार्य्यसम्बन्धस्तत्र नास्तीति वक्तुं कारणभूताविद्यासम्बन्धाभावमभिदधाति। अभय इति॥ यथोक्ततत्त्वज्ञानस्य परिपूर्णब्रह्मरूपेणावस्थानं फलमाह। स्वयमेवेति॥ ज्ञानवतो यथोक्तं फलमर्चिरादिमार्गायत्तमिति शङ्कां वारयति। इहेति॥ उक्तज्ञानवतो महाबुद्धित्वे हेतुमाह। सर्वलोकेति॥ ज्ञानवतो यथोक्तं ज्ञानं कदाचिद्भवेदपि कालान्तरेऽभिभूतमसत्कल्पम्भविष्यतीत्याशङ्क्याह। एवंविद इति॥ श्रुत्याचार्य्यप्रसादाद्विदिते स्वरूपे

हेयज्ञेयाप्यपाक्यानि विज्ञेयान्यग्रयाणतः ।
तेषामन्यत्र विज्ञेयादुपलम्भस्त्रिषु स्मृतः ॥ ९० ॥

---

नहि परमार्थविदो ज्ञानोद्भवाभिभवौ स्तो यथाऽन्येषां प्रावादुकानाम् ॥ ८९ ॥

लौकिकादीनां क्रमेण ज्ञेयत्वेन निर्देशात्परमार्थतो माभूदित्याह। हेयानि च लौकिकादीनि त्रीणि जागरितस्वप्नसुषुप्तान्यात्मन्यसत्त्वेन रज्ज्वां सर्पवद्धातव्यानीत्यर्थः। ज्ञेयमिह चतुष्कोटिवर्जितं परमार्थतत्त्वम्। आप्यान्याप्तव्यानि त्यक्तबाह्यैषणात्रयेण भिक्षुणा पाण्डित्यबाल्यमौनाख्यानि साधनानि। पाक्यानि रागद्वेषमोहादयो दोषाः कषायाख्यानि पक्तव्यानि। सर्वाण्येतानि हेयज्ञेयाप्यपाक्यानि विज्ञेयानि भिक्षुणा उपायत्वेनेत्यर्थः। अग्रयाणतः प्रथमतस्तेषां हेयादीनामन्यत्र विज्ञेयात्परमार्थसत्यं विज्ञेयं ब्रह्मैकं वर्जयित्वा। उपलम्भनमुपलम्भो

---

स्वरूपस्फुरणस्य व्यभिचाराभावात्परिपूर्णसर्वप्रज्ञरूपता विदुषो भवतीत्युक्तं स्फुटयति न हीति ॥ ८९ ॥

अवस्थात्रयस्य ज्ञेयत्वनिर्देशात्परमार्थतोऽस्तित्वमाशङ्क्य परिहरति। हेयेति ॥ शङ्कोत्तरत्वेन श्लोकमवतार्य हेयशब्दार्थं व्याचष्टे। लौकिकादीनामिति ॥ तान्येव त्रीणि विभजते। जागरितेति ॥ पाण्डित्यं वेदान्ततात्पर्याभिज्ञत्वमद्वितीयवस्तुविचारचातुर्यपरिनिष्पन्नं श्रवणम्। बाल्यं दम्भदर्पाहङ्कारादिराहित्यम्। युक्तितः श्रुतार्थानुसन्धानकुशलत्वं मौनं मुनेः कर्म मननाभ्यासलक्षणं निदिध्यासनशब्दितम्। तान्येतान्याप्तव्यानि ॥ यद्यपि ज्ञेयस्य विज्ञेयत्वं युक्तं तथापि कथं हेया-

प्रकृत्याकाशवज्ज्ञेयाः सर्वे धर्मा अनादयः ।
विद्यते नहि नानात्वं तेषां क्वच न किञ्चन ॥९१॥
आदिबुद्धाः प्रकृत्यैव सर्वे धर्माः सुनिश्चिताः ।

ऽविद्याकल्पनामात्रम् । हेयाद्युपायेषु त्रिष्वपि स्मृतो ब्रह्मविद्भिर्न परमार्थसत्यतयाऽथाणामित्यर्थः ॥ ९० ॥

परमार्थतस्तु प्रकृत्या स्वभावत आकाशवदाकाशतुल्याः सूक्ष्मनिरञ्जनसर्व्वगतत्वे सर्व्वे धर्मा आत्मनो ज्ञेया मुमुक्षुभिरनादयो नित्याः । बहुवचनकृतभेदाशङ्कां निराकुर्व्वन्नाह । क्वचन किञ्चन । किञ्चिदणुमात्रमपि तेषां न विद्यते नानात्वमिति ॥ ९१ ॥

ज्ञेयतापि धर्म्माणां संवृत्यैव न परमार्थत इत्याह । आदीति । यस्मादादौ बुद्धा आदिबुद्धाः प्रकृत्यैव स्वभावत एव । यथा नित्यप्रकाशस्वरूपः सवितैवं नित्यबोध-

दीनां विज्ञेयत्वमित्याशङ्क्याह । उपायत्वेनेति ॥ तदेव प्रकटयितुं प्रथमत इत्युक्तम् ॥ उत्तरार्द्धं व्याचष्टे । तेषामिति ॥ हेयादीनां रज्जुसर्पवदविद्याकल्पितत्वान्नास्ति परमार्थत्वमित्यर्थः ॥ ९० ॥

यदुक्तं ज्ञेयं चतुष्कोटिवर्जितं परमार्थतत्त्वमिति तदिदानीं स्फुटयति । प्रकृत्येति ॥ बहुवचनप्रयोगप्राप्तं दोषमुत्थापयति । विद्यत इति ॥ कल्पितभेदनिबन्धनमबहुवचनमित्यर्थः । क्व च नेति देशकालावस्थाप्रदर्शनम् । अणुमात्रमपीति कार्य्यकारणभावस्यांशांशिभावस्य चोपादानम् ॥ ९१ ॥

ज्ञेयशब्दप्रयोगात् मुख्यमेव ज्ञेयत्वं प्राप्तं प्रत्युदस्यति । आदिबुद्धा इति ॥ यथोक्तरीत्या वस्तुतत्त्वस्य ज्ञानस्य फलमाह । यस्येति ॥ प्रथमपादस्य तात्पर्य्यमाह । ज्ञेयतापीति ॥ उक्तमर्थं दृष्टान्तेन स्पष्टयति । यथेति ॥ पदान्तरस्यार्थं कथयति । न चेति ॥ निश्चितस्वरूपत्वमेव

यस्यैवम्भवति शान्तिः सोऽमृतत्वाय कल्पते॥९२॥
आदि शान्ता ह्यनुत्पन्नाः प्रकृत्यैव सुनिर्वृताः।

स्वरूपा इत्यर्थः। सर्व्वे धर्म्माः सर्व्वे आत्मानः। न च तेषां निश्चयः कर्त्तव्योऽनित्यनिश्चितस्वरूपा इत्यर्थः। न सन्दिह्यमानस्वरूपा एवं नैवञ्चेति यस्य मुमुक्षोरेवं यथोक्तप्रकारेण सर्वदा बोधनिश्चयनिरपेक्षता आत्मार्थं परार्थं वा। यथा सविता नित्यं प्रकाशान्तरनिरपेक्षः स्वार्थं परार्थञ्चेत्येवम्भवति। शान्तिर्बोधकर्त्तव्यतानिरपेक्षता सर्वदा स्वात्मनि सोऽमृतत्वायामृतभावाय कल्पते। मोक्षाय समर्थो भवतीत्यर्थ॥९२॥

तथा नापि शान्तिकर्त्तव्यताऽऽत्मनीत्याह। यस्मादादि शान्ता नित्यमेव शान्ता अनुत्पन्ना अजाश्च प्रकृत्यैव सुनिर्वृताः सुष्ठु परस्वभावा नित्यमुक्तस्वभावा इत्यर्थः। सर्वे

---

व्यतिरेकद्वारा स्फोरयति। नेत्यादिना॥ न स्वल्वात्मा स्वसत्ताद्यामेवं नैवमिति सन्दिह्यमानस्वरूपो भवितुमलम्। तस्य स्फुरणाव्यभिचारात्स्वरूपस्य प्रागेव साधितत्वादित्यर्थः॥ द्वितीयार्द्धं व्याकरोति। यस्येत्यादिना॥ आत्मस्वरूपस्य स्फुरद्रूपत्वं यथोक्तप्रकारः। बोधाख्यो निश्चयो बोधनिश्चयस्तस्मिन्निरपेक्षत्वं स्वार्थमन्यार्थं वा यस्य भवति सोऽमृतत्वाय कल्पत इति सम्बन्धः॥ तदेव दृष्टान्तेन साधयति। यथेत्यादिना॥ इतिशब्दो यथेत्येतेन सम्बध्यते सोऽमृतत्वायेत्यादिवचनात्॥९२॥

आगन्तुकममृतत्वं प्रत्यादिशति। आदि शान्ता इति॥ श्लोकस्य तात्पर्य्यमक्षरार्थञ्च निर्दिशति। तथा नापीत्यादिना॥ उक्तमेवार्थं चतुर्थपादेन सङ्क्षिप्य दर्शयति। अजमिति॥ श्लोकार्थमुपसंहरति।

**सर्वे धर्माः समाभिन्ना अजं साम्यं विशारदम् ॥९३॥**
**वैशारद्यन्तु वै नास्ति भेदे विचरतां सदा ।**
**भेदनिम्नाः पृथग्वादास्तस्मात्ते कृपणाः स्मृताः ॥९४**

---

धर्माः समाश्चाभिन्नाश्च समाभिन्ना अजं साम्यं विशारदं विशुद्धमात्मतत्त्वं यस्मात्तस्माच्छान्तिर्मोक्षो वा नास्ति कर्त्तव्य इत्यर्थः । न हि नित्यैकस्वभावस्य कृतं किञ्चिदेव स्यात् ॥ ९३ ॥

ये यथोक्तम्परमार्थतत्त्वं प्रतिपन्नास्त एवाकृपणा लोके कृपणास्त्वन्ये इत्याह । यस्माद्भेदनिम्ना भेदानुयायिनः संसारानुगा इत्यर्थः । के । पृथग्वादाः पृथक् नाना वस्त्वित्येवं वदनं येषां ते पृथग्वादा द्वैतिन इत्यर्थः । तस्मात्ते कृपणाः क्षुद्राः स्मृता यस्माद्वैशारद्यं विशुद्धिर्नास्ति तेषाम्भेदे विचरतां द्वैतमार्गेऽविद्याकल्पिते सर्वदा वर्त्तमानानामित्यर्थः । अतो युक्तमेव तेषां कार्पण्यमित्यभिप्रायः ॥ ९४ ॥

---

विशुद्धमिति ॥ उक्तरूपतानङ्गीकारे मोक्षस्यापुरुषार्थता स्यादित्याह । न हीति ॥ संसारदुःखोपशमनं सुखजन्म यदि क्रियते तदा कृतकस्यानित्यत्वमवश्यम्भावीत्यर्थः ॥ ९२ ॥

इदानीं मुमुक्षुप्ररोचनार्थमविद्वन्निन्दां दर्शयति । वैशारद्यन्त्विति ॥ श्लोकस्य तात्पर्यं दर्शयति । यथोक्तमिति ॥ उत्तरार्द्धमादौ योजयति । यस्मादिति ॥ तस्मादित्युत्तरेणास्य सम्बन्धः ॥ प्रथमार्द्ध-सूक्तोऽर्थं हेतुत्वेन व्याचष्टे । यस्मादित्यादिना ॥ समनन्तरोक्तस्य यस्मा-दित्यस्याऽपेक्षितं पूरयति । अत इति ॥ ९४ ॥

**अजे साम्ये तु ये केचिद्भविष्यन्ति सुनिश्चिताः।
ते हि लोके महाज्ञानास्तच्च लोको न गाहते॥९५॥**

यदिदं परमार्थतत्त्वममहात्मभिरपण्डितैर्वेदान्तबहिष्ठैः क्षुद्रैरल्पप्रज्ञैरनवगाह्यमित्याह। अजे साम्ये परमार्थतत्त्वे एवमेवेति ये केचित् स्त्र्यादयोऽपि सुनिश्चिता भविष्यन्ति चेत्त एव हि लोके महाज्ञाना निरतिशयतत्त्वविषयज्ञाना इत्यर्थः। तच्च तेषां वर्त्म तेषां विदितं परमार्थतत्त्वं सामान्यबुद्धिरन्यो लोको न गाहते नावतरति न विषयी

एवमविद्वन्निन्दाप्रसङ्गं विद्वत्प्रशंसां प्रसारयति। अज इति॥ कूटस्थे वस्तुनि निर्व्विशेषे येषामसम्भावनाविपरीतभावनाविरहितं निर्द्धारणरूपं विज्ञानसम्भावनोपनीतमस्ति ते हि व्यवहारभूमौ महति निरतिशये तत्त्वे परिज्ञानवत्त्वान्महानुभावा भवन्तीत्यर्थः। ननु तत्त्वविषयज्ञानस्य सर्व्वलोके साधारणत्वात्तत्त्वज्ञानवतां किमिति प्रशंसा प्रस्तूयते तत्राह। तच्चेति॥ श्लोकस्य तात्पर्य्यमाह। यदिदमिति॥ यदित्युपक्रमात्तदमहात्मभिरनवगाह्यमिति योजनीयम्। अमहात्मत्वं क्षुद्रहृदयत्वम्। तत्र हेतुरपण्डितैरिति अपाण्डित्यं विवेकरहितत्वम्। तत्र हेतुर्वेदान्तेत्यादिना सूच्यते। तेषां पौर्व्वापर्य्येण पर्य्यालोचनापरिचयपराङ्मुखैरित्यर्थः॥ विचारचातुर्य्याभावादेव पदार्थवाक्यार्थविभागावगमशून्यत्वमाह अल्पप्रज्ञैरिति॥ तर्हि पारमार्थिके तत्त्वे केषामेव मनीषा समुन्मिषेदित्याशङ्क्य येषां केषाञ्चिदेव तन्निष्ठानामित्याह। ये केचिदिति॥ स्त्र्यादीनामुपनिषद्द्वाराज्ञानाधिकाराभावेऽपि द्वारान्तरप्रयुक्तस्तदधिकारः सम्भवतीत्यभिप्रेत्यापीत्युक्तम्॥ तत्त्वज्ञानस्य दुर्लभत्वमभ्युपेत्य चेदुक्तं चतुर्थपादं व्याचष्टे। तच्चेति॥ ज्ञानवतां विज्ञातं परमार्थतत्त्वमन्येषामनवगाह्यमित्यत्र प्रमाणमाह। सर्व्वभूतेति॥ सर्व्वेषाम्भूतानां ब्रह्मादीनां स्तम्बपर्य्यन्तानामात्मा परं ब्रह्म तद्भूतस्य विदुषः सर्व्वात्मभूतस्य सर्व्वेषु भूतेषु निरुपचरितस्वरूपत्वादेव परमहितस्य परमप्रेमास्पदत्वादेव

ज्ञानेऽव्यजमसंक्रान्तं धर्म्मेषु ज्ञानमिष्यते ।
यतो न क्रमते ज्ञानमसङ्गं तेन कीर्त्तितम्॥ ९६॥

---

करोतीत्यर्थः॥ सर्व्वभूतात्मभूतस्य सर्व्वभूतहितस्य च। देवा मार्गेऽपि मुह्यन्त्यपदस्य पदैषिणः॥ शकुनीनामिवाकाशे गतिर्नैवोपलभ्यत इत्यादि स्मरणात्॥ ९५॥

कथं महाज्ञानत्वमित्याह। अजेष्वनुत्पन्नेष्वचलेषु धर्म्मेष्वात्मस्वजमचलञ्च ज्ञानमिष्यते सवितरीवौष्ण्यं प्रकाशश्च यतस्तस्मादसङ्क्रान्तमर्थान्तरे ज्ञानमजमिष्यते। यस्मान्न क्रमतेऽर्थान्तरे ज्ञानन्तेन कारणेनासङ्गं तत् कीर्त्तितमाकाशकल्पमित्युक्तम्॥ ९५॥

---

परमसुखात्मकस्य प्राप्य पुरुषार्थविरहिणो मार्गे देवा विद्यावन्तोऽपि पदमन्वेषमाणा विविधं मोहमुपगच्छन्तीत्यर्थः महात्मनो ज्ञानवतो गन्तव्यपदरहितस्य परिपूर्णस्य गतिरवगन्तुमशक्येति निदर्शनवचनेन विशदयति। शकुनीनामिति॥ ९५॥

अजं साम्यमित्युक्तं प्रमेयम्। तद्विषयनिश्चयवान् प्रमाता। प्रमाणं तथाविधनिश्चयज्ञानमिति। वस्तुपरिच्छेदे कथं महाज्ञानत्वमित्याशङ्क्याह। अजेष्विति॥ अजा धर्म्मा चित्प्रतिबिम्बा जीवा विवक्ष्यन्ते। तेष्वजं ज्ञानं कूटस्थदृष्टिरूपं बिम्बकल्पं प्रज्ञानघनमात्मभूतमभ्युपगम्यते। तथा च मानमेयादिभावस्य कल्पितत्वेऽपि वस्तुतो वस्तुपरिच्छेदाभावादुपपन्नं तज्ज्ञानवतां महाज्ञानत्वमित्यर्थः। किञ्चाम्नाते ज्ञानस्य यदसङ्गत्वमङ्गीकृतं तदपि विषयभावादेव सिध्यति। ततश्च सङ्गं निर्व्विषयं मन इति यदुच्यते तदप्यविरुद्धमित्याह। यतो नेति॥ आकाङ्क्षापूर्व्वकं पूर्व्वार्द्धं योजयति। कथमित्यादिना॥ उत्तरार्द्धं व्याचष्टे। यस्माच्चेति॥ नित्यविज्ञप्तिरूपस्यात्मनोऽसङ्गत्वं प्रागपि सूचितमित्याह। आकाशेति॥ ९६॥

अणुमात्रेऽपि वैधर्म्ये जायमानेऽविपश्चितः।
असङ्गता सदा नास्ति किमुतावरणच्युतिः॥९७॥
अलब्धावरणाः सर्व्वे धर्म्माः प्रकृतिनिर्म्मलाः॥

इतोऽन्येषां वादिनामणुमात्रेऽल्पेऽपि वैधर्म्ये वस्तुनि बहिरन्तर्वा जायमाने उत्पद्यमानेऽविपश्चितोऽविवेकिनोऽसङ्गताऽसङ्गत्वं सदा नास्ति किमु वक्तव्यमावरणच्युतिर्बन्धनाशो नास्तीति॥ ९७॥

तेषामावरणच्युतिर्नास्तीति ब्रुवतां स्वसिद्धान्तेऽभ्युपगतं तर्हि धर्म्माणामावरणं नेत्युच्यते। अलब्धावरणाः। अलब्धमप्राप्तमावरणमविद्यादिबन्धनं येषां ते धर्म्मा अलब्धावरणा बन्धनरहिता इत्यर्थः। प्रकृतिनिर्म्मलाः स्वभावशुद्धा आदौ बुद्धास्तथा मुक्ता यस्मान्नित्यशुद्धबुद्धमुक्तस्वभावाः। यद्येवं कथं तर्हि बुद्ध्यन्त इत्युच्यते। नायकाः

कूटस्थं ब्रह्मैव तत्त्वमिति स्वमते ज्ञानमसङ्गं सिद्ध्यतीत्युक्त्वा मतान्तरे पुनः सविषयत्वाज्ज्ञानस्यासङ्गत्वमसङ्गतं प्रसज्येतेत्याह। अणुमात्रेऽपीति॥ अविद्यादृष्ट्या कस्यचिदपि पदार्थस्य जन्माङ्गीकारे ज्ञानस्य तदनुषक्तत्वेनासङ्गत्वायोगे बन्धध्वंसलक्षणं प्रयोजनं दूरापास्तं भवतीत्याह। किमुतेति॥ श्लोकाक्षराणि व्याकरोति। इत इति॥ ९७॥

विद्वानद्वैतवादी पञ्चम्या परामृश्यते। न चेदावरणच्युतिरिष्यते तर्हि स्वीकृतमावरणमित्याशङ्क्याह। अलब्धेति॥ बोद्धृत्वं तर्हि कथमित्याशङ्क्य बोधनशक्तिमत्त्वादित्याह। बुध्यन्त इति॥ शङ्कोत्तरत्वेन श्लोकमवतारयति। तेषामित्यादिना॥ अविद्यादृष्ट्यैवाविद्यावरणं सिद्ध्यति न तत्त्वदृष्ट्येत्यभिप्रेत्य व्याचष्टे॥ अलब्धेति॥ उक्तेऽर्थे हेतुकथनार्थं विशेषणत्रयमित्याह। यस्मादिति॥ तस्माद् बन्धनरहिता इति पूर्व्वेण

आदौ बुद्धास्तथा मुक्ता बुध्यन्त इति नायकाः॥९८॥
क्रमते न हि बुद्धस्य ज्ञानं धर्म्मेषु तापिनः।

---

स्वामिनः समर्था बोद्धुं बोधशक्तिमत्स्वभावा इत्यर्थः। यथा नित्यप्रकाशस्वरूपोऽपि सविता प्रकाशत इत्युच्यते यथा वा नित्यनिष्पन्नगतयोऽपि नित्यमेव शैलास्तिष्ठन्तीत्युच्यते तद्वत्॥ ९८॥

यस्मान्न हि क्रमते बुद्धस्य परमार्थदर्शिनो ज्ञानं विषयान्तरेषु धर्म्मेषु धर्म्मसंस्थं सवितरीव प्रभा। तापिनः तापोऽस्यास्तीति तापी तस्य सन्तापवतो निरन्तरस्याकाशकल्पस्येत्यर्थः। पूजावतो वा प्रज्ञावतो वा सर्व्वे धर्म्मा आत्मनोऽपि तथा ज्ञानवदेवाकाशकल्पत्वान्न क्रमन्ते क्वचि-

---

सम्बन्धः। आत्मनो यथोक्तस्वभावत्वे बोधत्वं न सिध्यतीत्याक्षिपति यद्येवमिति॥ पदान्तरेणोत्तरमाह। उच्यत इति॥ मुख्यावेव क्रियाकर्त्तारौ प्रकृतिप्रत्ययाभ्यामभिधेयावित्याशङ्क्य नियममुदाहरणाभ्यां निरस्यति। यथेत्यादिना॥ ९८॥

किमिति मुख्ये बोद्धृत्वे सम्भाविते तदेव नेष्टमित्याशङ्क्य ज्ञानस्य विहद्धया विषयसम्बन्धासम्भवादित्याह। क्रमत इति॥ किञ्च जीवाग्नं अस्यात्मना विभुत्वादाकाशवत् क्रियासमवाया योगाच्च मुख्यं बोद्धृत्वं सेद्धुमलमित्याह। सर्व्व इति॥ ज्ञानमात्रं पारमार्थिकं तत्रैव ज्ञातृज्ञेयादिकल्पितमिति सौगतमतमेव भवतापि सङ्गृहीतमित्याशङ्क्याह। ज्ञानमिति॥ तत्र पूर्व्वार्द्धाक्षराणि व्याकरोति। यस्मादिति॥ यद्धि परमार्थदर्शिनो ज्ञानं तन्न विषयान्तरेषु क्रमते किन्तु सवितरि प्रकाशवदात्मन्येव प्रतिष्ठितं यस्मादिष्यते तस्मात्तस्मिन् मुख्यत्वं सेद्धुमर्हतीत्यर्थः। परमार्थदर्शिनो विशेषणं तापिन इति॥ तद्व्याचष्टे। तापोऽस्येत्यादिना॥

सर्व्वे धर्म्मास्तथा ज्ञानं नैतद्बुद्धेन भाषितम्॥९९।
दुर्द्दर्शमतिगम्भीरमजं साम्यं विशारदम्।

इत्यर्थान्तर इत्यर्थः। यदादावुपन्यस्तं ज्ञानेनाकाशकल्पेने-त्यादि तदिदमाकाशकल्पस्य तापिनो बुद्धस्य तदनन्यत्वा-दाकाशकल्पं ज्ञानं न क्रमते कचिदप्यर्थान्तरे। तथा धर्म्मा इति आकाशमिवाचलमविक्रियं निरवयवं नित्यमद्वितीय-मसङ्गमदृश्यमग्राह्यमशनायाद्यतीतं ब्रह्मात्मतत्त्वम्। न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत इति श्रुतेः। ज्ञानज्ञेयज्ञातृभेद-रहितं परमार्थतत्त्वमद्वयमेतन्न बुद्धेन भाषितम्। यद्यपि बा-ह्यार्थनिराकरणं ज्ञानमात्रकल्पना चाद्वयवस्तुसामीप्यमुक्तम्। इदन्तु परमार्थतत्त्वमद्वैतं वेदान्तेष्वेव विज्ञेयमित्यर्थः॥९८॥

शास्त्रसमाप्तौ परमार्थतत्त्वस्तुत्यर्थं नमस्कार उच्यते। दुर्द्दर्शं दुःखेन दर्शनमस्येति दुर्द्दर्शम्। अस्तिनास्तीति चतु-

आत्मनो मुख्यस्य बोद्धृत्वस्याभावे हेत्वन्तरं सर्व्वे धर्म्मास्तथेति तद्विभजते। सर्व्व इत्यादिना॥ प्रकरणादावुक्तमेव किमर्थं पुनरिहोच्यते तत्राह। यदादाविति॥ तदिदमिहोपसंहृतमिति शेषः॥ क्रमते न हीत्यादेर-क्षरार्थमुपसंहरति। आकाशकल्पस्येति॥ सर्व्वे धर्म्मास्तथेत्यस्यार्थं निग-मयति। तथेति॥ धर्म्मा न क्रमन्ते कचिदपीति शेषः। तथा च नात्मनि मुख्यं बोद्धृत्वं किन्त्वौपकारिकमिति प्रकृतमुपसंहर्त्तुमितिशब्दः॥ पूर्व्वा-र्द्धस्य तात्पर्य्यमाह। आकाशमिति॥ ज्ञानमित्यादि व्याचष्टे। ज्ञानेति॥ सकलभेदविकलं परिपूर्णमनादिनिधनं अप्रमात्मुपनिषदेकसमधिगम्यं तत्त्वमिह प्रतिपाद्यते। मतान्तरे तु नैवमिति कुतो भगवत्पूज्यपादश्रावका-शमाचादयेदित्यर्थः॥ ९९॥

प्रकरणचतुष्टयविशिष्टस्य शास्त्रस्यादाविवान्तेऽपि परदेवता।तत्त्व-

बुद्ध्वा पदमनानात्वं नमस्कुर्म्मो यथा बलम् ॥१००॥

इति गौडपादाचार्य्यकृता माण्डूक्योपनिषत्कारिका सम्पूर्णा ॥ ॐ तत् सत् ॐ ॥

---

ष्कोटिवर्जितत्वात् दुर्विज्ञेयमित्यर्थः। अत एवातिगम्भीरं दुःप्रवेशं महासमुद्रवदकृतप्रज्ञैः अजं साम्यं विशारदम्। ईदृक् पदमनानात्वं नानात्ववर्जितं बुद्ध्वा अवगम्य तद्भूताः

---

मनुष्वात् तन्नमस्कारकर्म्म मङ्गलाचरणं सम्पादयति। दुर्दर्शमिति॥ दुर्विज्ञेयत्वे प्रत्यक्षादिप्रमाणानधिगम्यत्वं हेतुं विवक्षित्वा विशिनष्टि। अतिगम्भीरमिति॥ प्रत्यक्षादिभिरनवगाह्यत्वे कूटस्थत्वं निर्विशेषत्वं सर्व्वसम्बन्धविधुरत्वञ्चेति हेतुत्रयमभिप्रेत्याह। अजमित्यादिना॥ विशेषणत्रयं तर्हि कुतश्चिदनवगतं तस्मात्स्वेवेति निश्चेतुं युक्तम्। प्रमाणाधीनत्वात् प्रमेयविशेषेरित्याशङ्क्योपनिषद्भिरतद्भ्रमाध्यारोपापवादद्वारेणावगम्यमानत्वान्नैवमित्याह। पदमिति॥ तत्र तर्हि सकलविभागविकले कुतो नमस्कारक्रिया स्वीक्रियामर्हतीत्याशङ्क्याह। अनानात्वमिति॥ यद्यपि वस्तुतस्तस्मिन्नानात्वं नावकल्पते तथापि यथा सामर्थ्यं मायाश्रयमाश्रित्य काल्पनिकं नानात्वमनुसृत्य नमस्कारक्रिया प्रचयादिप्रयोजनवती प्रामाणिकैरभिप्रेतेत्यर्थः॥ श्लोकस्य तात्पर्य्यमाह। शास्त्रेति॥ यदि परमार्थतत्त्वं शास्त्रस्यादावित्यन्तेऽपि नमस्क्रियते तदा तस्याद्यन्तमध्येष्वनुसन्धेयतया स्तुतिः सिध्यति। तेन तदर्थमादावित्यवसानेऽपि प्रकटीभावस्तद्विषयस्तोत्रेणोपदिश्यते। तथा च प्रतिपाद्यस्य ब्रह्मणो महामहिमत्वं समधिगतमित्यर्थः। दुर्दर्शत्वमुक्तं व्यनक्ति। अस्तीति॥ सर्व्वेषामेव यथोक्ते परमार्थतत्त्वे प्रवेशानुपपत्तिमाशङ्क्य सम्प्रदायरहितानां तत्र तेऽपि तद्दृष्टं मैवमित्याह। अलतेति॥ कौटस्थ्यादिविशेषणं व्याख्यातमेव पदत्रयमनुवदति। अजमिति॥ उक्तं वेदान्तैकगम्यं तत्त्वं द्वैताभावोपलक्षितमित्याह। ईदृगिति॥ यथोक्तं ब्रह्म ज्ञात्वा ज्ञानसामर्थ्यात् ब्रह्मीभूतवेदाचार्य्यस्तर्हि कथं तस्मै नम-

सन्तो नमस्कुर्म्मस्तस्मै पदाय। अव्यवहार्य्यमपि व्यवहारगोचरमापाद्य यथा बलं यथा शक्तीत्यर्थः॥ १००॥

अजमपि जनियोगं प्रापदैश्वर्य्ययोगादगति च गति-

---

मत्तु प्रवर्त्तते॥ न हि परिपूर्णं वस्तु वस्तुतो व्यवहारगोचरतामावरतीत्याशङ्क्याह। अव्यवहार्य्येति॥ परमार्थतो व्यवहारगोचरत्वेऽपि परमार्थतत्त्वस्य मायाशक्तिमनुसृत्य व्यवहारगोचरतामपरिकल्प्य नमस्कारक्रिया तस्मिन् प्रयोजनवशादाश्रितेत्यर्थः॥ १००॥

इदानीं भाष्यकारोऽपि भाष्यपरिसमाप्तौ शास्त्रप्रतिपादितं परदेवतातत्त्वमनुसृत्य तन्नमस्काररूपं मङ्गलाचरणमाचरति। अजमपीति॥ यत् ब्रह्माशेषोपनिषत्प्रसिद्धं सर्व्वथा परिच्छेदरहितं तदहमत्यगभूतं नमस्ये तद्विषयं प्रकटीभावं करोमीति सम्बन्धः॥ प्रणामप्रयोजनमाह। प्रणतेति॥ ये हि प्रणता ब्रह्मणि प्रकटीभूतास्तन्निष्ठास्तिष्ठन्ति तेषां यदविद्या तत्कार्य्यात्मकभयं तदाचार्य्योपदेशजनितबुद्धिवृत्तिफलकारूढं ब्रह्मैव हन्ति। न खलु जडाहमि वस्तुसामर्थ्यमन्तरेणाज्ञानं स्वकार्य्यमपनेतुमलम्। बुद्धीद्धो बोधो बोधेद्धा बुद्धिरुक्तं फलमादधातीत्यर्थः॥ तस्यैव ब्रह्मणः सम्प्रति तटस्थलक्षणं विवक्षति। अजमित्यादिना॥ यद्यपि जन्मादिसर्व्वविक्रियाशून्यं वस्तुतो ब्रह्म कूटस्थमास्थीयते तथापि तदैश्वर्य्येण तदीयशक्त्यात्मके मानिर्वाच्यासामवैभवेन योगादाकाशादिकार्य्यात्मना जन्मसम्बन्धमाप्य जगतो निदानमिति व्यपदेशभाग्भवति तथा च श्रुतिसूत्रयोर्ब्रह्मणो जगत्कारणत्वं प्रसिद्धमित्यर्थः॥ यद्यपि चेदं ब्रह्म कूटस्थतया विभुतया च गतिवर्जितमवतिष्ठति तथापि यथोक्तामायामाहात्म्यात् कार्य्यब्रह्मतामाप्य गतिमत्तां गन्तव्यतां बादर्य्यधिकरणन्यायेन प्रतिपद्यते तदाह। अगति चेति॥ यद्यपि चेदं ब्रह्म वस्तुतो निरस्तसमस्तनानात्वमेकरसमद्वितीयमुपनिषद्भिरभ्युपगम्यते तथापि जीवो जगदीश्वरश्चेत्येतद्यदनाद्यनिर्व्वाच्याविद्यावशादनेकमिव प्रतिभातीत्याह। एकमिति॥ केषां दृष्ट्या पुनरनेकत्वं ब्रह्मणोऽवगम्यते तदाह। विविधेति॥ विविधाश्च ते विषयधर्म्माश्च तद्ग्राहितया मुग्धं

सत्तामात्रं पदैकं त्वनेकम्। विविधविषयधर्मग्राहि मुग्धेक्षणानां प्रणतभयविहन्तृ ब्रह्म यत्तन्नतोऽस्मि ॥ १ ॥

मन्थावेधाद्व्यथाविक्षुभितजलनिधेर्वेदनाम्नोऽन्तरस्थं भूतान्यालोक्य मग्नान्यविरतजननग्राहघोरे समुद्रे। कारुण्या-

---

विपर्य्यस्तं विवेकविकलमीक्षणं येषां तेषां दृष्ट्या प्रत्यक्षेणाऽनेकत्वधीर्न तु तत्त्वतः। भ्रान्तदृष्ट्या तु तस्यानेकत्वमेव प्रामाणिकमित्यर्थः ॥ १ ॥

सम्प्रति ग्रन्थप्रणयनप्रयोजनप्रदर्शनपूर्व्वकं परमगुरून् आगमार्थस्य व्याख्यातस्य प्रणेतृत्वेन व्यवस्थितान् प्रणमति। मन्थेति॥ यो हि कारुण्यादिदं ज्ञानाख्यममृतं भूतहेतोस्तदुपकारार्थमुद्दधार तं परमगुरुं नतोऽस्मीति सम्बन्धः। अस्मिमिति तस्य पुरोदेशे सन्निहितत्वेनापरोक्षत्वं सूचितम्॥ परमगुरुत्वं पूज्यानामपि गुरूणामतिशयेन पूज्यत्वादाचार्य्यस्य समधिगतमित्याह। पूज्येति॥ नमस्कारप्रक्रियां प्रकटयति। पादपातैरिति॥ पादौ तदीयौ पादौ तयोः स्वकीयस्योत्तमाङ्गस्य पाताः भूयोभूयो नमीभावास्तैरिति यावत्॥ आचार्य्यो ज्ञानाख्यममृतं कथं भूतमुद्धृतवानित्यपेक्षायामाह। अन्तरस्थमिति॥ कस्यान्तरस्थमिति विवक्षायामाह। वेदेति॥ कथमित्यत्राह। मन्थेति॥ मेधासहिता प्रज्ञैव वैशाखः मन्थानदण्डस्तस्य वेधो वेधनं प्रक्षेपणं तेन क्षुभितो विलोडितो जलनिधिर्वेदनामा तस्याऽन्तरेऽभ्यन्तरे स्थितमिदममृतमिति यावत्॥ उक्तस्य ज्ञानामृतस्य प्रसिद्धादमृतादवान्तरवैलक्षण्यमादर्शयति। अमरैरिति॥ यद्धि भगवता नारायणेन क्षीरसागरान्तरावस्थितममृतं समुद्धृतं तदेव कथञ्चिदमरा लेभिरे इदन्तु तैरनायासलभ्यं न भवति। ज्ञानसामग्री सम्पत्त्यैव लभ्यत्वादित्यर्थः। यदि कारुण्यादिदममृतमाचार्य्येण वेदोदधेर्भूतोपकारार्थमुद्धृतं कथं तर्हि कारुण्यं तस्य प्रादुरभूदित्याशङ्क्याह। भूतानीति॥ योऽयं समुद्रवत् दुस्तारः संसारस्तस्मिन्नविरतमनवरतं सन्ततमेव यानि जननानि विविधभेदघटनानि तान्येव ग्राहा जलचरास्तैर्घोरे क्रूरे भयङ्करे मग्नानि मग्नकल्पानि परवशानि भूतान्युपलभ्य

दुद्धाराचतमिदममरैर्दुर्लभं भक्तहेतोर्यस्तं पूज्याभिपूज्यं परमगुरुममुं पादपातैर्नतोऽस्मि ॥ २ ॥

यत्प्रज्ञालोकभासा प्रतिहतिमगमत्स्वान्तमोहान्धकारो मज्जोन्मज्जच्च घोरे ह्यसकृदुपजनोदन्वति त्रासने मे ।

---

कारुण्यमाचार्य्यस्य प्रादुरासीत् । ततश्चेदमतमुद्दृत्य भूतेभ्यो दत्वा तानि रक्षितवानित्यर्थः ॥ २ ॥

अथाधुना स्वगुरुभक्तेर्विद्याप्राप्तावन्तरङ्गत्वमङ्गीकृत्य तदीयपादसरसीरुहयुगलं प्रणमति । यत् प्रज्ञे ति ॥ तेषामस्मद् गुरूणाम्पादौ सर्व्वभावैर्व्वाङ्मनोदेहानामष्टाङ्गीभावैर्नमस्ये नम्रीभवामीति सम्बन्धः । तौ च जगतः सर्व्वस्यापि पावनीयौ पवित्रतया पवित्रत्वमापाद्य निर्द्दिष्टौ तौ च स्वसम्बन्धिनां सर्व्वेषां भवः संसारस्तत्प्रयुक्तं भयं स्वकारणेन सहापनुद्य पुरुषार्थपरिसमाप्तिं कुर्व्वन्तु एतानेव गुरून् विशिनष्टि । यत्प्रज्ञे ति ॥ मे मम स्वान्तमन्तःकरणं तस्मिन् मोहो व्याकुलताहेतुरविवेकस्तस्य कारणं यदज्ञानं तच्चेषां प्रज्ञैवालोकस्तस्य भा दीप्तिस्तया प्रतिहतिं विनाशमगमत् गतवत् तत्पादाविति सम्बन्धः । न केवलमज्ञानमेवाचार्य्यप्रसादादपगच्छत् क्षीभवति किन्तु तत्कार्य्यमनर्थजातमपि कारणनिवृत्तौ स्थितिमलभमानमभावीभवतीत्याह । मज्जोन्मज्जदिति ॥ असकृदनेकशो देवतिर्य्यगादियोनिषु योऽयमुपजनो नानाविधदेहभेदसङ्कोऽस्मादेवोदन्वानुदधिस्तस्मिन्नतित्रासने भयावहे कदाचिद्यथोक्ताज्ञानं कार्य्यरूपेण मज्जदनभिव्यक्तमवतिष्ठते तदेव चावस्थाविशेषे तद्रूपेणोन्मज्जदभिव्यक्तमनर्थकरं परिवर्त्तते । तदेवमतिक्रूरे संसारसागरे परिवर्त्तमानमज्ञानं सकार्य्यमाचार्य्यप्रसादादपनीतमासीदित्यर्थः । न केवलमेकस्य ममैव यथोक्तफलप्राप्तिराचार्य्यप्रसादादाविरभूत् किन्तु तच्चरणपरिचर्य्यापराणामन्येषामपि भूयसामित्याह । यत्पादाविति ॥ येषां गुरूणाम्पादद्वयमाश्रितानामन्येषामपि शिष्याणां तदीय शुश्रूषाप्रणयमनीषाजुषां श्रुतिमननिदिध्यासनसङ्कृतं श्रवणज्ञानम् । शमः शान्ति-

यत्पादावाश्रितानां श्रुतिशमविनयप्राप्तिरग्र्याह्यमोघा तत्-पादौ पावनीयौ भवभयविनुदौ सर्व्वभावैर्नमस्ये ॥ २ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्य्यस्य श्रीशङ्करभगवतः कृतावागमशास्त्रविवरणे अलातशान्त्याख्यं चतुर्थप्रकरणं समाप्तम् ॥ समाप्तोऽयं ग्रन्थश्च ॥ ॐ तत् सत् ॥

---

रिन्द्रियोपरतिः विनयोऽवनतिरनौद्धत्यं तेषामाप्तिरग्र्या श्रेष्ठा प्रतिष्ठिता सिध्यति। यस्मादमोघा सफला श्रवणादीनामाप्तिस्तस्मादग्र्यत्वं तस्यार्थं भाष्यते तदेवमाचार्य्यप्रसादादात्मनोऽन्येषाञ्च बहूनां पुरुषार्थे परिसमाप्तिसम्भवादाचार्य्यपरिचरणं पुरुषार्थकामैराचरणीयमित्यर्थः ॥ २ ॥

विष्णुं कृष्णं स्वमायाविरचितविविधद्वैतवर्गं निसर्गा-
दुद्यातामर्थसार्थं निरवधिमधुरं सच्चिदेकस्वभावम् ।
आम्नायात्मानमेकं विधिमुखविमुखं नेति नेतीति गीतं
वन्दे वाचां धियाञ्चापरमपि जगतामास्पदं कल्पितानाम् ॥ १ ॥
गौडपादीयभाष्यस्य व्याख्या व्याख्यातृसम्मता ।
सम्मिता निर्म्मिता सेयमर्पिता पुरुषोत्तमे ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्यशुद्धानन्दपूज्यपादशिष्य-भगवदानन्दज्ञानकृतायां गौडपादीयभाष्यटीकायां अलातशा-न्त्याख्यं चतुर्थं प्रकरणं समाप्तम् ॥ ॐ तत्सत् ॥ श्रीशङ्करः प्रियताम् ॥

गौडपादीयमाण्डूक्योपनिषत्कारिका सम्पूर्णा ॥

